B11

# ಮರೆಯಲಾರದ

ಅಂದು ಬುಧವಾರ. ಕರಾಳ ಬುಧವಾರ. ಅವರು ನಸುಕಿನಲ್ಲಿ ಎದ್ದಾಗ ೬-೧೫. ಅದು ಕರಾಳ ದಿನವೆಂದಾಗಲಿ, ಅಂದೆ ತಾನು ಪ್ರಧಾನಿಯಾಗುತ್ತೇನೆಂದಾಗಲಿ ಅವರಿಗೆ ಹೇಗೆ ಗೊತ್ತಾಗಬೇಕು ?

ಈ ದುರ್ದೈವಿ ಬುಧವಾರಕ್ಕೆ ಮೂರು ದಿನ ಮೊದಲೆ ಅಕ್ಟೋಬರ್ ೨೮ ರಂದು ತರುಣ ಸಂಸತ್ ಸದಸ್ಯ ರಾಜೀವ್ ಗಾಂಧಿಯ ಪಶ್ಚಿಮ ಬಂಗಾಲ ಸಂಚಾರ ಪ್ರಾರಂಭವಾಗಿತ್ತು. ನಸುಕಿನ ಚಹ ಕುಡಿದು ಚಟುವಟಿಕೆ ಪ್ರಾರಂಭಿಸುತ್ತಿದ್ದಂತೆ ಬುಧವಾರದ ಮುಂಜಾವು ಸರಿದು ಹೋಗತೊಡಗಿತು. ಅನೇಕ ಜನರು ಅವರ ಭಾಷಣ ಕೇಳಲು ಬಂದರು. ಆಗ ಅವರು ಹಾಗಡೋದರಾದಲ್ಲಿದ್ದರು. ಅವರ ಜೊತೆ ಪ್ರಧಾನಿ ಇಂದಿರಾ ಸಂಪುಟದ ನಂಬರ್ ಎರಡು ಆಗಿದ್ದ ಅರ್ಥಮಂತ್ರಿ ಪ್ರಣಬ್ ಮುಖರ್ಜಿ ಹಾಗೂ ರೈಲ್ವೆ ಸಚಿವ ಘನಿಖಾನ್ ಚೌಧರಿ ಇದ್ದರು.

ಮೂರು ದಿನ ಸಂಚಾರದ ಕೊನೆಯ ದಿನವಾದ ಅಂದು ಸಂಜೆ ಅವರು ಲಖನೌ ಮುಖಾಂತರ ವಿಮಾನದಲ್ಲಿ ದೆಹಲಿ ತಲುಪುವ ಕಾರ್ಯಕ್ರಮವಿತ್ತು. ಸಂಜೆಗೆ ಮೊದಲೆ ದೆಹಲಿ ಯನ್ನು ಅವರು ತಲುಪಿದರು. ಆದರೆ ದುರಂತದ ಅಧ್ಯಾಯ ವೊಂದು ಸೃಷ್ಟಿಯಾಗಿ ೪೦ ವರ್ಷದ ಹುಡುಗ ಇನ್ನು ಕಚ್ಚಾ ರಾಜಕಾರಣಿ ರಾಜೀವ್ ಗಾಂಧಿ ಮೇಲೆ ದೊಡ್ಡ ದೇಶದ ಹೊರೆ ಬಿದ್ದಿತ್ತು.

ಕೊಂಟಾಯಿ ಎಂಬ ಊರು ಕಲ್ಕತ್ತದಿಂದ ೧೨೦ ಮೈಲು ದೂರದಲ್ಲಿದೆ. ರಾಜೀವ್, ಚೌಧರಿ ಹಾಗೂ ಪ್ರಣಬ್ ಮುಖರ್ಜಿ ಅಂಬಾಸಿಡರ್ ಕಾರಿನಲ್ಲಿ ಅಲ್ಲಿಗೆ ಬಂದಾಗ ಮುಂಜಾನೆ ೯ ಮಿಕ್ಕಿತ್ತು. ರಾಜೀವ್‌ರನ್ನು ನೋಡಲೆಂದು

"ಎರಡುಬಾರಿ ಆ ಸಂದೇಶವನ್ನು ಓದಿದ ನಂತರ ನಾನು ಆ ಪೊಲೀಸನಿಗೆ ಹೇಳಿದೆ. ಕಲ್ಕತ್ತಾ ಹಾಗೂ ಕಲೈಕುಂಡಾ ವಾಯುನೆಲೆಯಿಂದ ನಮ್ಮನ್ನು ಕಳಿಸಲು ವಿಮಾನಗಳನ್ನು ಸಜ್ಜಾಗಿ ಇಡಲು ಹಾಗೂ ದೆಹಲಿ ವಿದ್ಯಮಾನಗಳ ಬಗ್ಗೆ ಪ್ರತಿ ಐದು ನಿಮಿಷಕ್ಕೊಮ್ಮೆ ಕಾರು ರೇಡಿಯೋ ಮೂಲಕ ಮಾಹಿತಿ ಒದಗಿಸುವಂತೆ ಸೂಚಿಸಿದೆ.

೯-೪೫ರ ಸುಮಾರಿಗೆ ನಾವು ಅಂಬಾಸಿಡರನ್ನು ಬಿಟ್ಟು ಹೆಚ್ಚು ವೇಗಪಡೆಯಲು ಮರ್ಸಿಡೀಜನ್ನು ಹತ್ತಿದೆವು. ಜೊತೆಗೆ ರಾಜೀವ್ ಅಂಗರಕ್ಷಕನೂ ಇದ್ದನು. ಮರ್ಸಿಡೀಜ ಮಾಯಾ ಕುದುರೆಯಂತೆ ೮೦ ಮೈಲಿ ವೇಗದಲ್ಲಿ ಓಡುತ್ತಿತ್ತು. ಆಗ ೧೧ ಗಂಟೆ. ರಾಜೀವ್ ಕಾರು ರೇಡಿಯೋ ತಿರುಗಿಸಿ ಬಿಬಿಸಿ ಹಾಕಿದರು. ಬಿಬಿಸಿ ಬಿತ್ತರಿಸುತ್ತಿದ್ದ ಸುದ್ದಿಯಿಂದ ಅಂಥ ವೇಗದಲ್ಲಿ ಕೂಡ ನಾವು ನಿಶ್ಚಲಗೊಂಡಂತಾಗಿಬಿಟ್ಟೆವು. ಬಿಬಿಸಿ ಇಂದಿರಾರ ಸಾವನ್ನು ಖಚಿತಪಡಿಸಿರಲಿಲ್ಲ, ಆದರೆ, ಅವರು ವೈದ್ಯ ವಿಜ್ಞಾನ ಸಂಸ್ಥೆಯಲ್ಲಿ ಜೀವನ್ಮರಣಗಳ ನಡುವೆ ತುಯ್ದಾಡುತ್ತಿದ್ದಾರೆಂದು ಹೇಳಿತು. ಅವರ ಮೇಲೆ ನಡೆದ ಗುಂಡಿನ ದಾಳಿ ಹಾಗೂ ಮಾಡಿದವರಾರು ಎಂಬ ಎಲ್ಲ

ಮುಖರ್ಜಿ, ಚೌಧರಿ ಹಾಗೂ ರಾಜೀವ್ ಒಂದೇ ಸಾಲಿನಲ್ಲಿ ಕುಳಿತಿದ್ದರು. ಕೆಲವು ಕ್ಷಣಗಳಲ್ಲಿ ರಾಜೀವ್ ಕಾಕ್‌ಪಿಟ್‌ಗೆ ತೆರಳಿ ಭೂಮಿಯ ಮೇಲಿನ ಸುದ್ದಿಯನ್ನು ಅರಿಯತೊಡಗಿದರು. ಅವರಿಗೆ ಆಗಲೆ ಆಗಬಾರದ್ದು ಆಗಿಹೋಗಿದೆಯೆಂಬುದರ ಅರಿವು ಆದಂತಿತ್ತು. ೧-೨೫ಕ್ಕೆ ಆ ಸುದ್ದಿಯು ಹೊರಬಿತ್ತು: "ಪ್ರಧಾನಿ ಇಂದಿರಾ ಅಸುನೀಗಿದರು". ಕಾಕ್‌ಪಿಟ್‌ನಿಂದ ರಾಜೀವ್ ಹೊರಬಿದ್ದಾಗ ೧-೩೦. ಅವರ ಮುಖ ಭಾವ ರಹಿತ್ಯವಾಗಿತ್ತು. ಅವರು ಹೇಳಿದರು "ಪ್ರಧಾನಿ ಇಂದಿರಾ ಇನ್ನಿಲ್ಲ".



... ತಾಯಿಯನ್ನು ಕಳೆದು

# ...ಕರಾಳ ಬುಧವಾರ

...ಪ್ರಧಾನಿಯಾಗಿ ನಂದಾ ನೇಮಕಗೊಂಡದ್ದನ್ನು ...ಉದಾಹರಿಸಿದರು.

...ಸಂಪುಟದ ಹಿರಿಯ ಸದಸ್ಯರಾಗಿದ್ದ ಪ್ರಣಬ್ ...ಪ್ರಧಾನಿಪಟ್ಟ ತನಗೇ ಬೇಕೆಂದು ಸಾಧಿಸುವದು ...ಯಲ್ಲಿ ಸಾಧುವೆ ಆಗಿತ್ತು. ಅವರು ಆಗ ಹಾಗೆ ...ಪತ್ರಿಕೆಗಳು ಕೂಡ ಬರೆದು ಬಿಟ್ಟವು. ಆದರೆ...

## ...ಪಾತ್ರ

...ಉತ್ತರಾಧಿಕಾರಿಯ ಆಯ್ಕೆಯಲ್ಲಿ ಜಾಖಡ್

ವಿಮಾನ ದೆಹಲಿ ಮುಟ್ಟಿದಾಗ ಅಪರಾಹ್ನ ೩-೩೦ ಗಂಟೆ. ರಾಜೀವ್‌ರ ಗುಂಪು ನೇರವಾಗಿ ವೈದ್ಯ ವಿಜ್ಞಾನ ಸಂಸ್ಥೆಗೆ ತೆರಳಿತು. ವಿಮಾನ ನಿಲ್ದಾಣದಲ್ಲಿ ರಾಜೀವ್‌ರ ಸಂಬಂಧಿ ಅರುಣ್ ನೆಹರು, ಉಪ ರಾಷ್ಟ್ರಪತಿ ಆರ್. ವೆಂಕಟರಾಮನ್, ಶಿವಶಂಕರ್, ಪಿ.ಸಿ. ಅಲೆಗ್ಸಾಂಡರ್ ಮುಂತಾದವರು ಸ್ವಾಗತಿಸಿ ಪರಿಸ್ಥಿತಿಯನ್ನು ವಿವರಿಸಿದರು.

ಆಗ ದೆಹಲಿಯಲ್ಲಿ ವಸ್ತುಶಃ ಸರಕಾರವೆಂಬುದೆ ಇರಲಿಲ್ಲ ಎಂದು ವಿದೇಶ ಕಾರ್ಯದರ್ಶಿಯಾಗಿದ್ದ ಎಂ.ಕೆ. ರಸಗೋತ್ರ ಸ್ಮರಿಸುತ್ತಾರೆ. ವಿದೇಶ ಪ್ರವಾಸಕ್ಕೆ ತೆರಳಿದ್ದ ಸಚಿವರಿಗೆ ಹಾಗೂ

ಹಿರಿಯ ಸಚಿವ ಮುಖರ್ಜಿ ದೆಹಲಿಗೆ ಬಂದಕೂಡಲೆ ಮೊದಲು ಮಾಡಿದ ಕೆಲಸವೆಂದರೆ ಕ್ಯಾಬಿನೆಟ್ ಕಾರ್ಯದರ್ಶಿ ಕೃಷ್ಣಮೂರ್ತಿ ರಾವ್ ಸಾಹೇಬರಿಗೆ ತಕ್ಷಣ ಬರಹೇಳಿ ಎಲ್ಲಿಗೂ ಹೋಗದಂತೆ ತಿಳಿಸಿದ್ದು. ನಂತರ ಬಾನುಲಿ ಹಾಗೂ ದೂರದರ್ಶನಕ್ಕೆ ರಾಷ್ಟ್ರಪತಿ ಎಮನ್‌ದಿಂದ ವಾಪಸಾಗುವವರೆಗೆ ಇಂದಿರಾ ನಿಧನ ವಾರ್ತೆಯನ್ನು ಬಿತ್ತರಿಸದಂತೆ ಕಟ್ಟಾಜ್ಞೆ ಮಾಡಿದ್ದು. ನಂತರ ಮುಖರ್ಜಿ ಇಂದಿರಾ ನಿವಾಸ ನಂ. ೧, ಸಫ್ದರ್ ಜಂಗ್ ತೆರಳಿ ರಸ್ತೆಗೆ ಕಾಂಗ್ರೆಸ್ ಸಂಸದೀಯ ಮಂಡಳಿ (ಸಿ.ಪಿ.ಬಿ.) ಸಭೆಗೆ ವ್ಯವಸ್ಥೆ ಮಾಡಿದರು.

ಆಗ ಸಿ.ಪಿ.ಬಿ. ಇಂದಿರಾರನ್ನು ಬಿಟ್ಟು ನಾಲ್ಕು ಸದಸ್ಯರನ್ನು ಹೊಂದಿತ್ತು. ಪ್ರಣಬ್ ಮುಖರ್ಜಿ, ನರಸಿಂಹರಾವ್, ಕಮಲಾಪತಿ ತ್ರಿಪಾಠಿ ಹಾಗೂ ಮರಗತಮ್ ಚಂದ್ರಶೇಖರ್. ಈ ಪೈಕಿ ಆಗ ದೆಹಲಿಯಲ್ಲಿ ಇದ್ದವರು ಇಬ್ಬರೆ! ಒಬ್ಬರು ಮುಖರ್ಜಿ. ಇನ್ನೊಬ್ಬರು ದಾರುಣವಾರ್ತೆ ಕೇಳಿ ಮದ್ರಾಸಿನಿಂದ ಧಾವಿಸಿದ ನರಸಿಂಹರಾವ್.

ನಾನು ಆ ಕ್ಷಣ ಎ.ಐ.ಸಿ.ಸಿ.ಯ ಪ್ರಧಾನ ಕಾರ್ಯದರ್ಶಿ ಮೂಪನಾರ್‌ರನ್ನು ಕರೆಸಿ ಎರಡು ಮಾತಿನ ಸಿ.ಪಿ.ಬಿ. ಗೊತ್ತುವಳಿಯನ್ನು ಬರೆಸಿದೆನೆಂದು ಮುಖರ್ಜಿ ಸ್ಮರಿಸುತ್ತಾರೆ. ಆ ಗೊತ್ತುವಳಿ ಏನೆಂದರೆ: "ರಾಜೀವ್ ಗಾಂಧಿ ಅವರನ್ನು ಪ್ರಧಾನ ಮಂತ್ರಿ ಸ್ಥಾನಕ್ಕೆ ಕರೆಲು ಸಿ.ಬಿ.ಪಿ. ನಿರ್ಧರಿಸಿದೆ" ಮೂಪನಾರ್ ...



THE

# CHAMPU-BHÂRATA

OF

## ANANTA KAVI.

**With the Commentary of Râmachandra Budhendra.**

EDITED BY

KÂS'INÂTH PÂṆḌURANG PARAB.

AND

WÂSUDEVA LAXMAṆA S'ÂSTRÎ PAṆS'ÎKAR.

**Fourth Edition.**

PUBLISHED

BY

PÂNDURANG JÂWAJÎ,

PROPRIETOR OF THE "NIRNAYA SÂGAR" PRESS,

BOMBAY.

1930.

*Price 2½ Rupees.*

॥ श्रीः ॥

श्रीमदनन्तकविविरचितं

# चम्पूभारतम् ।

रामचन्द्रबुधेन्द्रविरचितया व्याख्यया समेतम् ।

काशीनाथ पाण्डुरङ्ग परब इत्यनेन संस्कृतम् ।

( चतुर्थावृत्तिः )

वासुदेव लक्ष्मणशास्त्री पणशीकर इत्यनेन संशोधिता ।

सा च

मुम्बय्यां

निर्णयसागरमुद्रायन्त्रालयाधिपतिभिः पाण्डुरङ्ग जावजी इत्येतैः
स्वीये मुद्रायन्त्रे मुद्रयित्वा प्राकाश्यं नीता ।

शाके १८५२, सन १९३०.

मूल्यं २॥ सार्धरूप्यकद्वयम् ।

श्रीः ।

श्रीमदनन्तभट्टविरचितं

# चम्पूभारतम् ।

श्रीरामचन्द्रबुधेन्द्रविरचितया व्याख्यया समेतम् ।

## प्रथमः स्तबकः ।

कल्याणं वो विधत्तां करटमदधुनीलोलकल्लोलमाला-
खेलल्लोलम्बकोलाहलमुखरितदिक्चक्रवालान्तरालम् ।
प्रत्नं वेतण्डरत्नं सततपरिचलत्कर्णतालप्ररोह-
द्वाताङ्कूराजिहीर्षोदरविवृतफणाशृङ्गभूषाभुजङ्गम् ॥ १ ॥

---

### लास्यम् ।

भावार्द्रान्योन्यालोकननमदानङ्गसारसर्वस्वम् ।
तेजः परं शिवाख्यं चिरमवतान्मां पुराणदाम्पत्यम् ॥
काव्यप्रकाशिकादिमलक्षणशास्त्रार्थभावनोदारः ।
कुरुते लास्यं चम्पूभारतमधिकुरविरामकविः ॥
निन्दतु नन्दतु वा सन्तसूयुरनसूयुरत्र किं तेन ।
यत्सन्मानसगमनायैवेदं मम तु पाथेयम् ॥
अदूषयत्काव्यमिदं नृसिंहः कश्चिन्निजाख्यानुगुणैः श्ववादैः ।
सिंहो नृषु श्वा हि शुनिर्मलानां स्पर्शाद्यतो दूषणमातनोति ॥
अपमूलमनन्वितमतिदुरूहंयुमिरत्र कल्पितान्पाठान् ।
अपि विदुषो मोहयितुं व्याचख्यौ बत स पण्डितंमन्यः ॥
ते च स्फुटीकरिष्यन्ते तत्र तत्र मयाधुना ।
विदांकुर्वन्तु सुधियो विना मत्सरमुत्सुकाः ॥

अथ तत्रभवान्महाकविरनन्तभट्टः 'काव्यं यशसेऽर्थकृते—'इत्याद्यालंकारिकवचनप्रामाण्यात्काव्यस्यानेकश्रेयःसाधनताम्, 'काव्यालापांश्च वर्जयेत्' इति निषेधस्यासत्काव्यविषयतां च पश्यन् चम्पूभारताख्यं काव्यं चिकीर्षुः 'आशीर्नमस्क्रियावस्तुनिर्देशो वापि तन्मुखम्' इत्युक्तदिशा प्रबन्धमुखलक्षणं चिकीर्षिताविघ्नपरिसमाप्तिसाधनमिष्टदेवताप्रार्थनात्मकं मङ्गलमादौ निबध्नाति—कल्याणमिति । करटयोः कुम्भयोः संबन्धिन्यां मदधुन्यां दानजलनद्यां लोलानां कल्लोलानां पृथु-

---

१. एतदनन्तरम् 'नवनीतमुग्धगन्धयो नखाङ्का नवनीपाङ्कुरनन्दनीयशोभाः । कुशलं कलयन्तु गोपिकानां कुचवास्तव्यकुटुम्बिताधुरीणाः ॥' इत्यस्ति क्षेपकः श्लोकः क्वचित्.

तुहिनकिरणवंशस्थूलमुक्ताफलानां
विपुलभुजविराजद्वीरलक्ष्मीविभूम्नाम् ।

---

तरङ्गाणां मालासु पङ्क्तिषु खेलतां क्रीडतां लोलम्बानामलीनां कोलाहलैर्झंकार-कलकलैर्मुखरितं शब्दायमानं दिशां गजानां चक्रवालस्य मण्डलस्यान्तरालो मध्यदेशो यस्य तथोक्तम् । 'काकेभगण्डौ करटौ', 'महत्सूल्लोलकल्लोलौ', 'लोलम्बो बम्भरश्च सः' , 'अभ्यन्तरं त्वन्तरालं चक्रवालं तु मण्डलम्' इति सर्वत्र क्रमेणामरः । सततं परिचलद्भ्याम् । ताड्येते वीज्येते इति तालौ । डलयोरभेदः । कर्णौ तालौ व्यजने इव ताभ्यां प्ररोहतामुत्पत्तिमतां वाताङ्कुराणां मन्दमारुतानाम् । आहर्तुं भोक्तुमिच्छा आजिहीर्षा । आङ्पूर्वाद्धरतेः सन्नन्तादुप्रत्ययः । 'अङ्कुरस्त्वङ्कुरस्तुल्यौ' इति द्विरूपकोशः । तया दरमीषद्विवृतानि विकसितानि फणानां शृङ्गाणि अग्राणि यैस्तादृशा भूषाभुजङ्गा आभरणसर्पा यस्य तथोक्तम् । भूषाणां भुजङ्गा इति तादर्थ्यस्य शेषत्वविवक्षया अश्वघासा-दिवत्समासः । प्रत्नं पुरातनम् । 'पुराणप्रतनप्रत्नपुरातनचिरंतनाः' इत्यमरः । वेतण्डरत्नं गजश्रेष्ठः । विघ्नराज इति यावत् । 'वेतण्डः करटी गजः' इति त्रिकाण्ड-शेषः । वः युष्माकं कल्याणं शुभं विधत्तां करोत्वित्याशीः । विपूर्वाद्दधातेराशीरर्थे लोट् । विघ्नराजस्याकण्ठं पुरुषत्वेऽपि 'सर्वेषु गात्रेषु शिरः प्रधानम्' इति, 'प्राधा-न्येन व्यपदेशा भवन्ति' इति च न्यायाभ्यां तत्त्वेन निर्देशः । अत्र लोलेत्यादौ व्यञ्जनावृत्तेर्वृत्त्यनुप्रासो नाम शब्दालंकारः । विघ्नराजाश्रितानां मधुपव्यालाना-मपि क्रमेण दिक्चक्रव्यापिकोलाहलतत्कर्णतालानिलकृताहारवर्णनेन तदाश्रितानां सतां अखिलदिग्व्यापिविख्यातिमत्त्वान्यानपेक्षकाङ्क्षितार्थसिद्धिमत्त्वादिकं कैमुतिक-न्यायसिद्धमित्यर्थापत्त्यलंकारप्रतीतेर्वस्तुनालंकारध्वनिः । अत्रादौ ह्रस्वस्य ककारस्य कल्याणमिति त्रिगुरुकस्य मगणस्य प्रयोगाच्च वर्णगणशुद्धिरभ्यर्हिततमा । तदुक्तं कविकण्ठपाशे—'अकचटतपयशा अमृता विषाणि दीर्घाणि' इति, 'मस्त्रिगुरुर्भूमि-दैवत्यो दिव्याचरसदायकः' इति च । वस्तुतस्त्वत्र कल्याणमिति भद्रवाचक-प्रयोगादविचार्यैव सा । तदुक्तम्—'देवतावाचकाः शब्दा ये च भद्रादिवाचकाः । ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा ॥' इति । स्रग्धरावृत्तमेतत्—'म्रभ्नै-र्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्' इति लक्षणात् । यत्तु 'ग्रन्थ-समाप्त्यर्थं विघ्नराजप्रार्थनं कृतमित्यर्थः' इति नृसिंहः, तदेवास्य व्याख्यानकरण-कौशल्यपमहसति । वाच्येऽर्थे लक्ष्यार्थतासूचकस्य 'इत्यर्थः' इति लेखनस्य व्याख्यातृसंप्रदायविरुद्धत्वादिति ॥ १ ॥

इष्टदेवताप्रार्थनानन्तरं कथां प्रारभमाणः 'नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनैः' इत्यादिना परिगणितानां महाकाव्यताप्रसाधकानामष्टादशानामभ्यर्हितत्वेनादिमं नगरवर्णनं तावत्प्रस्तौति—**तुहिनेति** । तुहिनकिरणस्य चन्द्रस्य वंश एव वंश इति श्लिष्टरूपकम् । तस्य स्थूलमुक्ताफलानामिति परम्परितरूपकम् । 'वंशो वेणौ कुले

हसितसुरपुरश्रीरस्ति सा हस्तिनाख्या
रिपुजनदुरवापा राजधानी कुरूणाम् ॥ २ ॥

यस्यामुदग्रनृपमन्दिरचन्द्रशाला-
वातायने गतिवशाद्वपुषि प्रसक्ताम् ।
दीपाग्रधूममषिकां शिशिरांशुविम्बे
मोहात्कुरङ्ग इति मुग्धजना वदन्ति ॥ ३ ॥

ग्रीष्मेषु शीतकरकान्तकृतोदरासु
यद्गोपुराग्रिमदरीषु पथागतस्य ।
विश्राम्यतो हरिहयस्य विलम्बनेषु
चिह्नं तदीयदिनसंततिदीर्घभावः ॥ ४ ॥

---

वर्गे' इति विश्वः । वेणुषु मौक्तिकोत्पत्तिर्लोकप्रसिद्धा । विपुलयोर्दीर्घयोर्भुजयोर्विराजन्वीरलक्ष्म्या विभूमातिशयो येषां तेषां कुरूणां नाम राज्ञां संबन्धिनी । हसिता तिरस्कृता सुरपुरश्रीः सुरपुरस्य स्वर्गस्य श्रीः शोभा यया सा । रिपुजनेन प्राप्तुमशक्या दुरवापा हस्तिनेत्याख्या यस्याः सा राजधानी प्रधाननगरी । 'प्रधाननगरी राज्ञां राजधानीति कथ्यते' इति शब्दार्णवे । अस्ति । मालिनीवृत्तम्—'ननमयययुतेयं मालिनी भोगिलोकैः' इति लक्षणात् ॥ २ ॥

तामेव नवभिर्वसन्ततिलकाभिर्गद्येनैकेन च विशिनष्टि—**यस्यामिति** । यस्यां हस्तिननगर्यामुदग्राया उन्नताया नृपमन्दिराणां राजगृहाणां चन्द्रशालायाः शिरोगृहस्य वातायने गवाक्षे । 'चन्द्रशाला शिरोगृहम्', 'वातायनं गवाक्षः स्यात्' इत्युभयत्राप्यमरः । गतेर्गमनस्य वशात् अधीनत्वाद्धेतोः । 'वशः प्रभुस्पृहायत्तेष्वायत्तत्वप्रभुत्वयोः' इति विश्वः । वपुषि शरीरे मध्यात्मके प्रकर्षेण सक्तां लग्नाम् । दीपाग्राणां संबन्धिनो धूमस्य मषिकां मषिम् । दृष्ट्वेति शेषः । मुग्धा मूढा जना मोहादज्ञानाच्छिशिरांशोश्चन्द्रस्य बिम्बे कुरङ्गः हरिणोऽस्तीति वदन्ति । अत्र चन्द्रस्य तादृशमष्यसंबन्धेऽपि तत्संबन्धोक्तेरतिशयोक्तिः । तदनुप्राणितश्च नायं कुरङ्गः किंतु तादृशमष्येवेति कुरङ्गे कुरङ्गत्वं निषिध्य मषीत्वारोपरूपोऽपह्नवालंकारः । तयोरङ्गाङ्गिभावेन संकरः—'शुद्धापह्नुतिरन्यस्यारोपार्थो धर्मनिह्नवः' इति लक्षणात् । वसन्ततिलकावृत्तम्—'उक्ता वसन्ततिलका तभजा जगौ गः' इति लक्षणात् ॥ ३ ॥

**ग्रीष्मेष्विति** । शीतकरकान्तैश्चन्द्रकान्तरत्नैः कृतो निर्मित उदरो मध्यदेशो यासां तासु । यस्या हस्तिनपुर्या गोपुरस्य पुरद्वारस्याग्रिमदरीषूर्ध्वद्वारेषु यः पन्थाश्चन्द्रनिर्गमनमार्गस्तेन ग्रीष्मेषु निदाघवासरेष्वागतस्य अतएव विश्राम्यतो विश्रामं कुर्वतो हरिहयस्य सूर्याश्वस्य । तस्यैकस्यैव सप्तत्वेन व्यवहारः 'एको अश्वो वहति सप्तनामा' इति श्रुतिसिद्धः । विलम्बनेषु कालक्षेपेषु तदीयाया ग्रीष्म-

यत्राङ्गनावदनयामवतीशहृष्य-
 च्चन्द्राश्मसौधगलितः सलिलप्रवाहः ।
वृन्दारकेन्द्रनगरीबृहदुत्सवाय
 मन्दाकिनीति लभते महतीमभिख्याम् ॥ ५ ॥
दीप्रैरगारमणिभिर्दिवसायमानां
 निश्चिन्वते मनसि यत्र निशां युवानः ।
कार्तान्तिकैरखिलकालनिवेदनाय
 घण्टामणेरभिहितस्य[1] घनारवेण ॥ ६ ॥

संबन्धिन्या दिनसंततेर्दिवससमूहस्य दीर्घभावो दीर्घत्वं चिह्नं लिङ्गं भवति । अत्र निदाघदिनदैर्घ्यस्य नैसर्गिकस्य सूर्याश्वकालक्षेपहेतुकत्वोक्तेर्हेतूत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या । तथा तादृशदिनदैर्घ्येण रव्यश्वविश्रमानुमानादनुमानालंकारश्च । तयोरेकवाचकानुप्रवेशसंकरः ॥ ४ ॥

**यत्रेति ।** यत्र नगर्यामङ्गनानां वदनेनैव यामवतीशेन चन्द्रेण हृष्यन्त्यः स्रवन्त्यश्चन्द्राश्मनां चन्द्रकान्तानां सौधेभ्यो राजगृहेभ्यो गलितः सलिलप्रवाहः । वृन्दारकेन्द्रनगर्याः स्वर्गस्य । तत्रत्यजनस्येति यावत् । बृहत उत्सवाय सलिलक्रीडादिरूपायेति तादर्थ्ये चतुर्थी । मन्दाकिनीत्याकाशगङ्गेति महतीं श्लाघ्यामभिख्यां नाम लभते । 'अभिख्या नामशोभयोः' इति विश्वः । अत्र मन्दाकिन्यां मन्दाकिनीत्वं निषिध्य तादृशसलिलप्रवाहारोपणादपह्नवः । स च वदनयामवतीशेति रूपकानुप्राणित इति तयोरङ्गाङ्गिभावेन संकरः ॥ ५ ॥

**दीप्रैरिति ।** यत्र नगर्यां युवानस्तरुण्यस्तरुणाश्च । 'पुमान्स्त्रिया' इत्येकशेषः । बालानां च वृद्धानां च रात्रौ प्रयोजनाभावाद्युवान इत्युक्तम् । दीप्रैर्विराजमानैरगारमणिभिर्गृहखचितरत्नप्रभाभिर्दिवस इवाचरन्तीं दिवसायमानाम् । निस्तमस्कामिति यावत् । निशां रात्रिम् । कृतान्तं ज्योतिषसिद्धान्तप्रतिपादकग्रन्थं विदुरिति कार्तान्तिकैर्ज्योतिःशास्त्रविद्भिः । 'तदधीते तद्वेद' इत्यधिकारे वेदित्रर्थे उक्थादित्वाट्ठक् । 'स्युर्मौहूर्तिकमौहूर्तज्ञानिकार्तान्तिका अपि' इत्यमरः । अखिलस्याहोरात्ररूपस्य कालस्य निवेदनाय विज्ञापनायाभिहितस्य प्रमाणीकृतस्य घण्टामणेः कांस्ययन्त्रस्य घनेन दीर्घेण आरवेण ध्वनिना निश्चिन्वते । इदानीं रात्रिरिति विशिष्य जानन्तीत्यर्थः । रात्रावेव घण्टानिनादादीनां महत्त्वेन श्रूयमाणत्वादिति भावः । अत्र गृहमणीनां दिवसकरणासंबन्धेऽपि तत्संबन्धोक्तेरतिशयोक्तिः । तदनुप्राणितश्चायं घण्टारवेण रात्र्यनुमानादनुमानालंकार इति तयोरङ्गाङ्गिभावेन संकरः । यत्तु 'अपि हतस्य' इति पाठं मत्वा 'ताडितस्य' इति व्याख्याय 'यामचतुष्टयद्योतनाय घण्टामणौ ताडिते सति इदानीं रात्रिरिति निश्चिन्वते' इति

१. 'अभिहतस्य' 'अपि हतस्य' इति च पाठः.

वक्त्रं विलासमणिदर्पणधार्यमाणं
वामा हिमांशुरयमित्यवधार्य यस्याम् ।
आदर्शविम्बधृतिरश्रुतदृष्टपूर्वा
तस्येति तादृशधियं विनिवर्तयन्ति ॥ ७ ॥

आलापकालसमपल्लविताङ्कवीणा-
सौरभ्यपातिमधुपारवसंकुलस्य ।
तन्त्रीस्वनस्य समितौ तरुणीस्वनस्य
जानाति यत्र चतुरोऽपि न तारतम्यम् ॥ ८ ॥

---

नृसिंहः, तन्न । तथापि गतयामचतुष्टयद्योतकघण्टामणिताडनानां रात्रिसंबन्धिता-संदेहे बाधकाभावेन पुनर्दिवसभ्रमस्य दुर्वारत्वात् । एवं सिद्धान्तिनां घण्टाधिकारस्य प्रसिद्धिविरुद्धत्वाद्व्रीडाकरत्वाच्च प्रसिद्धिविरुद्धत्वाश्लीलाख्यदोषद्वयापत्तिश्चेति ॥ ६ ॥

**वक्त्रमिति** । यस्यां वामाः सुन्दर्यो विलासः प्रकाशस्तद्युक्तेन मणिदर्पणेन धार्यमाणम् । प्रतिबिम्बतयेति भावः । वक्त्रं निजमुखम् । दृष्ट्वेति शेषः । अयं पुरोवर्ती विशेष्यापेक्षी पुंस्त्वनिर्देशः । हिमांशुश्चन्द्र इत्युक्तप्रकारेण अवधार्य । भ्रमित्वेत्यर्थः । तस्य हिमांशोरादर्शे दर्पणे बिम्बस्य धृतिर्धारणं आदर्शम् अमावास्या-पर्यन्तं बिम्बधृतिरिति च अश्रुतपूर्वाऽदृष्टपूर्वा चेति । आलोच्येति शेषः । उभयत्र गम्यमानार्थत्वादप्रयोगः । तत्प्रयोगे पुनः पौनरुक्त्यमित्यालंकारिकाः । तादृशीं धियं दर्पणगतोऽयं चन्द्र इत्याकारकज्ञानं विनिवर्तयन्ति त्यजन्ति । नायं चन्द्रः किंतु निजमुखप्रतिबिम्ब एवेति निश्चिन्वत इति यावत् । विशेषदर्शनजन्य-भ्रमोत्तरप्रत्यक्षालंकारः ॥ ७ ॥

**आलापेति** । यत्र नगर्यामालापस्य भाषणस्य रागविस्तारीकरणस्वरसंदोहस्य संगीतशास्त्रप्रसिद्धस्य वा यः कालस्तेन समम् । तत्काल एवेत्यर्थः । पल्लवितायाः । कुसुमिताया इति यावत् । अन्यथा सौरभ्यानुपपत्तेरिति भावः । अङ्के उत्सङ्गे वीणायाः सौरभ्येन पातिनां प्रविशतां मधुपानां भृङ्गाणामारवेण संकुलस्य मिश्र-स्येत्युभयत्र विशेषणम् । तन्त्रीस्वनस्य तरुणीनां स्वनस्य गानात्मकस्य च द्वयोः समितौ [ साम्ये ] सत्याम् । 'समितिः संगरे साम्ये सभायामपि' इति विश्वः । तारतम्यं न्यूनाधिक्यं चतुरो निपुणोऽपि न जानाति । अत्रालिरवसंवलनमाधुर्य-द्वयस्य तन्त्रीतरुणीस्वनतारतम्याज्ञानहेतुत्वादनेकपदार्थहेतुकं काव्यलिङ्गम्— 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्' इति लक्षणात् ॥ ८ ॥

---

१. 'विनिवारयन्ति' इति पाठः.

शालीनतामविगणय्य सखीसमाजे
पश्चात्कृतस्य कमितुः प्रणयप्रकोपात् ।
मुग्धाः समीक्ष्य मुकुरायितरत्नभित्तौ
छायां क्षणादनुतपनं शमयन्ति यस्याम् ॥ ९ ॥

चित्रं दिदर्शयिषुणा जनितस्य यस्यां
मध्यं विनैव विधिना महिलाजनस्य ।
अङ्गं नितम्बजघनादि यतो यतोऽधः-
स्तुङ्गं कुचाद्युपरि याति ततोऽनुकूलम् ॥ १० ॥

पङ्केरुहाणि परिखामवतीर्य यस्यां
प्राकारभित्तिमभितः परिवेष्टयन्ति ।

---

शालीनतामिति । यस्यां मुग्धा नवोढाः प्रणयेन प्रेम्णा यः प्रकोपस्तस्मात्सखीनां समाजे सभायाम् । तत्समक्षमिति कोपस्य दुःसहत्वोक्तिः । शालीनतामधार्ष्ट्यम् । लज्जाद्युचितमार्दवमिति यावत् । 'स्यादधृष्टे तु शालीनः' इत्यमरः । अविगणय्य अनादृत्य पश्चात्कृतस्य पराङ्मुखीकृतस्य, न तु यातस्य । इत्यनेन त्यक्त्वा गमनासहतया प्रेमातिशयो ध्वन्यते । कमितुः प्रियस्य च्छायां प्रतिबिम्बं मुकुरो दर्पणं तदिवाचरन्त्यां मुकुरायितायाम् । तद्बिम्बग्राहिण्यामिति यावत् । रत्नमय्यां भित्तौ कुड्ये समीक्ष्य क्षणमनुतपनं पश्चात्तापं शमयन्ति वारयन्ति । तत्राभिमुख्येन दृश्यमानत्वादिति भावः । अत्र प्रतिबिम्बदर्शनस्य पश्चात्तापवारणहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् । एवं पश्चात्तापस्य विषादाख्यसंचारिभावस्य निवृत्तिवर्णनाद्भावशान्तिरलंकारः । तयोश्चाङ्गाङ्गिभावेन संकरः । तेन च नवोढानां पत्युः पराङ्मुखत्वमात्रासहत्वप्रतीतेरलंकारेण वस्तुध्वनिः ॥ ९ ॥

चित्रमिति । चित्रमाश्चर्यं दर्शयितुमिच्छुना दिदर्शयिषुणा । ण्यन्ताद्दृशेः सन्नन्तादुप्रत्ययः । अत एव विधिना विधात्रा मध्यं विनैव जनितस्य यस्यां महिलाजनस्य स्त्रीलोकस्य नितम्बः कटिपश्चाद्भागः, जघनं तत्पुरोभागः, तावादी यस्य तथोक्तम् । 'पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः' इत्यमरः । अङ्गमधो यतो यतो यत्र यत्र याति गच्छति, ततस्तत्र तत्रोपर्यूर्ध्वं कुचावादी यस्य तथोक्तं तुङ्गमङ्गमूर्ध्वकायोऽनुकूलमधःकायानुगुणं याति । विधिवैभवादिति भावः । अत्र विधेराश्चर्यदिदर्शयिषया मध्यं विना कृतस्त्रीजननहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् । तदनुप्राणिता चेयं स्त्रीणां मध्यं विना जननासंबन्धेऽपि तत्संबन्धोक्तिरूपातिशयोक्तिः । तयोरङ्गाङ्गिभावेन संकरः । तेन च तासां लोकोत्तरसौन्दर्यप्रतीतेरलंकारेण वस्तुध्वनिः ॥ १० ॥

पङ्केरुहाणीति । यस्यां पङ्केरुहाणि कमलानि । परिखादौ तानि कर्तॄणि ।

---

१ 'परिखाम्' इति पाठः.

अन्तःस्थितिं विदधतामबलाजनाना-
मास्यानि जेतुमखिलानि किलात्मभासा ॥ ११ ॥

या खलु पुरा कुरुधराधिपापराधसमेधितक्रोधेन हलधरेण निजायुधेन हठात्कर्षणशिक्षया समुत्क्षिप्तदक्षिणक्षितिभागा तदीयभुवनभूषणायमानां भोगवतीमात्मना विजेतुं किल भागीरथीपाथःपथेनावतीर्य कृतप्रस्थानेवाद्यापि परिदृश्यते ।

उपेत्य तां पाण्डुरुदारविक्रमः प्रजामनः पल्लवयन्प्रशासनात् ।
यशःप्रकाशैर्यमुनासखीसखैर्निनाय लोकं निजनामवाच्यताम् ॥१२॥

आत्मभासा निजसौन्दर्येण ( करणेन ) अन्तःस्थितिं प्राकारान्तर्वासं विदधतां कुर्वतां तत्र वर्तमानानामबलाजनानां स्त्रीजनानामखिलान्यास्यानि मुखानि जेतुम् । किलेति संभावनायाम् । परिखां वलयीभूतजलदुर्गमवतीर्य तीर्त्वा प्राकारभित्तिमभितः सालस्य सर्वप्रदेशेषु । 'अभितःपरितः—' इत्यादिना द्वितीया । परिवेष्टयन्ति व्याप्नुवन्ति । अत्र पङ्कजप्राकारपरिवेष्टनस्यान्तःस्थिताङ्गनावदनजयफलकत्वोत्प्रेक्षणात्फलोत्प्रेक्षा ॥ ११ ॥

येति । या पुरी पुरा पूर्वं कुरुधराधिपस्य दुर्योधनस्यापराधेन निजपुत्रीहरणसाम्बबन्धनात्मकेन समेधितः प्रवृद्धः क्रोधो यस्य तेन हलधरेण बलरामेण ( कर्त्रा ) निजायुधेन हलेन ( करणेन ) हठाद्बलात्कर्षणात्मिकया शिक्षया समुत्क्षिप्त उद्धृतो दक्षिणः क्षितेर्भूमेर्भागो यस्यास्तथोक्ता सती । अतएव तस्य बलरामस्येदं तदीयं भुवनं पाताललोकः । तस्य शेषावतारत्वादिति भावः । तस्य भूषणमिवाचरन्तीं भूषणायमानां भोगवतीं नाम पुरीमात्मना निजस्वरूपेण विजेतुं किल जेतुमिवेत्युत्प्रेक्षा । 'वार्तासंभाव्ययोः किल' इत्यमरः । भागीरथ्या गङ्गाया उत्तरभागस्थितायाः पाथःपथेन जलमार्गेणावतीर्य कृतप्रस्थाना स्वीकृतप्रयाणेवेत्युत्प्रेक्षा । अद्यापि परिदृश्यते खलु । लोकैरिति शेषः । अत्र बलरामपरिभूतायास्तं जेतुमशक्तायास्तत्पक्षजयोद्योगकथनात्प्रत्यनीकालंकारः । तस्य चाङ्गाङ्गिभावेन संकीर्णाभ्यामुत्प्रेक्षाभ्यां संसृष्टिः । तस्याश्च वृत्त्यनुप्रासेनैकवाचकानुप्रवेशसंकरः ॥

उपेत्येति । तां उक्तविशेषणविशिष्टां हस्तिनापुरीमुदारो महान्विक्रमो यस्य तथोक्तः पाण्डुर्नाम राजा कुरुवंश्य उपेत्य प्राप्य प्रजानां मनः प्रशासनात्प्रकृतिपरिपालनाद्धेतोः पल्लवयन् । रञ्जयन्नित्यर्थः । यमुनासख्या गङ्गायाः सखायः सदृशास्तैः 'राजाहःसखिभ्यष्टच्' । तद्वद्धवलैरिति यावत् । यशसः कीर्तेः

१. 'अन्तस्थितिम्' इति पाठः. २. 'शिक्षया' इत्यनन्तरं 'क्षणेन' 'तत्क्षणं च' इत्यधिकं क्वचित्. ३. 'भागतया' इति पाठः. ४. 'भोगावतीम्' इति पाठः. ५. 'किल' इति नास्ति क्वचित्. ६. 'दृश्यते' इति पाठः.

यं किल[1] पराशरसुतो निखिलावनी[2]देशावनाय निजजननीनिदे[3]-शावनम्रमना मनागितराश्चर्यतपश्चर्यालंकर्मीणः समानोदर्यस्य विचित्रवीर्यस्य कुटुम्बिन्यामम्बालिकायां संपादयामास ।

चित्रं चरित्रं जगतीतलेऽस्य न श्लाघयामास नरेषु को वा ।
स यत्स्वयं पाण्डुरपि स्वकेन गुणेन रक्तानकरोत्समस्तान् ॥ १३ ॥

अन्तर्भवत्कृष्णमृगाजिनाङ्कैः सुनिर्मलैः षोडशदानकीर्तेः ।
खण्डैरमुष्येन्दुरकारि धात्रा मृषायमब्धेरजनीति वार्ता ॥ १४ ॥

---

प्रकाशैर्लोकं निजस्य नाम्नः पाण्डुरिति शब्दस्य वाच्यतामर्थवत्तम् । धावल्यमिति यावत् । निनाय प्रापितवान् । दुहादित्वाच्चयतिर्द्विकर्मकः । श्लेषसंकीर्णस्तद्गुणालंकारः—'तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणाहृतिः' इति लक्षणात् । वंशस्थं वृत्तम्—'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात् ॥ १२ ॥

यमिति । इतरेषामाश्चर्यकारिण्यां तपश्चर्यायामनुष्ठानेऽलंकर्मीणः समर्थः । 'कर्मक्षमोऽलंकर्मीणः' इत्यमरः । पराशरसुतो व्यासो निखिलानामशेषाणामवन्यां भुवि देशानां विषयाणामवनाय पालनार्थं मनाक्स्वल्पं निजजनन्याः सत्यवत्या निदेशेन प्रेरणयावनम्रं नियोजितकरणाभिमुखं मनो यस्य तथोक्तः सन् । अत्र जननीनिदेशे मनाक्त्वोक्त्यात्यन्ताकरणीयेऽपि प्रवृत्तेर्महत्यस्य मातरि भक्तिरिति सूच्यते । समानोदर्यस्य सहजस्य । 'समानोदर्यसोदर्यसगर्भ्यसहजाः समाः' इत्यमरः । विचित्रवीर्यस्य शान्तनवस्य राज्ञः कुटुम्बिन्यां भार्यायां अम्बालिकायां यं पाण्डुं संपादयामास जनयामास । किलेति वार्तायाम् । स पाण्डुरिति पूर्वेण संबन्धः ॥

चित्रमिति । चित्रमाश्चर्यकरमस्य पाण्डोश्चरितं जगतीतले लोके नरेषु इति को वा नरः न श्लाघयामास न स्तुतवान् । सर्वोऽपि श्लाघयामासैवेत्यर्थः । यद्यस्मात्स राजा स्वयं पाण्डुर्धवलोऽपि तन्नामकोऽपीति च स्वकेन स्वीयेन गुणेन धावल्येन प्रकृतिरञ्जनात्मकेन च समस्ताञ्जनान्रक्तानरुणाननुरक्तांश्चाकरोत् । अत्र श्लेषानुप्राणितो विरोधाभासस्तदनुप्राणितस्तद्गुण इति श्लेषविरोधाभाससंकरतद्गुणयोरङ्गाङ्गिभावेन संकरः । उपजातिवृत्तमिन्द्रवज्रोपेन्द्रवज्रामिश्रणात् । तल्लक्षणं तु—'स्यादिन्द्रवज्रा यदि तौ जगौ गः,' 'उपेन्द्रवज्रा जतजास्ततो गौ,' 'अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः' इति ॥ १३ ॥

अन्तरिति । अन्तर्मध्ये भवन्वर्तमानः कृष्णमृगस्य संबन्धि अजिनं पापं तद्वधजन्यं तदेवाङ्कः कलङ्को येषां तैः । 'अजिनं पापमुच्यते' इति त्रिकाण्डशेषः । सुनिर्मलैरमुष्य पाण्डोः संबन्धिन्यः षोडशदानेभ्यो या कीर्तिस्तस्याः खण्डैः प्रत्येकमेकैकश आहृत्य षोडशभिः किरणैर्धात्रा ( कर्त्रा ) इन्दुश्चन्द्रोऽकारि निर्मितः । करोतेः कर्मणि लुङ् । अयं चन्द्रोऽब्धेः समुद्रादजनि जात इति वार्ता

---

१. 'किल' इति नास्ति क्वचित्. २.'अवनि' इति पाठः. ३.'निदेशवशमनाः' इति पाठः.

जग्राह निग्राहपरः परश्रियां [1]करैः कराग्रेण करेणुचङ्क्रमः ।
कुन्तीं [2]शकुन्तीशरथो यथा रमां समुद्रकाञ्चीं च स मद्रकन्यकाम् १५

अथ [3]कदाचिन्मृगयोपलालितहृदयो नरेश्वरोऽयमश्वे शशिश्वेत-रोचि[4]षि विश्वातिशायिनि [5]विजितमातरिश्वनि कृताधिरोहः पार्श्व-धृतविश्वकद्रुभिरनेकवा[6]गुराद्युपकरणैर्योधैरनुद्रुतो मृदुभद्रविनयाभ्यां

प्रवादो मृषा मिथ्यैव । जनेः कर्तरि लुङ् । अत्र इन्दुर्न समुद्राज्जातः किंतु पाण्डोः कीर्तिखण्डेभ्य इति चन्द्रस्य समुद्रजन्यत्वं निषिध्य कीर्तेः खण्डजन्यत्वारोपाद-पह्नवभेदः । यत्त्वत्र 'तिलास्तीर्णकृष्णाजिनेन सह दानकरणादन्तर्भवदित्यादिविशे-षणं चन्द्रे कलङ्कार्थम्' इति नृसिंहः, तत्तुच्छम् । कृष्णाजिनदानकीर्तेः कृष्णत्वे पीतहरितगारुत्मतादिदानकीर्तिखण्डानां तत्तद्वर्णतापत्त्या महती प्रकृतहानिः स्या-दिति । पुरा किल पाण्डुर्मृगयां गच्छन्वने क्रीडतोर्मृगरूपयोर्मुनिदम्पत्योः पुमांसं निघ्नन्ननर्थमविन्दत—इति भारतकथात्रानुसंधेया ॥ १४ ॥

**जग्राहेति ।** करै राजग्राह्यधनैः परश्रियां शत्रुसंपदां निग्राहो नितरां स्वी-कारस्तस्मिन्पर आसक्तः । करेणोर्गजस्येव चङ्क्रमो गमनं यस्य तथोक्तः । मत्तगज-मन्दगामीत्यर्थः । स पाण्डुः कुन्तीं मद्रकन्यकां माद्रीं च उमे शकुन्तानां पक्षि-णामीशो गरुडो रथो यस्य तथोक्तो विष्णुः रमां लक्ष्मीं समुद्रकाञ्चीं भुवं च यथा ते उमे इव कराग्रेण जग्राह । उपयेम इत्यर्थः । गृह्णातेः कर्तरि लिट् । उपमालं-कारः । तस्य च वृत्त्यनुप्रासेन सहैकवाचकानुप्रवेशसंकरः ॥ १५ ॥

**अथेति ।** अथ कुन्तीमाद्रीपरिणयानन्तरं कदाचिज्जातुचित् अयं नराणामी-श्वरः पाण्डुर्मृगययोपलालितमनुरञ्जितं हृदयं यस्य तथोक्तः सन् । 'मृगव्यं स्यादाखेटो मृगया स्त्रियाम्' इत्यमरः । विश्वं समस्तवस्तुजातमतिशेत इति विश्वातिशायिनि । ताच्छील्ये णिनिः । विजितो मातरिश्वा वायुर्येन तस्मिन् । वेगे-नेति भावः । शशिनश्चन्द्रस्येव श्वेतं रोचिः कान्तिर्यस्य तस्मिन् अश्वे कृतोऽधि-रोह आरोहणं येन तथोक्तः सन् पार्श्वयोः सव्यदक्षिणयोर्धृता गृहीता विश्व-कद्रवः शुनका यैस्तैः । अनेकानि वागुरा मृगबन्धनजालं आदिर्येषां तान्युपकर-णानि मृगयासाधनानि येषां तैर्योधैराटविकैरनुद्रुतः परिवृतश्च सन् मृदुर्भद्रो मङ्गलकरश्च विनयो ययोस्ताभ्यां यदोर्मद्रस्य च तनयाभ्यां कुन्तीमाद्रीभ्यामनु-विद्धोऽन्वितः सन् सिद्धानां योगिनां गणेन गणनीयो महिमा प्रभावोऽस्यास्तीति तद्वतो हिमवतो हिमगिरेर्महतीं विस्तीर्णामटवीतटस्य वीथिकां जगाहे प्रविष्ट-वान् । अत्र गद्येषु प्रायश एव वृत्त्यनुप्रासादयः । 'इति नेति शङ्किता' (?) इति । 'अनेकवागुरिकोपकरणानुरोधैः' इति च पाठः ॥

१. 'करे' इति पाठः. २. 'शकुन्ते' इति पाठः. ३. 'कदाचन' इति पाठः. ४. 'तेजसि' इति पाठः. ५. 'रयविजित' इति पाठः. ६. 'वागुरोपकरणानुरोधैर्योधैः' इति पाठः.

यदुमद्रतनयाभ्यामनुविद्धः सिद्धगणगणनीयमहिमवतो हिमवतो जंगाहे महतीमटवीतटवीथिकाम् ।

तत्र स तावदतिक्षुल्लकवनमल्लिकामतल्लिकोद्वेल्लितधम्मिल्लोऽवलग्न-दृढलग्नकच्छपुटविच्छुरितच्छुरिको निषङ्गानुषङ्ग[2]मांसलिततमांसल-लितः पर[3]निरासनपरं शरासनवरं करे कुर्वाणो गीर्[4]वाणचक्रवर्तिविक्रमः क्रमेण [5]विविधमृगवधं विधातुमुपचक्रमे ।

भूभुजोऽस्य सविधे विचरन्त्योर्भोजम[6]द्रसुतयोर्दृशि शोभाम् ।
जेतुकाममिव सर्वसमष्ट्या प्रादुरास पुरतो मृगयूथम् ॥ १६ ॥

क्षोणीपतौ यदकलं प्रति कृष्णसारं
तूणीमुखे पतितपाणिनखाङ्कुरेऽस्मिन् ।

---

तत्रेति । तत्र हिमशैलारण्ये । तावदिति वाक्यालंकारे । अतिक्षुल्लकाभिः स्वल्पाभिः । मृदुलाभिरिति यावत् । वनमल्लिकामतल्लिकाभिः प्रशस्तारण्यमल्लिकालताभिः । 'मतल्लिका मचर्चिका' इति प्रशस्तवाचकेष्वमरः । उद्वेल्लित ऊर्ध्वं बद्धो धम्मिल्लः कचभारो यस्य सः 'धम्मिल्लः संयताः कचाः' इत्यमरः । अवलग्ने मध्यदेशे दृढं लग्ने बद्धे कच्छपुटे मध्यबन्धनपट्टान्तरे विच्छुरिता प्रविष्टा छुरिका स्वल्पखड्गविशेषो यस्य तथोक्तः । 'कच्छो जलप्रायदेशे मध्यबन्धनपट्टके' इति विश्वः । निषङ्गयोस्तूणीरयोरनुषङ्गेण संयोगेन । धारणेनेति यावत् । मांसलिततमाभ्यां पूरिताभ्यामंसाभ्यां भुजाग्राभ्यां ललितो रमणीयो गीर्वाणानां देवानां चक्रवर्तिना इन्द्रेण समो विक्रमो यस्य तथोक्तः स पाण्डुः परेषां शत्रूणां निरासने परं प्रवणं शरासनवरं श्रेष्ठं धनुः करे कुर्वाणो दधानः सन् क्रमेण विविधानां मृगाणां वधं हिंसां विधातुं कर्तुमुपचक्रम आरब्धवान् ॥

भूभुज इति । मृगाणां यूथं कुरङ्गकुलम् । अस्य भूभुजः पाण्डोः सविधे समीपे विचरन्त्योर्भोजमद्रसुतयोः कुन्तीमाद्र्योर्दृशि चक्षुषि या शोभा वैपुल्यनैल्यचाञ्चल्यकृतसौन्दर्यं तां सर्वेषां समष्ट्या मेलनेन । सर्वेऽपि संभूयेत्यर्थः । जेतुं कामो यस्य तथोक्तमिवेत्युत्प्रेक्षा । 'तुं काममनसोरपि' इति तुमुनो मकारलोपः । प्रत्येकं तादृशकामस्य गगनकुसुमप्रायत्वात् । 'बहूनामप्यसाराणां संयोगः कार्यसाधकः' इति न्यायाच्चेति भावः । पुरतोऽग्रे प्रादुरास आविर्बभूव । अत्र सर्वसमष्ट्या जेतुकाममिवेत्युत्प्रेक्षया कुन्तीमाद्रीनयनसौन्दर्यं लोकोत्तरमिति प्रतीतेरलंकारेण वस्तुध्वनिः ॥ १६ ॥

क्षोणीपताविति । क्षोणीपतौ भूनायकेऽस्मिन्पाण्डौ मदकलं मदोत्कटं कृष्णसारं प्रति । कृष्णमृगमुद्दिश्येत्यर्थः । यत्तु 'मदेन कलं अव्यक्तमधुरम्' इति

---

१. 'अवजगाहे' इति पाठः. २. 'मांसलतमां', 'मांसलितमां' इति च पाठः. ३. 'निरासपरं' इति पाठः. ४. 'गीर्वाणगणचक्र' इति पाठः. ५. 'मृगचक्रवधम्' इति पाठः. ६. 'भद्रतनयोः' इति पाठः.

एणीकुलानि तरलैर्यमुनाजलानां
वेणीमिवाक्षिवलनैर्विपिने वितेनुः ॥ १७ ॥

कुरङ्गयूनां कुरुते स्म भीतिं गुरोः कुलस्यामृतदीधितेर्नः ।
सजातिरेषां तनुते कलङ्कमितीव रोषादिषुभिः स पाण्डुः ॥ १८ ॥

प्रजवं हयं गमयते ततस्ततः
पतिता नृपाय शल्लीशलाकिका[1] ।
गहने वनेऽपि पिशुनत्वमाचर-
न्ग्रहणे वराहकुलवर्तनीभुवाम् ॥ १९ ॥

वेशन्तपङ्कविहृतेर्विनिवृत्य सद्यः
प्रत्युद्यतां ध्वनिषु मत्सरिणां हयस्य ।

---

नृसिंहः, 'मदोत्कटो मदकलः' इति कोशानभिज्ञताविलसितम् । तूण्या मुखे अग्रे पतिता लमाः पाणेर्हस्तस्य नखा अङ्कुरा इव यस्य तस्मिंस्तथोक्ते सति । बाणानादायेति शेषः । एणीकुलानि मृगीवृन्दानि तरलैश्चकितचकितैरक्षिवलनैः कटाक्षैर्विपिनेऽरण्ये यमुनाजलानां वेणीं प्रवाहं वितेनुः विस्तारयामासुरिवेत्युत्प्रेक्षा । चकितचकितं प्रतिदिशमवलोकयन्नित्यर्थः । अतिनैल्यात्कटाक्षाणां यामुनजलपूरत्वोत्प्रेक्षणम् ॥ १७ ॥

कुरङ्गेति । एषां कुरङ्गयूनां समाना अभिन्ना जातिः कुरङ्गत्वं यस्य सः सजातिः । एतज्जातीय इति यावत् । 'समानस्य' इति सूत्रे समानस्येति योगविभागात्समानशब्दस्य सभावः । कश्चिन्मृगो नोऽस्माकं संबन्धिनः कुलस्य गुरोरमृतदीधितेश्चन्द्रस्य कलङ्कं तनुते करोति इत्युक्तप्रकाराद्रोषात् कोपादिवेत्युत्प्रेक्षा । स पाण्डुरिषुभिर्बाणैः कुरङ्गयूनां तरुणमृगाणां भीतिं वधकृतां कुरुते स्म चक्रे । 'लट् स्मे' इति भूतार्थे लट् ॥ १८ ॥

प्रजवमिति । प्रकृष्टो जवो वेगो यस्य तम् । गमक्रियाविशेषणं वा । हयं अश्वं गमयते यापयते नृपाय पाण्डवे ततस्ततः । तत्रतत्रेति सार्वभक्तिकस्तसिः । पतिताः शल्ल्यः शलाकिका इव शल्लीशलाकिकाः शल्यमृगरोमाणि । 'श्वाविन्तु शल्यस्तल्लोम्नि शल्ली शललं शलम्' इत्यमरः । गहने दुरवगाहेऽपि वने वराहाणां कुलस्य यूथस्य या वर्तनीभुवो मार्गदेशास्तासां ग्रहणे विज्ञाने विषये पिशुनत्वं सूचकत्वमाचरन् चक्रुः । आङ्पूर्वाच्चरतेः कर्तरि लङ् । अत्रेमा वराहकुलवर्तन्यः शल्लीमत्त्वादिति शल्लीभिर्वराहमार्गानुमानादनुमानालंकारः । नृपायेत्यत्र 'क्रियाग्रहणं कर्तव्यम्' इति संप्रदानत्वम् । मञ्जुभाषिणीवृत्तम्—'सजसा जगौ भवति मञ्जुभाषिणी' इति लक्षणात् ॥ १९ ॥

वेशन्तेति । भूर्दारा यस्य स एष पाण्डुर्हयस्य ध्वनिषु हेषारवेषु मत्सरिणां

---

१. 'शलालिका:' इति पाठः.

भूदार एष वनपोत्रवतामतानी-
द्भूदारशब्दमसहिष्णुरिवान्तमेषाम् ॥ २० ॥

तूर्णं प्रधाव्य तुरगं स्वयमन्यतोऽसौ
पाण्डुः कुलं परिववार लुलाययूनाम् ।
अग्रे विशालकरधूननदुर्विधत्वा-
त्सत्यापितद्विरदभावविपर्ययाणाम् ॥ २१ ॥

आकर्ण्य क्षितिपहयारवानसह्या-
नामूलं कुपितधियस्तिरो विषाणम् ।
व्याधूयान्तिकतरुषु क्षणान्निचख्नु-
र्व्याक्रष्टुं पुनरथ तच्चिरान्न शेकुः ॥ २२ ॥

कुरुतेति ततः सहैव वासं कुलकूटस्थकृतान्तवाहनेन ।

---

द्वेषिणाम् । अतएव सद्यो हेषारवश्रवणक्षण एव वेशन्तानां पल्वलानां पङ्के विहृतेः क्रीडातः विनिवृत्य । त्यक्त्वेत्यर्थः । 'जुगुप्साविराम—'इत्यादिना अपादानत्वम् । प्रत्युद्यतां अभिमुखमागच्छतां वने पोत्रवतां वराहाणां भुवं दारयतीति भूदार-शब्दं संज्ञामसहिष्णुरसहमान इवेत्युत्प्रेक्षा । 'अलंकृञ्—' इत्यादिना इष्णुच् । एषां वनवराहाणामन्तं नाशमतानीत्कृतवान् । तनोतेः कर्तरि लुङ् । मानिनः स्वसाम्यं नाममात्रेणापि न सहन्त इति भावः । अत्रासहनोत्प्रेक्षाया भूदारशब्दश्लेषोत्था-पितत्वाद्वयोरङ्गाङ्गिभावेन संकरः ॥ २० ॥

**तूर्णमिति** । असौ पाण्डुः स्वयं तुरगमश्वमन्यतोऽन्यस्मिन्देशे प्रधाव्य धावयित्वाग्रे मुखभागे विशालस्य दीर्घस्य करस्य शुण्डाया धूननेन चालनेन दुर्विधत्वाद्दरिद्रत्वात् । शुण्डाशून्यत्वाद्धेतोरिति यावत् । 'निःस्वस्तु दुर्विधो दीनो दरिद्रः' इत्यमरः । सत्यापितो याथार्थ्येन ज्ञापितो द्विरदभावस्य गजत्वस्य विपर्ययो वैपरीत्यं येषां तेषां लुलाययूनां तरुणवनमहिषाणां कुलं परिववार निरुद्धवान् । वृणोतेः कर्तरि लिट् ॥ २१ ॥

**आकर्ण्येति** । असह्यान्सोढुमशक्यान् । प्रकृतिवैरादिति भावः । क्षितिपस्य पाण्डोर्हयस्यारवानाकर्ण्य कुपिता धीर्येषां ते वनमहिषाः । विषाणं शृङ्गमिति जात्ये-कवचनम् । तिरस्तिर्यग्व्याधूय अन्तिके समीपे ये तरवस्तेषु आमूलं शृङ्गादिभाग-पर्यन्तं क्षणान्निचख्नुर्निखातवन्तः । निपूर्वात्खनतेः कर्तरि लिट् । अथ तन्निखातं विषाणं पुनर्व्याक्रष्टुमुद्धर्तुं चिरादपि न शेकुर्न शक्तवन्तः । शक्नोतेः कर्तरि लिट् । 'नैवात्मनीनमथवा क्रियते मदान्धैः' इति न्यायादिति भावः । प्रहर्षिणीवृत्तम् । 'म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्' इति लक्षणात् ॥ २२ ॥

**कुरुत इति** । ततो हे वनमहिषाः, यूयं कुले युष्मद्वंशे कूटस्थेनादिमेन

---

१. 'विपाणकर' इति पाठः. २. 'अपि तच्चिरं न' इति पाठः.

मदधूतविषाणमण्डलाग्रे महिषौघे निचखान मण्डलाग्रम् ॥ २३ ॥
तत्र चित्रमवनीपतेस्ततश्चन्द्रहासपतनं चकार यत् ।
पोषितेषु वनमध्यचर्यया पुण्डरीकनिवहेषु मीलनम् ॥ २४ ॥
गहनमस्तशरारुमृगव्रजं कृतवताप्यमुना जविवाजिना ।
ममृगिरे हरयो मदशालिनो मनुजपेन गिरीशदरीशयाः ॥२५॥

---

कृतान्तवाहनेन यममहिषेण सहैव वासं कुरुत विदद्ध्वम् । इत्युक्तप्रकारेण । आज्ञाप्येवेति शेषः । अतएव गम्योत्प्रेक्षा । मदेन धूतं कम्पितं विषाणमण्डलस्याग्रं यस्य तस्मिन्महिषाणां ओघे समूहे मण्डलाग्रं करवालं निचखान । महिषानवधीदित्यर्थः । वृत्तं वैतालीयभेदमौपच्छन्दसिकम्—'पर्यन्ते यौं तथैव शेषमौपच्छन्दसिकं सुधीभिरुक्तम्' इति लक्षणम् । शेषमुक्तादन्यल्लक्षणं तथा वैतालीयवदेवेत्यर्थः ॥ २३ ॥

**तदिति** । ततः अवनीपतेः पाण्डोश्चन्द्रहासस्य खड्गस्य पतनं प्रवेशः ( कर्तृ ) चन्द्रहासश्चन्द्रिका तत्पतनमिति च । वनस्यारण्यस्य जलस्य च मध्ये चर्यया जीवनेन पोषितेषु वर्धितेषु पुण्डरीकाणां व्याघ्राणां श्वेताम्बुजानां च निवहेषु । 'व्याघ्रेऽपि पुण्डरीको ना सितच्छत्रे सिताम्बुजे' इत्यमरः । मीलनं मृतिं मुकुलनं च । 'मृतिः संस्था विमीलनम्' इत्यमरः । चकारेति यत्, तत्र चित्रम् । सर्वस्य स्वाभाविकं चेष्टितं न चित्रायेति भावः । अत्र चन्द्रहासवनपुण्डरीकमीलनशब्दवाच्यानां खड्गारण्यव्याघ्रमृतीनां चन्द्रिकाजलकमलमुकुलानां च श्लेषभित्तिकाभेदाध्यवसायमूलातिशयोक्त्या राज्ञो व्याघ्रवधस्यापि किंचित्करत्वेन लोकोत्तरमस्य शौर्यमिति प्रतीतेरलंकारेण वस्तुध्वनिः । यत्तु 'वनान्यासु सन्तीति वन्यो नद्यस्तासां पतिः समुद्रस्तत्संबन्धिनश्चन्द्रस्य हासश्चन्द्रिका' इति व्याख्याय 'वनीपतिव्यतिरिक्तराजसंबन्धिचन्द्रहासपतनस्य पुण्डरीकमीलनकरणं चित्रम्' इति मूलाद्बहिः चित्रं लिखितवान्नृसिंहः, तत्तस्यानाघ्रातव्याकरणगन्धस्य न चोद्याय । यतः 'तदस्यास्त्यस्मिन्' इति मतुवर्थे 'अत इनिठनौ' इतीनिप्रत्यये 'ऋन्नेभ्यो ङीप्' इति ङीपि च सति वनिनीत्येवंरूपापत्त्या प्रकृतानुपपत्तिर्हतवृत्तत्वाख्यदोषापत्तिश्च स्यात् । किंच अवनीपतेरिति व्यस्तस्य समस्तचन्द्रविशेषणत्वे 'ऋद्धस्य राजमातङ्गः' इत्यादिवदप्रयोगतापत्तिरिति । रथोद्धतावृत्तम्—'रान्नराविह रथोद्धता लगौ' इति लक्षणात् ॥ २४ ॥

**गहनमिति** । गहनमरण्यम् । अस्ता निरस्ताः शरारूणां घातुकानां मृगाणां व्याघ्रादीनां व्रजाः समूहा यस्मिंस्तत्तथोक्तं कृतवतापि जवेन युक्तो वाजी अश्वो यस्य तेनामुना पाण्डुना गिरीशस्य हिमवतो दरीषु शेरत इति तथोक्ता हरयः सिंहा ममृगिरेऽन्विष्टाः । मृगेः कर्मणि लिट् । अत्र 'दरीशया ममृगिरे' इत्युक्त्या

---

१. 'निजघान' इति पाठः।

विष्फारघोषमवकर्ण्य विनिर्वृतानां
हुंकुर्वतां तरुणकेसरिणां गुहाभ्यः ।
या केवलं प्रथममानन एव भल्लै-
स्तां पञ्चतां स विदधे सकलेऽपि देहे ॥ २६ ॥

एवमश्रान्तमृगयापरिश्रान्तमपरिमितस्वेदशीकरनिकरकोरकित-फालमूलमातेनिरे तमाश्यानं तुहिनगिरिदेश्यानन्दनीयमन्दिमानो मानससरोरविन्दमकरन्दसौरभपारदृश्वानो मातरिश्वानः ।

सिंहा अप्यस्माद्भीताः क्वचिल्लीना इति शौर्योत्कर्षः ।.अत्र जववाजीव जववाजी विवेकः तेन गहनमिव गहनं कामादिभिर्दुर्गममन्तःकरणं कृतवता अमुनापि मनोर्मन्त्रस्य योगात्मकस्य जपेनाभ्यासेन दर्यां दहराकाशे शया हर्योऽश्वो नीलपीतादयः मस्मृगिर इत्यर्थान्तरप्रतीतेस्तु अभिधायाः प्रकृतार्थमात्रनियन्त्र-णाल्लक्षणायाः प्रसक्त्यभावाद्ध्वनिरेव नार्थश्लेषः । द्रुतविलम्बितवृत्तम्—'द्रुतविल-म्बितमाह नभौ भरौ' इति लक्षणात् ॥ २५ ॥

विष्फारेति । विष्फारघोषं धनुष्टंकारमवकर्ण्य श्रुत्वा अतएव गुहाभ्यो विनिर्गतानां हुंनाम शब्दं कुर्वतां तरुणानां केसरिणां सिंहानां या पञ्चता विशा-लता मृतिश्च केवलं प्राधान्येन प्रथमं पूर्वं आनने मुख एव आसीत् तां पञ्चतां सकलेऽपि देहे भल्लैर्बाणविशेषैः स पाण्डुर्विदधे चकार । सिंहानवधीदित्यर्थः । दधातेः कर्तरि लिट् । 'संख्याभेदे विशालत्वे पञ्चता मरणेऽपि च' इति विश्वः । अत्र श्लेषमित्तिकया एकस्या एव पञ्चताया अनेकाश्रयकथनादतिशयोक्त्यनुप्राणितः पर्यायालंकारः ॥ २६ ॥

एवमिति । एवमुक्तप्रकारेण अश्रान्तया निरन्तरया मृगयया मृगयेन परिश्रान्तं अधिकश्रमयुक्तं अतएव अपरिमितैः खेदस्य शीकराणां बिन्दूनां निकरैः समूहैः कोरकितम् । व्याप्तमित्यर्थः । तारकादित्वादितच् । फालमूलं निटि-लभागो यस्य तथोक्तं तं पाण्डुं तुहिनगिरेर्हिमवतः । देशे भवा देश्याः । 'तत्र भवः' इति यत् । नन्दनीयः श्लाघनीयो मन्दिमा मान्द्यं येषां ते । पृथ्वादित्वादिम-निच् । मानसाख्ये सरसि यान्यरविन्दानि कमलानि तेषु मकरन्दसौरभस्य पारमन्तं पश्यन्तीति पारदृश्वानः मातरिश्वानो वायवः तमाश्यानं निर्द्रवम् । निरस्तश्रमज-लमिति यावत् । आतेनिरे कृतवन्तः । तनोतेः कर्तरि लिट् । यत्तु 'तुहिनगिरिदे-श्यैर्हिमवद्वासिभिरानन्दनीयो मन्दिमा येषां ते' इति नृसिंहः, तदबोधात्पाण्डोर-तुहिनगिरिदेश्यत्वात्, तेन तन्मान्द्यस्यानन्दनीयत्वानापत्तेः विशेषणद्वयेन मान्द्यसौ-रभ्ययोरेव प्रतीत्या शैत्यद्योतनविशेषणाभावप्रयुक्तन्यूनपदत्वाख्यदोषापत्तेश्चेति ॥

१. 'विस्फार' इति पाठः. २. 'मानससरोरविन्दविन्दुसंदोहसौरभपारदृश्वानो' इति पाठः. ३. 'सौरभी'; 'सौरभ्य' इति पाठौ.

तदनन्तरमसौ[1] परंतपः समन्ततः शकुन्तरवनिरन्तरदिगन्तरादखिलमृगकुलशरण्यादरण्यादुत्प्लवमानस्य कस्यचिदनुप्लवनमन्दीभूत[2]जवचमूरोश्चमूरोः सरणिमनुसरमाणस्तदीयतनूरुहचित्रविन्दुनिकरैरिव गगनमुत्पतद्भिः[3] खुररजोभिरनुमीयमानतुरगगतिः सुदूरमनु[4][5]पपात ।

तत्र तावत्कस्मिंश्चिल्लतागुल्मपरिसरे[6] स नरनाथः परिकथिततरुणिमप्रथित[7]कलेवरमशिथिलरतिसुखसनाथं हरिणमिथुनं नयनपथस्यातिथीचकार ।

तिग्मेन बाणेन जघान तस्मिन्युग्मे नराणामधिपः पुमांसम् ।

---

तदिति । तस्माच्छ्रमापनोदादनन्तरं परं शत्रुं तपतीति परंतपः । 'द्विषत्परयोस्तापेः' इति खिलात्खशि मुम् । असौ पाण्डुः शकुन्तानां पक्षिणां रवैर्निरन्तराणि सान्द्राणि दिशामन्तराणि यस्मिंस्तस्मात् । 'शकुन्तपक्षिशकुनि' इत्यमरः । अखिलानां मृगाणां कुलस्य शरण्यात् निवासजीवनदानादिना रक्षकात् । 'तत्र साधुः' इति यत् । अरण्यात् हिमवद्वनादुत्प्लवमानस्य धावतोऽनुप्लवनेन । अनुधावनश्रमेणेत्यर्थः । मन्दीभूतौ स्तम्भितौ जवचम्वाः सेनाया ऊरू यस्य तस्य कस्यचिच्चमूरोर्हरिणविशेषस्य सरणिं मार्गमनुसरमाणः सन् । तस्येमानि तदीयानि यानि तनूरुहाणि लोमानि तत्संबन्धिनां चित्रबिन्दूनां शबलवर्णलोमसंस्थानविशेषाणां निकरैः पुञ्जैरिव स्थितैर्गगनमुत्पतद्भिः खुराणां शफानां संबन्धिभी रजोभिः पार्वतीयधातुधूलिभिरनुमीयमाना तर्क्यमाणा तुरगस्य गतिर्गमनं यस्य तथोक्तः सन् सुदूरमनुपपात गतवान् । अनुपूर्वात्पततेः कर्तरि लिट् ॥

तत्रेति । तत्र सुदूरदेशे । तावदिति वाक्यालंकारे । कस्मिंश्चित् लतागुल्मस्य निकुञ्जस्य परिसरे समीपे स नरनाथः पाण्डुः परिकथितेन परिदृश्यमानेन तरुणिम्ना यौवनेन प्रथितं प्रसिद्धं कलेवरं यस्य तथोक्तम् । अशिथिलेन सान्द्रेण रतिसुखेन सनाथं संगतं हरिणी च हरिणश्च तयोर्मिथुनं द्वन्द्वं नयनपथस्य नेत्रमार्गस्य अतिथीचकार विषयीकृतवान् । हरिणद्वन्द्वं दृष्टवानित्यर्थः ॥

तिग्मेनेति । नराणामधिपः पाण्डुः तस्मिन्युग्मे हरिणमिथुने पुमांसं मृगं तिग्मेन तीक्ष्णेन बाणेन जघान हतवान् । असौ बाणनिहतो वातायुर्मृगः । 'मृगे कुरङ्गवातायुहरिणाः' इत्यमरः । जातः आयुषो जीवितकालस्य अन्तः समाप्तिः यस्य तथोक्तः सन् महर्षेः किंदमनामधेयस्याकारं तत्स्वरूपं सहसा तत्क्षणमेव

---

१. 'तद्' इति नास्ति क्वचित्. २. 'मन्दितजवि' इति पाठः. ३. 'रुचिरैर्गगनं समुत्पतद्भिः' इति पाठः. ४. 'दूरम्' इति पाठः. ५. 'अतिपपात' इति पाठः. ६. 'क्वचन' इति पाठः. ७. 'प्रथिम' इति पाठः.

वातायुराकारमसौ महर्षेर्जातायुरन्तः सहसाललम्बे ॥ २७ ॥

ततः कृपामन्दमनाः किंदमनामधेयः संदारिततनुस्यन्दमानरुधिरेण महारुषा कल्परविकल्पमहा रुषा तस्मिन्महीभृति संभोगसंभेदकमम्भोजदृशां दम्भोलिमिव सहस्राक्षः शापमुदस्राक्षीत् ।

तदनु तापसशापेन विरचितमनस्तापेन तेन भूपेन चतुरङ्गबलमिव सप्ताङ्गराज्यमपि व्यसृज्यत ।

अष्टाङ्गयोगानवतोऽस्य राज्ञो मिष्टान्नमासीन्मृदुकन्दमूलम् ।
गर्भो वनस्याजनि केलिसौधो दर्भोऽपि सिंहासनतां जगाहे ॥२८॥

---

आललम्बे स्वीकृतवान् । यत्तु 'जातारुरन्तम्' इति पाठान्तरम्, तन्मूलकृदमिमतलाटानुप्रासभङ्गादुपेक्ष्यम् ॥ २७ ॥

**तत इति ।** ततः ऋष्याकारस्वीकरणानन्तरं किंदम इति नामधेयं यस्य स ऋषिः कृपया कारुण्येन मन्दं शून्यं मनो यस्य तथोक्तः सन् सम्यग्दारिताया बाणविपाटितायास्तनोः शरीरात्स्यन्दमानं रुधिरं रक्तं यस्मिंस्तेन महताऽरुषा व्रणेन । 'व्रणोऽस्त्रियामीर्ममरुः' इत्यमरः । रुषा कोपेन च कल्परविकल्पं प्रलयार्कतुल्यं महत्तेजो यस्य तथोक्तः सन् तस्मिन्महीभृति पाण्डौ पर्वते च अम्भोजदृशां स्त्रीणां संभोगस्य सुरतस्य सम्यग्भोगस्य सुखस्य च संभेदकं नाशकं शापम् । सहस्राक्षो दम्भोलिं वज्रमिव । उदस्राक्षीत्पातितवान् । सृजतेः कर्तरि लुङ् । 'यथा मिथुनीभूय क्रीडंस्त्वया मारितोऽहम्, तथा त्वमपि निधुवनाय वधूमुपगच्छन्मरिष्यसि' इति शप्तवानित्यर्थः ॥

**तदन्विति ।** तदन्वनन्तरं तापसस्य किंदमस्य शापेन विरचितो मनसि तापो यस्य तेन भूपेन पाण्डुना चत्वार्यङ्गानि हस्त्यश्वरथपादातरूपाणि यस्य तथोक्तं बलमिव सप्त अङ्गानि स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलरूपाणि यस्य तथोक्तं राज्यमपि व्यसृज्यत । तदुभयमपि त्यक्तवानित्यर्थः । सृजतेः कर्मणि लङ् । भोगमूलं राज्यम्, राज्यमूलं बलम्, भोगप्रतिबन्धे ताभ्यां प्रयोजनाभावादिति भावः । अत्र बलराज्ययोः केवलप्रकृतयोस्त्यागक्रियान्वयित्वेन केवलप्रकृतास्पदतुल्ययोगितामेदः । 'वर्ण्यानामितरेषां वा धर्मैक्यं तुल्ययोगिता' इति लक्षणात् । एवमुत्तरत्रापि । प्रायेणात्रायमलंकारः ॥

**अष्टेति ।** अष्टावङ्गैरन्तःकरणादिभिर्ये योगास्तत्साध्या यमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाधयो योगशास्त्रप्रसिद्धास्तानवतो रक्षतोऽस्य राज्ञः पाण्डोर्मृदु कोमलं कन्दमूलं मिष्टं षड्रसोपेतमन्नमासीत् । वनस्य गर्भो मध्यदेशः केलिसौधोऽजनि जातः । जनेः कर्तरि लुङ् । दर्भोऽपि सिंहासनतां जगाहे प्राप ।

---

१. 'संदानित' इति पाठः. २. 'धरणीपतिना' इति पाठः. ३. 'चतुरङ्गम्' इति पाठः. ४. 'सप्ताङ्गम्' इति पाठः. ५. 'व्यसज्यत' इति पाठः.

अहो नरपतितापसयोः समानरूपं फलमिदमाचरितम् । तथाहि ।

वाणशापप्रयोगाभ्यां बाधितौ तावुभावपि ।
तपस्वितां यतः सद्यस्तादृशीमुपजग्मतुः ॥ २९ ॥

क्रमादतिपतिते चावरोधवधूजनानुरोधगुणदात्रे गणरात्रे—

अपाकरिष्यन्ननपत्यभावमपत्यभावं भुवनं करिष्यन् ।
उवाच देवीमुचितं स पाण्डुरुपह्वरे जातुचिदूहदक्षः ॥ ३० ॥

परिपालयतोऽपि मे महीं परिपूर्तिर्न तनूजदुर्गतेः ।
प्रजया हि मनुष्य इत्यसौ प्रथते हि श्रुतिवर्णपद्धतिः ॥ ३१ ॥

---

सिंहासनमभूदित्यर्थः । गाहतेः कर्तरि लिट् । दुर्लभसंसारसारेण किं राज्येनेति जुगुप्सया तापसत्वं स्वीकृतवानित्यर्थः ॥ २८ ॥

**अहो इति** । नरपतितापसयोः पाण्डुकिंदमयोः फलं वाणशापप्रयोगजन्यं समानरूपविभिन्नाकृति सत् आचरितमाविर्भूतम् । भावे क्तः । अहो इत्याश्चर्ये । इदमुत्तरेणैकवाक्यम्—तथाहीति ॥

**वाणेति** । तथा तावुभौ पाण्डुकिंदमौ वाणप्रयोगेण शापप्रयोगेण च । ताभ्यां क्रमोऽत्र विवक्षितः । बाधितावपि विभिन्नदुःखकारणावपि यतः कारणात्सद्यस्तत्क्षण एव तादृशीं राज्यमृगरूपत्यागपूर्विकां तपस्वितां मुनिभावं शोच्यत्वं च । 'तपस्वी तापसे शोच्ये' इति विश्वः । उपजग्मतुः प्राप्तवन्तौ । अत आश्चर्यमिति पूर्वेणान्वयः । कारणभेदेऽपि कार्यैक्यादाश्चर्यमिति भावः । वाक्यार्थहेतुकं काव्यलिङ्गमलंकारः । वृत्तमानुष्टुभभेदः ॥ २९ ॥

**क्रमादिति** । किं चेति चार्थः । अवरोधवधूजनस्यान्तःपुरस्त्रीजनस्यानुरोधोऽनुसरणं स एव गुणस्तस्य दात्रे शस्त्रभेदे लवित्राख्ये । 'दात्रं लवित्रम्' इत्यमरः । संभोगरहित इति यावत् । गणरात्रे रात्रिसमूहे क्रमादतिपतितेऽतिक्रान्ते सतीत्युत्तरेणैकवाक्यम् । 'गणरात्रं निशा बह्व्यः' इत्यमरः ॥

**अपाकरिष्यन्निति** । जातुचित् कदाचित् ऊहदक्ष उपायचिन्तने दक्षः समर्थः स पाण्डुः । न विद्यतेऽपत्यं यस्य सोऽनपत्यस्तस्य भावस्तमपुत्रत्वमपाकरिष्यन्निरसितुमिच्छन्सन् । आत्मन इति शेषः । भुवनं मर्त्यलोकं च । न विद्यते पत्यभावो यस्य तथोक्तं करिष्यन् । सपतिकं कर्तुमिच्छन्नित्यर्थः । उपह्वर एकान्ते देवीं कुन्तीमुचितमुवाच । पुत्रसंपादनाय देव्या सहालोचितवानित्यर्थः ॥ ३० ॥

सप्तभिः श्लोकैरुक्तिप्रकारमेवाह—**परिपालयत इति** । महीं परिपालयतोऽपि मे मम तनूजदुर्गतेः पुत्रदारिद्र्याद्धेतोः परिपूर्तिः मनोरथपरिपूर्णत्वं नास्ति । हि यस्मात् । मनुष्यः प्रजया संतत्या पूर्णो हीत्युक्तार्थिका असौ श्रुतिवर्णानां वेदाक्षराणां पद्धतिः पङ्क्तिः 'प्रजया हि मनुष्यः पूर्णः' इत्येवंरूपा प्रथते प्रसिद्धत्वेन वर्तते । निरपत्यस्य निष्फलं सर्वमिति भावः । वाक्यार्थहेतुकं काव्यलिङ्गम् ।

गात्रं न केवलमशेषबुधोपलाल्यं
गोत्रं च तत्रभवतः कुमुदैकबन्धोः ।
आपाण्डु वर्तत इति स्फुटमद्य मन्ये
यस्मात्प्रजां न लभसे यदुवीरकन्ये ॥ ३२ ॥

न ह्यतीव विधिरप्यसुतानां नह्यते फलमिति श्रुतिसिद्धेः ।
जीवतो मम यथाहवसाध्यो मीलतोऽपि न तथा परलोकः ॥३३॥

अहं किमम्बा किममीष्टतापदे तवेति मातुर्धुरि तातपृच्छया ।
प्रलोभतुल्यं प्रवदन्तमर्भकं मुदा हसञ्जिघ्रति मूर्ध्नि पुण्यभाक् ॥३४॥

वृत्तं वैतालीयम्—'षड्विषमेऽष्टौ समे कलास्ताश्च स्युर्नो निरन्तराः। न समात्र-पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः ॥' इति लक्षणात् ॥ ३१ ॥

गात्रमिति । तत्रभवतः पूज्यस्य कुमुदैकबन्धोश्चन्द्रस्य संबन्धि अशेषैर्बुधैर्देवैर्विद्वद्भिश्चोपलाल्यं श्लाघनीयम् । एकत्राख्यातत्वेन चेति भावः । गात्रं केवलं शरीरमेकमेव आ समन्तात्पाण्डु श्वेतं वर्तत इति न मन्ये । किंतु गोत्रं चन्द्रवंशोऽप्यापाण्डु पाण्डुराजपर्यन्तं वर्तत इत्यद्य स्फुटं मन्ये । कुत एतदत आह—यस्मादिति । यस्मात्कारणात् हे यदुवीरकन्ये कुन्ति, त्वं प्रजां संततिं न लभसे न प्राप्नोषि । अत्र चन्द्रवंशस्य पाण्डुराजपर्यन्तस्थितिरूपवाक्यार्थं प्रति पुत्रालाभरूपोत्तरवाक्यार्थस्य हेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ३२ ॥

न हीति । विधिः कर्म श्रौतस्मार्तात्मकम् । 'विधिर्विधाने दैवेऽपि' इत्यमरः । असुतानामपुत्राणां फलं स्वर्गादिरूपमतीव भृशं न नह्यते न घटयति । इत्येवं श्रुतौ वेदे सिद्धेः प्रसिद्धेर्हेतोः । जीवतो मम परलोकः शत्रुजन आहवेन युद्धेन साध्यो यथा भवति तथा मीलतः म्रियमाणस्यापि मम परलोकः स्वर्गादिः शत्रुजनश्च आहवेन ज्योतिष्टोमादियज्ञेन युद्धेन च साध्यो न भवति । 'जातपुत्रः कृष्णकेशोऽग्नीनादधीत' इत्यादिना सपुत्रस्यैव वैतानकर्मण्यप्यधिकारश्रवणादिति भावः । 'आहवः संगरे यज्ञे आह्वानेऽपि' इति विश्वः । अत्रापि वाक्यार्थहेतुकं काव्यलिङ्गम् । स्वागतावृत्तम्—'स्वागतेति रनभाद्गुरुयुग्मम्' इति लक्षणात् ॥ ३३ ॥

अहमिति । हे अर्भक, तव अभीष्टतायाः प्रेम्णः पदे स्थानेऽहं किम् । उताम्बा माता किम् । त्वत्प्रेमपात्रमहं वा माता वेत्यर्थः । इत्युक्तप्रकारया मातुर्धुर्येग्रे तातस्य पृच्छया प्रश्नेन प्रलोभ्यतेऽनेनेति प्रलोभेन करगतेन फलादिना तुल्यं तत्तारतम्यं यथा तथेत्यर्थः । प्रवदन्तं त्वमेवाभीष्टतापदं मातैवेत्यन्यतरद्भाषमाणमर्भकं शिशुं मुदा हर्षेण हसन्सन् पुण्यभाग्भाग्यवान्पुरुषो मूर्ध्नि जिघ्रति । अभाग्यानां पुत्रमूर्धाघ्राणस्यातिदुर्लभत्वादिति भावः । वंशस्थवृत्तम् ॥ ३४ ॥

१. 'स्वयमेव' इति पाठः.

निन्द्यते पितृभिस्तप्तैर्निरपत्यधनः पुमान् ।
अध्वनीनैरतिश्रान्तैरवकेशीव पादपः ॥ ३५ ॥
कदापि तातशब्दस्य कल्पभूमिरुहामिव ।
नार्थीभवितुमर्हामि नरवाहनसंनिभः ॥ ३६ ॥
किं भोगवैभवयशःक्षितिजीविताद्यै-
रम्भोरुहाक्षि नियमैरनघैस्त्वमेव ।
शापातिरेकदवपावकशायिनो मे
तापापनोदविधये तनयं प्रसुष्व[1] ॥ ३७ ॥

इत्यसंकोचतः शोचतः पत्युरग्रभुवि समग्रमन्दाक्षरमणीयं मन्दाक्षरमणीयन्त्रितमिदं वचनं पृथापि कथयामास ।

---

**निन्द्यत इति** । निर्गतमपत्यमेव धनं यस्य सोऽपुत्रः पुमान् तप्तैर्लुप्तपिण्डोदकक्रियतया दुःखितैः पितृभिः पूर्वैः अवकेशी निष्फलः पादपो वृक्षोऽतिश्रान्तैरध्वनीनैः पथिकैरिव निन्द्यते । निन्दतेः कर्मणि लट् । 'एष वा अनृणो यः पुत्री' इति श्रुतेः अपुत्रस्य पितृऋणापाकरणायोगादिति भावः । युग्मविपुलानामानुष्टुभं वृत्तम्—'यस्यां लः सप्त युग्मे स्यात्सा युग्मविपुला मता' इति लक्षणात् । अस्य च वक्त्रविशेषत्वात्—'वक्त्रं नाद्यान्नसो स्यातामब्धेर्योऽनुष्टुभि ख्यातम्' इतीतरत्र तल्लक्षणं बोध्यम् ॥ ३५ ॥

**कदेति** । नरवाहनेन कुबेरेण संनिभस्तुल्यः अहं तातेतिशब्दस्य जनकवाचकस्य कल्पभूमिरुहां कल्पवृक्षाणामिवार्थीभवितुं वाच्यीभवितुम् अर्थी याचको भवितुं च कदापि नार्हामि । अतो धनाढ्यस्य याच्ञाया इवापुत्रस्य तातेति व्यवहारस्याप्ययोगादित्यर्थः । यत्तु 'अपुत्रस्य स्वर्गाभावेन तत्रस्यकल्पवृक्षप्रार्थना दुर्लभा' इति, यदपि 'कुबेरवद्विद्यमानमैश्वर्यं पुत्राभावान्निष्फलम्' इति नृसिंहः, तदुभयमप्यनादरणीयम् । नरवाहनसंनिभ इति सादृश्योपयोगिनो वैयर्थ्यापत्तेरुत्तरश्लोके पौनरुक्त्यापत्तेश्चेति ॥ ३६ ॥

**किमिति** । भोगः स्रक्चन्दनवनिताद्यनुभवः, वैभवमैश्वर्यम्, यशो दानपालनक्षात्रजन्या कीर्तिः, क्षितिः भूः । राज्यमिति यावत् । जीवितं प्राणधारणम्, एतान्याद्यानि येषां तैरथैः शापस्य किंदमदत्तस्यातिरेकोऽतिशयः स एव दवपावको दवाग्निस्तस्मिञ्शेते इति शायिनः । ताच्छीलिको णिनिः । मे मम किम् । कार्यमिति शेषः । तादृग्विधस्य मे तापस्यापनोदनविधये निरासाय हे अम्भोरुहाक्षि, त्वमेवानघैर्भर्त्रनुज्ञातत्वेन निर्दोषैर्नियमैस्तनयं प्रसुष्व जनयेः । सुवतेः प्रार्थनायां लोट् । पुत्रसंपादकभोगस्य शापेनापेतत्वादिति भावः ॥ ३७ ॥

**इतीति** । इत्युक्तप्रकारेणासंकोचं निर्लज्जं यथा तथा शोचतो दुःखायमानस्य

---

१ 'प्रसूष्व' इति पाठः।

राजन्, खलु[1] पुरा मम पिता पितामहसमानस्य निशान्तमधिवसतः कृशां तनुलतां तपसा वहतोऽपि दिशां ततिषु निशान्तरविका[2]न्तिभृशान्तरङ्गाङ्गरुचां[3] तरंगपरंपरां तरलयतो[4]ऽशान्तमनसो मुनेरुपान्तपरिचरणाय मामनुशासितशैशवराज्या[5]मपि नियोज्यामकरोत् ।

ततो नियोगान्[6]समयेषु लब्धुं मया महायत्नजुषा महर्षेः ।
आरामवल्लीरपहाय[7] तस्य भ्रूवल्लिमेव प्रतिपाल्य तस्थे ॥ ३८ ॥

यथा यथा सेवनयत्नजन्मना निदाघतोयेन निषिक्तमङ्गकम् ।
तथा तथावर्धत तापसान्तिके महाविकासा मम भक्तिवल्लरी ॥ ३९ ॥

---

पत्युरग्रभुवि समग्रेण महता मन्दाक्षेण लज्जया रमणीया मनोज्ञा मन्दाः परिमिता अक्षराणि मणय इव तैर्यच्चितं संघटितमिदं वक्ष्यमाणं वचनं पृथा कुन्त्यपि कथयामासोक्तवती । कथयतेर्लिंव्यामादेशेऽस्तेरनुप्रयोगः ॥

राजन्निति । राजन्, खलु 'निषेधवाक्यालंकारजिज्ञासानुनये खलु' इत्यमरः । पुरा कन्यात्वदशायां मम पिता कुन्तिभोजो निशान्तमधिवसतः स्वगृहे वर्तमानस्य । 'उपान्वध्याङ्वसः' इति कर्मत्वम् । पितामहेन ब्रह्मणा समानस्य तपसा कृच्छ्रचान्द्रायणादिना कृशा तनुर्लतेव तां वहतोऽपि । तपःकृशस्यापीत्यर्थः । दिशां प्राच्यादीनां ततिषु समूहेषु निशान्तरवेर्बालसूर्यस्य कान्तीनां भृशमन्तरङ्गाणामाप्तानाम् । तत्तुल्यानामित्यर्थः । अङ्गरुचां देहप्रभाणां तरंगपरंपरां तरलयतः प्रसारकस्याशान्तं शान्तिरहितम् । क्रुद्धमिति यावत् । मनो यस्य मुनेर्दुर्वाससः उपान्ते समीपे परिचरणाय शुश्रूषणायानुशासितं पालितं शैशवं बाल्यमेव राज्यं यया तां तथोक्ताम् । बाल्यात्परिचरणाशक्तामपीत्यर्थः । मां नियोज्यां परिचारिकामकरोत् । महतां सेवाया दुर्लभत्वादविचार्य कुलवयःशीलादिकमवश्यं तेषां सेवनीयत्वादिति भावः ॥

तत इति । ततः समयेषु स्नानाद्यवसरेषु नियोगाज्जलानयनाद्याज्ञाप्यांल्लब्धुं प्राप्तुं महान्तं यत्नं जुषत इति तथोक्तया मया आरामे वल्लीः पुष्पलता विहाय तस्य महर्षेर्दुर्वाससो भ्रूरेव वल्ली तां प्रतिपाल्य निरीक्ष्य तस्थे स्थितम् । तिष्ठतेर्भावे लिट् । बाल्योचितपुष्पावचयं विहाय तन्नियोगानुदपादयमित्यर्थः । यत्तु 'नियोगात्' इति पञ्चम्यन्तपाठे क्रमेण 'नियोगादनुज्ञावाक्यात्' इति नृसिंहः, तत्तुच्छम् । 'लब्धुम्' इति तुमुन्नन्तस्य कर्माकाङ्क्षया साकाङ्क्षत्वदोषापत्तेश्च ॥ ३८ ॥

यथेति । ममाङ्गमेवाङ्गकं शरीरं सेवनयत्नान्मुनिसेवानुकूलव्यापाराज्जन्म यस्य तेन निदाघतोयेन श्रमजलेन यथा यथा निषिक्तमभिषिक्तम्, तथा तथा

---

१. 'पुरा खलु पिता मम' इति पाठः. २. 'रविकान्त' इति पाठः. ३. 'अन्तरङ्गरुचाम्' इति पाठः. ४. 'तरलयितुः' इति पाठः. ५. 'यौवराज्याम्' इति पाठः. ६. 'निदेशात्' इति पाठः. ७. 'प्रतिहाय' इति पाठः.

तपस्विनस्तस्य तपःकृशस्य सरूपतामाप्तुमिवाश्रयद्भिः ।
दिने दिने मे दयनीयरूपैरङ्गैरशेषैरतिकार्श्यमापे ॥ ४० ॥



आपादनेन समिधाममभिषेकवारा-
मभ्यर्चनासुमनसामपि तापसेन्द्रः ।
मय्येव शिष्यजनतामॅमितां वितन्व-
न्नन्ते वसन्तमपि कोपमपाचकार ॥ ४१ ॥

एकां समां तत्र वसन्कदाचिदेकां स मां पार्श्वगतामवेक्ष्य ।
समाधिवृत्त्या सह मौनमुद्रां समापयामास तपोधनेन्द्रः ॥ ४२ ॥

'वत्से, भवत्सेवासंप्रदायेन संप्रति भृशं प्रसीदामि' इति व्याहृत्य स मुनिरनुकम्पितचेता मह्यमत्यर्थमभीप्सितार्थसमर्थापनपरतन्त्रं कमपि मन्त्रमुॅपादिक्षत् ।



---

महान्विकासो वृद्धिर्यस्याः सा मम भक्तिरेव वल्लरी पुष्पलता तापसस्य दुर्वाससोऽन्तिके संनिधाववर्धत प्रवृद्धाभूत् । रूपकालंकारः ॥ ३९ ॥

तपस्विन इति । तपसा कृशस्य तपस्विनो दुर्वाससः सरूपतां सारूप्यमाप्तुमिवेत्युत्प्रेक्षा । आश्रयद्भिः सेव्यमानैर्दयनीयं कारुण्यास्पदं रूपमाकृतिर्येषां तैः । कृशीभूतैरिति यावत् । अशेषैरङ्गैरवयवैरतिकार्श्यमापे प्राप्तम् । आप्नोतेर्भावे लिट् ॥ ४० ॥

आपादनेनेति । तापसेन्द्रो दुर्वासाः समिधामिन्धनानामभिषेकस्य वारां जलानामभ्यर्चनासुमनसां देवपूजाकुसुमानामपि त्रयाणामापादनेन संपादनेन हेतुनाऽमितामनेकां शिष्यजनतां शिष्यभावं मय्येव वितन्वन्विस्तारयन्सन् । एकयैव शिष्यत्रयकृत्यसंपादनादिति भावः । अन्ते समीपे । मनसीति यावत् । वसन्तं वर्तमानमपि शिष्यमपीति च । कोपमपाचकार दूरीकृतवान् । प्रसन्नोऽभूदित्यर्थः । 'छात्रान्तेवासिनौ शिष्ये' इत्यमरः ॥ ४१ ॥

ततः किमित्यत आह—एकामिति । स तपोधनेन्द्रो दुर्वासास्तत्र गृहाराम एकां समां संवत्सरम् । 'हायनोऽस्त्री शरत्समाः' इत्यमरः । वसन्सन् । कदाचित्पार्श्वगतां निकटस्थितामेकां परिजनरहितां मां अवेक्ष्य समीक्ष्य समाधेर्योगस्य वृत्त्याभ्यासेन सह मौनमुद्रां वाचंयमत्वं समापयामासावसितवान् । द्वयमपि त्यक्त्वा मामुवाचेत्यर्थः ॥ ४२ ॥

वत्स इति । हे वत्से कुन्ति, भवत्याः सेवासंप्रदायेन शुश्रूषाविधिना संप्रतीदानीं भृशं प्रसीदामि प्रसन्नोऽस्मि । इत्युक्तप्रकारेण व्याहृत्योक्त्वानुकम्पितं कृपान्वितं चेतो मनो यस्य तथोक्तः स मुनिर्दुर्वासा मह्यमत्यर्थं भृशमभीप्सितार्थस्य

---

१. 'श्रयद्भिः' इति पाठः. २. 'ममतां' इति पाठः. ३. 'उपादिशत्' इति पाठः.

अपि क्रुधामावसतेरमुष्मान्मत्वा गुरुत्वं वरमन्त्रलाभे ।
अपुष्पवत्यामपि मे दशायामामोदभारोऽधिकमाविरासीत् ॥४३॥

अधुना तस्य प्रभावेन शतमखमुखासु निखिलासु लेखारेखासु ये ये परार्ध्यास्ते ते रहसि कृतसांनिध्याः स्वानुगुणगुणगणविभवानात्मभवान्मयि विकसदनुकम्पाः संपादयिष्यन्ति ।

इति नृपाय कृपायतचेतसे यदुसुता मुनिनेतुरनुग्रहम् ।
अदशनव्रणपीडमहर्पतेरभिदधे रतसंगमनं विना ॥ ४४ ॥

---

कामितार्थस्य समर्थापने संघटने परतन्त्रं आयत्तम् । समर्थमिति यावत् । कमप्यनिर्वाच्यम् । 'गुरुं प्रकाशयेद्धीमान्न तु मन्त्रं प्रकाशयेत्' इति मन्त्रनामाप्रकाशस्मरणात् । मन्त्रमुपादिक्षदुपदिष्टवान् । दिशतेः कर्तरि लुङ् ॥

अपीति । क्रुधां कोपानामावसतेर्निवासभूतादप्यमुष्माद्दुर्वाससो वरभूतस्य मन्त्रस्य लाभे सति गुरुत्वमाचार्यत्वं मत्वा ज्ञात्वा । क्रुद्धस्य गुरुत्वात्स्मरणात्क्रुद्धेऽपि शुश्रूषातिशयेन प्रसादसंपादनादात्मनि गुरुत्वं श्रैष्ठ्यं वा मत्वा । मे ममापुष्पवत्यां पुष्परहितायामपि अरजोवत्यामपीति च । दशायामवस्थायां बाल्ये च । अत एव विरोधाभासोऽलंकारः । आमोदभारः परिमलातिशयः संतोषातिशयश्चाधिकमाविरासीत् । 'आमोदो गन्धहर्षयोः' इति विश्वः ॥ ४३ ॥

अधुनेति । अधुनेदानीं शतमख इन्द्रो मुखमादिर्यासां तासु निखिलास्वखिलासु लेखानां देवानां रेखासु पङ्क्तिषु ये ये परार्ध्या गुणवत्तरास्ते ते वक्ष्यमाणा इन्द्रादयस्तस्य मुन्युपदिष्टमन्त्रस्य प्रभावेन सामर्थ्येन रहसि कृतं कारितं सांनिध्यं समीपस्थितिर्येषां ते तथोक्ताः । 'ध्यानमात्रसाध्यसांनिध्याः' इति पाठान्तरम् । विकसन्त्यनुकम्पा येषां ते तथोक्ताश्च सन्तः स्वस्य प्रत्येकमात्मनोऽनुगुणोऽनुरूपो गुणानां शौर्यधैर्यादीनां गणस्य संघस्य विभवः समृद्धिर्येषां तानात्मभवान्पुत्रान्मयि संपादयिष्यन्ति जनयिष्यन्ति ॥

इतीति । इत्युक्तप्रकारेण कृपयायतं सान्द्रं चेतो यस्य तस्य मुनीनां नेतुर्नायकस्य दुर्वाससोऽनुग्रहं वरमन्त्रदानरूपं प्रसादं यदुसुता कुन्ती नृपाय पाण्डवे । अहर्पतेः सूर्यस्य संबन्धि न विद्यते दशनव्रणानां दन्तक्षतानां पीडा दुःखं यस्मिंस्तत् । चौर्यरतत्वादिति भावः । रतस्य सुरतस्य संगमनं प्रापणं विनाभिदधे कथयामास । तदितरत्सर्वमुवाचेत्यर्थः । तस्य लोकद्वयनिन्द्यत्वादिति भावः । कुन्ती मन्त्रपरीक्षणाय सूर्यमाहूय बाल्ये तेनोपभुक्तेति भारतकथात्रानुसंधेया । द्रुतविलम्बितवृत्तम् ॥ ४४ ॥

---

१. 'लेखलेखासु' इति पाठः. २. 'ध्यानमात्रसाध्यसांनिध्याः' इति पाठः. ३. 'स्वस्वानुरूपगुणविभवान्' इति पाठः. ४. 'रतिः' इति पाठः.

फलेग्रह्य एवासन्प्रसूनात्प्राक्पृथावने ॥ ५२ ॥

तदनु गुणगणैरभङ्गुरशुभंयुताविकासससमये समये—
प्रजाधिपोऽसौ प्रथमं युधिष्ठिरे सुतेषु तेजस्विषु तेषु पञ्चसु ।
प्रभाकरे पञ्चतपा इवोन्नते प्रपातयामास विलोचनद्वयम् ॥ ५३ ॥

तपस्विनीनां स्तनपायिनस्ते दरक्वणत्कीचकदत्तकर्णाः ।
वने दिनान्ते वसुधेन्द्रपुत्रा वल्केषु निद्रासुखमन्वभूवन् ॥ ५४ ॥



क्षुत्पीडया स्तनरसे कलहं शिशूनां
कुन्ती तदा शमयितुं कुचकुम्भयुग्मे ।
एकं युधिष्ठिरधनंजययोश्च भाग-
मेकं समीरणसुतस्य च संविभेजे ॥ ५५ ॥



---

ह्यः फलधारिण्य आसन् । फलानामग्रतः पुष्पं धृत्वा जायमानत्वादिति भावः । 'स्याद्रजः पुष्पमार्तवम्', 'स्यादवन्ध्यः फलेग्रहिः' इत्युभयत्राप्यमरः । 'जन्मोत्सवः' इत्यादिभिः पञ्चश्लोकैर्जलनिर्मलीभवनादिवस्तुना तेषां लोकोत्तरमाहात्म्यप्रतीतेर्वस्तुना वस्तुध्वनिः ॥ ५२ ॥

**तदन्विति ।** तदनु गुणगणैश्चन्द्रतारावलादिभिरभङ्गुराया अक्षीणायाः शुभंयुतायाः शुभयोगस्य विकाससमये वृद्धिजननकालाभिन्ने समये लग्नविशेषे इत्युत्तरेणान्वयः । 'घटो नीलघट' इत्यादिवद्विधेयकोटावधिकावगाहितायां न पौनरुक्त्यम्' इति सांप्रदायिकाः । 'शुभंयुस्तु शुभान्वितः' इत्यमरः ॥

**प्रजाधिप इति ।** असौ प्रजाधिपः पाण्डुस्तेजस्विषु तेषु पञ्चसु सुतेषु । तन्मध्य इत्यर्थः । उन्नते महति युधिष्ठिरे पञ्चतपाः पञ्चाग्निमध्ये तपस्वी प्रभाकरे सूर्य इव । सूर्यस्याग्नीनां पञ्चसंख्यापूरकत्वस्मरणादिति भावः । विलोचनद्वयं प्रथमं प्रपातयामास प्रवेशितवान् । ज्येष्ठस्यैव पुत्राणामभ्यर्हितत्वादिति भावः ॥ ५३ ॥

**तपस्विनीनामिति ।** ते वसुधेन्द्रपुत्रा युधिष्ठिरादयो वने तपस्विनीनां ऋषिपत्नीनां स्तनपायिनः स्तन्यरसं पिबन्तः दरं ईषत्क्वणत्सु शब्दायमानेषु कीचकेषु वेणुविशेषेषु दत्तावासक्तौ कर्णौ येषां ते तथोक्ताश्च सन्तः । 'वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः' इत्यमरः । दिनान्ते सायंकाले वल्केषु वल्कलेषु । 'वल्कं वल्कलमस्त्रियाम्' इत्यमरः । निद्रासुखमन्वभूवन्ननुभूतवन्तः । वने धात्रीस्तन्यतद्गानडोलानामसंभवादिति भावः ॥ ५४ ॥

**क्षुदिति ।** कुन्ती शिशूनां क्षुत्पीडया बुभुक्षादुःखेन हेतुना स्तनरसे विषये कलहं शमयितुं वारयितुं तदा कुचौ कुम्भाविव तयोर्युग्मे एकं कुचकुम्भं युधिष्ठिरधनंजययोश्च भागं एकं समीरणसुतस्य भीमस्य भागं संविभेजे विभागमकरोत् ।

---

१. 'विकारसमये' इति पाठः.

निशाचरैः समं वाल्ये नियोद्धुमिव कौतुकी ।
उत्तानशयने मुष्टिमुदग्रां मारुतिर्दधौ ॥ ५६ ॥

ततः क्रमेण गतेषु कतिपयेषु वासरेषु—

पद्भिरात्मपितृयोषिति भूमौ स्पर्शनं परिहरन्त इवैते ।
जानुभिः करसरोजसहायैश्चंक्रमं चमदकुर्वत बालाः ॥ ५७ ॥

आदाय भीममतिमांसलमुत्तमाङ्गे-
ऽप्याघ्राय जानुकृतचङ्क्रममाश्रमान्ते ।
वाहालतैव वहनाद्विरराम शश्व-
त्कौतूहलं न तु कदाचन तापसीनाम् ॥ ५८ ॥

वृद्धतापसपुरः प्रसारितं वेणुदण्डमवलम्व्य शैशवे ।
भावयन्निव गदापरिग्रहं भाविनं पवनभूश्चचार सः ॥ ५९ ॥

---

संविपूर्वाद्व्रजतेः कर्तरि लिट् । भीमस्य वह्वाशित्वादिति भावः ॥ ५५ ॥

**निशाचरैरिति** । मारुतस्य वायोरपत्यं मारुतिर्भीमः । 'अत इञ्' इतीञ् । वाल्य एव निशाचरैः समं राक्षसैः सह नियोद्धुं वाहुयुद्धं कर्तुं कौतुकी कुतूहलवानित्युत्प्रेक्षा । उत्तान ऊर्ध्वमुखे शयने निद्रायाम् । तदवसर इति यावत् । 'स्यान्निद्रा शयनं स्वापः' इत्यमरः । उदग्रामुन्नतां मुष्टिं मुकुलिताङ्गुलीकरविन्यासं दधौ धृतवान् ॥ ५६ ॥

**तत इति** । ततः क्रमेण कतिपयेषु केषुचिद्वासरेषु दिनेषु गतेषु सत्स्वित्युत्तरेणैकवाक्यम् ॥

**पद्भिरिति** । एते वाला युधिष्ठिरादय आत्मनः पितुः पाण्डोर्योषिति भार्यायाम् । मातृस्थानायामिति यावत् । भूमौ पद्भिः पादैः स्पर्शनं स्पर्शं परिहरन्त इवेत्युत्प्रेक्षा । करौ सरोजे कमले इव तौ सहायौ येषां तैर्जानुभिश्चंक्रमं गमनं चमदकुर्वत चमत्कृतवन्तः । जानुचारं चक्रुरित्यर्थः । स्वागतावृत्तम् ॥५७॥

**आदायेति** । आश्रमाणामन्ते समीपे जानुभ्यां कृतश्चंक्रमो येन तमतिमांसलं वहुवलम् । 'वलवान्मांसलोंऽसलः' इत्यमरः । भीममादाय गृहीत्वा उत्तमाङ्गे शिरस्याघ्रायापि तापसीनां मुनिपत्नीनां वाहालता भुजलतैव वहनाद्धारणाद्विरराम । विश्रान्ताभूदित्यर्थः । रमतेः कर्तरि लिट् । तापसीनां शश्वत्पुनःपुनः कौतूहलं तद्वहनकौतुकं तु कदाचन न विरराम । अतिरमणीयत्वादिति भावः । अत्र पूर्ववाक्यार्थे वहनविरमणस्यातिमांसलताहेतुकत्वात्पदार्थहेतुकं काव्यलिङ्गम् ॥५८॥

**वृद्धेति** । स पवनभूर्भीमः शैशवे वाल्ये वृद्धेन स्थविरेण तापसेन पुरोऽग्रे प्रसारितं वेणुदण्डमवलम्व्य भाविनं भविष्यन्तं गदायाः परिग्रहं स्वीकारं भावयन्नभ्यसन्निवेत्युत्प्रेक्षा । चचारागच्छत् । चरतेः कर्तरि लिट् ॥ ५९ ॥

मुनिसुतैरविशेषजुषो वने मुहुरमी नवशैशवकेलिषु ।
मलिनतामनयन्त कलेवरं मदकलाः कलभा इव धूलिभिः ॥ ६० ॥

तत्र तत्र मृदुपांसुषु पाण्डोः पुत्रपादतलविन्यसनेन ।
छत्रकेतुकुलिशैः स्फुटरेखैश्चित्रवत्यभवदाश्रमभूमिः ॥ ६१ ॥

लीलास्मितैः सृ[1]क्कियुगाद्गलद्भिर्लालाजलानां पृ[2]षतैर्बृहद्भिः ।
बाला दधुस्ते हृदि मौक्तिकानां माला धुतोल्लेखनरन्ध्रसूत्रा ॥ ६२ ॥

अत्यन्तबाल्यादमृतायिताभिरन्योन्यमर्धोक्तिभिराह्वयत्सु ।
स भीमसेनोऽजनि पा[3]ण्डुपुत्रेष्वर्धोक्तनामापि च पूर्णनामा ॥ ६३ ॥

---

मुनिसुतैरिति । अमी युधिष्ठिरादयो मुनीनां सुतैर्बालकैरविशेषं तारतम्यराहित्यं जुषन्त इति तथोक्ताः । तत्तुल्याः सन्तः । नवासु शैशवकेलिषु बाल्योचितक्रीडासु वने मदकला मदोत्कटाः कलभा इव गजशावका इव धूलिभिः पांसुभिः कलेवरं शरीरं मलिनतां मालिन्यं मुहुरनयन्त प्रापितवन्तः । पांसुक्रीडयेति भावः । नयतेर्दुह्यादित्वाद्द्विकर्मकत्वम् । उपमालंकारः ॥ ६० ॥

तत्रेति । आश्रमभूमिः । मृदवः पांसवः सूक्ष्मरजांसि येषु तेषु तत्र तत्र देशेषु पाण्डोः पुत्राणां पादयोस्तलानामधःप्रदेशानां विन्यसनेन क्षेपणेन हेतुना स्फुटा रेखा लेखाकारा येषां तैश्छत्रकेतुकुलिशैश्चित्रवती आलेख्यवतीवाभवदिति गम्योत्प्रेक्षा व्यञ्जकाप्रयोगात् ॥ ६१ ॥

लीलेति । ते बाला लीलायुक्तं स्मितं येषु तैः सृक्किणोरोष्ठप्रान्तयोः युगाद्गलद्भिर्बृहद्भिः स्थूलैर्लालाजलानां पृषतैर्बिन्दुभिः । 'सृणिका स्यन्दिनी लाला,' 'पृषन्ति बिन्दुपृषतौ' इत्युभयत्राप्यमरः । धुतानि त्यक्तान्युल्लेखनमुत्तेजनं रन्ध्रं सूत्रं च तानि यासां ता मौक्तिकानां माला हृदि वक्षसि दधुरिवेति गम्योत्प्रेक्षा ॥ ६२ ॥

अत्यन्तेति । अत्यन्तबाल्याद्धेतोः । अमृतवदाचरन्तीभिरमृतायिताभिः । तद्वन्मधुराभिरिति यावत् । अर्धोक्तिभिर्युधिष्ठिरभीमार्जुन इत्यादीनामर्धभागैः पाण्डुपुत्रेष्वन्योन्यमाह्वयत्सु सत्सु स प्रसिद्धो भीमसेनोऽर्धमुक्तं नाम यस्य तथोक्तोऽपि पूर्णं संपूर्णमुक्तं नाम यस्य तथोक्तः अजन्यभूत् । 'विनापि प्रत्ययं पूर्वोत्तरपदयोर्लोपो वाच्यः' इति सेनपदस्य लोपेन तस्य सर्वार्थबोधकत्वादिति भावः ॥ ६३ ॥

---

१. 'सृक्कयुगात्' इति पाठः. २ 'ललितैः पृषद्भिः' इति पाठः. ३. 'पाण्डुसूनुषु' इति पाठः.

तदानीमयमम्बालिकासूनुरविलम्बितं संक्रन्दन इव पञ्चनन्दनागमसंपदा तया मुदममितंपचां बभार।

पुत्रेषु तेषु क्रमपोषितेषु विलोकयन्त्या विहरत्सु कुन्त्याः।
आप्याययामासतुरन्तरङ्गं प्राप्यापि माद्रीतनयौ यमत्वम् ॥ ६४ ॥

तैरादराद्वनलतासु दृढीकृतासु
डोलाविधेः परिचितस्य सहर्षिपुत्रैः।
पर्यायलब्धमसकृत्पवमानसूनो-
रारोहणं द्रुतमभूदवसानभूमिः ॥ ६५ ॥

भीमेन दन्तयुगले विधृतं यमन्ये
वन्येभमारुरुहुरद्रिनिभं सगर्भ्याः।

---

**तदानीमिति।** तदानीमम्बालिकायाः सूनुरयं पाण्डुः संक्रन्दन इन्द्र इव पञ्चानां नन्दनानां पुत्राणां आगमसंपदा लाभैश्वर्येण, पञ्चानां नन्दने वनेऽगमानां वृक्षाणां पारिजातादीनां संपदेति च। अमितंपचामनल्पाम्। 'मितनखे च' इति मिते उपपदे पचेः खशि 'अरुर्द्विषद्–' इत्यादिना मुम्। मुदमानन्दं बभार धृतवान्। विभर्तेः कर्तरि लिट्। यत्तु 'अमितमधिकं पचांबभार पक्कं बभार प्राप्तवानित्यर्थः' इति नृसिंहः तत्तस्य 'नालंकारो न शब्दस्य प्रक्रियात्र विलिख्यते' इति सूचितं व्याकरणमौढ्यं विशदयति। यतः पचेरेकाच्कत्वादामः 'कृञ्चानुप्रयुज्यते लिटि' इत्यत्रानुप्रयोगस्य प्रसक्त्यभावादिति ॥

**पुत्रेष्विति।** क्रमात्पोषितेषु तेषु पुत्रेषु पञ्चसु विहरत्सु क्रीडत्सु सत्सु विलोकयन्त्यास्तान्पश्यन्त्याः कुन्त्या अन्तरङ्गं मनो माद्र्याः सपत्न्यास्तनयौ नकुलसहदेवौ यमत्वमन्तकत्वं युग्मजातत्वं च प्राप्याप्याप्याययामासतुरानन्दयेताम्। अत्र अन्तकत्वेऽपि संतोषजननमित्येको विरोधः। सपत्नीपुत्रत्वेऽपि तदित्यपरः। युग्मत्वेन स्वोपदिष्टविद्याद्वारा स्वपुत्रत्वेन च जननादविरोध इति श्लेषप्रतिभोत्थापितो विरोधाभासालंकारः ॥ ६४ ॥

**तैरिति।** तैर्युधिष्ठिरादिभिः ऋषिपुत्रैः सह दृढीकृतासु त्रिचतुरादिमेलनेन दार्ढ्यं प्रापितासु वनलतासु आदरात्परिचितस्यारब्धस्य डोलाविधेर्दोलायत्रस्य पर्यायलब्धं क्रमप्राप्तं पवमानसूनोर्भीमस्यारोहणमवसानभूमिः समाप्तिस्थानं द्रुतमसकृदभूत्। अतिमांसलतया भीमस्य वनलता बहुशस्त्रुटिता बभूवुरित्यर्थः ॥ ६५ ॥

**भीमेनेति।** अन्ये सगर्भ्याः सोदरा युधिष्ठिरनकुलसहदेवा भीमेन दन्तयुगले विधृतं स्तम्भितमद्रिनिभं पर्वततुल्यम्। अत्युन्नतमिति यावत्। वने भवं वन्यमिमं गजं यमारुरुहुरारूढवन्तस्तं वन्येभं मानी विजयोऽर्जुनः स्वयमात्मनै-

---

१. 'अमितां बभार' इति पाठः. २. 'दोला' इति पाठः. ३. 'विधृतेयमन्ये' इति पाठः.

शुण्डां प्रगृह्य विजयः स्वयमेव मानी
तं लीलया रदपथेन समारुरोह ॥ ६६ ॥

तदनु विधिवदुपनीतानां क्रमेण मधुरेण वयसा शिरसा च विधृतवपुषां विनयगौरवपुषां सकलासु कलासु कौशलमुन्मीलयतां तेषां यशांसि बलभेदनमदावलस्य धाम्नो युगलमपि युगपदुल्लङ्घयामासुः ।

नवतरुणिमलक्ष्मीनन्दनीयं शरीरं
कुरुवृषभसुतानां कुर्वती नेत्रपात्रम् ।
मुनिततिरिति मेने मोहनाय त्रिलोक्याः
स्वविशिख इव कामः सोऽपि किं पञ्चधाभूत् ॥ ६७ ॥

अथ कदाचिदखिलहरिदन्तरनिरन्तरवलमानमलयपवमानकम्पितचम्पकसंपादितसौरभसंपदनुकम्पितनिलिम्पपथाः केसरकुसुमकेसरशिखरभासुरधूलीधूसरदिशो मनसिजविजयसहकारचतुर-

---

व लीलयानायासेन शुण्डां प्रगृह्य रदपथेन दन्तमार्गेण समारुरोह । मानिनामनन्योपजीवित्वाच्च किंचित्क्रीडाकरमिति भावः । अत्र मानस्य स्वयं प्रगृह्यारोहणं प्रति हेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् ॥ ६६ ॥

**तदन्विति** । तदनु विधिवद्यथाशास्त्रमुपनीतानामुपनयनसंस्कृतानां क्रमेण मधुरेण मनोहरेण वयसा यौवनेन विधृतं पूर्णं वपुर्येषां तेषां शिरसा विनयस्य गौरवं पुष्णन्तीति तथोक्तानां सकलासु चतुःषष्टिषु कलासु विद्यासु कौशलं नैपुण्यमुन्मीलयतां प्रकटयतां तेषां युधिष्ठिरादीनां यशांसि विद्याविनयविवेकादिजन्याः कीर्तयो बलमथनमदावलस्यैरावतस्य धाम्नो रश्मेर्निवासस्य च क्षीराब्धेराकाशगङ्गाया वा युगलं द्वयमपि युगपदेकदोल्लङ्घयामासुरतिचक्रमुः । 'धाम रश्मिनिवासयोः' इति विश्वः ॥

**नवेति** । मुनीनां ततिः समूहो नवस्य तरुणिम्नो यौवनस्य लक्ष्म्या संपदा नन्दनीयं मनोहरं कुरुवृषभस्य पाण्डोः सुतानां शरीरं नेत्रयोः पात्रं विषयं कुर्वती । पश्यन्ती सतीति यावत् । त्रिलोक्या भुवनत्रयस्य मोहनाय स प्रसिद्धः कामो मन्मथोऽपि स्वस्य विशिखो बाण इव पञ्चधा पञ्चप्रकारोऽभूत् । किमिति वितर्के । इत्युक्तप्रकारं मेने तर्कयामास । उत्प्रेक्षा ॥ ६७ ॥

**अथेति** । अथानन्तरं कदाचित्कस्मिंश्चित्कालेऽखिलानां हरितां दिशामन्तरेषु मध्यभागेषु निरन्तरं सान्द्रं यथा तथा वलमानैर्व्याप्नुवद्भिर्मलयपवमानैर्दक्षिणवायुभिः कम्पितैश्चम्पकैश्चाम्पेयकुसुमैः संपादितस्य सौरभस्य संपदा समृद्ध्यानुकम्पितः । परिमलित इत्यर्थः । निलिम्पानां देवानां पन्था आकाशवीथियेषु ते तादृशा निलिम्पपथाः 'ऋक्पूः—' इत्यादिना अप्रत्ययः । केसरकुसुमानां वकुलपुष्पाणां केसरशिखरेषु कि-

---

१. 'निखिलनिलिम्प' इति पाठः.

सहकारपल्लवतल्लजपरिचर्वणगर्वायमाणकलकण्ठयुवकण्ठोक्तपथिकजनसंदोहजीवितसंदेहा वनदेवतावदनतिलकायमानतिलकावलिकलिकापलितंभावुकनभोविभागा मदनहुतभुगङ्गारसदृशकमलभृङ्गारुमधुरससङ्गारचितमदभृङ्गारवविभवतुङ्गारहितमिथुनशृङ्गाररसाः समुन्मिषद्वासन्तिकामिषेण सीमन्तिनीरतेरुदन्तं दुरन्तं विचिन्त्य रहसि वसन्तं नृपं तमिव हसन्तो वसन्तोदयवासरा मन्दंमन्दमरण्याङ्कधरण्यां कमपि विकासमापादयामासुः ॥

---

झल्काग्रेषु भासुराभिर्धूलीभिः पुष्परजोभिर्धूसरा मलिना दशदिशो येषु ते तथोक्ताः। मनसिजस्य मन्मथस्य विजये विषये सहकारः साह्यकरणं तस्मिन् चतुराणां समर्थानां सहकाराणां चूतपुष्पाणां पल्लवतल्लजाः श्रेष्ठपल्लवाः । 'प्रकाण्डमुद्धतल्लजौ' इति प्रशस्तवाचकेष्वमरः । तेषां परितश्चर्वणेन गर्वायमाणानां दृप्यतां कलकण्ठयूनां तरुणकोकिलानां कण्ठेन। कुहूरवेणेत्यर्थः। उक्तः पथिकजनसंदोहस्य पान्थसमूहस्य जीवितसंदेह एते जीवन्ति न वेति संशयो येषु ते तथोक्ताः। वनदेवतानां वदने मुखे तिलकवदाचरन्तीभिस्तिलकायमानाभिस्तिलका वृक्षविशेषास्तदावल्या कलिकाभिः कुड्मलैः पलितंभावुकाः । धवलायमाना इत्यर्थः । नभोविभागा आकाशप्रदेशा येषु ते तथोक्ताः । मदन एव हुतभुगग्निस्तस्याङ्गारैरलातैः सदृशानि कमलानि रक्ताब्जानि तान्येव भृङ्गारवः सूक्ष्ममुखपात्रविशेषाः। 'भृङ्गारुः कनकालुका' इत्यमरः। 'भृङ्गारः' इति च पठ्यतेऽयं शब्दः। तेषु यो मधुरसो मकरन्दस्तस्य सङ्गेन। पानेनेत्यर्थः । आरचितो जनितो मदो येषां तेषां भृङ्गाणामारवविभवेन झङ्कारसमृद्ध्या हेतुना तुङ्गोऽधिकोऽरहितानामवियुक्तानां मिथुनानां स्त्रीपुंसानां शृङ्गाररसः संभोगसुखं येषु ते तथोक्ताः। वसन्तस्य ऋतोरुदय आविर्भावो येषु ते च ते वासरा दिनानि सीमन्तिनीभिः स्त्रीभिः सह रतेः सुरतस्य संबन्धिनमुदन्तं वृत्तान्तमपि दुरन्तं दुःखावसानकं विचिन्त्यालोच्य । मुनिशापादिति भावः। रहसि वसन्तम्। वासन्तिकवैभवावलोकनाशक्त्येति भावः। नृपं पाण्डुं समुन्मिषन्त्या विकसन्त्या वासन्तिकाया माधवीकुसुमस्य मिषेण व्याजेन हसन्तः परिहासं कुर्वन्त इवेत्युत्प्रेक्षा । अरण्यमङ्कश्चिह्नं यस्यां तस्यां धरण्यां भुवि कमप्यनिर्वाच्यं विकासं प्रकाशं मन्दंमन्दं शनैःशनैरापादयामासुश्चक्रुः। उपमोत्प्रेक्षारूपकानुप्रासानां संसृष्टिः ॥

---

१. 'भृङ्गार' इति पाठः. २. 'मनसि विचिन्त्य' इति पाठः. ३. 'अरण्याङ्गणधरण्याम्' इति पाठः.

किं शुकस्य वदने रुचिरत्वं किं शुकस्य हृदयेऽपि वशित्वम् ।
किंशुकस्य कुसुमेषु नदन्ती शंसति स्म मधुपालिरितीव ॥ ६८ ॥

कुरवके रवकेलिभृतः सुधासममधुरं मधुरं मधु षट्पदाः ।
पपुरवापुरवार्यमपि स्मयं नृपवने पवनेरितपादपे ॥ ६९ ॥

अथास्मिन्नमुना तपोवनपरिसरे[1] पटीरगिरिबन्धुना गन्धवहस्तनंधयेन संनिधिं नीयमानो मद्रजःपरिग्रहस्तपस्यन्तमपि मनस्यन्तः कं परितापसंपदा न लिम्पेदित्यर्थान्तरमप्यलिगिरा बोधयन्त्यामिव वनवासन्त्यामियं[2] क्षणादेव क्षितिपतिरिक्षुधन्वनो लक्ष्यतामध्यरुक्षत् ।

---

**किं शुकस्येति ।** शुकस्य वदने चञ्चौ रुचिरत्वं सौन्दर्यं किमिति कुत्सायाम् । शुकस्य व्यासपुत्रस्य हृदये वशित्वं जितेन्द्रियत्वमपि किम् । न भवत्येवेत्यर्थः । मदवलोकने पलायत एवेति भावः । इत्युक्तप्रकारेण मधुपालिर्भृङ्गपङ्क्तिः किंशुकस्य पलाशवृक्षस्य कुसुमेषु नदन्ती झंकुर्वती सती शंसति स्म ज्ञापयामासेत्युत्प्रेक्षा । शुकत्रोटिकुटिलारुणानि पलाशमुकुलानि मुनीनामपि मोहनान्यासन्नित्यर्थः । स्वागता वृत्तम् ॥ ६८ ॥

**कुरवक इति ।** पवनेन वायुनेरिताः कम्पिताः पादपा वृक्षा यस्मिंस्तस्मिन्नृपवने पाण्डुराजाश्रमारण्ये कुरवके कुसुमे । जात्येकवचनम् । रवाञ्झङ्कारान्केलीरिच्छाविहारांश्च बिभ्रतीति भृतः षट्पदा भृङ्गाः सुधयामृतेन समो धूर्भारो यस्य तथोक्तम् । अतएव मधुरं मधु मकरन्दं पपुः पिबन्ति स्म । अतएवावार्यं निरङ्कुशं स्मयमपि मदं चावापुः प्राप्तवन्तः । अत्र स्मयावाप्तौ कुरवकमधुपानवाक्यार्थहेतुकस्य काव्यलिङ्गस्य यमकेन सहैकवाचकानुप्रवेशसंकरः । द्रुतविलम्बितवृत्तम् ॥ ६९ ॥

**अथेति ।** अथ वसन्तप्रादुर्भावानन्तरं पटीरगिरेश्चन्दनाचलस्य बन्धुना । तदीयसौरभभरितेनेत्यर्थः । अमुना गन्धवहस्तनंधयेन बालमारुतेन अस्मिंस्तपोवनस्य पाण्ड्वाश्रमस्य परिसरे समीपे संनिधिं स्वसांनिध्यं नीयमानः प्रापयमाणो मम रजसः परागस्य परिग्रहः संबन्धस्तपस्यन्तं निगृहीतेन्द्रियं तपः कुर्वाणमपि कं पुरुषमन्तः मनसि परितापस्य संपदा समृद्ध्या न लिम्पेन्न घटयेत् । इत्युक्तमर्थं एकम् । अर्थान्तरमपि अन्यमर्थं च अलिगिरा । भृङ्गारवव्याजेनेत्यर्थः । बोधयन्त्यां सूचयन्त्यामिव स्थितायां वनवासन्त्यां माधवीकुसुमे । जात्येकवचनम् । समुन्मिषन्त्यां विकसन्त्यां सत्याम् । अयं क्षितिपतिः पाण्डुः क्षणादेवेक्षुधन्वनो मन्मथस्य लक्ष्यतां बाणविषयत्वमध्यरुक्षत्प्राप्तवान् । रुहेः कर्तरि लुङ् । अर्थान्तरं तु 'नीयमानः' इत्यन्तं उभयत्र समम् ।

---

१. 'तपोवनकुटीरपरिसरे' इति पाठः. २. 'वासन्त्यामियम्' इति पाठः.

परिहृत्य तनुं चित्ते बाणं कामो मुमोच यत् ।
अन्तरेवातिरक्तोऽभूदव्रणस्तद्बहिर्नृपः ॥ ७० ॥

कं केलिदेशमुपयाम्यधुनेति ताव-
त्कङ्केलिसंवलनकल्पितचित्रशोभम् ।
माद्र्या करेणुरिव साकमसौ करेण्वा
गूढं ययौ कुरवकद्रुलतानिकुञ्जम् ॥ ७१ ॥

शापं च मृत्युप्रदमग्रजातेस्तापं च पत्युः स्मरजं निरीक्ष्य ।
दूरेतरस्मिन्सुरतेऽपि देव्या डोलायमानं हृदयं तदासीत् ॥ ७२ ॥

चाटुप्रयोगे चतुरः स पाण्डुः प्रसूनतल्पे प्रविवेशितायाः ।

---

अन्तरन्तहेतुः । मद्राजातो मद्रजः परिग्रहो भार्या । 'पत्नीपरिजनादानमूलशापाः परिग्रहाः' इत्यमरः । तं तपस्यन्तं पाण्डुमपि कं सुरतसुखम् । तदुद्देशेनेति यावत् । 'मूर्ध्नि सुखेऽप्सु कम्' इत्यमरशेषः । परितापसंपदा न लिम्पेदिति योज्यम् । 'मद्रजापरिग्रहः' इति पाठस्तु प्रामादिकः । उभयार्थानुकूल्याभावात् ॥

**परिहृत्येति** । यद्यस्मात्कारणात्कामो मन्मथस्तनुं पाण्डोः शरीरं परिहृत्य विहाय चित्ते बाणं मुमोच प्रयुक्तवान् । मुचेः कर्तरि लिट् । ततस्मान्नृपः पाण्डुर्बहिः शरीरेऽव्रणः क्षतरहितः सन् । अतएवान्तश्चित्त एवातिरक्तो भृश-शोणितोऽत्यनुरागान्वितश्चाभूत् । श्लेषमूलातिशयोक्तिः काव्यलिङ्गोज्जीवितेति संकरः ॥ ७० ॥

**कमिति** । अधुना केलिदेशं क्रीडास्थानं कमुपयामि गच्छामि । इति चिन्तयन्निति शेषः । असौ पाण्डुः माद्र्या साकं तया सह करेण्वा गजस्त्रिया साकं करेणुर्गज इव । 'करेणुरिभ्यां स्त्री नेभे' इत्यमरः । कङ्केलेर्वृक्षविशेषस्य संव-लनेन मेलनेन कल्पिता कृता चित्रा शोभा यस्य तम् । कुरवकद्रुः कुरुन्नक्षः स एव लतानिकुञ्जो लतागृहं तं प्रति गूढं यथा तथा ययावगच्छत् । यातेर्लिटि 'धातोः' इति द्वित्वे अभ्यासह्रस्वे 'आत औ णलः' इति औत्वे 'आतो लोप इटि च' इति लोपे निष्पन्नेयं क्रिया ॥ ७१ ॥

**शापमिति** । अग्रजातेर्ब्राह्मणस्य किंदमस्य संबन्धिनं मृत्युप्रदं शापं पूर्वो-क्तरूपं च स्मराजातं स्मरजं पत्युः पाण्डोस्तापं च निरीक्ष्य समीक्ष्य । द्वयमपि दुर्निवार्यमित्यालोच्येत्यर्थः । तदा सुरते दूरेतरस्मिन्संनिहिते सत्यपि । एकान्त-संगतत्वादिति भावः । देव्या माद्र्या हृदयं डोलायमानमत्यन्तचिन्ताक्रान्तमा-सीदभूत् ॥ ७२ ॥

**चाटुप्रयोग इति** । चाटूनां प्रियवाक्यानां प्रयोगे भाषणे चतुरो निपुणः अतएव स पाण्डुः प्रसूनतल्पे कुसुमशय्यायां प्रविवेशितायाः शायितायास्तस्या

---

१. 'दोलायमानम्' इति पाठः.

क्षौमं विभेद स्मर[1]राजधानीक्षौमं कराम्भोजदलेन तस्याः ॥ ७३ ॥

तत्र तौ राजदम्पती मुनिशापबले[2]परिचिचिक्षयेव मुहु[3]र्भङ्गुरालिङ्गनमङ्गलतरङ्गितकुचकुम्भसंभृतघर्मजलनिर्मितमदनयौवराज्याभिषेकमधरितमधुरसमधुरिमाधरविम्ब[4]विडम्बिताम्बरचरकुटुम्बिजीवनमतिजवपम्फुल्यमानधम्मिल्लविगलदविरलवकुलमुकुलपुनरुक्तपुष्पतल्पमविगणितवीणागुणक्वणित[5]मणितमसृणितमतिचिरप्रमु[6]षितमसमशरसमरमुन्मीलयामासतुः ।

आयुषः संततिं दीर्घामावहन्नपि पौरवः ।
आयुषः संततेरन्तमा[7]जगाम रतेरिव ॥ ७४ ॥

---

माद्र्याः संबन्धिनः स्मरराजधान्या मन्मथमहानगरस्य क्षौमं प्राकारं क्षौमं दुकूलम् । 'क्षौमं दुकूले प्राकारे' इति विश्वः । करमम्भोजमिव तस्य दलेनाग्रेण बिभेद शिथिलयामास ॥ ७३ ॥

**तत्रेति** । तत्र प्रसूनतल्पे तौ राज्ञी च राजा च राजानौ दम्पती माद्रीपाण्डू मुनेः किंदमस्य संबन्धिनः शापबलस्य परीक्षितुमिच्छा परिचिचिक्षा तयेवेत्युत्प्रेक्षा । परिपूर्वादीक्षतेः सन्नन्तादप्रत्ययः । अभङ्गुरेणातिदृढेनालिङ्गनमङ्गलेन परिरम्भसुखेन तरङ्गितयोः प्रवृद्धयोः कुचकुम्भयोः संभृतेन पूर्णेन घर्मजलेन निर्मितो मदनयौवराज्याभिषेको यस्मिंस्तथोक्तम् । अधरितस्तुच्छीकृतो मधुरसस्य मधुरिमा माधुर्यं येन तेनाधरेण बिम्बेनेव विडम्बितमनुकृतमम्बरचरकुटुम्बिनां देवानां जीवनममृतं यस्मिंस्तथोक्तम् । अतिजवेनातिवेगेन पम्फुल्यमानाच्छिथिलायमानाद्धम्मिल्लात्संयतकचभाराद्विगलद्भिरविरलैर्बकुलमुकुलैरशोकपुष्पैः पुनरुक्तं द्विगुणीकृतं पुष्पतल्पं यस्मिंस्तथोक्तम् । अवगणितं तुच्छितं वीणाया गुणक्वणितं तन्त्रीनादो यैस्तैर्मणितैर्मसृणितं निबिडितम् । अतिचिरं मुनिशापप्रभृत्येतत्क्षणपर्यन्तं प्रमुषितं तस्करितमसमशरस्य पञ्चबाणस्य समरं युद्धम् । सुरतमिति यावत् । उन्मीलयामासतुः । अनुबभूवतुरित्यर्थः ॥

**आयुष इति** । पौरवः पाण्डुरायुष आयुर्नामराज्ञो जीवितकालस्य च संततिं वंशसमूहं च दीर्घां पुत्रसंपत्त्या विस्तृतामावहन् । बिभ्रन्नपि सन्नित्यर्थः । आयुषो जीवितकालस्य संततेः समूहस्य रतेरिवान्तं समाप्तिमाजगाम प्राप्तवान् । रत्यन्तसमकालस्तस्य जीवितान्तोऽभूदित्यर्थः । श्लेषानुप्राणितो विरोधाभासालंकारः ॥ ७४ ॥

---

१. 'स्मरराजधान्याः' इति पाठः. २. 'परिचिचीषयेव' इति पाठः. ३. 'मुहुर्मुहुः' इति पाठः. ४. 'बिम्बचुम्बनाडम्बर' इति पाठः. ५. 'भणितम्' इति पाठः. ६. 'मुषितम्' इति पाठः. ७. 'मारुरोह' इति पाठः.

नृपस्य दूरीकृतपाशसंगमं यमं विहायैकमुपेयुषो वधूम् ।
अजस्रमूरीकृतपाशसंगमो यमोऽपरः संनिदधे लतागृहे ॥ ७५ ॥

आलिङ्गनेन कुरवो हरिणेक्षणाना-
मामोदगौरवभृतो भुवि सर्व एव ।
तन्मध्यभागपि तथा स कथं नु पाण्डु-
रालिङ्ग्य मद्रतनयामवधिं प्रपेदे ॥ ७६ ॥

निद्रया किल निमीलितं मृतेर्मुद्रया निजमुदीक्ष्य वल्लभम् ।
उद्रवा करमुदस्य विह्वला मद्रराजतनया रुरोद सा ॥ ७७ ॥

तन्निशम्य सममेत्य कुमारैस्तादृशं पतिमवेक्ष्य रुदन्त्याः ।
भोजपुंगवभुवोऽश्रुनिपातैर्भूरपि स्वयममुञ्चत बाष्पम् ॥ ७८ ॥

नृपस्येति । दूरीकृतो निरासितः पाशस्य संसारबन्धस्य संगमः संबन्धो येन तमेकं यममिन्द्रियनिग्रहरूपं योगविशेषं विहाय त्यक्त्वा लतागृहे वधूं माद्रीमुपेयुषः संगतस्य नृपस्य पाण्डोरजस्रं नित्यमूरीकृतः पाशस्यायुधविशेषस्य संगमो येन तथोक्तः पाशायुधधारी अपरोऽन्यो यमोऽन्तकः संनिदधे संनिहितोऽभूत् । अत्रेष्टार्थोद्यमादनिष्टावाप्तिरूपो विषमालंकारभेदः । वंशस्थवृत्तम् ॥ ७५ ॥

आलिङ्गनेनेति । सर्व एव कुरवः सर्वेऽपि कौरवाः सर्वोऽपि कुरवकवृक्षश्च भुवि हरिणेक्षणानां स्त्रीणामालिङ्गनेनामोदस्य संतोषस्य परिमलस्य च गौरवमतिशयं बिभ्रतीति तथोक्ताः । अभवन्निति शेषः । अन्यत्र गौरवेण भृतः परिपूर्णो भवतीत्यर्थः । तेषां कुरूणां तस्य कुरवकवृक्षसामान्यस्य मध्यं भजतीति तथोक्तोऽपि स पाण्डुः श्वेतपुष्पः कुरवकवृक्षश्च । मद्रतनयां माद्रीमालिङ्ग्य । तदालिङ्गनेनेत्यर्थः । तथाविधं तादृशं मरणम् । कथं न्वित्याश्चर्ये । प्रपेदे प्राप्तवान् । कुरवकतरुस्तरुण्यालिङ्गनेन पुष्यतीति प्रसिद्धिः । अत्रापि विरुद्धकार्योत्पत्तिरूपो विषमप्रभेदः । अर्थान्तरप्रतीतिस्तु ध्वनिरेव अभिधायाः प्रेरणेन नियन्त्रणालक्षणायाश्च बीजाभावादिति ॥ ७६ ॥

निद्रयेति । सा मद्रराजतनया निद्रया । किलेति संभावनायाम् । निद्रयेव स्थितया मृतेर्मरणस्य मुद्रया निमीलितं मुकुलिताक्षं निजं वल्लभं पाण्डुमुदीक्ष्य विह्वला संभ्रान्तचित्ता सती करमुदस्य हस्तमुद्धृत्य उद्रवा उच्चैः शब्दायमाना सती रुरोद । रथोद्धतावृत्तम् ॥ ७७ ॥

तदिति । तन्माद्रीरोदनं निशम्य श्रुत्वा कुमारैर्युधिष्ठिरादिभिः सममेत्यागत्य तादृशं मृतं पतिमवेक्ष्योद्वीक्ष्य रुदन्त्या भोजपुंगवभुवः कुन्त्या अश्रुनिपातैर्बाष्पवर्षैर्भूरपि स्वयं बाष्पमूष्माणं चामुञ्चत मुक्तवती । राजभार्यात्वादिति भावः ।

१. 'तदा' इति पाठः. २. 'समवेत्य' इति पाठः. ३. 'विपातैः' इति पाठः.

माद्र्यातयानुमृतया महितस्य राज्ञो
निर्वर्तितासु तनयैर्निखिलक्रियासु ।
भूयोऽपि तौ सुमनसां पुरतः प्रकाशं
जायापती तु सुरतोत्सवमन्वभूताम् ॥ ७९ ॥

तदनु नव्यवैधव्यबहुव्यथायाः पृथायाः पुरतो निर्मर्यादपितृशोकविदार्यमाणधैर्यसोदर्यजनपरिवार्यमाणाय हृदि विदितनिखिलधर्मजाताय धर्मजाताय महत्यामपि विपत्त्यां वैयात्येन भवितव्यमिति राजनयनिगमाङ्कुरं प्रकाश्य काश्यपाद्यो दयोपेताः शतशृङ्गमुनिपुंगवास्तुङ्गमणिसौधशृङ्गं कुलक्रमागतं कुरुनगरमेतानवतारयामासुः ।

---

तप्तायां भुवि वर्षे धूमाकृतिरूष्मा भवतीति तत्त्वम् । मुचेः कर्तरि लिट् । 'बाष्पं नेत्रजलोष्मणोः' इत्यमरः । श्लेषमूलातिशयोक्तिः ॥ ७८ ॥

माद्र्येति । तया स्वसंगमेन मृत्युदायिन्या अनुमृतया । अग्निं प्रविष्टयेत्यर्थः । माद्र्या महितस्य संतुष्टस्य राज्ञः निखिलासु सकलासु क्रियासु और्ध्वदेहिकेषु तनयैर्युधिष्ठिरादिभिर्निर्वर्तितास्वनुष्ठितासु सतीषु । तौ जायापती माद्रीपाण्डू प्रकाशमुज्ज्वलम् । मरणभीत्यभावादिति भावः । सुरतोत्सवं संभोगं देवलप्राप्तिरूपमुत्सवं च भूयः पुनरपि सुमनसां देवानां पुरतस्त्वग्र एवेत्यर्थः । अन्वभूतामनुभूतवन्तौ । 'सुरतं मैथुनेऽपि स्याद्देवत्वे सुरता स्त्रियाम्' इति विश्वः ॥७९॥

तदन्विति । तदनु पाण्डुसंस्कारानन्तरं नव्येन नूतनेन वैधव्येन भर्तृराहित्येन बह्व्यो व्यथा दुःखानि यस्यास्तस्याः पृथायाः कुन्त्याः पुरतोऽग्रे निर्मर्यादेनापारेण पितृशोकेन विदार्यमाणं भिद्यमानं धैर्यं यस्य तेन सोदर्यजनेन भ्रातृलोकेन परिवार्यमाणाय । हृदि मनसि विदितं ज्ञातं निखिलानां धर्माणामापत्कालिकानां जातं समूहो यस्य तस्मै । धर्माद्यमाज्जाताय धर्मजाताय युधिष्ठिराय महत्यां दुष्पारायामपि विपत्त्यामापदि वैयात्येन धैर्येण भवितव्यम् । धीरो भवेदित्यर्थः । 'धृष्टे धृष्णुर्वियातश्च' इत्यमरः । इत्युक्तप्रकारं राज्ञां नयनिगमस्य नीतिशास्त्रस्याङ्कुरमर्थबोधं प्रकाश्योपदिश्य काश्यप आदिर्येषां तथोक्ताः शतशृङ्गनामपर्वते ये मुख्या मुनिपुंगवा ऋषिश्रेष्ठास्ते दययोपेताः सन्तः तुङ्गानि मणिमयसौधानां शृङ्गाणि शिखराणि यस्मिंस्तथोक्तं कुलक्रमेण वंशानुपूर्व्या आगतं

---

१. 'ततोऽनुमृतया सह तस्य' इति पाठः. २. 'बहुविध' इति पाठः. ३. 'विदीर्यमाण' इति पाठः. ४. 'धैर्याय सोदर्य' इति पाठः. ५. 'धर्मजाय' इति पाठः. ६. 'सत्यां वैयात्येन' इति पाठः. ७. 'नयनांकुशम्', 'नियमांकुशम्' इति च पाठः. ८. 'शृङ्गसंकुलम्' इति पाठः.

मन्दंमन्दमुपेत्य तत्र सदसो मत्पाण्डुपुत्राङ्कुराः
क्वेति प्रेमपुरःप्रसारितकरः कुर्वन्दृढालिङ्गनम् ।
स्पर्शंस्पर्शमिमान्निजाङ्कगमितान्भ्रातुः स्मरन्कौरव-
श्च्योतद्भिर्नयनाम्बुभिः स विदधे शोकं नदीमातृकम् ॥ ८० ॥

पाण्डवेषु दृढतापरिणाहप्रायरूपतनुसंपदियत्ताम् ।
स्पर्शनं विदधतैव दृशान्धः पाणिना परिममौ धृतराष्ट्रः ॥ ८१ ॥

दत्त्वा तैत्तत्प्रत्ययं यद्यदिष्टं यावत्स्वेषामात्मजानां शतेऽपि ।
पाण्डोः पुत्रेष्वम्बिकासूनुरेतेष्वेकैकस्मिन्प्रेम तावद्बबन्ध ॥ ८२ ॥

---

प्राप्तं कुरुनगरं हस्तिनपुरमेतान्युधिष्ठिरादीनवतारयामासुः प्रापयामासुः । तरतेर्ण्यन्तस्य 'गतिबुद्धि–' इत्यादिना द्विकर्मकत्वम् ॥

**मन्दमिति** । तत्र हस्तिनपुरे स प्रसिद्धः । कौरवो धृतराष्ट्रः सदस आस्थानमण्डपान्मन्दंमन्दं शनैः शनैरुपेत्यागत्य । अन्धत्वादानन्दपारवश्याद्वेति भावः । मम पाण्डोः पुत्रा अङ्कुरा इव ते क्व कुत्र । इति वदन्निति शेषः । प्रेम्णा पुरः प्रसारितौ करौ यस्य तथोक्तः सन् दृढं यथा तथालिङ्गनं कुर्वंश्च सन् । अथालिङ्गनानन्तरं निजमङ्कं गमितान्प्रापितानिमान्युधिष्ठिरादीन्स्पर्शंस्पर्शं स्पृष्ट्वा स्पृष्ट्वा । आदरात्पौनःपुन्योक्तिः । आभीक्ष्ण्ये णमुलो द्विर्भावः । भ्रातुः पाण्डुम् । 'अधीगर्थ–' इत्यादिना कर्मणि षष्ठी । स्मरन्सन् । एकसंबन्धिज्ञानस्यापरसंबन्धिस्मारकत्वादिति भावः । च्योतद्भिर्धारयमाणैर्नयनाम्बुभिर्बाष्पैः शोकं पाण्डुसंबन्धि नदी माता वर्धयित्री यस्य तथोक्तं नदीमातृकं विदधे चकार । शार्दूलविक्रीडितं वृत्तम् ॥ ८० ॥

**पाण्डवेष्विति** । दृशान्धोऽक्ष्णा काणः स धृतराष्ट्रः पाण्डवेषु या दृढताङ्गदार्ढ्यं परिणाह ऊर्ध्वाधस्तिर्यग्विस्तारः प्रायो वयो रूपमाकृतिस्तनुः शरीरं च तासां संपदः समृद्धेरियत्तामिदमेतावदिति परिमाणविशेषं स्पर्शनं पाण्डवस्पर्शं विदधता कुर्वता पाणिना स्वहस्तेनैव परिममौ मानं कृतवान् । मातेः कर्तरि लिट् । अत्रान्धत्वस्य पाणिकरणकमाननिर्धारणहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् । स्वागतावृत्तम् ॥ ८१ ॥

**दत्त्वेति** । अम्बिकासूनुर्धृतराष्ट्रः प्रत्यहं दिने दिने यद्यद्वस्तु तेषां पाण्डवानामिष्टं काङ्क्षितं भवति तत्तद्दत्त्वा । तेभ्य इति भावः । स्वेषां स्वीयानामात्मजानां शतेऽपि पुत्रशतकेऽपि यावत्प्रेमास्ति तावत्प्रेम पाण्डोः पुत्रेष्वेकैकस्मिन्युधिष्ठिरादौ बबन्ध घटितवान् । भ्रातृवात्सल्यादिति भावः । शालिनीवृत्तम्—'शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः' इति लक्षणात् ॥ ८२ ॥

---

१. 'सदयो' इति पाठः. २. 'बल' इति पाठः. ३. 'तेषाम्' इति पाठः.

एवं वत्सभावेऽपि भक्तिमत्सु तेषु निजपितृवत्सलतामसक्तत्समीक्ष्य मत्सरेण दुर्मनायमानो[1] हृदयालवाले सुयोधनो[2] राधेयप्रधानदुर्बोधनमेधोत्सेधसविधधरणीरुहमधिरूढामकुतोनुरोधां[3][4] विरोधविषवीरुधमेधांचक्रे ।

तीव्रोदयानविनयान्दधतां क्रमेण
दुर्योधनाद्यसुहृदां दुरहंकृतीनाम् ।
पट्टाभिषेकमभिलष्यति फालदेशे[5]
कुट्टाकभावकुतुकं कुरुते स्म भीमः ॥ ८३ ॥

---

**एवमिति** । वत्सभावे बाल्ये भक्तिमत्सु । स्वस्मिन्निति भावः । तेषु पाण्डवेषु । एवमुक्तविधां निजस्य पितुर्धृतराष्ट्रस्य वत्सलतां प्रेम समीक्ष्य दृष्ट्वा ज्ञात्वा दुर्मनायमानः खिद्यन् । अतएव सुयोधनो दुर्योधनो मत्सरेणान्यशुभद्वेषेण हेतुना । 'मत्सरोऽन्यशुभद्वेषे तद्वत्कृपणयोरपि' इति विश्वः । राधेयः कर्णः प्रधानो मुख्यो येषां तेषां कर्णशकुनिदुःशासनानां दुष्टं बोधनं प्रेरणं यस्यास्तादृशी मेधा स्वबुद्धिरेवोत्सेधसविधधरणीरुह उन्नतान्तिकवृक्षस्तमधिरूढाम् । तस्मिन्वेल्लितामित्यर्थः । अकुतोनिरोधां निरङ्कुशां विरोधः पाण्डवेषु वैरं स एव विषवीरुद्वत्सनाभलता तां हृदयमेवालवालं वृक्षमूलवर्तुलसेतुस्तस्मिन्नेधांचक्रे वर्धयामास । अत्र पाण्डवेषु धृतराष्ट्रप्रेमदर्शनस्य दुर्योधनखेदं प्रति तस्य मत्सरं प्रति तस्य विषवीरुद्वर्धनं प्रति च हेतुत्वादङ्गाङ्गिभावसंकीर्णेन काव्यलिङ्गत्रयेण संकीर्णसमस्तवस्तुवर्ति सावयवरूपकम् ॥

**तीव्रेति** । तीव्रो दारुण उदय आविर्भावो येषां तानविनयान्दुष्टचेष्टितानि दधताम् । कुर्वतामित्यर्थः । दुरहंकृतीनां निष्फलाहंकाराणां दुर्योधन आदिर्येषां तेषामसुहृदां शत्रूणां संबन्धिनि पट्टाभिषेकमभिलष्यति काम्यमाने फालदेशे ललाटे कुट्टाकभावे मुष्टिकुट्टने कुतुकं कौतूहलं भीमः कुरुते स्म । 'कुट्टाकः पाणिकुट्टनम्' इति शब्दार्णवे । भीमो न मृष्यतीति दुर्योधनादयो यौवराज्याय निराशा बभूवुरित्यर्थः ॥ ८३ ॥

---

१. 'दुर्मनायमानो दुर्योधनो' इति पाठः. २. 'दुर्योधनो' इति पाठः. ३. 'दुर्बोधमेधो' इति पाठः. ४. 'अकुतोरोधाम्' इति पाठः. ५. 'फालभागे' इति पाठः.

पञ्चधा प्रवहन्तीनां पवनात्मज एव सः ।
कौरवक्रोधसिन्धूनां क्रमात्संगमभूरभूत् ॥ ८४ ॥

इत्यनन्तभट्टकविकृतौ चम्पूभारते प्रथमः स्तवकः ।

---

पञ्चधेति । स प्रसिद्धः पवनात्मजो भीम एव पञ्चधा पञ्चप्रकारं प्रवहन्तीनां कौरवाणां दुर्योधनादीनां क्रोधा एव सिन्धवो नद्यस्तासां क्रमात्प्रायेण संगमभूर्मेलनदेशोऽभूत् । युधिष्ठिरादीनां भीमबलव्यपाश्रयत्वात्तद्विषयक्रोधानामपि भीम एव पर्यवसानमभूदित्यर्थः ॥ ८४ ॥

इति श्रीसदाशिवपदारविन्दवन्दनानन्दसान्द्रस्य कुरविकुलचन्द्रस्य
रामकवीन्द्रस्य कृतौ चम्पूभारतव्याख्याने लास्याभिख्याने
प्रथमः स्तवकः ।



## द्वितीयः स्तवकः ।

एकदा तु ते सर्वे[1] सुपर्वसरितः सलिलेषु विहृत्य[2] समुत्तीर्णा वीचीभिरनीचीरुत्कूलितफेनकूटेष्विव पटगृहवाटेषु[3] परिगृहीतमनोहराम्बरपटीरहाराभ्यवहाराः कुमाराः कुशलकुशीलवकुलशीलितविचित्रवादित्रकलशीरवविवशीकृतमनसः[4] सुखमासांमासुः[5] ।

रहसि नलिनतल्पे रत्नपर्यङ्ककल्पे
दिनविरतिसमीरैः सेव्यमानः स भीमः ।
तटभुवि कुसुमानां तादृशैर्गन्धपूरै-
रधिकमलसताया हानिदद्रौ निदद्रौ ॥ १ ॥

'तीव्रोदयानविनयान्' ( १।८३ ) इत्यत्र पूर्वस्तवके दुर्योधनाद्यसुहृदविनयानां प्रक्रान्तत्वात्तान्निर्विशेषतोऽस्मिन्प्रपञ्चयति—**एकदेति** । एकदा कदाचित् । तुशब्दो वाक्यालंकारे । ते सर्वे राजकुमारा धार्तराष्ट्राः पाण्डवाश्च सुपर्वणां देवानां सरितो गङ्गायाः सलिलेषु विहृत्य जलक्रीडां कृत्वा समुत्तीर्णास्तीरं प्राप्ताः सन्तोऽनीचीभिरुन्नताभिर्वीचीभिस्तरङ्गैरुत्कूलितेषु तीरं प्रापितेषु फेनानां डिण्डीराणां कूटेषु राशिष्विव स्थितेष्वित्युत्प्रेक्षा । पटगृहाणां वाटेषु कक्ष्यान्तरेषु परितः सर्वत्र गृहीता मनोहराश्चाम्बराणि वस्त्राणि, पटीराश्चन्दनाः, हारा मणिसराः, अभ्यवहारा भोजनानि च यैस्तथोक्ताश्च सन्तः कुशलानां शिक्षाभ्यासाभ्यां निपुणानां कुशीलवा गायकाः । 'गायकास्तु कुशीलवाः' इत्यमरः । तेषां कुलेन वृन्देन । 'कुशीलवबालक–' इति वा पाठन्तरम् । शीलितानां ताडितानां विचित्राणां वादित्राणां च चतुर्विधवाद्यानां वीणावेणुमृदङ्गतालादीनां कलशीनां घटवाद्यानां च रवैर्मधुरशब्दैर्विवशीकृतं परवशीकृतं मनो येषां तथोक्ताश्च सन्तः सुखं यथा तथा आसामासुरवर्तन्त । 'दयायासश्च' इति कर्तरि लिड्यामन्तादसतेरस्तेरनुप्रयोगः ॥

**रहसीति** । स सुयोधनादिक्रोधपात्रं भीमस्तादृशैः । मनोज्ञैरित्यर्थः । कुसुमानां गन्धपूरैः परिमलपरम्पराभिः ( करणैः ) अलसतायाः श्रमस्याधिकं यथा-तथा हानिं क्षतिं ददन्ति खण्डयन्तीति हानिदा द्रवो वृक्षा यस्यां तस्यां तटभुवि गङ्गातीरे दिनविरतिसमीरैः सायंतनवायुभिः सेव्यमानः सन् रहसि रत्नपर्यङ्ककल्पे मणिमञ्चतुल्ये । सादृश्ये कल्पप्प्रत्ययः । नलिनतल्पे पद्मशय्यायां निदद्रौ सुप्तवान् । निद्रातेः कर्तरि लिट् । मालिनीवृत्तम् ॥ १ ॥

---

१. 'सर्वेऽपि' इति पाठः. २. 'न्विरं विहृत्य' इति पाठः. ३. 'वाटीपु' इति पाठः. ४. 'कुशलकुशीलवबालककुलपरिशीलित' इति पाठः. ५. 'मानसाः' इति पाठः.

अथ निशीथे तथाभूतस्य तस्य जिघांसया कुरुनरेन्द्रनन्दनेन चोदितैर्नरेन्द्रैरुपेत्य युगपदेव झटिति निभृतं समुद्धाटितेषु नियन्त्रणपेटकेषु ॥

सुते पितुः स्वादिमसंप्रदायशुशुत्सयेव श्वसनाशनेन्द्राः ।
समीरसूनुं समुपेत्य जिह्वाबहिःप्रसारान्बहुशो वितेनुः ॥ २ ॥

सुप्तस्य तस्य तु सुयोधनभृत्यमुक्ता
वाताशनाश्च सकला वनदेवताश्च ।
आशीर्द्वयं वपुषि चायुषि च प्रतेनुः
पूर्वा न तत्र चरमैव पुपोष वीर्यम् ॥ ३ ॥

मर्मदत्तदशना भुजङ्गमा मारुतेर्वपुषि सुप्तिभूरुहः ।

---

अथेति । अथ स्वापानन्तरं तथाभूतस्य सुखसुप्तस्य भीमस्य जिघांसया हन्तुमिच्छया कुरुनरेन्द्रनन्दनेन दुर्योधनेन चोदितैः प्रेरितैर्नरेन्द्रैर्विषवैद्यैः । 'नरेन्द्रो विषवैद्येऽपि' इति विश्वः । निभृतं गूढं यथा तथा उपेत्य युगपत् एकदैव नियन्त्रणपेटकेषु सर्पबन्धनमञ्जूषासु झटिति द्रुतं समुद्धाटितेषु विवृतेषु सत्स्वित्युत्तरेणैकवाक्यम् ॥

सुत इति । श्वसनो वायुरशनमन्नं येषां तेषामिन्द्राः सर्पश्रेष्ठाः सुते वायुपुत्रे भीमे पितुर्वायोः संबन्धी यः स्वादिमा अन्नमाधुर्यं तस्य यः संप्रदायः पारम्पर्येण संक्रमणं तस्य शोधितुं परीक्षितुमिच्छा शुशुत्सा तयेवेत्युत्प्रेक्षा । कारणगुणस्य कार्ये संक्रमणपरीक्षयेवेति यावत् । समीरसूनुं भीमं सम्यगुपेत्य जिह्वानां बहिःप्रसारान्बहुशोऽधिकं वितेनुश्चक्रुः । उपजातिवृत्तम् ॥ २ ॥

सुप्तस्येति । सुयोधनस्य भृत्यैर्मुक्ताः प्रयोजिता वाताशनाः सर्पाश्च सकला वनदेवताश्च सुप्तस्य तस्य भीमस्य । तुशब्दः क्रमार्थकः । वपुषि शरीरे आयुषि च । आशिषोर्दंष्ट्रायाः शुभप्रार्थनायाश्च द्वयं प्रतेनुः वितेनुः । प्रत्येकं निवेशयामासुरित्यर्थः । 'आशीः शुभाशंसाहिदंष्ट्रयोः' इत्यमरः । तत्र आशीर्द्वयस्य मध्ये पूर्वा प्रथमा सर्पदंष्ट्रा वीर्यं मारणसामर्थ्यं न पुपोष न वर्द्धितवती । किंतु चरमा द्वितीया वनदेवता शुभप्रार्थनैव वीर्यं चिरजीवित्वकरणात्मकं पुपोष । खलजनविपन्नान्सतो देवा एव रक्षन्तीति भावः । वसन्ततिलकावृत्तम् ॥ ३ ॥

मर्मेति । भुजङ्गमाः सर्पाः पूर्वोक्ता मारुतस्यापत्यं पुमान् मारुतिर्भीमस्तस्य वपुषि शरीरे मर्मसु आयुःस्थानेषु दत्ता निहिता दशना दंष्ट्रा यैस्तथोक्ताः सन्तो

---

१. 'निभृतसमु' इति पाठः. २. 'रशना' इति पाठः.

मुष्टिमेयतनवो विरेजिरे मूलिका इव बहिर्विनिर्गताः ॥ ४ ॥

अन्येद्युरपि पुनराजीवन्तं निद्रारुणनयनराजीवं तं स मुग्धधीः स्निग्ध इव संजग्धिकेलिकायामारालिकदापितकवलनिचोलितकरालगरलविह्वलं प्रह्वलम्बितशिरसं रज्जुभिः परिणाह्य परिणाहिनीभिरसुहृदां हृदयशूलमपि शूलकीलिते निर्जरसरिदन्तर्जले विसर्जयामास ।

तेषां तदानीं धृतराष्ट्रजानां तीरे च नीरे दिविषत्तटिन्याः ।

---

बहिर्भूमेरूर्ध्वं विनिर्गताः मुष्टिना मातुं योग्या मेया तनुर्यासां ताः । सुप्तिभूरुहः शयनवृक्षस्य मूलिका मूलानीव विरेजिरे । उत्प्रेक्षा । रथोद्धतावृत्तम् ॥ ४ ॥

अन्येद्युरिति । मुग्धा मूढा धीर्यस्य तथोक्तः स दुर्योधनः । साक्षात्सर्पदंशनेऽप्यमृतस्य विषदापनेन पुनस्तच्चिन्तनादिति भावः । स्निग्धः सुहृदिव । कपटमित्रमिति यावत् । अन्येद्युः परस्मिन्दिने पुनः । सर्पदंशनेऽपीत्यर्थः । आजीवन्तं प्राणान्धारयन्तं निद्रया अरुणे नयने राजीवे कमले इव यस्य तम् । 'बिसप्रसूनराजीव–' इति पद्मपर्यायेष्वमरः । संजग्धिकेलिकायां सहभोजनक्रीडायामारालिकैः सूदैः । 'आरालिका आन्धसिकाः' इति पाचकपर्यायेष्वमरः । दापितैः कवलैर्ग्रासैर्निचोलितेनान्तर्हितेन करालेन भीषणेन गरलेन विषेण । तद्भक्षणेनेति यावत् । विह्वलं विभ्रान्तमत एव प्रह्वलम्बितं शिरो यस्य तथोक्तम् । असुहृदां शत्रूणां हृदये वक्षःस्थले शूलम् । तद्दुःखजनकमित्यर्थः । तं भीमं परिणाहिनीभिरायताभी रज्जुभिः परिणाह्य बन्धयित्वा शूलैरायुधविशेषैः कीलितेऽधोबन्धिते निर्जरसरितो गङ्गाया अन्तर्जले जलमध्ये विसर्जयामास पातितवान् । भृत्यैरिति शेषः ॥

तेषामिति । तदानीं तेषां धृतराष्ट्रजानां दिविषत्तटिन्या गङ्गायास्तीरे तटे नीरे जले च प्रवीरं मरुत्सुतं भीमं मारयितुं क्रमात् सारा दृढा गुणाः सूदा एकत्र । अन्यत्र रज्जवश्च साधनतां कारणत्वमवापुः प्राप्तवन्तः । कारणान्यभूवन्नित्यर्थः । सूदैस्तीरे विषं प्रदाप्य नीरे रज्जुभिर्बन्धयित्वा पातितत्वादिति भावः । 'गुणोऽप्रधाने रूपादौ मौर्व्यां सूदे वृकोदरे' इति विश्वः । साराः श्रेष्ठा गुणाः शौर्यधैर्यादयस्तं मारयितुं साधतामवापुः । तस्य तादृग्गुणराहित्ये तस्मिन्नेव धार्तराष्ट्राणां तथा वैराप्रसक्तेरिति भावः । अत्रार्थे गुणानां दोषीकरणाल्लेशालंकारः । 'लेशः स्याद्दोषगुणयोर्गुणदोषत्वकल्पनम्' इति लक्षणात् । पूर्वत्र च

---

१. 'अपरेद्युः' इति पाठः. २. 'सग्धि', 'जग्धि' इति पाठः. ३. 'आरालिककरदापित' इति पाठः. ४. 'लम्बिशिरसम्' इति पाठः. ५. 'हृदि शूलम्' इति पाठः.

मरुत्सुतं मारयितुं प्रवीरं सारा गुणाः साधनतामवापुः ॥ ५ ॥

ततः पातालभुवि तदागमनकौतुकिना वासुकिना संमानितः स धृतिमानितस्ततोऽष्टासु दिशासु तदनुगुणपरिगणनं दिनगणम[1]त्ययशङ्किभिरितरैरपत्यैः सह विचित्य 'हा[2] वत्स, रिपुभर्त्सन भीम, क्व वा निषीदसि' इति विषीदन्त्याः कुन्त्या नवममपि वासरमनवममेव संजनयन्प्रभञ्जनभूरमृताञ्जनैरिव दृशौ रञ्जयामास ।

आगतस्य तस्य मदावलायुतवलावहानां पृदाकुपरिषदुपदापित[3]-

सूदरज्ञ्वोः शेषभित्तिकामेदाध्यवसायमूलातिशयोक्तिः । द्वयोरप्येकवाचकानुप्रवेशः संकरः । अभिन्नपदबोध्यं नानालंकारघटितत्वम् । तल्लक्षणप्रपञ्चो मदीयमकरन्दझर्यां द्रष्टव्यः । सारा विषदाः । 'सारस्तु गरदे दृढे' इति विश्वः ॥ ५ ॥

**तत इति** । ततः पातनानन्तरम् धृतिर्धैर्यमस्यास्तीति धृतिमान्प्रभञ्जनभूर्वायुपुत्रः पातालभुवि तस्य भीमस्यागमनेन कौतुकं कुतूहलमस्यास्तीति कौतुकिना वासुकिना सर्पराजेन संमानितः अमृतरसकलशप्रदानादिना बहुमानितः सन् । अत्ययं स्वमरणं शङ्कन्ते मन्यन्त इति शङ्किभिः इतरैर्युधिष्ठिरादिभिरपत्यैः पुत्रैः सह । अष्टासु दिशासु दिक्षु । 'आपं चैव हलन्तानां यथा वाचा निशा दिशा' इत्यनुशासनादाकारान्तत्वम् । तासामष्टदिशामनुगुणमुचितं परिगणनमष्टत्वसंख्या यस्य तम् । दिनानां गणम् । अष्टौ दिनानीत्यर्थः । इतस्ततो विचित्यान्विष्य । हेति खेदे । हे वत्स, हे रिपूणां भर्त्सन तर्जन, हे भीम । हेति सर्वत्र प्रयोज्यम् । क्व कुत्र वा निषीदसि तिष्ठसि । इत्युक्त्वेति शेषः । विषीदन्त्याः शोचन्त्याः कुन्त्या नवमं नवसंख्यमपि वासरं दिनमनवमं नवसंख्यारहितम् । अवमः शून्यो न भवतीति तथोक्तं च । संजनयन्कुर्वन्सन् । अतएव विरोधाभासालंकारः । अमृतमयैरञ्जनैरिव दृशौ नेत्रे रञ्जयामासानन्दयामास । तया दृष्टोऽभूदित्यर्थः ॥

**आगतस्येति** । आगतस्य । पातालादिति शेषः । तस्य भीमस्य संबन्धि मदावलानामयुतस्य । दशसहस्रमदगजानामित्यर्थः । बलं यत्तस्यावहानां संपादकानां पृदाकुपरिषदा सर्पसमाजेनोपदापितानामुपायनीकृतानां दशकलशानाम् । तत्परिमितानामित्यर्थः । पीयूषाणाममृतानां निषेवणेन पानेन विशेषितोऽतिशयितः परिपोषो वृद्धिर्यस्य तथोक्तं गात्रं शरीरं ( कर्तृ ) सवित्र्या जनन्या भुजान्तरे वक्षसीव सोदराणां युधिष्ठिरादीनां च कौरवाणां दुर्योधनादीनां च हृदये मनस्यपि क्रमान्मोदसंपत्संतोषसमृद्धिः विषादसंपद्दुःखसमृद्धिश्च ते न ममतु-

१. 'परिगणनदिनगणात्ययशङ्कितैः' इति पाठः. २. 'हा' इति नास्ति क्वचित्.
३. 'पृदाकुपरिवृढदापित' इति पाठः.

दशकलशपीयूषाणां निषेवणेन विशेषितपरिपोषगात्रं सवित्री भुजान्तर इव सोदरकौरवहृदयेऽपि मोदविषादसंपदौ न ममतुः ।

तदनन्तरम् ।

काष्ठां परां कार्मुककौशलस्य काष्ठाः परास्तानपि तद्यशोऽपि ।
प्रज्ञादृगारोपयितुं प्रवृत्तो व्यज्ञापयद्विष्णुपदीतनूजम् ॥ ६ ॥

सोऽपि कृत्यविदामग्रणीरपरेणेव शरजन्मना कृपेण बहुकृपेण निरवद्यवीर्यशोनिषद्यां चापविद्यामापाद्यापि तां पुनरुक्तयितुं दिशिदिशि जैत्रगुणं पौत्रगणं महता धननिवहेन सह विविधधनुरागमप्राणस्य द्रोणस्य चरणयोरुपदीचकार ।

---

मिति न प्रापतुः । कुन्ती तमालोक्यालिङ्गितवती, युधिष्ठिरादयो जहृषुः, दुर्योधनादयश्चिखिदुरित्यर्थः ॥

तदनन्तरमित्युत्तरेणान्वयः ॥

**काष्ठामिति** । तदनन्तरं प्रज्ञा बुद्धिरेव दृङ्नयनं यस्य सः अन्धो धृतराष्ट्रस्तान्युधिष्ठिरादीन्दुर्योधनादींश्च कार्मुककौशलस्य धनुर्विद्यायाः परां काष्ठां निरवधिकोत्कर्षमारोपयितुं प्रापयितुं तेषां युधिष्ठिरादीनां दुर्योधनादीनां च यशः कीर्तिं परा उत्कर्षमिताः काष्ठा दशापि दिश आरोपयितुमपि । 'काष्ठोत्कर्षे स्थितौ दिशि' इत्यमरः । विष्णुपद्या गङ्गायास्तनूजं भीष्मं व्यज्ञापयद्विज्ञापितवान् । यत्तु 'परा अन्याः काष्ठाः परराष्ट्राणि' इति नृसिंहः, तन्न । तत्कीर्तेः स्वराष्ट्रव्यापनाप्रतीत्यापत्त्या पतत्प्रकर्षत्वदोषप्रसङ्गात् । अत्रानेकक्रियायौगपद्यात्समुच्चयालंकारः । 'गुणक्रियायौगपद्यं समुच्चयः' इति लक्षणात् । इन्द्रवज्रावृत्तम् ॥६॥

**स इति** । कृत्यविदां कर्तव्यज्ञाननिपुणानामग्रणीः श्रेष्ठः स भीष्मोऽपि । अपरेण द्वितीयेन शरे दर्भविशेषे बाणे च जन्म यस्य तेन स्कन्देनेव स्थितेनेत्युत्प्रेक्षा । कृपस्य बाणजन्मत्वं महाभारते प्रसिद्धम् । बह्वी कृपा यस्य तेन कृपेण धनुराचार्येण पौत्राणां नृपस्य पुत्राणां पूर्वोक्तानां गणं निरवद्यस्य वीराणां यशसः 'इमे शूराः' इति कीर्तेः निषद्यामापणीभूताम् । 'आपणस्तु निषद्यायाम्' इत्यमरः । चापविद्यामापाद्याध्यापयित्वापि । तां चापविद्यां पुनरुक्तयितुं द्विरावर्तयितुं दिशिदिशि प्रतिदिशं जैत्रा जयशीला गुणाः शौर्यादयो यस्य तं पौत्रगणं विविधस्य बहुप्रकारस्य धनुरागमस्यास्त्रवेदस्य प्राणस्य जीवभूतस्य । उपदेशपारम्पर्येण वर्धकस्येति यावत् । द्रोणस्य द्रोणनामाचार्यस्य चरणयोर्महतासंख्येन धनस्य निवहेन राशिना सह उपदीचकारोपायनं चक्रे । 'कृभ्वस्ति—' इत्यादिना च्वित्वं दीर्घश्च ॥

---

१. 'पानाद्विशेष' इति पाठः. २. 'परिपोषपात्रं गात्रं' इति पाठः. ३. 'सोदर' इति नास्ति क्वचित्. ४. 'यशसो' इति पाठः. ५. 'उपहारीचकार' इति पाठः.

सिन्धुजातकलशीभुवोस्तयोः स्निग्धभावमवलोक्य तादृशम् ।
तत्र पौरनिकरः समाचरच्चित्रपूरजठरे निमज्जनम् ॥ ७ ॥

कुमारास्तूर्णमारुक्षन्कुम्भयोनेरनुग्रहात् ।
कोटिं कोदण्डसारस्य गुणिनस्ते गुणा इव ॥ ८ ॥

कूलस्थस्यानुकुर्वन्कुरुसुतसदसः कुम्भयोनेः कदाचि-
त्स्नातुं मध्ये जलानां चिरकृतवसतेः सिन्धुभूर्वर्धमानः ।
आदौ पादौ निपीड्य स्फुटकमलरुचौ बिभ्रदन्तेवसत्वं

---

सिन्ध्विति । तत्र हस्तिनपुरे पौराणां निकरः सङ्घस्तयोः सिन्धुजातस्य गङ्गासुतस्य समुद्रसमूहस्य च कलशीभुवो द्रोणस्यागस्त्यस्य च द्वयोः । भीष्मद्रोणयोः समुद्रागस्त्ययोश्चेति यावत् । 'देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्' इत्यमरः । तादृशमुक्तविधं स्निग्धयोः सुहृदोर्भावं स्नेहमवलोक्य चित्रपूरस्याश्चर्यरसप्रवाहस्य जठरे मध्ये निमज्जनं समाचरच्चक्रे । अत्याश्चर्यान्वितोऽभूदित्यर्थः । अत्र समुद्रभीष्मयोरगस्त्यद्रोणयोश्च श्लेषमित्तिकाध्यवसायमूलातिशयोक्त्युज्जीवितेन निसर्गविरुद्धयोः समुद्रागस्त्ययोः स्नेहावलोकनात्मकविभावनालंकारभेदेन पौराणां चित्रपूरनिमज्जनसमर्थनात्मकं काव्यलिङ्गमङ्गाङ्गिभावेन संकीर्णम् । अतिशयोक्तिविभावनासंकरस्य विभावनाकाव्यलिङ्गसंकरस्य च द्वयोः पुनरङ्गाङ्गिभावसंकरश्चेति सूक्ष्मदृशाकलनीयम् । रथोद्धतावृत्तम् ॥ ७ ॥

कुमारा इति । गुणिनः शौर्यादिगुणवन्तस्ते पूर्वोक्ताः कुमारा युधिष्ठिरादयः कुम्भयोनेर्द्रोणस्यानुग्रहात् प्रसादात् । कोदण्डसारस्य धनुर्विद्यानैपुण्यस्य कोटिमुत्कर्षम् । कोदण्डसारस्य श्रेष्ठचापस्य कोटिमग्रदेशम् गुणाः शिञ्जिन्य इव तूर्णं सत्वरमारुक्षन्प्राप्तवन्तः । रुहेराङ्पूर्वात् कर्तरि लुङ् । 'स्यात्कोटिरश्रौ चापाग्रे संख्याभेदप्रकर्षयोः' इत्यभिधानात् । श्लिष्टविशेषणेयमुपमा । अतएव गुणिनो मौर्वीवत इति धनुष्यपि योज्यम् ॥ ८ ॥

कूलेति । कदाचित्स्नातुं जलानां मध्ये चिरं कृता वसतिरवस्थानं येन तस्य । 'चिरस्नायी—' इत्यागमादिति भावः । कुम्भयोनेर्द्रोणस्य संबन्धिनौ स्फुटकमलस्येव रुक्कान्तिर्ययोस्तौ पादौ आदौ प्रथमं निपीड्य प्रणम्य पीडयित्वा च । अन्तेवसत्वं समीपस्थितिं च बिभ्रत् सिन्धुभुवा भीष्मेण नदीशेन च वर्धमानः अतएव कूलस्थस्य तीरे वर्तमानस्य कुरुसुतसदसो युधिष्ठिरादीनां समाजमनुकुर्वन्विडम्बयन् । कृद्योगात्कर्मणि षष्ठी । कश्चिद्ग्राहो मकरः स्वयमपि विशेषेण जयो यस्मात्तस्यास्त्रागमस्य धनुर्वेदस्यान्तं पारं विजयस्यार्जुनस्य संबन्धिनास्त्रा-

---

१. 'स्नेहभाव' इति पाठः. २. 'कोटीम्' इति पाठः.

ग्राहो जग्राह कश्चिंत्स्वयमपि विजयाल्लागमान्तं महान्तम् ॥९॥

ततस्ते सर्वोत्तरा अपि शरासनेषु दक्षिणाः 'गुरुदक्षिणां कुरुत मह्यं द्रुह्यतो द्रुपदस्य युधि बलाद्गृहीतस्य समर्पणम्' इति गुरुणा चोदिताः सर्वेऽप्यहंपूर्विकया केयापि विमतेषु कृतावज्ञसेनं याज्ञसेनं पुरं निरुद्धय चिरमयुध्यन्त ।

कृत्ते भल्लैर्धनुषि स गुरुद्रोहिणस्तस्य जीव-
ग्राहे वाह्याञ्चलपरिचलत्खड्गवल्लीसहायः ।

---

गमेन बाणप्राप्त्या अन्तं नाशं च जग्राह प्राप्तवान् । कदाचिद्द्रोणस्य स्नातुं द्रुतगङ्गावतरणस्य चरणग्राही कश्चिन्मकरोऽर्जुनेन बाणेन निहत इति पौराणिक्यत्र कथानुसंधेया । स्रग्धरा वृत्तम् ॥ ९ ॥

**तत इति** । ततोऽनन्तरं सर्वेषां धनुर्धराणामुत्तरा उदीच्या अपि श्रेष्ठाश्चेति च शरासनेषु चापनैपुण्येषु विषये दक्षिणा दाक्षिणात्याः सरलाश्च । अतएव विरोधाभासः । 'उपर्युदीच्यश्रेष्ठेष्वप्युत्तरः', 'त्रिष्ववाक्सरलारामपरिच्छन्दानुवृत्तिषु । दक्षिणः' इत्युभयत्रामरप्रकाशौ । मह्यं द्रुह्यतो मद्द्रोहं बाल्ये प्रतिज्ञातार्धराज्याप्रदानरूपं कुर्वतः । 'क्रुधद्रुह–' इत्यादिना संप्रदानत्वम् । अतएव युधि युद्धे बलाद्गृहीतस्य सजीवमानीतस्य द्रुपदस्य राज्ञः समर्पणमेव गुरुदक्षिणां कुरुतेति गुरुणा द्रोणाचार्येण चोदिता आज्ञापिताः सन्तः । अथ कयाप्यनिर्वाच्ययाहंपूर्विकया अहं पूर्वमहं पूर्वमिति बुद्ध्या । 'अहं पूर्वमहं पूर्वमित्यहंपूर्विका स्त्रियाम्' इत्यमरः । विमतेषु शत्रुषु विषये कृतावज्ञा रचिततिरस्कारा सेना यस्मिंस्तत् यज्ञसेनस्य द्रुपदस्येदं याज्ञसेनं पुरं पट्टणं निरुध्य चिरमयुध्यन्त युद्धमकुर्वन् ॥

**कृत्त इति** । स जलमध्यग्राहमारकत्वेन प्रसिद्धः सव्यसाच्यर्जुनः । गुरवे द्रुह्यतीति द्रोहिणस्तस्य द्रुपदस्य जीवग्राहे जीवत एव ग्रहणे विषये सुबलदुहितुर्गान्धार्याः पुत्राणां दुर्योधनादीनामावल्यां पङ्क्तौ पूर्वपक्षीभवत्यामसमर्थायां सत्याम् । द्रुपदेन पराभूतायामिति यावत् । भल्लैर्द्रुपदस्य बाणविशेषैर्धनुषि निजचापे कृत्ते भिन्ने सति वाह्राया भुजस्याञ्चले अग्रे । कर इति यावत् । परिचलन्ती कम्पमाना खड्गः वल्लीव सैव सहायो यस्य तथोक्तः सन् दिवि स्वर्गे बुधैर्देवैः भुवि बुधैः पण्डितैश्च । 'ज्ञातृचान्द्रिसुरा बुधाः' इत्यभिधानात् । श्लाघितः संस्तुतः सिद्धान्तः कृतकार्योऽभूत् । अत्र जीवस्य चित्प्रतिबिम्बस्य ग्राहो बिम्बभूतचिदभिन्नत्वेन ज्ञाने विषये सौबलेयशते पूर्वपक्षीभवति देहात्मवाचादिमति सति अर्जुन इहामुत्र च ब्रह्मविद्भिः श्लाघितोऽभिनन्दितः सिद्धान्तोऽद्वितीयब्रह्म-

---

१. 'शरासेपु' इति पाठः. २. 'कयापि' इति नास्ति क्वचित्.

पुत्रावल्यां सुबलदुहितुः पूर्वपक्षीभवल्यां
सिद्धान्तोऽभूद्दिवि भुवि बुधैः श्लाघितः सव्यसाची ॥ १० ॥
पार्थमेव पुरतो निधाय ते कौरवास्तदनु संनिधौ गुरोः ।
भक्तिभिर्व्यनमयन्निजं शिरः पार्षतस्तु परिभूतिलज्जया ॥११॥
अथो गुरुर्नीतमधिज्यधन्वना पुरःप्रदेशं पुरुहूतसूनुना ।
तरङ्गिताक्षं तमवेक्ष्य विद्विषं वचो गभीरं वदति स्म सस्मितम्॥१२॥

'रेरे क्षत्रियसत्तम, पुरा महत्तरमग्निदेश्यमग्निवेश्यं नाम मुनिमस्त्रपरिश्रमाय प्रश्रयेण सह शुश्रूषमाणस्त्वं मत्कृते पितुरनन्तरं

---

भावात्मकोऽभूदिति । अर्थान्तरं तु न श्लेषः । 'अभिधायाः प्रकृते नियन्त्रणात्' इत्यादेरुक्तत्वादिति । मन्दाक्रान्ता वृत्तम्—'मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत् ।' इति लक्षणात् ॥ १० ॥

**पार्थमिति** । तदनु द्रुपदग्रहणानन्तरं ते कौरवाः कुमाराः पार्थमर्जुनमेव पुरतोऽग्रे निधाय गुरोर्द्रोणस्य संनिधौ निजं शिरो भक्तिभिर्व्यनमयन् । प्रणेमुरित्यर्थः । पार्षतो द्रुपदस्तु परिभूत्या तिरस्कारेण या लज्जा तया निजं शिरः व्यनमयत् । अवनतवदनोऽभूदित्यर्थः । नमतेर्ण्यन्तात्कर्तरि लङ् । अत्र कुरुकुमाराणां द्रुपदस्य च प्रकृतानामेव शिरोनमनधर्मेणौपम्यस्य गम्यत्वात्केवलप्रकृतास्पदस्तुल्ययोगिताभेदः । रथोद्धता वृत्तम् ॥ ११ ॥

**अथो इति** । अनन्तरं गुरुर्द्रोणोऽधिज्यमारोपितगुणं धनुश्चापो यस्य तेन पुरुहूतस्येन्द्रस्य सूनुनार्जुनेन पुरःप्रदेशं नीतं प्रापितं तरङ्गिते चकितचकिते अक्षिणी यस्य तथोक्तं विद्विषं शत्रुं तं द्रुपदमवेक्ष्य गभीरं गूढार्थं वचो वक्ष्यमाणं सस्मितं यथा तथा वदति स्म । वंशस्थवृत्तम् ॥ १२ ॥

**रेरे इति** । रे रे तुच्छ । 'तुच्छसंबोधने तु रे' इत्यमरः । क्षत्रियसत्तम । विपरीतलक्षणया क्षत्रियाधमेत्यर्थः । पुरा धनुर्वेदाभ्यासकाले महत्तरमतिशयपूज्यमग्निदेश्यमग्निदेशे भवम्, यद्वाग्निकल्पम् । अग्निवेश्यं नाम मुनिमस्त्रस्य धनुर्विद्यायाः परिश्रमायाभ्यासं कर्तुमिति । 'क्रियार्थ–' इत्यादिना संप्रदानत्वम् । प्रश्रयेण सह विनयेन साकम् । 'साकं सत्रा समं सह' इत्यमरः । शुश्रूषमाणः सेवां कुर्वन् । त्वं मत्कृते मदर्थम् । ममेत्यर्थः । पितुरनन्तरं लोकान्तरगते पितरि ममाधिराज्यपदस्यार्धं राज्यार्धं प्रथममग्रे भवते तुभ्यं वितीर्य दत्त्वा ततः परमवशिष्टमर्धं राज्यार्धमहमनुभविष्यामि इति यद्वस्तु यथा येन प्रकारेण प्रत्यश्रृणुथाः प्रतिज्ञामकरोः, तत्प्रतिज्ञातं वस्तु विप्रं धिक् इत्युक्तप्रकारेण अत एव क्षुरप्रा-

---

१. 'पार्षदः' इति पाठः. २. 'सस्मितः' इति पाठः. ३. 'अरे' पाठः ४. 'नाम' इति नास्ति क्वचित्.

ममाधिराज्यपदस्य प्रथममर्धं भवते वितीर्य ततः परमर्धमहमनुभविष्यामीति यद्यथा प्रत्यश्रृणुथास्तत्तथा निर्वर्तितं खलु धिग्विप्रमिति क्षुरप्रायेण विप्रियरचनेन प्रथीयसीं मनसि व्यथां मम वितीर्णवता महार्णवपरिधानवर्ती वसुमतीं स्वयमेवानुभवता ननु भवता ।

आबालवृद्धं जलसक्तमेव जनाः समस्ता द्रुपदं यदाहुः ।
तस्मात्त्वयि स्वीकृततादृशाख्ये कथं नु भज्येत न मित्रतेजः ॥१३॥

---

येण क्षुरकल्पेन विप्रियवचनेनाप्रियभाषितेन मम प्रथीयसीं मनसि व्यथां वितीर्णवता दत्तवता । किंच महार्णवः समुद्रः परिधानं वस्त्रं तदस्या अस्तीति तद्वतीम् । समुद्रपर्यन्तामिति यावत् । वसुमतीं भूमिं स्वयमेवानुभवता भवता त्वया ननु हे द्रुपद, तथा प्रतिज्ञानुरूपं निर्वर्तितमाचरितं खलु । आधिराज्यमिति यत्पदं सुबन्तं तस्यार्धमाधिं मह्यं दत्त्वा ततः परमर्धमवशिष्टं राज्यं त्वयानुभूयते । तस्मात्तथा निर्वर्तितं खलु इति चार्थः । अत्र खलुशब्दः काकौ । अदत्त्वैव किंचिदपि मह्यमनुभूतं त्वयैव सर्वमित्यर्थः । अत्र अतर्कितमानसव्यथारूपोत्कटानिष्टावाप्तिसत्वेऽपि श्लेषमहिम्ना अर्धराज्यरूपेष्टावाप्तिवर्णनात्समालंकारभेदः । स च 'विनानिष्टं च तत्सिद्धिर्यदर्थं कर्तुमुद्यमः' इति तल्लक्षणेऽनिष्टमन्तरेणेष्टावाप्तावेव तेन भाव्यमिति वाच्यम् । व्याजस्तुतिविधया प्राथमिकस्तुतिरूपवाच्यकक्ष्यायां समालंकारस्य दुर्वारत्वात् । एवं स्तुत्या निन्दाभिव्यक्तिकक्ष्यायां मानसव्यथानिष्टावाप्तिप्रतीतेः । 'अनिष्टस्याप्यवाप्तिश्च तदिष्टार्थसमुद्यमात्' इति लक्षितो विषमप्रभेदश्च । द्वयोश्च स्तुत्या निन्दाभिव्यक्तिरूपव्याजस्तुतिप्रभेदेन सहैकवाचकानुप्रवेशसंकर इति सूक्ष्मदृशाकलनीयम् ॥

आबालवृद्धमिति । यद्यस्मादाबालवृद्धं बालप्रभृति वृद्धपर्यन्तम् । समस्ता जना द्रोर्वृक्षस्य पदं मूलस्थानम् । आलवालमिति यावत् । 'द्रुद्रुमागमाः' इति वृक्षपर्यायेष्वमरः । जलैरुदकैर्मूर्खैश्च । लडयोरभेदात् सक्तं संगतमेवाहुर्वदन्ति । तस्मात्कारणात्स्वीकृता तादृशी द्रुपदेत्याख्या नाम येन तस्मिंस्त्वयि मित्रस्य सख्युः । ममेति यावत् । सूर्यस्य च तेजः कथं केन प्रकारेण न भज्येत भङ्गं न गच्छेन्नु । नुः आमन्त्रणे । किंतु गच्छेदेवेत्यर्थः । जडसंगतेषु नास्ति मित्रावकाश इत्यर्थः । अत्र द्रुपदाख्यास्वीकरणस्य मित्रतेजोभङ्गहेतुत्वोक्तेः पदार्थहेतुकं काव्यलिङ्गम् । सूर्यसुहृदोः श्लेषभित्तिकाभेदाध्यवसायमूलातिशयोक्तिसंकीर्णम् ॥ १३ ॥

---

१. 'क्षुरप्रवरप्रायेण' इति पाठः. २. 'मम मनसि व्यथां वितीर्णवतार्णवरशनावतीम्' इति पाठः. ३. 'ननु' इति नास्ति क्वचित्. ४. 'जड' इति पाठः.

इति व्याजस्तुतिवचनेन पौरवान्ते भार्गवान्तेवसता प्रधर्षितः पार्षतस्तेन सार्धमर्धराज्यपरिवर्तनमात्रमङ्गीकृत्य कृत्यविदां ककुदस्तौ जम्भरिपुकुम्भसंभवावुभावप्युपयमं प्रवर्तयितुं कृतनिवर्तनः सोमकान्तिकोपास्यौ पुत्रौ भागीरथीवनावसथस्य याजस्य मुनिराजस्य याजनानुग्रहेण परिजग्राह ।

ततः ।

तातोऽपि धर्मतनयं तपनीयपीठ-
मारोप्य चक्षुरिव लब्धममुं तपोभिः ।

---

इतीति । इत्युक्तप्रकारेण व्याजस्तुतिवचनेन गूढनिन्दावाक्येन करणेन भार्गवस्य परशुरामस्यान्तेवसता शिष्येण द्रोणेन (कर्त्रा) पौरवाणां युधिष्ठिरादीनामन्ते समीपे प्रधर्षितो भर्त्सितः कृत्यविदां कर्तव्येषु निपुणानां ककुदः श्रेष्ठः अतएव पार्षतो द्रुपदस्तेन सार्धं द्रोणेन सह । अर्धराज्यस्य परिवर्तनमात्रं परिपालनमेव । नतु सख्यमित्यर्थः । अङ्गीकृत्य । 'सर्वनाशे समुत्पन्ने अर्धं त्यजति पण्डितः' इति न्यायादिति भावः । कृतनिवर्तनः प्रत्यागतः सन् । तौ प्रसिद्धौ जम्भरिपुसंभवमर्जुनं कुम्भसंभवं द्रोणं च । उभावपि क्रमेण । उपयमं विवाहम् । 'विवाहोपयमौ पाणिपीडनं च' इत्यमरः । यमस्य समीपं च प्रवर्तयितुं प्रापयितुं सोमश्चन्द्रः, उमया पार्वत्या सहितः सोमः शिवश्च, तयोरिव कान्तिः कोपश्च क्रमात् आस्ये मुखे ययोस्तौ । 'सोमो लताविशेषे स्याच्छशाङ्के शंकरेऽपि च' इति विश्वः । चन्द्रकान्त्या तुल्याननां रुद्रवत्क्रुद्धमुखं चेत्यर्थः । सोमकैः पाञ्चालैरन्तिके उत्सङ्ग उपास्यौ । उपलालनीयाविति च । पुत्रीं च पुत्रं च पुत्रौ द्रौपदीधृष्टद्युम्नौ भागीरथ्या वने तीरारण्य आवसथं स्थानं यस्य तस्य । 'स्थानावसथवास्तु च' इति गृहपर्यायेष्वमरः । याजस्य नाम मुनिराजस्य याजनेन यागकारयितृत्वरूपेणानुग्रहेण प्रसादेन परिजग्राह । उत्पादितवानित्यर्थः । यत्तु 'कुम्भजम्भरिपुसंभवौ' इति पाठान्तरम्, यच्च वा तद्रीत्यैव नृसिंहव्याख्यानम्, तदुभयमप्यशुद्धम् । विवाहप्रापकचन्द्रकान्त्याननत्वस्य द्रौपद्यां यमसमीपप्रापकरुद्ररौद्रास्यत्वस्य धृष्टद्युम्ने च क्रमेणान्वयात्मकयथासंख्यालंकारभङ्गापत्तेः 'पुमान्स्त्रिया' इत्येकशेषशास्त्रेण पुत्री च पुत्रश्च पुत्राविल्येव व्याख्येयतया सोमकैरन्तिके उपास्याविल्यर्थान्तराप्रसक्त्या च 'सोमकोपकान्त्यास्यौ' इति पाठकल्पनायोगाच्चेति ॥

तात इति । ततोऽनन्तरं तातो धृतराष्ट्रोऽपि तपोभिर्लब्धं चक्षुरिव स्थितमित्युत्प्रेक्षा । शुश्रूषादिगुणसंपत्त्या परमप्रेमास्पदमित्यर्थः । जात्यन्धस्य भाग्या-

---

१. 'पौरवान्ते वसता' इति पाठः. २. 'पार्षदः' इति पाठः. ३. 'परिवर्तनेन परमङ्गीकृत्य' इति पाठः. ४. 'उपयममेव' इति पाठः. ५. 'कृतक्रतुनिर्वर्तनः' इति पाठः. ६. 'तटवन' इति पाठः. ७ 'ततः' इति नास्ति क्वचित्.

आवर्जितैः कलशवारिभिरभ्यषिञ्च-
दानन्दबाष्पसलिलैरवनीं च पौराः ॥ १४ ॥
आबिभ्रतो धरणिमङ्गदनिर्विशेषं
नानाधनायतिभिरस्य नयोदिताभिः ।
वस्त्यं समस्तमपि वासवसंनिभस्य
कोशीबभूव कुतुकैः सह कौरवाणाम् ॥ १५ ॥
पारेसिन्धु प्रथितमथितं प्रत्यहं वर्धमानं
सोढुं पार्थाभ्युदयमपटोः स्वात्मजस्यानुरोधात् ।

---

स्कदाचिदुत्पन्ने चक्षुष्युत्कटानुरागादिति भावः । धर्मस्य यमस्य तनयं युधिष्ठिरम् ; धर्मस्य प्रथमपुरुषार्थस्य तनयं मूर्तं धर्ममिव स्थितमित्यपि । 'आत्मा वै पुत्रनामासि' इति श्रुतेरिति भावः । तपनीयपीठमारोप्य । कनकपीठे उपवेश्येत्यर्थः । आवर्जितैरानमितैः, समुद्रगङ्गादिभ्य आनीतैरिति वा । कलशेषु वारिभिः पुण्यैर्मन्त्रपूतैश्च जलैरभ्यषिञ्चत्पट्टाभिषेकं कृतवान् । 'उपसर्गात्सुनोति—' इत्यादिना अड्व्यवायेऽपि षत्वम् । पौराश्चानन्देन चिरात्काङ्क्षितलाभजनितेन यानि बाष्पसलिलानि तैरवनीं तद्भार्यां । भूमिमभ्यषिञ्चन् । भर्तुः पट्टाभिषेके भार्याया अपि तदौचित्यादिति भावः । पौरास्तदा ननन्दुरिति परमार्थः । व्यञ्जकाप्रयोगाद्गम्योत्प्रेक्षा । वसन्ततिलका वृत्तम् ॥ १४ ॥

**आबिभ्रत इति** । धरणिं भूमिमङ्गदेन केयूरेण सह निर्विशेषं तारतम्यराहित्यं यथा तथा बिभ्रतो हेलया भुजेन वहत इति प्रभावोत्कर्षः । वासवसंनिभस्येन्द्रतुल्यस्य अस्य युधिष्ठिरस्य नयेन षष्ठांशग्रहणरूपेणोदिताभिः । अर्जिताभिरित्यर्थः । नानामणिकनकरौप्यादिरूपाणां धनानामायतिभिर्लाभैः समस्तं वस्त्यं गृहमपि । 'निशान्तवस्त्यसदनम्' इति गृहनामस्वमरः । कौरवाणां दुर्योधनादीनां कुतुकैः कुतूहलैः सह कोशीबभूव धनभवनीबभूव मुकुलीबभूवेति च । युधिष्ठिरस्य तादृक्समृद्ध्या दुर्योधनादयोऽखिद्यन्नित्यर्थः । 'कोशोऽस्त्री कुड्मले खड्गपिधाने धनवेश्मनि' इति विश्वः । महतामभ्युदये खलानां खेदस्य औत्सर्गिकत्वादिति भावः । अत्र धनगृहमुकुलयोः श्लेषमित्तिकाभेदाध्यवसायमूलातिशयोक्तिसंकीर्णः सहोक्त्यलंकारः । 'सहोक्तिः सहभावश्चेद्भासते जनरञ्जनः' इति लक्षणात् ॥ १५ ॥

**पारेसिन्ध्विति** । अथ राजा धृतराष्ट्रः प्रीतो भक्तिप्रजारञ्जनधनार्जनादिभिः संतुष्टोऽपि पारेसिन्धु समुद्रतटपर्यन्तं प्रथितं प्रसिद्धम् । किंच अहन्यहनि प्रत्यहं वर्धमानं पार्थस्य युधिष्ठिरस्याभ्युदयमैश्वर्यं सोढुं क्षन्तुमपटोरशक्तस्य । तद-

---

१. 'अभ्यषिञ्चन्' इति पाठः. २. 'अवनिं' इति पाठः. ३.'स्पत्वम्' इति पाठः. ४. 'नन्दनस्य' इति पाठः. ५. 'अमितं'; 'अथ तम्' इति पाठौ.

प्रीतो राजाप्यनुजतनयप्रेममार्गे प्रयातुं
मातुर्दोषादिव बहिरगादन्तरप्यन्धभावम् ॥ १६ ॥

तदनु सौबलीजानिरसौ बलीयसामर्षेण धर्षितः सहजविनयं धर्मतनयमाहूय कृतावहित्थो गिरमित्थमुत्थापयामास ।

'वत्स, संप्रति वारणावतं पुरमुपेत्य वारणाननगुरोरुत्सवं वारणाय विपदां निषेव्य सहानुजैस्तत्र [१]वास्तव्यपौरजनभव्यया गिरा स्तव्यो निरवधि[२]सुखामनुशाधि वसुधाम्' इति ।

तस्याशयं हृदि विदन्नपि धर्मसूनु-
स्तातस्य वाचमविलम्ब्य तथेत्यगृह्णात् ।

सहिष्णोरित्यर्थः । स्वात्मजस्य दुर्योधनस्यानुरोधादनुसरणात् । तद्दुर्योधनानुवृत्तेरिति यावत् । अनुजतनये युधिष्ठिरे यत्प्रेम तस्य मार्गे प्रयातुं गन्तुं मातुरम्बिकाया दोषात्सुरतसमये व्यासरूपावलोकनजुगुप्साकृतनेत्रनिमीलनरूपाद्बहिः । नेत्रयोरिवेत्यर्थः । अन्तर्मनस्यपि । अन्धस्य भावमन्धत्वमगात्प्राप्तवान् । तत्तादृशं प्रेम तत्याजेत्यर्थः । पुरा किल सत्यवत्याज्ञयाम्बिका पुत्रोत्पादनाय संगता व्यासेन । अथ तद्रूपदर्शनजनितजुगुप्साभयकृतलोचनमीलनाज्जात्यन्धं जनयामास धृतराष्ट्रमिति भारतकथात्रानुसंधेया । मन्दाक्रान्ता वृत्तम् ॥ १६ ॥

तदन्विति । तदनु प्रेमत्यागानन्तरं सौबली गान्धारी जाया यस्य सौबलीजानिः । 'जायाया निङ्' इति निङ् । असौ धृतराष्ट्रो बलीयसा महतामर्षेण । द्वेषेणेत्यर्थः । धर्षित आक्रान्तः सन् । सहजः स्वाभाविको विनयो यस्य तं धर्मतनयमाहूय । कृतावहित्थाकारगोपनं येन तथोक्तश्च सन् । स्वकैतवपरिज्ञानभयेनेति भावः । इत्थं वक्ष्यमाणप्रकारेण गिरं वाचमुत्थापयामासोत्पादितवान् । उवाचेत्यर्थः ॥

वत्सेति । हे वत्स युधिष्ठिर, त्वं संप्रत्यद्य वारणावतं नाम पुरमनुजैर्भीमादिभिः सहोपेत्य वारणस्य गजस्येवाननं मुखं यस्य तस्य विघ्नेशस्य यो गुरुः पिता सदाशिवस्तस्योत्सवं नैमित्तिकपाक्षिकादिकं विपदां वारणाय निवारणाय निषेव्य तत्र वारणावते वास्तव्यस्य निवासिनः पौरजनस्य भव्यया कुशलान्वितया गिरा स्तोतुं योग्यः स्तव्यः सन् निरवधि अवधिरहितं सुखं यस्यास्तां वसुधां भूमिमनुजैः सहानुशाधि परिपालयेत्युवाचेति पूर्वेणान्वयः ॥

तस्येति । धर्मस्य यमस्य सूनुर्युधिष्ठिरः । 'सूनुः पुत्रेऽनुजे रवौ' इति विश्वः । तस्य कृतावहित्थस्य तातस्य पितुर्धृतराष्ट्रस्याशयं दुष्टाभिप्रायं हृदि विदञ्जानन्नपि । 'अनुक्तमप्यूहति पण्डितो जनः' इति न्यायादिति भावः । अवि-

१. 'वास्तव्यो गिरा पौरजनमुवास्तव्यो' इति पाठः. २. 'सुखेन', 'सुखम्' इति पाठौ.

तत्तादृशेषु गुरुशासनपालनेषु
कूलंकषं गुणगणेन कुलं हि पूरोः ॥ १७ ॥
धर्मभूरनुजैः साकं तद्गिरा तत्पुरं ययौ ।
कर्मचोदनया जीवः कायमन्यमिवेन्द्रियैः ॥ १८ ॥
सविनयमथ दर्शितं महीयः सचिववरेण पुरोचनेन शत्रोः ।
जतुगृहमभजन्त तत्र पार्था जगदिव नूत्नमशेषवस्तुपूर्णम् ॥ १९ ॥
तत्र ते विदुरभृत्यभाषितैः सौबलेयशतमन्युहेतुना ।

---

लम्व्य कार्याकार्यालोचने कालक्षेपमकृत्वा तथा वारणावतं गच्छामीत्युक्तप्रकारां वाचमगृह्णादृतवान् । उवाचेति यावत् । नन्विदमयुक्तम् 'गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः । उत्पथप्रतिपन्नस्य कार्यं भवति शासनम् ॥' इति न्याया-दित्यत आह—तदिति । पूरोः कुरुवंशजस्य राज्ञः कुलं तत्तादृशेष्वतिदुःख-करत्वेन दुर्भरेषु गुरोः पितुः शासनमाज्ञा तत्पालनेषु तत्करणेषु विषये गुणानां विनयविवेकादीनां गणेन कूलंकषं परिपूर्णं खलु । सामान्येन विशेषसमर्थनरूपोऽर्था-न्तरन्यासः । पूरुर्नाम पुत्रः पितुर्ययातेर्जरां परिगृह्य जुगुप्सितां दशसहस्रवत्सरा-न्स्वतारुण्यं तस्मै दत्तवानिति भारतकथा । वसन्ततिलकावृत्तम् ॥ १७ ॥

धर्मेति । धर्मभूर्युधिष्ठिरस्तस्य धृतराष्ट्रस्य गिरा तत्पुरं वारणावतं प्रति अनुजैः साकं जीवोऽन्तःकरणप्रतिबिम्बितचैतन्यं कर्मणः प्रारब्धस्य चोदनया प्रेरणया इन्द्रियैश्चक्षुरादिभिः सह अन्यं कायं देहान्तरमिव ययौ प्राप्तवान् । उपमालंकारः । तेन हस्तिनपुरत्यागो देहत्यागवदतिदुःखायाभूदिति प्रतीतेरलंका-रेण वस्तुध्वनिः । युग्मविपुलावृत्तम् ॥ १८ ॥

सविनयमिति । अथ वारणावतप्राप्त्यनन्तरं तत्र वारणावते पार्था अशेषैर्वस्तुभिर्भोग्यैः पूर्णमत एव महीयः रमणीयम् । किंच शत्रोर्दुर्योधनस्य सचिववरेण मन्त्रिमुख्येन पुरोचनेन नाम्ना म्लेच्छेन सविनयं यथा तथा दर्शितं विज्ञापितं जतुगृहं लाक्षागृहं नूत्नं नवं जगल्लोकान्तरमिवाभजन्त विविशुः । उपमालंकारः । अत्र शत्रोः सचिववरेणेत्युक्त्या तद्गृहस्य वासायोग्यत्वं ध्वन्यते । पुष्पिताग्रावृत्तम् ॥ १९ ॥

तत्रेति । ते पार्था विदुरभृत्यस्य तत्प्रेषितखनकस्य भाषितैर्वाक्यैर्दुर्योधनो जतुगृहदाहाद्युष्मान्मारयिष्यतीत्यादिभिस्तत्र तस्मिञ्जतुधाम्नि लाक्षागृहे सौबलेया-नां दुर्योधनादीनां यच्छतं तस्य मन्युः क्रोधः स एव हेतुर्यस्य तेन सौबलेयो दुर्योधन एव शतमन्युरिन्द्रो हेतुर्यस्य तेनेति च । 'शतमन्युर्दिवस्पतिः' इतीन्द्रनामस्व-मरः । धनंजयस्य वह्नेरर्जुनस्य च प्रापणेन पूरणेन परां संख्यामिताः पञ्चतां मरणं

पक्वतामपि परां धनंजयप्रापणेन जतुधाम्नि मेनिरे ॥ २० ॥

शिशमयिषुरपि द्विषां स मन्त्री
निभृतशरारुरिमान्निगूढभावान् ।
अवसरमनलावृते निकेते
प्रतिदिनमेधयितुं प्रतीक्षते स्म ॥ २१ ॥

जातुचिदपत्यैः सह पञ्चभिर्भृत्यभावमिषादमीषामामिषफलेषु विषं निनीषन्त्या निषादयोषित इव तस्य पुरोचनस्य निद्रायामपि द्राघिमाणं दातुकामेन तत्र सद्मनि क्षणदायामाशुशुक्षणिं क्षणान्निक्षिप्य जननीसोदरजननीचेतरसंवेशसुखमणिमञ्चायमानभुजशिखरसीमेन भीमेन तस्माद्गृहाद्विदुरकिंकरकृतलिङ्गया सुरङ्गया निर्जग्मे ।

---

मेनिरे तर्कितवन्तः । 'धनंजयोऽर्जुने वह्नौ', 'स्यात्पञ्चता कालधर्मः' इति विश्वामरौ । रथोद्धतावृत्तम् ॥ २० ॥

शिशमयिषुरिति । निभृतः प्रच्छन्नः स चासौ शरारुर्घातुक इति विशेष्यत्वविवक्षया समासः । द्विषां मन्त्री स पुरोचनो निगूढो दुर्विज्ञेयो भावोऽभिप्रायो येषां तान् । अप्रकाशितविदुरभृत्यभावितानित्यर्थः । इमान्पार्थाननलेनाग्निनावृते दग्धे निकेते जतुगृहे । शमं क्षयं प्रापयितुमिच्छुः शिशमयिषुरपि सन् । प्रतिदिनं दिनेदिने एधयितुं वर्धयितुमिति विरोधः । वह्नेरिन्धनीकर्तुमित्यविरोधः । अतएव विरोधाभासालंकारः । अवसरं समयं दहनयोग्यं प्रतीक्षते स्म निरीक्षितवान् । पुष्पिताग्रावृत्तम् ॥ २१ ॥

जात्विति । जातुचित्कदाचिद्भृत्यभावस्य परिचारकत्वस्य मिषाद्व्याजात् अमीषां पार्थानामामिषेषु भोग्येषु फलेषु रसालादिषु । आमिषेषु मांसेषु फलेष्विति वा । 'आमिषं पललें क्लीबे त्रिषु स्याद्भोग्यवस्तुनि' इति विश्वः । विषं गरलं नेतुं प्रापयितुमिच्छन्त्या निनीषन्त्या निषादयोषितो दुर्योधनप्रेषितायाः किरात्या इवापत्यैस्तत्पुत्रैः पञ्चभिः सह तस्य निभृतशरारोः पुरोचनस्य निद्रायामपि द्राघिमाणं दीर्घत्वम् । दीर्घनिद्रासंज्ञं मरणमिति यावत् । दातुं कामो यस्य तेन जनन्याः कुन्त्याः सोदरजनस्य युधिष्ठिरादेश्च नीचेतरमनल्पं संवेशसुखं निद्रासुखं यस्मिंस्तादृशो मणिमयो मञ्च इवाचरन्ती मणिमञ्चायमाना भुजशेखरयोः सीमा प्रदेशो यस्य तेन । नीचेतरः संवेशसुखहेतुरिति वा व्याख्येयम् । 'सुखहेतौ सुखे सुखम्' इति विश्वः । भीमेन तत्र तस्मिन्सद्मनि जतुगृहे आशु-

---

१. 'आमिषेषु' इति पाठः. २. 'तस्माद्गृहात्' इति नास्ति क्वचित्.

पार्थद्विषां विग्रहमेकमेकं विभज्य सप्तापि शिखाः कृशानोः ।
स्वीकृत्य तृप्ताः स्वशिरःप्रकम्पैः शश्लाघिरे तत्र समीरपुत्रम् ॥२२॥
प्रपश्यतां पौरनृणां प्रभाते सांक्रामिकं रोगमिवाधितापम् ।
आविभ्रतामश्रुभिरेव शान्तिरापादि तत्राग्निहठात्क्रियायाः ॥ २३ ॥
तत्रालये दग्धतनूनथैतान्निश्चित्य पार्थान्निजचारवाचा ।
दुःखापदेशेन सुयोधनाद्याः संमोदबाष्पं ससृजुः सभायाम् ॥२४॥

---

शुक्षणिमग्निं निक्षिप्य । 'शिखावानाशुशुक्षणिः' इत्यग्निनामस्वमरः । क्षणादग्निनिक्षेपकाल एव । अन्यथा स्वेषामप्यग्न्यातङ्कापत्तेरिति भावः । तस्माद्गृहाल्लाक्षागृहात्क्षणदायां रात्रौ विदुरस्य किंकरेण भृत्येन कृतं लिङ्गं निर्गमनचिह्नं यस्यास्तया सुरङ्गया बिलेन निर्जग्मे निर्गतम् । गमेर्भावे लिट् । 'अग्निदो गरदश्चैव' इत्यादिना वह्निविषदातृपुरोचनकिरात्योः । 'आततायिनमायान्तं हन्यादेवाविचारयन्' इत्यादिस्मरणाच्च तद्वधो भीमस्य नानुचित इति ध्येयम् ॥

**पार्थेति** । तत्र कृशानोरग्नेः सप्तापि शिखाः पार्थद्विषां किरातीतत्पुत्रपुरोचनानामेकमेकैकं विग्रहं शरीरं विभज्य विभागं कृत्वा । स्वीकृत्य आस्वाद्य चेत्यर्थः । तृप्ताः सत्यः स्वशिरसः आत्माग्रभागस्य प्रकर्षेण कम्पैः समीरपुत्रं भीमं शश्लाघिरे श्लाघनं चक्रुरिवेत्युत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या । श्लाघतेः कर्तरि लिट् । उपजातिवृत्तम् ॥ २२ ॥

**प्रपश्यतामिति** । प्रभाते प्रातः प्रपश्यतामग्निहठात्क्रियायामिति लभ्यते । अतएव संक्रमादागतं सांक्रामिकं रोगभक्ष्यामयादिमिव स्थितम् । आधिना मनोव्यथया यस्तापस्तमाबिभ्रतां पौरनृणामश्रुभिरेव । तत्र जतुगृहेऽग्नेः संबन्धिन्या हठात्क्रियाया बलाद्दाहस्य शान्तिर्निर्वापणमापादि कृता । पद्यतेः कर्मणि लुङ् । तादृग्धर्मशीलानां किमिदमाकस्मिकमापतितं बतेति पौरा रुरुदुरित्यर्थः । उपजातिवृत्तम् ॥ २३ ॥

**तत्रेति** । अथ लाक्षागृहदाहानन्तरं निजानामात्मीयानां चाराणां वाचा वाक्येन दग्धाः सह मात्रा पाण्डवा इत्यादिना तत्रालये जतुगृह एतान्पार्थान्दग्धा तनुः शरीरं येषां तथोक्तान्निश्चित्य सुयोधनाद्यास्तदानीं सभायां दुःखस्यापदेशेन संमोदबाष्पं ससृजुर्मुमुचुः । अद्य जातं निष्कण्टकमस्मत्साम्राज्यमिति मुमुदुरित्यर्थः । यत्तु 'दग्धतनूनेतान्पुरोचनादीन्पार्थान्निश्चित्य तत्त्वेन ज्ञात्वेत्यर्थः' इति नृसिंहः, तन्न । पुरोचनादीनां प्रकृतत्वाभावेनैतच्छब्देन तत्परामर्शायोगात् । अन्यथा उत्तरगद्येऽप्येतानवतार्येत्यत्र तत्परामर्शः किं न स्यादिति । इन्द्रवज्रावृत्तम् ॥ २४ ॥

---

१. 'संश्लाघिरे' इति पाठः. २. 'सनुम्' इति पाठः.

तावत्सोऽपि गन्धवहसूनुरन्धतमसबन्धुरं सक्थिजवसमुत्थितमरुदुत्पाटिततरुविटपवसतिविघटनसमुद्भ्रान्तशकुन्तकुलनिबद्धनिध्वानमध्वानं विलङ्घ्य कस्यचित्काननकासारतीरतरोरधिपरिसरमेतानवतार्य तदीयपरिरक्षणविचक्षणः क्षणमवतस्थे ।

तत्र कापि तरुणी तडिदाभा तं ययौ जतुगृहे सुहितेन ।
चूषणाय तमसां वनमार्गे चोदिता हुतवहेन शिखेव ॥ २५ ॥
अधरोष्ठविभागरेखिका सुदृशोऽस्या वदनेऽस्ति वा न वा ।

---

तावदिति । तावत्सुरङ्गानिर्गमसमकाल एव स गन्धवहस्य वायोः सूनुर्भीमोऽप्यन्धतमसेन गाढतमसा । 'ध्वान्ते गाढेऽन्धतमसम्' इत्यमरः । बन्धुरं सान्द्रं सक्थिनोरूर्वोर्जवाद्वेगात्समुत्थितेन संजातेन मरुता वायुनोत्पाटितानामुन्मूलितानां तरूणां विटपेषु शाखासु या वसतयः कुलायास्तासां विघटनेन नाशेन समुद्भ्रान्तानामाकाशमुत्पतितानां शकुन्तानां पक्षिणां कुलेन निबद्धो निध्वानः कोलाहलरवो यस्मिंस्तमध्वानमरण्यमार्गं विलङ्घ्यातिक्रम्य कस्यचित्कानने कासारस्य सरसस्तीरे तरोरधिपरिसरं समीपे एतान्कुन्त्यादीनवतार्योपवेश्य तदीये कुन्त्यादिसंबन्धिनि परिरक्षणे दुष्टसत्त्वेभ्यस्त्राणे विचक्षणः कुशलः सन् क्षणमवतस्थे स्थितवान् । 'जागरूकः' इति पाठस्त्वनुप्रासभङ्गादुपेक्ष्यः । यत्तु तावत् 'दुर्योधनाद्यानन्दसमये' इति नृसिंहः, तन्न । दुर्योधनाद्यानन्दस्य भीमगमनारण्यस्थित्योश्चैककालिकत्वस्यासंभाव्यतया संदर्भविरोधात् । यदपि 'अथवा भीमनिर्गमनानन्तरम्' इति व्याख्यान्तरम्, तदपि न । भीमनिर्गमनानन्तरं भीमोऽवतस्थ इति संदर्भविरोधात् ॥

तत्रेति । तत्र तत्र मूले तडितो विद्युत इवाभा यस्याः सा जतुगृहे सुहितेनानर्घ्यवस्तुकवलनतृप्तेन अतएव हुतवहेनाग्निना वनमार्गे तमसां चूषणाय ध्वंसनाय चोदिता प्रेषिता शिखा ज्वालेव स्थिता कापि तरुणी तं भीमं ययौ प्राप । अत्र जतुगृहसुखपदार्थहेतुककाव्यलिङ्गोज्जीविताग्निशिखात्वोत्प्रेक्षेति तयोरङ्गाङ्गिभावेन संकरस्य तडिदाभेत्युपमया संसृष्टिः । स्वागता वृत्तम् ॥ २५ ॥

अधरोष्ठेति । अस्या भीमं प्रत्यागतायाः पुरोवर्तिन्या इति वा । सुदृशो वदने मुखेऽधरस्यौष्ठस्योर्ध्वस्य च द्वयोः । विभज्यतेऽनयेति विभागा रेखैव रेखिका । अधरशब्दसंनियोगादुपरितनौष्ठ एवौष्ठशब्दो वर्तते । अर्थस्य च द्वित्वाद्द्विवचनमित्योष्ठाधरावित्यत्र विवृतमिति । सास्ति वा न वेत्युक्तप्रकारं संशयं तस्य भीमस्य हृदि परिमार्ष्टुं किल निवारयितुमित्युत्प्रेक्षा । सा तरुणी मौनमत्यजत् ।

---

१. 'धुरंधरं' इति पाठः. २. 'वसति' इति नास्ति क्वचित्. ३. 'विघट्टन' इति पाठः. ४. 'कुलबद्ध' इति पाठः. ५. 'जागरविचक्षणः'; 'विचक्षणजागरः' इति पाठौ. ६. 'सुखितेन' इति पाठः.

इति सा हृदि तस्य संशयं परिमार्ष्टुं किल मौनमत्यजत् ॥२६॥

[1]एतां प्रशास्ति भुजया वनराज्यसीमा-
मेकः स्वयं नरभुजामृषभो हिडिम्बः ।
अर्धांशभाग्जनवधे सममन्तकेन
तुल्याभिधानपदया स्वसृमान्मया यः ॥ २७ ॥

वीतशङ्कमिह तेऽद्य तिष्ठतः कीदृशं ककुदमित्ययं मम ।
चित्तरङ्गभुवि नृत्तकौशलीमुत्तरङ्गयति चित्रलासकः ॥ २८ ॥

रुधिरं पातुकामेन तेन वो हन्तुमीरिता ।
अधरं पातुकामाहमस्मि ते रूपसंपदा ॥ २९ ॥

अद्य ते सविधमापतेदसौ हृद्यमेतदुचितं वचः शृणु ।

---

उवाचेत्यर्थः । अत्र मौनत्यागे तादृशसंशयवारणफलकत्वोत्प्रेक्षया तन्मुखकान्तिनैर्गनिरयं तथा दृष्टिप्रतिरोधकमिति वस्तुप्रतीतेरलंकारेण वस्तुध्वनिः । औपच्छन्दसिकम् ॥ २६ ॥

तदुक्तिप्रकारमेवाह—एतामिति । नरभुजां मनुष्याशनानां रक्षसामृषभः श्रेष्ठः अतएव जनानां वधे हिंसायां विषये अन्तकेन समं यमेन सहार्धांशं तुल्यभागं भजतीति तथोक्तः हिडिम्बो नाम राक्षसः स्वयमेकोऽसहायः सन्नेव भुजया । बाहुबलेनेत्यर्थः । एतां वनराज्यसीमां प्रशास्ति रक्षति । एतद्वनस्य राजेत्यर्थः । यो हिडिम्बस्तुल्यमभिन्नमभिधानपदं संज्ञाशब्दो यस्यास्तया मया स्वसृमान् । तस्याहं भगिनीत्यर्थः । स हिडिम्ब इति संबन्धः । वसन्ततिलकावृत्तम् ॥ २७ ॥

वीतशङ्कमिति । इह यमतुल्यहिडिम्बवने वीतशङ्कं गतभयं यथा तथा अद्य तिष्ठतस्ते तव ककुदं धैर्यं कीदृशमित्युक्तप्रकारोऽयं चित्रमाश्चर्यमेव लासको नर्तकः मम चित्तमेव रङ्गभूर्नाट्यदेशस्तस्यां नृत्तकौशलीं नाट्यनैपुण्यमुत्तरङ्गयति वर्धयति । अत्याश्चर्यमत्र त्वदवस्थानमित्यर्थः । रथोद्धता वृत्तम् ॥ २८ ॥

रुधिरमिति । किंच रुधिरं युष्मद्रक्तं पातुं कामो यस्य तथोक्तेन तेन हिडिम्बेन वो युष्मान्हन्तुमीरिता प्रेरिताहं ते तव संबन्धिन्या रूपस्य सौन्दर्यस्य संपदा समृद्ध्या हेतुनाधरं भवदोष्ठमाधुर्यं पातुकामास्मि । इदं ततोऽप्याश्चर्यम् यद्युष्मान्हन्तुमागताया मम विस्मृत्य सर्वं त्वद्रूपसंपदा त्वयि रागोदय इत्यर्थः । अत्र विरुद्धात्कार्यसंपत्तिरूपो विभावनाभेदः । युग्मविपुलावृत्तम् ॥ २९ ॥

अद्येति । किंचासौ हिडिम्बः । हे धीर, ते तव सविधं समीपं प्रत्यापतेदागच्छेत् । अतः हृद्यं मनोज्ञमत एवोचितमेतद्वक्ष्यमाणं वचः शृणु । ममेति शेषः ।

---

१. 'एनां' इति पाठः.

मारणं रिपुषु तन्वतामुना मा रणं कुरु महान्बलेन सः ॥३०॥
उपयामविधौ त्वरस्व मे कृपया मारशराः शरारवः ।
दिवि वा भुवि वाथ दिक्षु वा रमये त्वामुपनीय रंहसा ॥३१॥

इत्येनां भाषमाणां रजनिचरपतिः क्रोधलिङ्गैः स्फुलिङ्गै-
र्दग्धेवाक्ष्णोरमीक्ष्णं स्फुटघटितभुजास्फोटवाचाटिताशः ।
बिभ्राणो बभ्रुकैश्यं त्वमिह वससि को मृत्युवक्त्रार्धजग्धो
दुर्बुद्धे तिष्ठ यासि क पुनरिति गिरा मेदुरः प्रादुरासीत् ॥३२॥

तस्मिन्रक्षसि नेदिष्ठे तादृक्षपरुषाक्षरे ।
अपमृत्युरिवोदस्थादनिलस्यात्मसंभवः ॥ ३३ ॥

---

रिपुषु शत्रुषु विषये मारणं वधं तन्वता कुर्वता अमुना हिडिम्बेन सह रणं युद्धं मा कुरु । यतः स हिडिम्बो बलेन महान्सर्वोत्तरः । अत्र बलाधिक्येन रणाकरणसमर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्गम् । रथोद्धतावृत्तम् ॥ ३० ॥

उपयामेति । किंच हे धीर, त्वं कृपया दयया मे ममोपयामविधौ विवाहकर्मणि विषये त्वरस्व प्रवणो भव । यतो मारस्य मन्मथस्य शत्रोश्च । 'मारौ मन्मथशात्रवौ' इति विश्वः । शरा बाणाः शरारवो घातुकाः । अथ मद्विवाहानन्तरं दिवि स्वर्गे वा भुवि वा दिक्षु काङ्क्षितासु वा रंहसा वेगेन त्वामुपनीय तं देशं प्रापय्य रमये क्रीडयामि । स्वस्याः कामचारित्वादिति भावः । औपच्छन्दसिकम् ॥ ३१ ॥

इतीति । इत्युक्तप्रकारेण भाषमाणां वदन्तीम् । भीममिति शेषः । एनां हिडिम्बां क्रोधस्य लिङ्गैश्चिह्नैरक्ष्णोः स्फुलिङ्गैरग्निकणैः । तत्प्रायैरीक्षणैरिति यावत् । दग्धा दहन्निव स्थित इत्युत्प्रेक्षा । तृन्नन्तत्वात् 'नलोक—' इत्यादिना षष्ठीप्रतिषेधः । अमीक्ष्णं मुहुः स्फुटैः प्रकटैर्घटितयोरन्योन्यं संघृष्टयोर्भुजयोरास्फोटैरास्फालनशब्दैर्वाचाटिता मुखरिता आशा दिशो येन तथोक्तः । बभ्रु कपिलवर्णं कैश्यं केशवृन्दं बिभ्राणो वहन्रजनिचरपतिर्हिडिम्बः । हे दुर्बुद्धे मूढ, इह मदीये वने वससि मृत्योर्वक्त्रेणार्धं जग्धो भक्षितस्त्वं कः । तिष्ठ । पुनः इतः परं क्व कुत्र यासि गच्छसि । इत्युक्तप्रकारया गिरा वाचा मेदुरो मुखरः सन् प्रादुरासीदाविर्बभूव । स्रग्धरा वृत्तम् । यत्तु 'स्फुटं यथा तथा घटितस्य सुश्लिष्टस्य रण इति शेषः' इति नृसिंहः, तन्न । समस्तपदमध्ये शेषपूरणे समासानुपपत्तेः 'समर्थः पदविधिः' इत्यनेन पदान्तरसापेक्षस्य समासप्राप्तेर्निषेधात्, च्युतसंस्कृतिदोषापत्तेः, व्याख्यासंप्रदायविरुद्धत्वाच्चेति ॥ ३२ ॥

तस्मिन्निति । तादृक्षाणि तादृशानि 'दुर्बुद्धे' इत्यादीनि परुषाणि निष्ठुराण्यक्षराणि वचनानि यस्य तस्मिंस्तथोक्ते तस्मिन्रक्षसि हिडिम्बे नेदिष्ठे संनिहिते

---

१. 'दग्ध्वैव' इति पाठः.

वृक्षेण वृक्षं गिरिणा गिरीन्द्रं हस्तेन हस्तं वचसा वचश्च ।
परस्परेण प्रतिरुध्य घोरं समीकमेतौ सममादधाते ॥ ३४ ॥
स्वसुः समक्षं स्वयमेव मुष्ट्या वलं विडौजा इव वज्रसख्या ।
हिडिम्बमेनं यमराजधानीकुटुम्बिमुख्यं कुरुते स्म भीमः ॥ ३५ ॥

तदनु तिमिरकदम्बेन हिडिम्बेन निर्मुक्तात्तस्मादहर्मुखादिव [1]वनात्संध्ययेव सरागया तया कमलपालिकया सह तपनभानव इव राजसूनवस्ते निष्क्रम्य शालिहोत्रमुनेः [2]सरसि वीतिहोत्रभासं व्यासं भगवन्तमासेव्य तत्र तन्निदेशादहानि [3]कतिचिदतिवाहयांचक्रुः ।

---

सति । अनिलस्यात्मसंभवो भीमोऽपमृत्युरकालिकमृत्युरिवोदस्थादुत्थितवान् । युद्धाय संनद्धोऽभूदित्यर्थः । अत्र 'नाश्लीलं कीर्तयेत्' इति परुषवचसाममङ्गलस्मरणात्तत्कीर्तनेन हिडिम्बस्य मरणात्मकामङ्गलस्फोरणाय भीमेऽपमृत्यूपमेत्यलंकारेण वस्तुध्वनिः ॥ ३३ ॥

**वृक्षेणेति** । एतौ भीमहिडिम्बौ वृक्षेण वृक्षं परस्परेणान्योन्येन प्रतिरुध्य निवार्य इति पदद्वयमग्रेऽपि योज्यम् । गिरिणा गिरीन्द्रम्, हस्तेन हस्तम्, वचसा वचश्च, एवं समं तुल्यं घोरं दारुणं समीकं युद्धमादधाते कुरुतः । उपजातिवृत्तम् ॥ ३४ ॥

**स्वसुरिति** । भीमः स्वयं वज्रस्याशनेः सख्या । तद्वदतिसारयेत्यर्थः । मुष्ट्या मुष्टिघातेनैव । न त्वायुधेनेत्यर्थः । स्वसुर्भगिन्या हिडिम्बायाः समक्षं प्रत्यक्षे एनं हिडिम्बं विडौजा इन्द्रो वलं वलासुरमिव यमराजधान्यां कुटुम्बिषु वास्तव्येषु मुख्यं कुरुते स्म । अवधीदित्यर्थः । उपमालंकारः । उपेन्द्रवज्रा ॥ ३५ ॥

**तदन्विति** । तदनु हिडिम्बवधानन्तरं तिमिरस्य कदम्बेन समूहेनेव हिडिम्बेन राक्षसेन निर्मुक्तात् । उभाभ्यामपि त्यक्तादित्यर्थः । एवमग्रेऽपि । अहर्मुखात्प्रातःकालादिव तस्माद्वनाद्धिडिम्बारण्याद्रागेण रक्तकान्त्या अनुरागेण च सहितया संध्ययेव तया कमलपालिकया हिडिम्बया सह निष्क्रम्य विनिर्गत्य तपनस्य सूर्यस्य भानवः किरणा इव ते राजसूनवः पाण्डवाः शालिहोत्रस्य नाम मुनेः सरसि । तत्तीर इत्यर्थः । वीतिहोत्रस्य अग्नेरिव भाः कान्तिर्यस्य तं भगवन्तं व्यासं मुनिमासेव्य तस्य व्यासस्य निदेशादाज्ञायाः कतिचिदहानि दिनानि तत्र शालिहोत्रमुनिसरस्तीरेऽतिवाहयांचक्रुर्गमयामासुः । अत्र निर्मोचनक्रियया

---

१. 'वनमध्यात्' इति पाठः. २. 'सदसि' इति पाठः. ३. 'कानिचित्' इति पाठः.

पुत्रं तत्र घटोत्कटं पवनभूसङ्गादनङ्गातुरा
प्राप्तं सर्वगुणैर्मनोजवसतां प्रासूत नक्तंचरी ।
कुर्यां वः स्मृत एव कर्मसु हरेः शक्तेरपि स्रंसना-
मित्युक्त्वा स पितॄन्यथाभिलषितं युक्तस्तया निर्ययौ ॥३६॥

ततस्ते वन्याशनैर्धन्या धारितवसुधासुधाशनाकृतयः प्रावृष-मिव बकवलाक्रान्तां पातालभुवमिव प्रत्यहं वर्धमानबलिशोका-मङ्गराज्यसीमामिव सूर्यतनयानुकूलप्रतिष्ठां रविरथाक्षधुरमिवैक-

---

वनप्रातःकालयोर्निर्गमनक्रियया पाण्डवरविकिरणानां धर्मैक्येन प्रस्तुताप्रस्तुता-स्पदं दीपकद्वयम् । तथाहि हिडिम्बतमःकदम्बयोर्गम्यमानैक्येन हिडिम्बासं-ध्ययोः श्लेषमित्तिकाभेदाध्यवसितरागेण च साधर्म्यादुपमाद्वयम् । चतुर्णामेषां वीतिहोत्रभासमित्युपमया संसृष्टिः ॥

पुत्रमिति । तत्र शालिहोत्रसरस्तीरेऽनङ्गातुरा कामपीडिता नक्तंचरी हिडिम्बा पवनभुवा भीमेन सह सङ्गातसंभोगाद्धेतोः सर्वैर्गुणैः शौर्यधैर्यादिभिर्म-नोजवसतां पितृतुल्यत्वं प्राप्तम् । भीमतुल्यमिति यावत् । 'अथ मनोजवसः पितृसंनिभः' इत्यमरः । घटोत्कचं नाम पुत्रं प्रासूत जनयामास । स घटो-त्कचस्तु 'भोः पितरः, वो युष्माकं कर्मसु कार्यसमयेषु स्मृत एव । स्मृतिमात्रसं-निहित एवेत्यर्थः । हरेरिन्द्रस्य शक्तेः सामर्थ्यस्यापि । इन्द्रदत्तकर्णप्रमुक्तश-क्त्यायुधस्यापीति च । स्रंसनां च्युतिं कुर्याम्' इत्युक्तप्रकारेण पितॄन्युधिष्ठिरा-दीन्प्रत्युक्त्वा तया हिडिम्बया मात्रा युक्तः सन् यथाभिलषितं स्वैरं यथा तथा निर्ययौ निर्गतवान् । यत्तु 'सर्वैर्गुणैरुपलक्षितं मनोजवसतां मनोजवसत्वं प्राप्तम्' इति नृसिंहः, तत्तस्य उक्तकोशानभिज्ञताविलसितमेवेति नास्माकमाग्रहः । शार्दूलविक्रीडितम् ॥ ३६ ॥

तत इति । ततो घटोत्कचनिर्गमनानन्तरं वनेभवैर्वन्यैरशनैः कन्दमूलादिभिर्ध-न्याः श्लाघ्यास्ते पाण्डवा धारिता वसुधायां भुवि सुधाशनाः देवाः । ब्राह्मणा इति-यावत् । तेषामाकृतिर्वेषो यैस्तथोक्ताः सन्तः बकस्य नामासुरस्य बलेन भृत्यामा-त्यादिनाक्रान्ताम् । बकपक्षिकुलाक्रान्तामिति च । अतएव प्रावृषं वर्षर्तुमिव स्थिताम् । एवमग्रेऽपि । अहन्यहनि प्रत्यहं वर्धमानो बलिना बकासुरदैत्येन यः शोकः स यस्यां ताम् । वर्धमानवैरोचनशोकां च । पातालभुवं पाताललोकमेव । पाताले नागपाशैर्वलैर्बद्धत्वादित्यन्यत्र भावः । सूर्यतनयाया यमुनाया अनुकूले तीरे प्रतिष्ठा स्थितिर्यस्यास्ताम् । कर्णोचितपालनामिति च । अङ्गराज्यसीमां अङ्गाख्यं देशमिव एकचक्रां तत्संज्ञाम् । एकं चक्रं रथाङ्गं यस्यास्तामिति च । रविरथस्य

---

१. 'जगतीमिव'; 'नगरीमिव' इति पाठौ.

चक्रां पुरीं क्रमादाक्रम्य कस्यचिद्गृहमेधिनो गृहमध्यमेत्य सुखमध्यवात्सुः ।

भिक्षामटद्भिरथ तत्र पृथाकुमारै-
रर्धं विभज्य पृथगर्पितमन्नराशिम् ।
आकण्ठमभ्यवहरन्नखिलैः प्रतीकैः
पुत्रो बभूव मरुतः पुनरुक्तपोषः ॥ ३७ ॥

तत्र तत्र द्विजैरेते पृष्टा नाशं पृथाभुवाम् ।
इत्यूचुर्वयमत्रैव विद्मस्तेषां तु संस्थितिम् ॥ ३८ ॥

यक्षेण केनापि हतो हिडिम्ब इति ब्रुवाणेषु मिथो द्विजेषु ।
आकूतगर्भं हसितं सगर्भ्याश्चक्रुर्मुखं वीक्ष्य समीरसूनोः ॥ ३९ ॥

---

सूर्यरथस्य संबन्धिनीमक्षधुरं चक्रावलम्बितिर्यग्दारुविशेषमिव पुरीं क्रमात्कतिपयप्रयाणैराक्रम्य प्राप्य कस्यचिद्गृहमेधिनो गृहस्थस्य गृहमध्यमेत्य सुखं यथा तथा अध्यवात्सुर्वसन्ति स्म । वसतेः कर्तरि लुङ् । अत्र बकबलाकान्तामित्यादौ शब्दमात्रसाधर्म्याच्छ्लेषचतुष्टयसंसृष्टिः—'प्रकृताप्रकृतोभयगतमुक्तं चेच्छब्दमात्रसाधर्म्यम् । श्लेषोऽयं श्लिष्टत्वं सर्वत्रावद्वयेनान्त्ये ॥' इति लक्षणात् ॥

**भिक्षामटद्भिरिति** । अथ एकचक्रपुरप्रवेशानन्तरं तत्र एकचक्रायां भिक्षामटद्भिः । भिक्षान्नमाचरद्भिरित्यर्थः । पृथाकुमारैः पार्थैरन्नराशेः । आर्जितादिति शेषः । अर्धं समांशं यथा तथा विभज्य पृथगर्पितमन्नराशिमाकण्ठं कण्ठपर्यन्तमभ्यवहरन्भुञ्जानो मरुतो वायोः पुत्रो भीमः अखिलैः प्रतीकैरवयवैः पुनरुक्तो द्विगुणितः पोषो मांसलत्वं यस्य तथोक्तो बभूव । अतिमांसलोऽभूदित्यर्थः । वसन्ततिलका ॥ ३७ ॥

**तत्रेति** । एते पाण्डवाः तत्र तत्र गोष्ठीषु द्विजैर्ब्राह्मणैः पृथाभुवां पाण्डवानां नाशं दाहजन्यं पृष्टाः किं नष्टा इत्यनुयुक्ताः सन्तः वयमत्र एकचक्रायामेव तेषां तु संस्थितिं नाशं सम्यक्स्थितिं च विद्मो जानीमः इत्युक्तप्रकारमूचुः । अत्रैव वर्तमानानां कथमस्माकं नाशवार्तेति भावः । युग्मविपुलावृत्तम् ॥ ३८ ॥

**यक्षेणेति** । केनाप्यनिर्ज्ञातनामगोत्रेण यक्षेण हिडिम्बो हत इति द्विजेषु मिथोऽन्योन्यं ब्रुवाणेषु कथयत्सु सत्सु समान एकस्मिन्गर्भे भवाः सगर्भ्याः सहजा युधिष्ठिरादयः समीरसूनोर्भीमस्य मुखं वीक्ष्याकूतोऽभिप्रायो गर्भे यस्य तथोक्तं

---

१. 'गृह्मम्' इति पाठः. २. 'उपेत्य' इति पाठः. ३. 'तनूजैः' इति पाठः.
४. 'अन्नराशेः' इति पाठः. ५. 'निखिलैः' इति पाठः.

एकदा सायमन्तर्गृहे निरवग्रहं निष्पतद्भिर्बाष्पैस्तरङ्गितोत्तमाङ्गमपत्यमुत्सङ्गभुवि पुरोधाय यातुधानापराधभयानुरोधेन मन्दितं क्रन्दितमुत्सृजन्तीं कुन्ती समुपसृत्य विषादनिदानं विप्रायताक्षीमप्राक्षीत् ।

सापि तां कृपालुतया हृदि लगद्गदां गद्गदाक्षरमाचचक्षे ।

साधयेयमिति धर्मसंग्रहं संदधाति मिथुनं परस्परम् ।
आधये परमनेकजन्मनोरावयोरजनि पापसंग्रहः ॥ ४० ॥

---

हृषितं हासं चक्रुः । नैते जानन्ति त्वया स हत इति साभिप्रायं हसन्ति स्मेत्यर्थः । उपजातिः ॥ ३९ ॥

**एकदेति** । एकदा कदाचित्सायं दिनान्तेऽन्तर्गृहे गृहाभ्यन्तरे निरवग्रहं निष्प्रतिबन्धं निष्पतद्भिः स्रवद्भिः । 'वृष्टिर्वर्षं तद्विघातेऽवग्रहावग्रहौ समौ' इत्यमरः । वाष्पैस्तरङ्गितं सिक्तमुत्तमाङ्गं शिरो यस्य तथोक्तमपत्यं पुत्रमुत्सङ्गभुवि ऊरुदेशे पुरोधायाग्रे कृत्वा यातुधानस्य बकस्य अपराधात्प्रतिकूलाचरणरूपाद्भयं तस्यानुरोधः संरोधस्तेन मन्दितं मन्दरवं क्रन्दितं रोदनमुत्सृजन्तीं कुर्वतीम् । निःशब्दं रुदन्तीमित्यर्थः । अन्यथा नगरमात्रस्यैव क्षयापत्तेरिति भावः । विप्रस्य निजावासदातुरायताक्षीं पत्नीं समुपसृत्य संनिधिं प्राप्य कुन्ती विषादस्य दुःखस्य निदानं मुख्यकारणमप्राक्षीत्पप्रच्छ । पृच्छतेः कर्तरि लुङ् ॥

**सेति** । सा विप्रपत्न्यपि कृपालुतया दयाशीलतया हृदि मनसि लगन्व्याप्नुवन्गदो रोगः शोकात्मको यस्यास्ताम् । महान्तोऽन्यसंतापात्खिद्यन्तीति भावः । तां कुन्तीं प्रति गद्गदानि दुःखतरलान्यक्षराणि वचनानि यस्मिंस्तद्यथा तथाचचक्ष उवाच । दुःखनिदानमिति शेषः । चक्षतेः कर्तरि लिट् ॥

**साधयेयमिति** । धर्मः पित्रृणापाकरणरूपः संगृह्यतेऽनेनेति धर्मसंग्रहं पुत्रं साधयेयं संपादयेयमिति हेतोः मिथुनं स्त्रीपुरुषौ परस्परं संदधाति संगच्छति । 'प्रजया पितृभ्य एष वा अनृणो यः पुत्री' इति श्रुतेः । 'प्रजायै गृहमेधिनाम्' इति स्मृतेश्च । महतामपत्यार्थमेव दारसंग्रह इति भावः । अनेकानि जन्मानि पूर्वाणि ययोस्तयोः । इति बहुतरपापसंचयद्योतनायेदं विशेषणम् । आवयोर्दम्पत्योस्तु परं केवलमाधये मनोव्यथार्थं पापं तत्फलं दुःखं संगृह्यतेऽनेनेति पापसंग्रहः अल्पायुः पुत्रोऽजनि जातः । अत्र पुत्रात्मकधर्माय यतमानयोरल्पायुःपुत्रात्मकपापावाप्तिवर्णनाद्विषमप्रभेदः । यत्तु 'धर्मस्य संग्रहं संपादनमिति व्याख्यायि' इति, यच्च 'मिथुनसंग्रहः' इति नृसिंहप्रलपितम्, तन्न्यूनपरत्वादिदोषाक्षेपणमूलोच्छेदित्वादुपेक्ष्यम् ॥ ४० ॥

---

१. 'उत्सङ्गभुवि पत्युरपत्यं' इति पाठः.

अयि किं ब्रवीमि परिपाकमंहसा-
मतिभीषणो बक इति क्षपाचरः ।
स्वसुरादरात्स्वयमिवागतो यमो
यमुनावनान्तमवलम्ब्य वर्तते ॥ ४१ ॥

मा भून्नाशो युगपदिति नो भीरुभिर्जातु पौरैः
पूर्वैर्लब्ध्वावसरमसकृत्प्रार्थनाभिः प्रक्लृप्तम् ।
एकैकस्मिन्नहनि वितरत्येकमेकं पुमांसं
नित्यं तस्मै बलिमिह जनस्तुङ्गमन्नस्य राशिम् ॥ ४२ ॥

तादृशः प्रलयकालकठोरो वासरः स तु ममालयभूमेः ।
द्वारि तिष्ठति बकात्परितुष्टात्पारितोषिकमिवाद्य जिघृक्षुः ॥ ४३ ॥

वालानिव प्रवयसोऽपि नराशनोऽयं

---

**अयीति** । अयि हे सखि, अंहसां पापानाम् । ममेति शेषः । परिपाकं दुःखात्मना परिणामं किं ब्रवीमि कथं वक्ष्यामि । अनिर्वाच्यं मद्दुःखमित्यर्थः । तदेव विशदयति—**अतीति** । अतिभीषणोऽत्यन्तदारुणो बक इति बकसंज्ञः क्षपाचरो राक्षसः स्वसुर्भगिन्या यमुनाया आदरात्स्वयं साक्षादागतो यम इवेत्युत्प्रेक्षा । यमुनाया वनान्तं तीरारण्यमवलम्ब्याक्रम्य वर्तते । मञ्जुभाषिणीवृत्तम् ॥ ४१ ॥

**मा भूदिति** । नोऽस्माकं सर्वेषां युगपदेककालं नाशो मा भूदिति हेतोः । भीरुभिर्भयशीलैरतएव पूर्वैः पुरातनैः पौरैरेतत्पट्टणवासिभिः जातु कदाचिदवसरं प्रार्थनावकाशं लब्ध्वा असकृद्बहुवारं प्रार्थनाभिः प्रक्लृप्तं निर्णीतम् । एकैकस्मिन्नहनि एकमेकं पुमांसं, तुङ्गमत्युन्नतम् । पर्वतकल्पमिति यावत् । अन्नस्य राशिमेतदुभयरूपं बलिं नित्यं दिने दिने तस्मै बकाय इह एतत्पट्टणे जनो वितरति ददाति । 'नित्यं तस्मै' इत्यपपाठः । 'कृत्वा तस्मै' इति पाठस्त्वनन्वयित्वादुपेक्ष्यः । मन्दाक्रान्ता वृत्तम् ॥ ४२ ॥

**तादृश इति** । तादृश उक्तबलिप्रदानात्मकः अतएव प्रलयकाल इव कठोरः प्राणिहिंसकत्वाद्दारुणो वासरो दिनं परितुष्टात् ब्राह्मणोऽयं बलिं ददातीति प्रियवाक्यश्रवणेन संतुष्टात् बकाद्राक्षसात्पारितोषिकं प्रियवाक्याहारदेयद्रव्यं जिघृक्षुर्गृहीतुमिच्छुरिव । ममालयभूमेर्निवासस्य द्वारि द्वारदेशे अद्य श्वः प्रातरिति वर्तमानसामीप्ये वर्तमानत्वनिर्देशः । तिष्ठति । तत्तद्गृहवारानुपूर्व्या श्वः प्रातर्बलिरस्माभिर्देय इत्यर्थः । स्वागतावृत्तम् ॥ ४३ ॥

**वालानिति** । अयं नराशनो बको बालानिव । यून इवेत्यर्थः । प्रवयसो वृद्धा-

---

१. 'उपागतः' इति पाठः. २. 'कृत्वा' इति पाठः.

भुञ्जीत चेन्मम स एव हि पुण्यपाकः ।
वालेन भाव्यमिति तद्बलिषु व्यवस्था
कण्ठे पुनः [1]कलयति क्रकचस्य धाटीम् ॥ ४४ ॥

संतानमूलमिदमेकमपत्यमास्ते
संवर्तकालसहजश्च स राक्षसेन्द्रः ।
संभूयते च समयः क्षपया महत्या
संतीर्यतां कथमियं सखि मे विपत्तिः' ॥ ४५ ॥

इत्युदीर्य सरभसावगाहनहृदयसमुत्कूलितं शोकसरःपूरमिव नयन-सलिलं विशृङ्खलं खेलयन्त्यै तस्यै 'तनयेषु द्वितीयः समरेष्वद्वितीयः सुतः सखि, ते[2] दीयते । स एव [3]तत्प्राणनाशने बलीभविष्यति । मा भैषीः' इति सा नरदेवमहिषी प्रत्यश्रौषीत् ।

---

नपि भुञ्जीत चेद्भक्षयेद्यदि स वृद्धभक्षणमेव पुण्यानां पाको हि फलं खलु । तन्मा-त्रमपि नास्तीत्याह—वालेनेति । तस्य वकस्य वलिषु विषये वालेन भाव्यं भवितव्यमित्युक्तप्रकारा व्यवस्था प्राचीननिष्कर्षः पुनः कण्ठे क्रकचस्य करपत्रस्य धाटीं भङ्गीं कलयति योजयति । आवयोर्दम्पत्योर्वृद्धत्वात् तरुणः पुत्र एवायं तद्बल्यर्थं देय इति महद्दुःखमिति भावः । वसन्ततिलका ॥ ४४ ॥

**संतानेति** । संतानस्यास्मद्वंशस्य मूलमविच्छेदकारणमिदं पुरोवर्ति अपत्यं पुत्रः एकमेवास्ते वर्तते । तद्दानाद्वंशोच्छेद इति भावः । ननु कदाचित्कृपया वकः पुनः पुत्रं दद्यादित्यत आह—**संवर्तेति** । स राक्षसेन्द्रश्च वकस्तु संवर्त-कालस्य सहजः । सदृश इत्यर्थः । तथा च प्राणिहिंसाविहाराणां कुतः कृपेति भावः । ननु कालान्तरभाविनीमापदं विचिन्त्य किमद्यैव शोचसीत्यत आह—**संभूयत इति** । महत्या दुःखदुर्भरया क्षपया एकयैव रात्र्या समयो बलि-प्रदानावसरः संभूयते संप्राप्यते । प्रभातायां रजन्यामेव बलिर्देय इत्यर्थः । अतो न कालान्तरीणा विपदिति भावः । इयं उक्ता मे मदीया विपत्तिः । हे सखि, कथं केन प्रकारेण संतीर्यतामतिक्रम्यताम् । तरतेः कर्मणि प्राप्तकाले लोट्॥४५॥

**इतीति** । इत्युक्तप्रकारेणोदीर्योक्त्वा सरभसमतिवेगमवगाहनं निमज्जनं यस्य तथोक्तेन हृदयेन मनसा समुत्कूलितं तटं प्रापितं शोक एव सरो जलं तस्य पूरं प्रवाहमिव स्थितं नयनयोः विशृङ्खलं निष्प्रतिवन्धं यथा तथा खेल-यन्त्यै प्रसारयन्त्यै तस्यै ब्राह्मणपत्न्यै । हे सखि, ते तुभ्यं मम तनयेषु द्विती-योऽपि समरेष्वद्वितीयोऽसदृशः सुतो भीमो दीयते । मयेति शेषः । स भीम एव तस्य वकस्य प्राण्यते जीव्यतेऽनेनेति प्राणनं यदशनमन्नं तद्विषये बली-

---

१. 'कलयते' इति पाठः. २. 'मया ते' इति पाठः. ३. 'तत्प्रीणनप्रणाशनयोः' इति पाठः.

अनयोरथ दम्पत्योरश्रुहेतोः शुचः पदे ।
आनन्दस्यातिरेकोऽभूदादेश इव तत्क्षणम् ॥ ४६ ॥
तस्मिमं प्रसुवा रहस्युदन्तं गदितो वायुसुतो बलावलेपात् ।
मनसा न बकं लिलेह रात्र्यामनसा धारितमन्नराशिमेव ॥ ४७ ॥

अपि[1]परेद्युर्निखिलजनानन्दकरे भगवति दिनकरेऽपि[2] मन्देहकुल-मवस्कन्दितुमुदयगिरिशिखरमधिरूढे ॥

स शकटमधिरुह्य भीमसेनो दधिकलशीकुलशीभरान्न[3]राशिम् ।

भविष्यति बलिर्भविष्यति । तत्प्राणानां नाशने विषये वली बलवान्भविष्य-तीति च । अतो मा भैषीर्न त्रसेः । भयेः कर्तरि लुङ् । इत्युक्तप्रकारेण सा नरदेवस्य पाण्डोः महिषी पत्नी कुन्ती प्रत्यश्रौषीत्प्रतिज्ञामकरोत् । प्रतिपूर्वाच्छ-णोतेः कर्तरि लुङ् । विरोधाभासश्लेषयोः संसृष्टिः ॥

अनयोरिति । अथ कुन्तीप्रतिज्ञानन्तरमनयोर्दम्पत्योर्ब्राह्मणीब्राह्मणयोरश्रुहे-तोर्बाष्पकारणस्य शुचो दुःखस्य पदे स्थाने । मनसीति यावत् । शुचं इति राहोः शिर इत्यादिवदभेदे षष्ठी । तथा च 'शुगस्मिँल्ले पदे शब्दे' इति च । आन-न्दस्यातिरेकः संतोषातिशय आदेशोऽतिथिरिव । व्याकरणशास्त्रप्रसिद्धशब्दान्तर-मिवेति च । तस्मिन्नेव क्षणे तत्क्षणमभूत् । व्याकरणेन युष्मदादिपदे आदेश-विधया त्वमादिपदमिवाश्रुपदं दूरीकृत्य आनन्दातिरेकपदमभूदित्यर्थः । उप-मालंकारः ॥ ४६ ॥

तस्मिति । वायुसुतस्तमिमं पूर्वोक्तमुदन्तं वार्तां प्रति रहसि प्रसुवा जनन्या गदितः कथितः सन् । बलावलेपाच्छौर्यगर्वाद्धेतोः बकमसुरं रात्र्यां मनसा न लिलेह न स्पृष्टवान् । न गणयामासेति यावत् । किंतु अनसा शकटेन धारितं संभरितमन्नराशिमेव मनसा रात्र्यां लिलेहास्वादितवान् । श्वः पूर्णाहारो मम भवेदिति सर्वामपि रजनीं ध्यायन्नतिष्ठदित्यर्थः । लिहेः कर्तरि लिट् । औप-च्छन्दसिकम् ॥ ४७ ॥

अपरेद्युरिति । अपरेद्युः परस्मिन्दिने निखिलजनानामानन्दकरे । दृष्टि-रोधितिमिरवारणादिति भावः । 'अखिलजननयनानन्दकरे' इति क्वचित्पाठः । भगवति दिनकरे सूर्येऽपि । इत्यपिना भीमस्य बकावस्कन्दनं समुच्चीयते । मन्देहानां नाम राक्षसानां कुलम् । 'वृन्दम्' इति वा पाठः । अवस्कन्दितुं नाशयितुम् । उदयगिरेः शिखरमधिरूढे प्राप्ते सतीत्युत्तरेणान्वयः । मन्देहा नाम राक्षसाः संध्यासु सूर्यं क्षणं निरुध्य नश्यन्तीति श्रुतिसिद्धम् ॥

स इति । स भीमसेनो दधिकलशीनां दधिकुम्भानां कुलं वृन्दं । अश्रुते

१. 'अखिल' इति पाठः. २. 'अपि' इति नास्ति क्वचित्. ३. 'शेखरान्न', 'पीवरान्न', 'शीफरान्न' इति च पाठाः.

बकभवनवनं विवेश शाखानगरमिवान्तकवीरराजधान्याः ॥ ४८ ॥

कङ्कालोच्चयकल्पितान्तकचमूशाटीकुटीविभ्रमे
तत्र क्रुद्धतदौपवाह्यमहिषश्वासोग्रचक्रानिले ।
गृध्रध्वाङ्क्षशृगालघोषविकसद्रक्षोपदानस्तवे
भुञ्जानः शकटस्थ एव स तदा चक्रे महत्क्ष्वेलितम्[१] ॥४९॥

सोऽपि तदिदं निशम्य बलिपुरुषविशेषमन्दित[२]शकटागमेन प्रथममेव कृतोन्मेषं रोषं द्विगुणयन्गिरिकंदरमन्दिरमुखात्सरभसं विनिर्गत्य

एवं को वापराध्नोत्यमुमविगणयन्बाहुमत्रेति घुष्यन्व्यक्तोरोरक्तरेखाकृतविरुदजगद्धातुकत्वप्रशस्तिः ।

---

व्याप्नोतीति व्युत्पत्तौ शकन्ध्वादित्वात् पररूपे पिप्पल्यादित्वात् ङीषि च कुलशीपङ्क्तिः तां बिभर्तीति भरः तादृशोऽन्नस्य राशिर्यस्मिंस्तथोक्तम् । 'दधिकलशीकुलपीवरान्नराशिम्' इति पाठस्तु सुगमः । शकटमधिरुह्यान्तकवीरस्य यमस्य या राजधानी संयमनी तस्याः शाखानगरं उपपट्टणमिव स्थितम् । 'यन्मूलनगरात्पुरम् । तच्छाखानगरम्' इत्यमरः । बकस्य भवनं यस्मिंस्तद्वनं विवेश । उत्प्रेक्षा । पुष्पिताग्रा वृत्तम् ॥ ४८ ॥

कङ्कालेति । कङ्कालानां शरीरशल्यानामुच्चयेन समूहेन कल्पितोऽन्तकचम्वा यमसेनायाः शाटीकुटीविभ्रमः पटगृहविलासो यस्मिंस्तथोक्ते । 'स्याच्छरीरास्थि कङ्कालः' इत्यमरः । क्रुद्धस्य कुपितस्य तदौपवाह्यस्य यमवाहनस्य महिषस्य श्वासा इव उग्रा दारुणाश्चक्रानिला आवर्तवायवो यस्मिंस्तथोक्ते गृध्रध्वाङ्क्षाणां कङ्ककाकानां शृगालानां शिवानां च घोषैर्घोरध्वनिभिर्विकसन्वर्धमानो रक्षसो बकस्यापदानानि प्राणिहिंसात्मककर्माणि तत्संबन्धिनः स्तवो यस्मिंस्तथोक्ते । तादृग्ध्वनिव्याजतद्विरुदस्तुतिरवमुखरित इत्यर्थः । तत्र बकवने शकटस्थः सन्नेव भुञ्जानोऽन्नराशिं भक्षयन्स भीमो महद्बकहृदयभेदनं क्ष्वेलितं सिंहनादं चक्रे । अत्र बलिभक्षणक्ष्वेलिताभ्यां भीमस्य तृणीकृतबकबलावलेपप्रतीतेर्वस्तुना वस्तुध्वनिः । शार्दूलविक्रीडितं वृत्तम् ॥ ४९ ॥

स इति । स बकोऽपि तदिदं भीमसिंहनादं निशम्य श्रुत्वा बलिनान्नेन बलवतेति च पुरुषविशेषेण महापुरुषेण भीमेन च द्वाभ्यां मन्दितेन विलम्बितेन शकटस्यागमेनागमनहेतुना प्रथमं सिंहनादश्रवणात्पूर्वमेव कृत उन्मेष उत्पत्तिर्यस्य तं रोषं क्रोधं द्विगुणयन्पुनरुक्तयन्सन् । गिरेः कंदरं गुहा सैव मन्दिरं तस्य मुखाद्द्वारात्सरभसं सवेगं यथा तथा विनिर्गत्य बहिरागत्येत्युत्तरेणान्वयः ॥

एवमिति । व्यक्ताभिः स्फुटाभिरुरसि रक्तरेखाभी रुधिरलेपधाराभिः

---

१. 'क्ष्वेडितम्' इति पाठः. २. 'भारमन्दित' इति पाठः.

क्रोशन्मर्त्याङ्गखादत्वरणपरिचलत्सृक्कलग्नास्थिदण्ड-
स्थूले दंष्ट्रे दधानः पवनभुवमभि प्राद्रवद्यातुधानः ॥ ५० ॥
निजभुजयुगलीनियन्त्रणाभिर्नियमितयत्नपरस्परावुभौ तौ ।
निगडितनयनं निलिम्पपङ्क्तेर्निरवहतां निपुणं नियुद्धशिल्पम् ॥ ५१ ॥
ततः ।
पुत्रस्य वायोर्भुजदौर्ललित्यं वकं वने तत्र चिरं चरन्तम् ।
निन्ये दशां कामपि राक्षसस्त्रीनेत्राभ्रवर्षर्तुविलासयोग्याम् ॥ ५२ ॥
तं विकृष्य पुरसीम्नि निशीथे तत्क्षणात्कुणपमर्शनदोषम् ।

---

कृतानि विरुदानि जयचिह्नानि यस्यास्तथोक्ता तादृशी जगतो घातुकत्वेन वधेन या प्रशस्तिः श्लाघ्या सा यस्य तथोक्तः । क्रोशतां वेदनया रुदतां मर्त्यानां बलिभूतानामङ्गखादेऽवयवभक्षणे त्वरणेन वेगेन परितश्चलतोः सृक्कणोरोष्ठप्रान्तयोर्लग्ने अस्थिदण्डाविव स्थूले चेति विशेष्यत्वविवक्षया समासः । दंष्ट्रे दन्तविशेषौ दधानो यातुधानो वकोऽमुं बाहुमविगणयन्नविचारयन् । एवमुक्तप्रकारमत्र मयि विषये को वा अपराध्नोत्यपराधं करोतीति घुष्यन् घोषं कुर्वन्सन् पवनभुवमभि भीमस्याभिमुखं प्राद्रवद्धावति स्म । यत्तु 'क्रोशतो मर्त्यस्य भीमस्य' इति, 'लग्नाः पूर्वमेवेति शेषः' इति नृसिंहप्रलपितम्, तत्तन्नामानुरूपमेव । यतः प्रथमे तत्प्रकर्षस्य द्वितीये च्युतसंस्कारस्य च दोषस्यापत्तेः ॥ ५० ॥

**निजेति** । तावुभौ भीमवकौ निजाभ्यां भुजयोर्युगलीभ्यां नियन्त्रणाभिर्बन्धैर्नियमितो निरुद्धो यत्नो यस्य तादृशं परस्परमन्योन्यं ययोस्तथोक्तौ सन्तौ । परस्परं भुजाभ्यां बन्धने धृतयत्नावित्यर्थः । निलिम्पानां देवानां पङ्क्तेः सङ्घैर्निगडिते आश्चर्येण शृङ्खलिते नयने यस्मिंस्तथोक्तम् । देवैराश्चर्यात्परिहृतविषयान्तरं यथा तथा आलोक्यमानमित्यर्थः । नियुद्धशिल्पं बाहुयुद्धकर्म निपुणं यथा तथा निरवहतां कृतवन्तौ । निःपूर्वाद्वहतेः कर्तरि लङ् । पुष्पिताग्रा वृत्तम् ॥५१॥

ततः । **पुत्रस्येति** । ततो वायोः पुत्रस्य भीमस्य भुजयोर्दौर्ललित्यं दर्पस्तत्र वनेऽरण्ये जले च चिरं चरन्तं सत्त्वानि भुञ्जानं बकं राक्षसं पक्षिविशेषं च । राक्षसस्त्रीणां नेत्राण्येवाभ्राणि मेघास्तेषां वर्षर्तो यो विलासो वृष्ट्यात्मकस्तस्य योग्यामुचितां कामपि दशां दुरवस्थां निन्ये गमयामास । भीमबाहुबलेन बको ममारेत्यर्थः । नयतेर्दुहादित्वाद्द्विकर्मकत्वम् । 'नेत्राश्रुवर्षर्तु–' इति पाठो नेत्रपदवैयर्थ्यापत्तेरुपेक्ष्यः । उपजाति वृत्तम् ॥ ५२ ॥

**तमिति** । मारुतसूनुर्भीमस्तं निहतं बकम् । तच्छवमिति यावत् । निशीथेऽर्धरात्रे पुरसीम्नि नगरद्वारे विकृष्य । पातयित्वेत्यर्थः । तत्क्षणात्कुणपस्य शवस्य मर्शनेन स्पर्शेन यो दोषस्तं मार्ष्टुं क्षालितुं कामो यस्य तथोक्त इवेत्यु-

---

१. 'सृक्कि' इति पाठः. २. 'ततः' इति नास्ति क्वचित्. ३. 'नेत्राम्बु' इति पाठः.

मार्ष्टुकाम इव मारुतसूनुर्मातुरङ्घ्रिमुपसेवितुमागात् ॥ ५३ ॥
आलोक्य यातुशवमेवदशेषपौरैरह्नोमुखे परवशीक्रियते स्म चेतः ।
आश्चर्यपूरपरिमेलनफेनिलाभिरानन्दसागरतरंगपरम्पराभिः ॥ ५४ ॥
भवनमेत्य तदा गृहमेधिनः पवनजे प्रवणीकृतमूर्धनि ।
प्रयुयुजे सममाशिषमक्षतैः प्रमुदितः पुरि तत्र महाजनः ॥ ५५ ॥
निशि जातु निकेतवेदिकायां निकटे सुप्तिसुखं निषेव्य पार्थान् ।
पथिकोऽपररात्रजागरूकः प्रबभाषे गिरमीदृशीं प्रसङ्गात् ॥ ५६ ॥

'पाञ्चालिकां युवमनोरथसौधरत्न-
पाञ्चालिकां हृदि ममेति ममेति कृत्वा ।
अद्य स्वयंवरमहाय नृपाः प्रयान्ति
दूतैः समं द्रुपदभूपतिराजधानीम् ॥ ५७ ॥

---

रपेक्षा । 'तुं काममनसोरपि' इति मकारलोपः । मातुः कुन्त्या अङ्घ्रिं चरण-मुपसेवितुमागाद्गतवान् । 'न मातुर्दैवतं परम्' इति स्मरणात्तदङ्घ्रिसेवायाः सकल-दोषनिवारकत्वादिति भावः । स्वागता वृत्तम् ॥ ५३ ॥

**आलोक्येति** । अशेषैः पौरैरह्नोमुखे प्रातरेतत्पुरसीम्नि विकृष्टं यातुनो बकस्य शवमालोक्य आश्चर्यस्य रसस्य यः पूरः प्रवाहस्तस्य परितो मेलनेन संग-मेन फेनिलाभिः फेनवतीभिः । एकस्मिञ्जले जलान्तरस्य मेलने मिथः संघ-र्षेण फेनोदयादित्थमुक्तमिति ध्येयम् । आनन्दसागरस्य तरंगाणां परम्पराभि-श्चेतः पौरमनः परवशीक्रियते स्म । अत्याश्चर्योऽयं बकवधोऽनेन कृत इत्या-श्चर्येण पौरा ननन्दुरित्यर्थः । वसन्ततिलका वृत्तम् ॥ ५४ ॥

**भवनमिति** । तत्र पुरि तदा प्रातर्महाजनः प्रमुदितः सन्गृहमेधिनो भीमा-वासगृहस्थस्य भवनं गृहमेत्य । प्रवणीकृतो नम्रीकृतो मूर्धा शिरो येन तस्मिन्प-वनजे भीमे विषयेऽक्षतैः सममाशिषं प्रयुयुज उदीरितवान् । प्रपूर्वाद्युजेः कर्तरि लिट् । उपकृतस्य कृत्युपकारावश्यकत्वादिति भावः । द्रुतविलम्बितम् ॥ ५५ ॥

**निशीति** । जातु कदाचित्पथिकः कश्चित्पान्थो निशि रात्रौ निकेतस्य पाण्डवावासगृहस्य वेदिकायां प्राङ्गणवेदिकायां[1] निकटे स्वसमीपे सुप्तिसुखं निद्रा-सौख्यं निषेव्य प्राप्य । अपररात्रेऽरुणोदयवेलायां जागरूकः प्रबुद्धः सन् प्रस-ङ्गात्कथाप्रस्तावात्पार्थान्प्रति ईदृशीं वक्ष्यमाणप्रकारां गिरं वाचं प्रबभाष उक्त-वान् । औपच्छन्दसिकं वृत्तम् ॥ ५६ ॥

**पाञ्चालिकामिति** । अद्य नृपा यूनां तरुणानां मनोरथेषु कामेष्वेव सौधेषु हर्म्येषु रत्नमयीं पाञ्चालिकां कृत्रिमपुत्रिकां पाञ्चालिकां द्रौपदीम् । 'पाञ्चा-

---

१. 'वेदिकायाः' इति पाठः.

भोक्तुमन्नमपि सूपसमग्रं दोग्धुमप्यभिनवप्रसवा गाः ।
लप्स्यते द्विजगणोऽपि च तस्माद्वत्सलाद्दुहितुरुत्सवकाले ॥ ५८ ॥
न हि तत्र भवेदपार्थता विजयः सिद्धिमुपैष्यति स्फुटम् ।
युगपत्सुखमस्तु वो महद्द्रुतमागच्छत तन्महौजसः' ॥ ५९ ॥
इति वाचमुपश्रुतिं द्विजातेर्हृदि कृत्वा सुधयेव निर्मितां ताम् ।
पथि भूसुरसंघमध्यभाजः प्रति पाञ्चालपुरं प्रतस्थिरे ते ॥ ६० ॥

ते पुनरप्यनेकदिननीतजनपदवनसीमानः पथि कृतोदयेन भग-

---

लिका पुत्रिका स्याद्दन्तादिभिः कृता' इत्यमरः । ममेयं भवेदिति हृदि कृत्वा । मनसि निश्चित्येत्यर्थः । स्वयंवर इति महानुत्सवस्तस्मै दूतैराह्वानार्थमागतैर्द्रौपदैः समं द्रुपदभूपतिराजधानीं प्रयान्ति । द्रुपदपुरमित्यर्थः । अत्र सौधरत्नपाञ्चालिकेति परम्परितकेवलरूपकम् । वसन्ततिलका वृत्तम् ॥ ५७ ॥

तर्हि राजानः प्रयान्तु, किमस्माकं ब्राह्मणानां तत्रेत्यत आह—**भोक्तुमिति** । द्विजानां गणोऽपि भोक्तुं सूपेन समग्रं संपूर्णमन्नमपि दोग्धुमभिनवो नूतनः प्रवसः प्रसूतिर्यासां ताः गा अपि । दुहितुः सुताया द्रौपद्या उत्सवकाले स्वयंवरोत्सवसमये वत्सलाद्दुहितृप्रेमवतस्तस्माद्द्रुपदाल्लप्स्यते प्राप्स्यते । स्वागता वृत्तम् ॥ ५८ ॥

**न हीति** । किंच तत्र द्रौपदीस्वयंवरोत्सवे । हि यस्मात् । अपार्थता व्यर्थत्वं न भवेत् । पार्थोऽर्जुनो न भवतीत्यपार्थस्तस्य भावस्तत्ता अर्जुनभेदो न भवेदिति च । ततः कारणात् विजयः । गमनमित्यर्थः । 'उपसर्गेण धात्वर्थो बलादन्यत्र नीयते' इत्यनुशासनादिति भावः । सिद्धिं साफल्यमुपैष्यति लप्स्यते । विजयोऽर्जुनः सिद्धिं द्रौपदीलाभरूपामुपैष्यति स्फुटं नूनमिति च । दधिघृतसूपसमृद्धान्नराशिलाभान्मत्स्यभेदनद्वारा द्रौपदीलाभाच्चेत्युभयत्र भावः । हे महौजसः उत्कृष्टतेजःशालिनः, वो युष्माकं महत्सुखं युगपदेकदैव साहित्येनेति च अस्तु । तत्तस्माद्द्रुतं सत्वरमागच्छत । वैतालीयवृत्तम् ॥ ५९ ॥

**इतीति** । इत्युक्तप्रकारामुपश्रुतिं व्यञ्जनया भाव्यर्थसूचनीम् । अर्जुनद्वारा द्रौपदीलाभेन सर्वेषां सौख्यलाभव्यञ्जिकामिति यावत् । अतएव सुधयामृतेन निर्मितामिव स्थितां द्विजातेर्ब्राह्मणस्य तां वाचं हृदि कृत्वा । अङ्गीकृत्येत्यर्थः । ते पाण्डवाः पथि मार्गे भूसुरसंघस्य ब्राह्मणवृन्दस्य मध्यं भजन्ति प्राप्नुवन्तीति भाजः सन्तः पाञ्चालस्य द्रुपदस्य पुरं प्रति प्रतस्थिरे । औपच्छन्दसिकम् ॥ ६० ॥

**इतीति** । ते पाण्डवा अपि अनेकैर्दिनैर्नीतानामतिक्रान्तानां जनपदानां देशानां वनानामरण्यानां सीमा भागा यैस्तथोक्ताः सन्तः । पथि मार्गमध्ये पुनरपि

---

१. 'यूथ' इति पाठः. २. 'अपि' इति नास्ति क्वचित्.

वता पराशरदायादेन 'जतुभवनपरिच्यवनेन वो नवो हर्षः पार्षतस्य समुन्मिषति' इति गिरानुगृहीताः साक्षात्प्ररोहता भुजप्रतापानलेनेव फल्गुनकरवेल्लितेन महतालाततेजसा निशि नितान्तसीमन्तितसंतमसया पदव्या त्रिविष्टपतटिनीं समया प्राविक्षन् ।

तत्र खलु

इन्दीवरात्प्रतितरंगमनुप्रविष्टै-
बिम्बैरिवाब्धिदुहितुस्तरुणीकदम्बैः ।
क्रीडन्समं पयसि चित्ररथो विलोक्य
पार्थान्रुरोध कुपितः प्रधनं चिकीर्षुः ॥ ६१ ॥

अस्त्रमात्मसमनामदैवतं संप्रयुज्य समरे धनंजयः ।
तत्र तस्य रथमप्रवर्तिनं जातुषालयसहायमातनोत् ॥ ६२ ॥

---

कृत उदयः साक्षात्कारो येन तेन । शालिहोत्राश्रमे पूर्वंदत्तदर्शनत्वात्पुनरपीत्युक्तम् । भगवता त्रैकाल्यवेदिना पराशरस्य मुनेर्दायादेन पुत्रेण व्यासेन । 'दायादौ सुतबान्धवौ' इत्यमरः । वो युष्माकं जतुभवनाज्जतुगृहाद्दह्यमानात्परिच्यवनेन निरुपद्रवं निर्गमनेन पृषतो द्रुपदपिता तदपत्यस्य पार्षतस्य नवो नूतनः । मृत्वा पुनरुत्थितितुल्य इति यावत् । हर्षः समुन्मिषति जायते । इत्युक्तप्रकारया गिरानुगृहीताः सन्तः साक्षान्मूर्तीभूय प्ररोहता निर्गच्छता भुजयोः प्रताप एवानलोऽग्निस्तेनेव स्थितेन फल्गुनकरवेल्लितेन महतालातस्य करधृतकाष्ठाङ्गारस्य तेजसा निशि रात्रौ नितान्तं सीमन्तितं पार्श्वयोर्द्विधा निःसारितं संतमसमन्धकारो यस्यां तया पदव्या वनमार्गेण त्रिविष्टपस्य स्वर्गस्य तटिनीं नदीं गङ्गां समया । तस्याः समीपमित्यर्थः । 'अभितःपरितः—' इत्यादिना द्वितीया । प्राविक्षन् । विशतेः कर्तरि लुङ् ॥

तत्र खलु । गङ्गायामित्युत्तरेणान्वयः ॥

**इन्दीवरादिति** । इन्दीवरान्नीलोत्पलात् । रात्रौ तत्रैव लक्ष्म्याः स्थितेरिति भावः । तरंगे तरंगे प्रतितरंगमनुप्रविष्टैः क्रमेण संक्रान्तैरब्धिदुहितुर्लक्ष्म्या बिम्बैः प्रतिबिम्बैरिव स्थितैस्तरुणीनां कदम्बैः समूहैः समम् । तैः सहेत्यर्थः । पयसि गङ्गाजले क्रीडन् । चित्ररथो नाम गन्धर्वः पार्थान्विलोक्य कुपितः क्रुद्धः सन् । स्त्रीभिः सहैकान्तस्थितौ एषामागमस्य लज्जाकरत्वेन क्रोधोत्पादकत्वादिति भावः । अतएव प्रधनं कर्तुमिच्छुः । चिकीर्षुः सन् । रुरोध निरुद्धवान् । अत्र पार्थावलोकनस्य प्रधनेच्छां प्रति तस्याश्च तन्निरोधं प्रति हेतुत्वात्पदार्थहेतुकं काव्यलिङ्गद्वयमङ्गाङ्गिभावेन संकीर्णम् । वसन्ततिलका ॥ ६१ ॥

**अस्त्रमिति** । धनंजयोऽर्जुनः समरे चित्ररथेन सह युद्ध आत्मना समं

---

१. 'सदन' इति पाठः. २. 'फाल्गुनकरवलितेन' इति पाठः. ३. 'निशि' इति नास्ति क्वचित्. ४ 'समया' इति नास्ति क्वचित्. ५. 'तत्र खलु' इति नास्ति क्वचित्.

गन्धर्वाणां पत्युर्गर्वंजुषः सौरसैन्धवे तस्मिन् ।
पाथसि भङ्गः शिशिरो रोधसि भङ्गस्तु तापहेतुरभूत् ॥ ६३ ॥
सख्यस्य लाभात्सपदि प्रहृष्यन्कुशीलवेन्द्रः कुरुनन्दनानाम् ।
प्रादर्शयत्स्वां प्रथमं विनीतिं पश्चादमीषां पदवीं च रम्याम् ॥ ६४ ॥
धर्मभूरथ सहोदरैः समं धौम्यमध्वनि समीक्ष्य विश्रुतम् ।
प्राणिनामयमहिंसकोऽपि सन्पादपीडनममुष्य क्लृप्तवान् ॥ ६५ ॥
यथातिथ्यविधौ प्रीतः स पुरस्कुरुते स्म तान् ।
तथाध्वगमने तेऽपि तं प्रश्रयवशंवदाः ॥ ६६ ॥

---

तुल्यं नाम धनंजय इत्याख्या यस्य तादृशं दैवतमग्निर्यस्य तत् आग्नेयमस्त्रं सम्यक्प्रयुज्य तत्र गङ्गातटेऽग्रे स्वस्य पुरो वर्तत इति तथोक्तं तस्य चित्ररथस्य रथं जातुषालयस्य लाक्षागृहस्य सहायम् । दग्धत्वेन सदृशमित्यर्थः । आतनोत्कृतवान् । आग्नेयास्त्रेण तद्रथं दग्धवानित्यर्थः । 'धनंजयोऽर्जुने वह्नौ' इति विश्वः । रथोद्धता वृत्तम् ॥ ६२ ॥

**गन्धर्वाणामिति** । गर्वं जुषत इति गर्वंजुषोऽहंकारान्वितस्य गन्धर्वाणां पत्युश्चित्ररथस्य सुरसिन्धोर्गङ्गायाः संबन्धिनि सौरसैन्धवे तस्मिन्पाथसि जले भङ्गस्तरंगः शिशिरः शीतलोऽभूत् । रोधसि तादृशे तटे भङ्गः पराजयस्तु तापहेतुः संतापजनकोऽभूत् । अत्र तरंगपराजययोः श्लेषमित्तिकाभेदाध्यवसायमूलातिशयोक्त्यनुप्राणितो विरोधाभास इति तयोरङ्गाङ्गिभावेन संकरः । गीतिरार्या—'आर्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः । दलयोः कृतयतिशोभां तां गीतिं गीतवान्भुजङ्गेशः ॥' इति लक्षणात् ॥ ६३ ॥

**सख्यस्येति** । सपदि तदानीं कुशीलवानां गायकानामिन्द्रश्चित्ररथः सख्यस्य पाण्डवैः सह मैत्र्या लाभात्प्रहृष्यन्संतुष्यन्सन् । प्रथममादौ कुरुनन्दनानां पाण्डवानां स्वां स्वीयां विशेषेण नीतिं पुरोहितानुगामित्वादिरूपां प्रादर्शयद्बोधितवान् । 'राजा गच्छेत्प्रयाणे तु पुरः कृत्वा पुरोहितम्' इति स्मरणादिति भावः । पश्चादनन्तरं तु अमीषां पार्थानां रम्यां पदवीं मार्गं प्रादर्शयद्दर्शयामास । उपजाति वृत्तम् ॥ ६४ ॥

**धर्मेति** । अथ मार्गद्वयप्रदर्शनानन्तरमयं धर्माद्यमाद्भवतीति धर्मभूर्युधिष्ठिरो विश्रुतं ज्ञानविज्ञाननिधित्वेन प्रख्यातम् । 'वित्तविज्ञातविश्रुताः' इत्यमरः । धौम्यं नाम ब्राह्मणमध्वनि मार्गमध्ये समीक्ष्य । प्राणिनामहिंसकोऽपि सन् । अमुष्य धौम्यस्य पादयोः पीडनं बाधनं नमस्कारं च सहोदरैर्भीमादिभिः समं क्लृप्तवान्कृतवान् । विरोधाभासः । रथोद्धता वृत्तम् ॥ ६५ ॥

**यथेति** । स धौम्यः प्रीतः पौरोहित्यवरणेन संतुष्टः सन् । आतिथ्यविधावतिथिपूजायां तान्युधिष्ठिरादीन् यथा पुरस्कुरुते स्म संमानितवान् अग्रे-

धौम्यस्य सुधामधुरिमधौरेयीभिः स्वयंवरकथाभिः ।
द्रुपदपुरसरणिरेषां द्वित्राण्यभवत्पदानीव ॥ ६७ ॥

भूदेवेष्वतिनिविडेषु मध्यभाजां पञ्चानामपि युगपत्पृथासुतानाम् ।
पुस्फोर द्रुपदपुरं पुरःप्रदेशे वक्त्राब्जे सरभसमक्षि दक्षिणं च ॥६८॥

कुमारिकाया द्रुपदस्य भूपतेः कुचोपमाद्रव्यमिवाभिवीक्षितुम् ।
कुरूद्वहास्तत्र पुरे कुतूहलात्कुलालगेहं प्रथमं समाविशन् ॥६९॥

तामागमन्नथ पुरीं शतशःससैन्याः
स्मारं युगोदयमिवाद्भुतमावहन्तः ।
भूपाः स्तुता भुजमुदस्य पठद्भिरग्रे
पद्यं निबद्धविरुदं पटुबन्दिवृन्दैः ॥ ७० ॥

---

कृतवांश्चेति च । प्रश्रयवशंवदा विनयपराधीनास्ते युधिष्ठिरादयोऽप्यध्वनि मार्गे गमने विषये तं धौम्यं तथा पुरस्कुर्वते स्म । संमानितवन्तश्चेति ॥ ६६ ॥

धौम्यस्येति । सुधामधुरिम्णोऽमृतमाधुर्यस्य धौरेयीभिर्धुरंधराभिर्धौम्यस्य संबन्धिनीभिः । तत्कथ्यमानाभिरिति यावत् । स्वयंवरकथाभिः द्रौपद्या इति भावः । द्रुपदपुरस्य सरणिर्मार्गः द्वे वा त्रीणि वा द्वित्राणि पदानीव । द्वित्रिपदपरिमितमार्ग इवेति वा । अभवत् । आर्या वृत्तम्—'लक्ष्यैतत्सप्तगणा गोपेता भवति नेह विषमे जः । षष्ठोऽयं सलघू वा प्रथमेऽर्धे नियतमार्यायाः ॥ षष्ठे द्वितीयलान्ले परके मुखलाच्च सयतिपदनियमः । चरमेऽर्धे पञ्चमके तस्मादिह भवति षष्ठो लः ॥' इति लक्षणात् ॥ ६७ ॥

भूदेवेष्विति । अतिनिविडेष्वत्यन्तसान्द्रेषु भूदेवेषु ब्राह्मणेषु मध्यभाजपञ्चानामपि पृथा कुन्ती तत्सुतानां युधिष्ठिरादीनां पुरःप्रदेशे द्रुपदपुरं युगपदेकदैव पुस्फोर स्फुरितमभूत् । ते द्रुपदपुरं ददृशुरित्यर्थः । वक्त्राब्जे तेषां मुखपद्मे दक्षिणमक्षि नयनं च युगपत्सरभसं पुस्फोर स्पन्दते स्म । अत्र द्रुपदपुरदृग्विषयीभवनाक्षिचलनयोर्यौगपद्यात्समुच्चयालंकारः । 'गुणक्रियायौगपद्यं समुच्चयः' इति लक्षणात् । प्रहर्षिणी वृत्तम् ॥ ६८ ॥

कुमारिकाया इति । कुरूद्वहाः पाण्डवास्तत्र पुरे द्रुपदस्य भूपतेः कुमारिकाया द्रौपद्याः कुचयोरुपमाद्रव्यं सदृशपदार्थम् । घटमिति यावत् । कुतूहलात्प्रथमं द्रौपदीदर्शनात्पूर्वमेव अभिवीक्षितुमिवेत्युत्प्रेक्षा । कुलालस्य कुम्भकारस्य गेहं समाविशन्प्रविशन्ति स्म । वंशस्थं वृत्तम् ॥ ६९ ॥

तामिति । अथ पाण्डवप्रवेशानन्तरं स्मारं मन्मथमयमत एवाद्भुतं युगोदयम् । सृष्ट्याविर्भावमित्यर्थः । आवहन्तः कुर्वन्त इव स्थिता इत्युत्प्रेक्षा । सर्वेऽप्यतिकन्दर्पसौन्दर्यशालिन इत्यर्थः । ससैन्या भूपा दक्षिणं भुजमुदस्यो-

द्यावाभूमी निरुन्धन्यदुबलरजसां श्रेणिभिः सीरपाणि-
वेंगादागात्स वीरः स्वविनयगुरुणा शौरिणान्वीयमानः ।
आहारश्चायुधं च द्विषदवमतये येन संसेव्यमाने
ते द्वे हालाहलत्वं रणभुवि वहतो नामतः कृत्यतश्च ॥७१ ॥
बिभ्राणो मणिदीप्रकुण्डलभरं[1] कर्णत्रयं पार्श्वयो-
रग्रे चातिमनोज्ञरूपमखिलेष्वङ्गेषु दुर्योधनः ।
सेनादुन्दुभिनादतुन्दिलनभाः स्वस्यानुबिम्बायितै-
रासीदत्स नवाधिकैः परिवृतप्रान्तो नवत्यानुजैः ॥ ७२ ॥

---

कृत्य निबद्धानि विरुदानि जयचिह्नशब्दा यस्मिंस्तत्पद्यं श्लोकम् । जात्येकवचनम् । पठद्भिरुच्चरद्भिः पटुभिः स्तवनसमर्थैर्वन्दिनां वैतालिकानां वृन्दैः स्तुताः स्तूयमानाः सन्तः शतशस्तां द्रुपदपुरीमागमन्नागतवन्तः । वसन्ततिलका वृत्तम् ॥ ७० ॥

**द्यावाभूमीति ।** सीरं हलं पाणौ यस्य तथोक्तः स वीरो बलरामो यदूनां यादवानां यद्बलं चतुरङ्गं तस्य रजसां श्रेणिभिः पङ्क्तिभिर्द्यावाभूमी अन्तरिक्षं भूमिं च निरुन्धन्नाच्छादयन्सन् । स्वस्य विनयेन गुरुणा श्रेष्ठेन शौरिणा कृष्णेनान्वीयमानोऽनुगम्यमानश्च सन् । वेगादागात् । द्रुपदपुरमिति शेषः । येन बलरामेण द्विषतामवमतये तिरस्काराय सम्यक्सेव्यमान उदरेण करेण च गृह्यमाणे ते प्रसिद्धे आहारो हाला च, आयुधं हलं च द्वे अपि रणभुवि हालाहलत्वं नामतः संज्ञातः कृत्यतः कर्मणोऽपि च उभयथापि वहतः । हाला मद्यं हलं सीरं तयोर्भावो हालाहलत्वं कालकूटत्वं तत्र संज्ञापक्षे पञ्चवर्णात्मकं संज्ञात्वम् । चेष्टापक्षे कालकूटवन्मारकत्वमिति विवेकः । 'सुरा हलिप्रिया हाला', 'कृषको लाङ्गलं हलम्', 'कालकूटो हालहलः' इति सर्वत्राप्यमरः । 'हालाहलः कालकूटः' इत्यपि च पठ्यते । स्रग्धरा वृत्तम् ॥ ७१ ॥

**बिभ्राण इति ।** मणिभिर्दीप्राण्युज्ज्वलानि कुण्डलानि बिभर्तीति भरम् । अत एवाङ्गेषु करचरणादिष्वङ्गाख्यजनपदेषु च प्रख्यातं प्रसिद्धम् । 'अङ्गं गात्रान्तिकोपायप्रतीकेष्वप्रधानके । अङ्गो देशविशेषे स्यात्' इति विश्वः । अतिमनोज्ञं रूपं सौन्दर्यं यस्य तत् । कर्णानां श्रुत्यो राधेयस्य च त्रयं पार्श्वयोः सव्यदक्षिणयोरग्रे च बिभ्राणः । स प्रसिद्धो दुर्योधनः स्वस्यात्मनोऽनुबिम्बायितैः । प्रतिबिम्बतुल्यैरित्यर्थः । नवत्या नवदशकसंख्याकैर्नव अधिका येषां तैश्चानुजैर्नवाधिकनवतिसंख्याकैः दुःशासनादिभिरित्यर्थः । परिवृताः प्रान्ताश्चतुःपार्श्वा यस्य तथोक्तः सन् । सेनास्वनुयातृकासु ये दुन्दुभयो भेर्यस्तेषां नादैर्झाङ्कारैस्तुन्दिलं पूर्णं नभ आकाशं यस्य तथोक्तश्च सन् । आसीददागतवान् । अत्रापि द्रुपदपुरीमिति शेषः । शार्दूलविक्रीडितं वृत्तम् ॥ ७२ ॥

---

[1] 'दीप्तकुण्डलधरं' इति पाठः.

तदनु परितः कीर्णैः पुष्पैस्तरंगितसौरभं
मणिमयमहामञ्चारूढावनीन्द्रपरम्परम् ।
अगरुजनितैर्धूपैरालिह्यमानवितानकं
स्वनितपटहं प्रापुः पार्थाः स्वयंवरमण्डपम् ॥ ७३ ॥

जाग्रत्सोमककीर्तिसोमनिमिषत्पद्मावकाशात्यय-
प्राप्तेन्दीवरनित्यवासघटितश्यामप्रभाश्रीरिव ।
पाञ्चालस्य सुता ततः परिजनैः सार्धं पुरः पश्यतां
राज्ञां बुद्धिमिवाधिरुह्य शिबिकां रङ्गस्थलीं प्राविशत् ॥७४॥

द्रौपदीमुखशशिद्युतिसंपत्कौमुदीमहति रङ्गतटाके ।
पक्ष्मचक्रयुगुलं नृपतीनां तत्क्षणं विजघटे बहुदूरम् ॥७५॥

तां पश्यतः सदसि तस्य महीसुराणां
वामेतरे महति वासवनन्दनस्य ।

---

तदन्विति । तदनु राजलोकागमनानन्तरं परितः कीर्णैरलंकृतैः पुष्पैस्तरंगितं वर्धितं सौरभं यस्य तत् । मणिमयेषु महत्सु च मञ्चेष्वासनेष्वारूढा अधिष्ठिता अवनीन्द्राणां राज्ञां परम्पराः पङ्क्तयो यस्मिंस्तत् । अगरुभिर्जनितैर्धूपैः परिमलधूपैरालिह्यमानानि स्पृश्यमानानि वितानान्युल्लोचा यस्मिंस्तद्वितानकं स्वनिताः शब्दायमानाः पटहा वाद्यविशेषा यस्मिंस्तत् । स्वयंवरमण्डपं पार्थाः प्रापुः । हरिणीवृत्तम्—'रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा' इति लक्षणात् ॥ ७३ ॥

जाग्रदिति । ततो जाग्रता नित्यप्रकाशेन सोमकानां पाञ्चालानां कीर्तिरेव सोमश्चन्द्रस्तेन निमिषत्सु सर्वदा मुकुलीभवत्सु पद्मेष्ववकाशस्य निवस्तुमास्पदस्यात्ययेनापगमेन प्राप्तो य इन्दीवरे नीलोत्पले नित्यवासस्तेन घटिता योजिता श्यामप्रभा नीलकान्तिर्यस्यास्तथोक्ता श्रीर्लक्ष्मीरिव स्थितेति तद्गुणोत्थापितोत्प्रेक्षा । पाञ्चालस्य सुता द्रौपदी पुरोऽग्रे पश्यतां राज्ञां बुद्धिमिव शिबिकामान्दोलिकाम् । द्वे अप्यधिरुह्येत्यर्थः । परिजनैः सार्धं सखीभिः सह रङ्गस्थलीं स्वयंवरमण्डपं प्राविशत् । अथागच्छति द्रौपदीति सर्वेषु राजसु तद्गतान्तःकरणेषु समागच्छदित्यर्थः । शार्दूलविक्रीडितम् ॥ ७४ ॥

द्रौपदीति । तत्क्षणं द्रौपदीप्रवेशक्षणे रङ्ग एव तटाके सरसि द्रौपद्या मुखस्यैव शशिनो द्युतेः संपदेव कौमुदी चन्द्रिका तया महति मनोज्ञे सति नृपतीनां पक्ष्मणी एव चक्रौ कोकदम्पती तयोर्युगुलं द्वन्द्वं बहुदूरं विजघटे वियुक्तमासीत् । अत्यादराद्राजानो विस्फार्य लोचने तामद्राक्षुरित्यर्थः । चन्द्रिकायां चक्रवाका वियुज्यन्त इति प्रसिद्धिः । समस्तवस्तुवर्ति सावयवरूपकम् । स्वागता वृत्तम् ॥ ७५ ॥

तामिति । सदसि स्वयंवरमण्डपे महीसुराणां मध्ये । स्थित्वेति शेषः । तां

---

१. 'अत्ययात्' इति पाठः.

अन्तर्वलस्य सपदि प्रकटीबुभूषो-
रुद्वल्गनं किल भुजे स्फुरणं बभूव ॥ ७६ ॥

तावत्सरभसमुपेत्य साक्षादादेष्टुमनाः प्रद्युम्न इव धृष्टद्युम्नः सायकैः साकं सकाशमुपनीतं स्वयंवरदिदृक्षया सपरिवारं प्रत्यासन्नमिव पन्नगपतिं चापं पुरस्कृत्य कन्यावलोकनधन्यान्राजन्यानेवमवादीत्—

'बाणेन संप्रति नृपा दिवि लक्ष्यमेत-
त्तच्छायवद्भुवि निपातयितुं पटुर्यः ।
मौर्वीमिमामिव स दक्षिण एव पाणौ
कुर्यात्स्वसारमभिदर्श्य मम स्वसारम्' ॥ ७७ ॥

---

द्रौपदीं पश्यतस्तस्य वासवनन्दनस्यार्जुनस्य संबन्धिनि वामेतरे दक्षिणे महति प्रतापेन श्लाघ्ये भुजे स्फुरणं स्पन्दः सपदि तत्काले प्रकटीभवितुमिच्छोः प्रकटीबुभूषोः । भवतेः सन्नन्तादुप्रत्ययः । अन्तर्वलस्योद्वल्गनं किल ऊर्ध्वमुत्थितिरिवेत्युत्प्रेक्षा । बभूव । 'दक्षिणाक्ष्णः परिस्पन्दो दक्षिणस्य भुजस्य च । हृदयस्य प्रसादश्च सद्यः संसिद्धिसूचकाः ॥' इति शाकुनाः । महीसुराणां सदसि स्थिता तां पश्यत इति वा योजना । वसन्ततिलकावृत्तम् ॥ ७६ ॥

तावदिति । तावत्तदा साक्षान्मूर्तीभूय सरभसमुपेत्य आदेष्टुं वक्ष्यमाणरीत्या वक्तुं मनो यस्य सः । 'तुं काममनसोरपि' इति मकारलोपः । प्रद्युम्नो मन्मथ इव स्थितो धृष्टद्युम्नो द्रुपदपुत्रः सायकैर्बाणैः साकं सकाशं समीपमुपनीतं प्रापितम् अत एव स्वयंवरं द्रष्टुमिच्छया दिदृक्षया प्रत्यासन्नं संनिहितं सपरिवारं परिजनसहितं पन्नगपतिं शेषमिव स्थितं चापं पुरस्कृत्याग्रे विधाय कन्याया द्रौपद्या अवलोकनेन धन्यान्कृतार्थान्राजन्यान्राज्ञः एवं वक्ष्यमाणरीत्यावादीदुक्तवान् । वदेः कर्तरि लुङ् । उत्प्रेक्षाद्वयसंसृष्टिः ॥

उक्तिप्रकारमेवाह—बाणेनेति । हे नृपाः, युष्माकमन्यतमः को वा संप्रत्यद्य दिव्याकाशे स्थितमेतल्लक्ष्यं यन्त्रविशेषं तस्य लक्ष्यस्य च्छायामिव तच्छायवत् । तदनातपमिवेत्यर्थः । 'विभाषा सेना–' इत्यादिना ह्रस्वः । 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः' इत्यमरः । बाणेन भुवि निपातयितुं पटुः समर्थः, स एव नृपः स्वस्य सारं बलमभिदर्श्य प्रकटीकृत्य इमामेतच्चापसंबन्धिनीं मौर्वीं शिञ्जिनीमिव । इमां पुरोवर्तिनीं मम स्वसारं भगिनीं द्रौपदीं दक्षिणे पाणौ एव कुर्याद्विवहेत् । स्वीकुर्यादित्यर्थः । दक्षिणः सरलः स एव

---

१. 'समुपेत्य' इति पाठः. २. 'पतितमिव' इति पाठः.

इत्थं प्रगल्भमुदिता रभसेन पीठा-
दुत्थाय चापमुपसृत्य करेऽपि कृत्वा ।
आत्मानमेव कृतयत्नमनैषुरार्ति
मौर्वीलतां न तु महीपतिपङ्क्तयस्ताः ॥ ७८ ॥

दृष्ट्वाथ राजकमिदं द्विजसंघमध्या-
न्निर्गत्य संसदि निलिम्पपतेः कुमारः ।
चापे शरं करधृते समधत्त लज्जां
भूपेषु भूरि कुतुकं वसुधेन्द्रपुत्र्याम् ॥ ७९ ॥

---

नृप इत्यपि योज्यम् । वीर्यशुल्केयं न कुलवयःशीलादिशुल्केति भावः । अत्र द्रौपदीशिञ्जिन्योः प्रकृतयोः पाणिग्रहणधर्मेणौपम्यस्य गम्यत्वात्तुल्ययोगिता-भेदः । यत्तु 'तच्छायवद्भुवि लक्ष्यच्छायावत्यामेव भुवि' इति व्याख्याय 'अन्यत्र पातयितुं सर्वेऽपि समर्था इति भावः' इति नृसिंहः, तन्न । रविगत्यनु-सारिण्या लक्ष्यच्छायाया भग्नलक्ष्यपातस्य च द्वयोरेकदिक्कत्वस्य कदाप्यसंभवा-द्भारतविरुद्धत्वाच्च । तत्राधिज्यधनुःसंहितबाणेन लक्ष्यच्छेदनमात्रस्यैव शुल्क-तया श्रवणादिति ॥ ७७ ॥

**इत्थमिति ।** इत्थमुक्तप्रकारेण प्रगल्भं सप्रौढं यथा उदिता धृष्टद्युम्ने-नोक्तास्ता महीपतीनां पङ्क्तयो रभसेन वेगेन हर्षेण वा । 'रभसो वेगहर्षयोः' इति विश्वः । पीठादुत्थाय चापमुपसृत्य संनिधाय करेऽपि कृत्वा । चापमिति यो-ज्यम् । आदायेत्यर्थः । कृतो यत्नो धनुरारोपणव्यापारो येन तमात्मानं निजशरीरमेवार्तिं पीडामनैषुः प्रापितवत्यः । मौर्वीं लतेव तां तु आर्तिं धनुष्कोटिं नानैषुः । नयतेः कर्तरि लुङ् । दुहादित्वाद्द्विकर्मकत्वम् । 'आर्तिः पीडाधनुष्कोट्योः' इत्यमरः । अत्र आर्तिप्रापणस्य शरीरमौर्व्योरुभयत्र प्राप्तौ शरीरमात्रे नियमना-त्परिसंख्यालंकारः । पीडाधनुष्कोट्योः श्लेषमित्तिकाभेदाध्यवसायमूलातिशयो-क्त्यनुप्राणित इति द्वयोरङ्गाङ्गिभावेन संकरः । तस्य च धनुरारोपणरूपेष्टार्थ-समुद्यमाच्छरीरपीडावाप्तिवर्णनात्मकविषमप्रभेदस्य चैकवाचकानुप्रवेशसंकरः । तस्य च धनुरारोपणसामग्रीसत्त्वेऽपि तदनुत्पत्तिकथनात्मकाया विशेषोक्तेश्च पुनरे-कवाचकानुप्रवेशसंकर इति सूक्ष्मदृग्भिराकलनीयम् । वसन्ततिलका वृत्तम् ॥७८॥

**दृष्ट्वेति ।** अथ निलिम्पपतेरिन्द्रस्य कुमारोऽर्जुन इदं धनुरारोपणाशक्तं राजकं राजवृन्दं संसदि सभायां दृष्ट्वा द्विजसंघस्य मध्यान्निर्गत्य । धनुःसमीप-मागत्येत्यर्थः । करेण धृते चाप आरोपितज्ये शरं समधत्त संघटितवान् । भूपेषु गुणारोपणमात्रेऽप्यशक्तेषु लज्जां समधत्त । वसुधेन्द्रपुत्र्यां द्रौपद्यां भूरि कुतुकं कौतूहलं च समधत्त । अत्र अर्जुनस्यैकेन शरसंधानव्यापारेण लज्जाकौ-

---

१. 'पुरुषेन्द्र' इति पाठः.

वीरेण तेन विशिखेन विलूनमूलं
चक्रभ्रमेण पतयालु तदा शरव्यम् ।
अस्मिन्समाजवलये स्वयमेव दोष्मा-
नित्याहिताभिनयलीलमिवाबभासे ॥ ८० ॥

तदानीम्[1]—

निष्पतत्सुरकराञ्जलिपुञ्जात्पुष्पवर्षमभितः कुरुवीरम् ।
मन्दहास इति विक्रमलक्ष्म्याः संदधे सकलचेतसि बुद्धिम् ॥८१॥

पाञ्चालपुत्रीप्रहिताः कटाक्षाः पाण्डोस्तनूजं परितो ववल्गुः ।
माङ्गल्यमालावतरेदिहेति माध्वीलिहः पूर्वमिवोपयाताः ॥ ८२ ॥

जननान्तरनेत्रवारिसृष्टत्रिपथाहेमपयोजगुम्फितेव ।

---

तुकद्वयात्मवस्त्वन्तरसंधानवर्णनाद्विशेषालंकारभेदः । 'किंचिदारभतोऽशक्यवस्त्वन्तरकृतिश्च सः' इति लक्षणात् ॥ ७९ ॥

**वीरेणेति** । तेन वीरेणार्जुनेन ( कर्त्रा ) विशिखेन बाणेन ( करणेन ) विलूनं छिन्नं मूलमादिर्यस्य तत् । चक्रवद्भ्रमेण भ्रमणेनोपलक्षितं पतयालु पतत् । 'पतयालुस्तु पातुके' इत्यमरः । अतएव शरव्यं लक्ष्ययन्त्रम् । अस्मिन्समाजस्य राजद्विजसंघस्य वलये मण्डले कटकभूषणनिमित्तं च अयमर्जुन एव दोष्मान्सफलभुजवलशाली इति उक्तप्रकारेणाहिता घटिताभिनयस्योक्ताभिव्यञ्जकाङ्गिकचेष्टाया लीला विलासो येन तथोक्तमिवेत्युत्प्रेक्षा । आबभासे रराज । भासतेः कर्तरि लिट् ॥ ८० ॥

**निष्पतदिति** । तदानीं सुराणां करयोरञ्जलीनां संपुटात्मकविन्यासानां पुञ्जात्समूहात् । 'तौ युतावञ्जलिः पुमान्' इत्यमरः । तौ करावित्यर्थः । कुरुवीरमस्मितोऽर्जुनस्य सर्वपार्श्वेषु । 'अभितःपरितः—' इत्यादिना द्वितीया । निष्पतत्पुष्पवर्षं विक्रमलक्ष्म्या मन्दहासो वीरोऽयं महानुभाव इत्यानन्दकृतो दरहास इत्युक्तात्मिकां बुद्धिं भ्रान्तिं सकलस्य पश्यतो जनस्य चेतसि मनसि संदधे घटयामास । भ्रान्तिमदलंकारः । स्वागतावृत्तम् ॥ ८१ ॥

**पाञ्चालेति** । पाण्डोस्तनूजं तनयं परितोऽर्जुनस्य सर्वभागेषु । इति पूर्ववद्द्वितीया । पाञ्चालपुत्र्या द्रौपद्या प्रहिताः प्रेरिताः कटाक्षाः नेत्रान्तदर्शनानि इह अर्जुने माङ्गल्या स्वयंवरशुभयोग्या माला अवतरेत् आगच्छेदिति हेतोः । पूर्वमिव उपयाता आगता माध्वीलिहो भृङ्गा इवेत्युत्प्रेक्षा । ववल्गुः परिवव्रुः । इन्द्रवज्रावृत्तम् ॥ ८२ ॥

**जननेति** । तया द्रौपद्या जननान्तरे पूर्वजन्मनि नालायनीनामनि नेत्र-

---

१. 'तदानीम्' इति नास्ति क्वचित्.

बलवैरिभुवस्तयाधिकण्ठं वरणे चम्पकमालिका वितेने ॥ ८३ ॥

तदनु स महावीराग्रेसरः समग्रगुणशेखरितां नरपतिसुतामिव शरासनलतामुद्वहन्राज्ञां बलमवज्ञाय सभाङ्गणात्क्षणान्निश्चक्राम ।

तदात्व एव खलु खलोऽयमखिलानस्मानतिस्मयेन विस्मरन्कस्मैचिद्दुहितरं विप्राय प्रायच्छदिति द्रुतं द्रुपदाय द्रोहमुन्निद्रयतः कतिचन राजन्याञ्जन्यामिमुखान्प्रति सुलभोन्मेषेण रोषेण [2]सरभसं भु-

---

वारिभिः पत्युरलाभशोकेन जातैः सृष्टान्युत्पन्नानि यानि त्रिपथायां गङ्गायां हेमपयोजानि कनककमलानि तैर्गुम्फिता संघटितेव स्थिता चम्पकानां चाम्पेयकुसुमानां मालिका बलवैरिभुवः अर्जुनस्य कण्ठेऽधिकण्ठम् । विभक्त्यर्थेऽव्ययीभावः । वरणे पतित्वेन स्वीकरणनिमित्तम् । 'निमित्तात्कर्मयोगे' इति सप्तमी । वितेने निक्षिप्ता । तनोतेः कर्मणि लिट् । पुरा जन्मनि किलेयं नालायनीसमाख्या पत्यर्थं तपस्यन्ती तुष्टेन महादेवेन चोदिता देवेन्द्राह्वानाय गङ्गातटं प्राप्य तदागमने विलम्बाद्रुरोद । तद्बाष्पैर्गङ्गायां हेमतामरसान्यभूवन्—इति भारती कथात्रानुसंधेया । यद्यपि वरणमालायाश्चम्पकत्वेन कटाक्षाणां भावितदपेक्षाहेतुमधुकरत्वोत्प्रेक्षा पूर्वश्लोकोक्ता विरुध्यते चम्पकानां मधुकरमारकत्वेन प्रसिद्धेः, तथापि तदानीं तदभावेन पुष्पमालात्वेन तदवतरणस्य पूर्वं मधुकराणामाशाजनने बाधकाभावान्न क्षतिरिति कवेराकूतमिति ध्येयम् ॥ ८३ ॥

**तदन्विति** । तदनु वरणानन्तरं महावीराणामग्रेसरः प्रथमः सोऽर्जुनः समग्रैः सकलैर्गुणैः सौन्दर्यादिभिरखण्डशिञ्जिन्या च शेखरितां भूषिताम् । सम्यगग्रयोः कोट्योः गुणेन शेखरितामित्यप्यन्यत्र योज्यम् । नरपतिसुतां द्रौपदीमिव शरासनं धनुर्लतेव तामुद्वहन्बिभ्रत् विवहन्निति च राज्ञां बलं शौर्यम्, चतुरङ्गं वा । अवज्ञाय तिरस्कृत्य क्षणात्क्षणेन सभायाः स्वयंवरमण्डपस्याङ्गणान्निश्चक्राम निर्गतवान् । अत्र महावीराग्रेसरत्वस्य विशेषणगत्या राजबलानादरं प्रति हेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् ॥

**तदात्व इति** । तदात्व एव निर्गमनकाल एव । 'तत्कालस्तु तदात्वं स्यात्' इत्यमरः । खलु इति वाक्यालंकारे । खलो दुर्जनोऽयं द्रुपदोऽखिलानस्मानतिस्मयेनातिगर्वेण विस्मरन्नगणयन्सन् । कस्मैचिदविज्ञातकुलशीलनामधेयायेत्यर्थः । विप्राय । द्विजव्याजायेत्यर्थः । तेन द्विजत्वं वा तस्य को जानीत इति भावः । दुहितरं पुत्रीं प्रायच्छद्दत्तवान् । इति हेतोः द्रुतं द्रुपदाय द्रोहमुन्निद्रयतः प्रकटीकुर्वतः । अतएव जन्याय युद्धायाभिमुखानुद्युक्तान् । 'युद्धमायोधनं जन्यम्' इत्यमरः । कतिचन राजन्यान्राज्ञः प्रति सुलभ उन्मेष उत्पत्तिर्यस्य तेन रोषेण स्वीयमेवे खला निरुन्धन्तीति क्रोधेन सरभसं सवेगं भुजादुन्नीतैरूर्ध्व-

---

१. 'क्षणात्' इति नास्ति क्वचित्. २. 'सरभस' इति पाठः.

जोन्नीतैरुपवीतैः कण्ठमावेष्ट्य ममायं यष्टेर्ममायं विष्टरस्य लक्ष्यमिति [1]वचनेन जातिचापलं कुर्वाणान्धरणिगीर्वाणान्भवतां पुनराशीरेव जयराशीकरणायालमिति सस्मितं निवर्तयन्नमर्त्यपतिकु[2]मारो युधि समारोपितधनुर्गुणनिर्गलनिर्गलितेन शरनिकरेण तेषां परेषामधिकां दिशि दिशि कान्दिशीकतां दिदेश ।

तावदस्य राजसंघस्य जङ्घालतामनुकुर्वद्भिरिव रथार्वद्भिरपरार्णवाभ्यर्णमवतीर्णवति तूर्णमर्णोजबन्धौ तेन निहितां दीप्ति[3]मपरामिव तां दयितामनुरञ्जयन्नयमपि धनंजयस्तामेव वासभुवमाससाद ।

खेदाम्बुभिर्निटिलजैः पदयोः सवित्री-
मार्द्रीचकार स तया सह चापपाणिः ।

माकृष्टैरुपवीतैर्यज्ञसूत्रैः कण्ठमावेष्ट्य । संमर्दे त्रुटनभयादिति भावः । मम यष्टेर्दस्तदण्डस्यायं पुरःस्थितो राजा लक्ष्यं भेद्यः, मम विष्टरस्य पीठस्यायं लक्ष्यम्, इत्युक्तप्रकारेण वचनेनोपलक्षिताज्जातेर्ब्राह्मणस्य संबन्धि चापलं चपलचेष्टितं कुर्वाणान्धरण्या गीर्वाणान्भूदेवान्ब्राह्मणान्भवतां पुनराशीर्जयाशीः सा वाक्यमेव जयानां राशीकरणाय राश्यात्मना संपादनाय । संपद्यर्थेककरोतियोगाच्च्वाविकारस्य दीर्घः । अलं पर्याप्ता । न तु बाहुबलमित्यर्थः । 'वाग्भिः शूरा द्विजातयः' इति स्मरणादिति भावः । इत्युक्त्वेति शेषः । सस्मितं यथा तथा निवर्तयन् । जातिचापलादिति भावः । अमर्त्यपतेरिन्द्रस्य कुमारोऽर्जुनः सम्यगारोपितात्कोटिं नीताद्धनुषो गुणात् निर्गलं निर्निरोधं यथा तथा निर्गलितेन प्रयुक्तेन शराणां निकरेण युधि युद्धे तेषां द्रुपदाय द्रुह्यतां परेषां शत्रूणां दिशि दिशि प्रतिदिशं कान्दिशीकतां भयात्पलायनमधिकमत्यन्तं दिदेश ददौ । पलायांबभूवुरित्यर्थः ॥

**तावदिति** । तावत्तदानीमस्य पलायमानस्य राजसंघस्य जङ्घालतां पलायनजवम् । 'जङ्घालोऽतिजवस्तुल्यौ' इत्यमरः । अनुकुर्वद्भिरिव स्थितै रथसमारोपितार्वद्भिरश्वैरर्णोजानां जलजानां बन्धौ सूर्ये अपरार्णवस्य पश्चिमाब्धेरभ्यर्णं समीपं तूर्णं सत्वरं यथा तथावतीर्णवति प्राप्तवति सति तेनार्णोजबन्धुना निहितां निक्षिप्तामपरामग्निनिहितेतरां दीप्तिं प्रभामिव स्थितां तां दयितां द्रौपदीमनुरञ्जयन्ननुरागिणीं रक्तवर्णां च कुर्वन् । अयमपीत्यपिनाग्निसमुच्चयः । धनंजयोऽर्जुनः अग्निश्च तां कुलालसंबन्धिनीमेव वासभुवमाससाद प्राप्तवान् । सूर्यकिरणानां रात्रावग्निप्रवेशनमागमसिद्धम् । उत्प्रेक्षाद्वयस्य धनंजयशब्दश्लेषमूलातिशयोक्तेश्चाङ्गाङ्गिभावेन संकरः ॥

**खेदेति** । चापः पाणौ यस्य तथोक्तः सोऽर्जुनस्तया द्रौपद्या सह निटिलजै-

१. 'वचनेन' इति नास्ति क्वचित्. २. 'कुमारोऽपि समा' इति पाठः. ३. 'अपर इव' इति पाठः.

मोदाम्बुभिर्नयनजैस्तमिमं च मौलौ
विस्मेरचेतसि कुलालवधूसमाजे ॥ ८४ ॥
कुवलयदृशः कुम्भं जिग्युः कुचैरिति भाषिते
करिवरशिरः कर्मेत्येवं प्रहृष्टमनाश्चिरम् ।
द्रुपददुहितुर्दृष्ट्वा तुङ्गौ कुलालपतिः कुचौ
निजमपि घटं निश्चित्यैवं नितान्तमलज्जत ॥ ८५ ॥
अन्येद्युर्गृहमुपनीय पूजितांस्ता-
न्व्यासोक्त्या विदितवरः पुरामरातेः ।

ललाटोत्थैः स्वेदाम्बुभिः सवित्रीं मातरं कुन्तीं पदयोरार्द्रीचकार सिक्तामकरोत् । मातुः प्रणनामेत्यर्थः । इयं च कुन्त्यपि विस्मेरं विस्मयान्वितं चेतो यस्य तस्मि-न्कुलालवधूनां समाजे संघे नयनजैर्मोदाम्बुभिरानन्दबाष्पैस्तमर्जुनं मौलौ शिर-स्यार्द्रीचकार । तच्छिर आजिघ्र इत्यर्थः ॥ ८४ ॥

**कुवलयेति ।** कुवलये उत्पले इव दृशौ नेत्रे यासां ताः स्त्रियः कुचैः कुम्भं कुम्भशब्दार्थं घटं गजशिरश्च द्वयमपि जिग्युर्जितवत्यः । जयतेः कर्तरि लिट् । 'सन्लिटोर्जेः' इति कुत्वम् । इत्युक्तप्रकारे भाषिते वचने । किंवदन्त्यामिति यावत् । करिवरस्य गजेन्द्रस्य शिरो मूर्धांश एव कर्म द्वितीयान्तकुम्भपदवा-च्यम् । न त्वस्मदीयो घट इत्येवम् । चिरं जन्मप्रभृति तत्क्षणपर्यन्तं प्रहृष्टं संतुष्टं मनो यस्य तथोक्तः कुलालपतिस्तुङ्गौ पृथुलोन्नतौ द्रुपददुहितुर्द्रौपद्याः कुचौ दृष्ट्वा निजमात्मीयं घटमपि एवम् । अपकर्षानुकूलव्यापारार्थक'जि'धात्वर्थान्वयि-द्वितीयान्तकुम्भपदवाच्यत्वेनेत्यर्थः । निश्चित्य नितान्तमलज्जत लज्जितवान् । कुवलयदृशः कुम्भं जिग्युः कुचैरिति किंवदन्त्याम् । 'कुम्भौ घटेभमूर्धांशौ' इति कोशात्कुम्भमिति द्वितीयान्तपदस्य गजकुम्भवृत्तित्वं तदन्वितापकर्षा-नुकूलव्यापाराश्रयत्वं साख्यातस्य 'जि'धातोश्चार्थः । इत्यात्मीयघटेऽभिमान-कृतो हर्षोऽविचारितरमणीयः । यतः स्त्रीमध्यपातिद्रौपदीकुचयोर्निजघटादप्यु-न्नतत्वेन दृश्यमानत्वादिममपि ताः कुचैर्जिग्युरेवेति निश्चित्य लज्जितवानित्यर्थः । मानिनामात्मन इवात्मीयस्यापि पराजयो लज्जाकर एवेति भावः । द्रौपदीकुच-सौन्दर्यं तौ द्वावप्यतिशेते इति परमार्थ इत्यत्र द्रौपदीकुचावलोकनहेतुकघटजय-निश्चयस्य विशेषगत्या कुलाललज्जाहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गद्वयमङ्गाङ्गिभा-वेन संकीर्णम् ॥८५॥

**अन्येद्युरिति ।** परस्मिन्दिने पाञ्चालो द्रुपदो व्यासस्य मुनेरुक्त्या वाक्येन पुरा-मरातेः शिवस्य विदितो वरो द्रौपद्या नालायनीजन्मनि पञ्चपतिलाभात्मको येन तथोक्तः सन् । पञ्चापि क्षितिपतिनन्दनान्पाण्डवान्निशि रात्रौ गृहं प्रत्युपनीय

१. 'भाषितैः' इति पाठः. २. 'एवम्' इति पाठः.

पञ्चापि क्षितिपतिनन्दनान्सुतायाः
पाञ्चालो निशि परिणीतयेऽनुमेने ॥ ८६ ॥

ततःपरमीदृशोत्सवश्रवणात्परमानन्दमनुभवन्तीभिरन्तःपुरिकाभिः परिवृतां तां सखीजना मण्डनमण्डपिकामुपनीय प्रसाधयितुमारभन्त ।

द्रौपद्याः पञ्चपत्नीत्वे द्रष्टुं लिपिमिवोत्सुका ।
सीमन्तशिल्पव्याजेन शिरोजान्व्यभजत्सखी ॥ ८७ ॥

मृगमदतिलकं रराज तन्व्या
मुखशशिना[1] महसा बलाहृतायाः ।
चिकुरमिषजुषोऽपराधशान्त्यै
नमितमपत्यमिवान्धकारबन्द्याः ॥ ८८ ॥

---

प्रापयित्वा सुताया द्रौपद्याः परिणीतये विवाहायानुमेनेऽङ्गीकृतवान् । क्रियाग्रहणात्संप्रदानत्वम् । इयं जन्मान्तरे नालायनी भर्त्रर्थं तपस्तप्त्वा तुष्टेन सदाशिवेन वरं वरयेत्युक्ता पतिं मे देहीति पञ्चकृत्वो नियतिवशेनोक्तवती पञ्चपतींल्लभस्वेति तदुक्त्यास्मिञ्जन्मनि तावतः पतींल्लभते इति व्यासोक्तिप्रकारः । प्रहर्षिणी वृत्तम् ॥ ८६ ॥

**तत इति** । ततोऽनन्तरमीदृशस्य पञ्चपतिपरिणयात्मकस्योत्सवस्य श्रवणाद्धेतोः परमस्य दुर्लभत्वेन सर्वोत्कृष्टमानन्दमनुभवन्तीभिः । 'नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः । नान्तकः सर्वभूतानां न पुंसां वामलोचनाः ॥' इति स्मरणात् । अप्रत्यवायबहुपतिलाभस्य स्त्रीणामानन्दकरत्वादिति भावः । अन्तःपुरिकाभिरन्तःपुरस्त्रीभिः परिवृतां द्रौपदीं सखीजना मण्डनमण्डपिकामलंकारशालामुपनीय प्रसाधयितुमलंकर्तुमारभन्तोपचक्रमुः ।

अथ दशभिः श्लोकैस्तदलंकरणं वर्णयति—**द्रौपद्या इति** । सखी काचित्परिचारिका द्रौपद्याः पञ्चानां पत्नीत्वे विषये लिपिं धातृलिखिताक्षरविन्यासं द्रष्टुमुत्सुकेव । 'इष्टार्थोद्युक्त उत्सुकः' इत्यमरः । सीमन्ते केशमध्ये रेखायां शिल्पस्यालंकरणस्य व्याजेन शिरोजान्केशान्व्यभजद्विभजयामास । अत्र केशमध्यरेखाकरणस्य पञ्चपत्नीत्वबोधकधातृलिपिदर्शनफलकत्वसंभावनात्फलोत्प्रेक्षा सीमन्तशिल्पव्याजेनेत्यपह्नुतिगर्भा ॥ ८७ ॥

**मृगेति** । तन्व्या द्रौपद्या मृगमदेन कस्तूर्या यत्तिलकं मुखेनैव शशिना चन्द्रेण (कर्त्रा) महसा तेजसा (करणेन) बलादाहृतायाः । आनीय बन्दीकृताया इत्यर्थः । चिकुराणां केशानां मिषं व्याजं जुषत इति तथोक्ताया अन्धकारस्तम एव बन्दी बन्धनगृहनिरुद्धाङ्गना तस्याः संबन्धि अपराधस्य

---

१. 'शशिनो' इति पाठः.

अधिनासिकाशिखरमाकलितं नवमौक्तिकं नरपतेर्दुहितुः ।
शुशुभे मुखाम्बुरुहमध्यचरस्सितहंसिकाजनितमण्डमिव ॥८९॥

सुतरां जनमोदमादधाते सुतनोर्मौक्तिकरत्नकर्णपत्रे ।
परिचेतुमिवाननेन्दुसेवां परिवेषस्य शिशू समीपभाजौ ॥९०॥

ताटङ्के तरलमणिप्रभातरंगे तन्वङ्ग्या मुखमभितस्तदा व्यभाताम् ।
मूर्तत्वं प्रकटमुपेत्य जागरूके वर्णे द्वे नयनविपाठयोरिवान्ते ॥९१॥

सख्याः करोऽञ्जनविधौ सकृदेव गन्तु-
मापाङ्गभागमपटुः श्रममानशे यः ।

---

शान्त्यै निरासाय नमितं नतिं प्रापितमपत्यं पुत्र इव रराज । अपराधिनः क्षमापणाय पुत्रादिकं जेतारं प्रणामयन्तीति भावः । उत्प्रेक्षालंकारः । पुष्पिताग्रा ॥ ८८ ॥

**अधीति** । नरपतेर्दुहितुर्द्रौपद्या अधिनासिकाशिखरं नासाग्रे । विभक्त्यर्थेऽव्ययीभावः । आकलितं संघटितं नवं मौक्तिकं (कर्तृ) मुखमेवाम्बुरुहं पद्मं तस्य मध्ये चरन्त्या सितेनैव हंसिकया हंसस्त्रिया जनितमण्डं कोशमिव शुशुभे रराज । शोभतेः कर्तरि लिट् । अत्रापि धावल्यगुणनिमित्ता स्वरूपोत्प्रेक्षा । रूपकोज्जीविता सेति तयोरङ्गाङ्गिभावेन संकरः । प्रमिताक्षरा वृत्तम् । 'प्रमिताक्षरा सजससैरुदिता' इति लक्षणात् ॥ ८९ ॥

**सुतरामिति** । सुतनोर्द्रौपद्या मौक्तिकरत्नानां कर्णपत्रे कर्णिकाख्ये कर्णभूषणे (कर्तृणि) आननस्य द्रौपदीमुखस्यैवेन्दोश्चन्द्रस्य सेवां परिचेतुमभ्यसितुं समीपभाजौ परिवेषस्य शिशू बालकाविव जनानां मोदं हर्षं सुतरामादधाते कुरुतः स्म । आङ्पूर्वाद्दधातेः कर्तरि लिट् । अत्रापि वर्तुलत्वधावल्यगुणनिमित्तमौक्तिकरत्नकर्णपत्रयोः परिवेषशिशुत्वोत्प्रेक्षा । औपच्छन्दसिकम् ॥ ९० ॥

कर्णभूषणमेव प्रकारान्तरेणोत्प्रेक्ष्यते—**ताटङ्के इति** । तरलाश्चलन्तो मणीनां प्रभातरंगाः कान्तिपरम्परा ययोस्ते ताटङ्के कर्णपत्रे । 'कर्णिका कर्णपत्रं च' 'ताटङ्कं कर्णभूषणम्' इति त्रिकाण्डशेषः । प्रकटं स्फुटं मूर्तत्वं शरीरमुपेत्य लब्ध्वा जागरूके प्रकाशमाने नयने विपाठौ बाणविशेषावेव तयोरन्त्ये चरमे द्वे वर्णे ठवर्णे इव तदा तन्वङ्ग्या द्रौपद्या मुखमभितः । मुखस्य पार्श्वद्वय इत्यर्थः । व्यभातां रेजतुः । भातेः कर्तरि लङ् । नयनविपाठयोरन्त्ये वर्णे इत्यत्र वाच्यवाचकयोरभेदाभिधानान्नावाच्यवचनत्वदोषः । बहुदेशलिपिषु ठवर्णस्य मध्यबिन्दुकत्व( ⊙ )वर्तुलत्वदर्शनात् तत्त्वेन ताटङ्कयोरुत्प्रेक्षा । प्रहर्षिणी वृत्तम् ॥ ९१ ॥

**सख्या इति** । सख्याः कस्याश्चिद्यः करोऽञ्जनविधौ द्रौपद्या नेत्रयोः कज्जलालंकरणेऽपाङ्गभागं नेत्रान्तपर्यन्तं सकृदेकवारमेव । न तु द्वित्रिवारमित्यर्थः ।

---

१. 'सुदृशः' इति पाठः.

रेखावधेरनवगामितया दृगङ्गं
पूर्वोक्तमेव स पुनः पुनराललम्बे ॥ ९२ ॥

सकलमपि वपुर्विभूष्य तन्व्याः सपदि सखी विपुलेक्षणाम्बुजापि ।
चिरतरमनवेक्ष्य मध्यदेशं करधृतकाञ्चनकाञ्चिरेव तस्थौ ॥९३॥

काञ्चीकलापमणिबिम्बितपार्श्वयोषि-
त्कौशेयपङ्क्तिरवनीन्द्रसुता बभासे ।
आविर्भविष्यदधिगोष्ठि कटीनिमग्नं
वासःशतं जनदृशामिव सूचयन्ती ॥ ९४ ॥

आतङ्कपीडामददां पुराहमस्यास्तदा भाविषु वल्लभेषु ।

---

गन्तुं प्राप्तुमपटुरशक्तः सन् । नयनयोरतिदैर्घ्यादिति भावः । श्रमं खेदमानशे प्राप्तवान् । अश्नोतेः कर्तरि लिट् । स करो रेखावधेर्नेत्रान्तसीमायाः अनवगामितया दुर्जेयत्वेन हेतुना पूर्वं प्रथममक्तं कज्जललिप्तमेव दृशो नयनस्याङ्गमेकदेशं पुनः पुनराललम्बे जगृहे । अत्र नयनयोस्तादृग्दैर्घ्यासंबन्धेऽपि संबन्धरूपातिशयोक्त्युज्जीवितोऽयं पुनःपुनरुक्ताञ्जनभ्रान्तिमदलंकारं इति द्वयोरङ्गाङ्गिभावेन संकरः ॥ ९२ ॥

**सकलमिति ।** सखी काचित्तन्व्या द्रौपद्याः सकलमपि वपुर्मध्यातिरिक्ताखिलगात्रं सपदि द्रुतं विभूष्यालंकृत्य स्वयं विपुलेऽतिविशाले ईक्षणे अम्बुजे इव यस्यास्तथोक्तापि मध्यदेशं द्रौपद्याः मध्यभागं चिरतरं सुचिरेणाप्यनवेक्ष्य करेण धृता काञ्चनकाञ्चीः काञ्चनमेखला यया तथोक्ता सत्येव तस्थौ । चिरतरं तस्थाविति वा योजना । अत्र मध्यस्यानवलोकनासंबन्धेऽपि संबन्धोक्तेरतिशयोक्तिः । एवं विशालनेत्ररूपसामग्रीसत्त्वेऽप्यवलोकनकार्यानुत्पत्तेर्विशेषोक्तिश्च । द्वयोरेकवाचकानुप्रवेशसंकरः । तदुज्जीविता चेयं सख्याः काञ्चीमनलंकृत्य तूष्णीं स्थित्यसंबन्धेऽपि संबन्धोक्तिरूपातिशयोक्तिरिति द्वयोरङ्गाङ्गिभावेन संकरः । 'मध्ययष्टिम्' इति पाठान्तरमनवलोकनाप्रसक्त्या संदर्भविरोधापत्तेरुपेक्ष्यम् । पुष्पिताग्रा वृत्तम् ॥ ९३ ॥

**काञ्चीति ।** अवनीन्द्रसुता द्रौपदी काञ्चीकलापे मेखलाभूषणे ये मणयस्तेषु बिम्बिता प्रतिफलिता पार्श्वेषु योषितां कौशेयपङ्क्तिः पट्टवस्त्रमाला यस्यास्तथोक्ता सती । 'कौशेयं कृमिकोशोत्थम्' इति वस्त्रभेदेष्वमरः । अधिगोष्ठि द्यूतसभायामाविर्भविष्यत् । किं चेदानीं कट्या नितम्बे निमग्नं लीनं वासःशतं वस्त्रशतम् । शतशब्दोऽनेकत्वपरः । जनानां दृशां सूचयन्तीव बभासे । उत्प्रेक्षालंकारः ॥ ९४ ॥

**आतङ्केति ।** अहं लाक्षाधाम पुरा वारणावतनिवाससमयेऽस्या द्रौपद्या

---

१. 'दृगन्तम्', 'दृगंशम्' इति पाठौ. २. 'मध्ययष्टिम्' इति पाठः. ३. 'द्रुतम्' इति पाठः.

एवं विचिन्त्येव भयेन पादे लाक्षाकृतं धाम पपात तन्व्याः ॥९५॥

तस्याः सखीषु सकलास्वपि तत्तदङ्गं
वेगाद्विभूषितवतीषु विवाहवेषैः ।
कालक्षपासहनवृद्धपुरोहितानां
कोपस्य पात्रमभवत्कुचशिल्पकर्त्री ॥ ९६ ॥

एवमलंकृतामेनामालोक्य स्वयमपि संध्यारुणिमसंपादितलाक्षाकृत्यामञ्जनतिलकैरञ्जितमुखभागां परिणेतुमिव प्रतीचीं दिशमुपगतवति भगवति भासांनिधौ—

---

भाविषु भविष्यत्सु वल्लभेषु पतिषु पाण्डवेषु विषय आतङ्केन कदाचिदत्र वयं दग्धा भवेमेति शङ्कया पीडां दुःखमददामकरवम् । ददातेः कर्तरि लिङ् । 'रुक्तापशङ्कास्वातङ्कः' इत्यमरः । एवमुक्तप्रकारं विचिन्त्य स्मृत्वा भयेनैव तदा द्रौपद्या अलंकरणसमये लाक्षाया अलक्तकेन कृतं धाम तेज एव गृहमिति श्लिष्टरूपकम् । 'धाम स्याद्गृहतेजसोः' इति विश्वः । तन्व्या द्रौपद्याः पादे पपात । प्रणनामेत्यर्थः । 'अस्या द्रुतं भाविषु' इति पाठे द्रुतं शीघ्रं पपातेति संबन्धः । रूपकानुप्राणितेयमुत्प्रेक्षा । इन्द्रवज्रा वृत्तम् ॥ ९५ ॥

तस्या इति । सकलासु सखीषु तस्या द्रौपद्यास्तत्तच्चिकुरादि अङ्गं विवाहवेषैः परिणयोचिततत्तदलंकारैर्वेगाद्द्रुतं विभूषितवतीषु सतीषु कुचयोः शिल्पकर्त्री अलंकारिणी कालक्षेपासहनानां विवाहलग्नातिक्रमणभिया कालविलम्बमसहमानानां ज्ञानेन वयसा च वृद्धानां पुरोहितानां धौम्यादीनां कोपस्य क्रोधस्य पात्रमभवत् । सपदि तत्तादृक्कुचालंकारकृतविलम्बस्य विशेषणगत्या पुरोहितकोपहेतुभूतत्वात्पदार्थहेतुकं काव्यलिङ्गम् । तादृशविलम्बासंबन्धेऽपि संबन्धोक्तिरूपातिशयोक्त्युज्जीवितमिति तयोरङ्गाङ्गिभावेन संकरः । वसन्ततिलका वृत्तम् ॥९६॥

एवमिति । एवमुक्तप्रकारेणालंकृतामेनां द्रौपदीमालोक्येव स्वयमात्मनापि संध्याया अरुणिमा सांध्यारुणवर्ण एव संपादितलाक्षाकृत्यं यावकालंकरणं विरचितं यस्यास्तथोक्ताम् । अञ्जनस्तिलकश्च वृक्षविशेषौ तावेवाञ्जनं कज्जलतिलक इति श्लिष्टरूपकम् । ताभ्यां रञ्जितावलंकृतौ मुखस्याग्रस्येव वदनस्य भागौ नेत्रललाटदेशौ यस्यास्तथोक्तां प्रतीचीं दिशं परिणेतुमुद्वोढुमिव भगवति भासां तेजसां निधौ स्थाने सूर्ये उपगतवति प्राप्ते सतीत्युत्तरेणान्वयः । तामालोक्येव भासांनिधौ स्वयमपि तादृशीं प्रतीचीं परिणेतुमिवोपगतवति इति वा योजना । अत्र रूपकद्वयोज्जीवितपरिणयोत्प्रेक्षाया द्रौपद्यालोकनोत्प्रेक्षासापेक्षत्वाद्द्वयोरङ्गाङ्गिभावेन संकरः ॥

---

१. 'कालक्षिपा' इति पाठः. २. 'अवलोक्य' इति पाठः. ३. 'मञ्जलमुखभासाम्' इति पाठः.

तस्यामेव क्षपायां सपदि निजकुलोत्तंसपार्थोत्सवाना-
मालोकायेव साक्षाद्विशति हिमरुचौ द्यां शुभंयौ मुहूर्ते ।
सोपानैरध्यरुक्षन्मरकतखचितैर्वेदिमेते कुमाराः
सालंकाराः पुरोधःसरभसनिहितैः संविधानैः समग्राम् ॥९७॥

तत्र मुहूर्तगुणेष्विव समन्तादोजायमानेषु दीपेषु मन्त्रविदां वदनेष्विव शब्दायमानेषु वाद्येषु कुलपालिकाः कमनीयमणि-कोरकितैः कनकभूषणैरविकृतसहजरामणीयकां कन्यकाममीषां सकाशे निवेशयामासुः ।

---

**तस्यामिति** । तस्यां द्रौपद्यलंकरणदिनसंबन्धिन्यां क्षपायां रात्रावेव निजस्यात्मीयस्य कुलस्य वंशस्योत्तंसानाम् । शिरोभूषणायमानानामित्यर्थः । पार्थानां संबन्धिनामुत्सवानां विवाहात्मनां साक्षान्निष्प्रतिबन्धमालोकायालोकितु-मिवेत्युत्प्रेक्षा । 'तुमर्थाच्च भाववचनात्' इति संप्रदानत्वम् । हिमाः शीता रुचयो यस्य तस्मिंश्चन्द्रे द्यामाकाशं सपदि द्रुतं विशति सति । एते कुमाराः पार्था अलं-कारेण वैवाहिकेन सहिताः सालंकाराः सन्तः शुभंयौ शुभयोगयुक्ते मुहूर्ते । 'शुभंयुस्तु शुभान्वितः' इत्यमरः । मरकतखचितैर्हरिन्मणिबद्धैः सोपानैः पुरो-धोभिः पुरोहितैः सरभसं निहितैर्निक्षिप्तैः संविधानैः समित्कुशादिवैवाहिकोपक-रणैः समग्रां संपूर्णां वेदिं वैवाहिकीमध्यरुक्षन्नारुरुहुः । अधिपूर्वाद्रुहेः कर्तरि लुङ् । स्रग्धरा ॥ ९७ ॥

**तत्रेति** । तत्र विवाहवेद्यां मुहूर्तस्य विवाहलग्नस्य गुणेषु चन्द्रताराबला-दिष्विव दीपेषु । द्वयेष्वपीत्यर्थः । एवमग्रेऽपि । ओजायमानेषु ओजाख्य-शुभयोगवदाचरत्सु प्रकाशमानेषु च सत्सु । एकत्र 'उपमानादाचारे' इति क्यङ् । 'अकृत्सार्वधातुकयोः' इति दीर्घः । अन्यत्र ओजःशब्दस्तद्वत्परः । 'कर्तुः क्यङ् सलोपश्च' इत्युपमानादाचारार्थे क्यङ् । 'ओजसोऽप्सरसो नित्यमितरेषां विभा-षया' इति सकारलोपश्च । ओजाख्यो योगो ज्योतिःशास्त्रे प्रसिद्धः । मन्त्रविदां वैवाहिकमन्त्रकोविदानां पुरोहितानां वदनेषु वक्त्रेष्विव वाद्येषु घनततसुषिरा-नद्धभेदेन चतुर्विधेषु शब्दायमानेषु शब्दं एकत्र वर्णात्मकमुच्चारणेन अन्यत्र ध्वन्यात्मकं वादनेन कुर्वत्सु सत्सु । 'शब्दवैर–' इत्यादिना करोत्यर्थे क्यङ्प्रत्ययः । कमनीयैर्मनोहरैर्मणिभिः कोरकितैः संजातकोरकैरिव स्थितैः । 'तदस्य संजा-तं–' इति तारकादित्वादितच् । कनकभूषणैः कटकाङ्गदादिभिरविकृतमप्रापि-तरूपान्तरं सहजं स्वाभाविकं रामणीयकं सौन्दर्यं यस्यास्ताम् । अव्याजसुन्द-रत्वान्न भूषणैः कार्यमिति भावः । कन्यकां द्रौपदीममीषां पाण्डवानां सकाशे संनिधौ कुलपालिकाः कुलस्त्रियः । 'कुलस्त्री कुलपालिका' इत्यमरः । निवेशया-

---

१. 'मणिगण' इति पाठः. २. 'मणिनिकायकोरकितैः' इति पाठः.

पूतपार्श्वे कुशाङ्कुरैः पुरस्तान्मणिकुट्टिमे ।
प्राज्वलत्तस्य धौम्यस्य प्रतिविम्ब[1] इवानलः ॥ ९८ ॥

धर्मान्प्रजाश्च बहु[2] संचिनुतानयेति
शाम्यत्समिच्चटचटात्कृतिभिर्ब्रुवाणः ।
तामात्मजां द्रुपदराज इवानलोऽपि
प्रादादिवोन्नतशिखाग्रकरेण तेभ्यः ॥ ९९ ॥

अथ जातुषालयसमर्पणात्कृतं परिपोषमस्य वपुषोऽभिवीक्षितुम् ।
स्पृहयालवः किल पृथासुताः क्रमात्परिचक्रमुर्हुतभुजं[3] वधूसखाः १००

मासुः प्रवेशितवत्यः । विशतेर्णिजन्तात्कर्तरि लिट् । अत्र मुहूर्तगुणानां दीपानां श्लेषभित्तिकाभेदाध्यवसितेनौजायमानत्वेन वाद्यानां मन्त्रविद्वदनानां शब्दायमानत्वेनौपम्यस्य गम्यमानत्वात्केवलप्रकृतास्पदस्य तुल्ययोगिताद्वयस्य संसृष्टिः ॥

**पूतेति** । कुशाङ्कुरैरभिनवैः परिस्तरणदर्भैः पूताः परिशुद्धाः पार्श्वाश्चत्वारो यस्य तस्मिन् । मणिभिः कुट्टिमे बद्धभूमौ । वेद्यामिति यावत् । तस्य धौम्यस्य पाण्डवपुरोहितस्य पुरस्तादग्रे प्रतिविम्बो धौम्यप्रतिच्छायेव अनलः वैवाहिकाग्निः प्राज्वलत्प्रजज्वाल । पुरोहितो वेद्यामग्निं प्रतिष्ठाप्य दर्भान्परिस्तृतवानित्यर्थः । उत्प्रेक्षालंकारः । वृत्तमानुष्टुभम् । 'पञ्चमं लघु सर्वेषु सप्तमं द्विचतुर्थयोः । गुरु षष्ठं च सर्वेषामेतच्छ्लोकस्य लक्षणम् ॥' इति लक्षणात् । अस्यैव युग्मविपुलावृत्तमिति नामान्तरमिति ध्येयम् ॥ ९८ ॥

**धर्मानिति** । हे पार्थाः, यूयमनया द्रौपद्या सह धर्माञ्श्रौतस्मार्तान्प्रजाः पुत्रांश्च बहु यथा तथा संचिनुत संपादयत । चिनोतेर्विध्यर्थे लोट् । इत्युक्तप्रकारं ब्रुवाणो वदन्सन् । द्रुपदराज इव अनलोऽग्निरपि । स च स चेत्यर्थः । शाम्यन्तीनां दह्यमानानां समिधां पालाशादीनां संबन्धिभिश्चटचटात्कृतिभिश्चटचटशब्दैः । तद्व्याजेनेत्यर्थः । धर्मान्प्रजाश्च बहु संचिनुतानयेति ब्रुवाणः सन् । उन्नतशिखा एवाग्रकरस्तेनोच्चता श्रेष्ठा शिखा कान्तिः राजमुद्राङ्गुलीयकं वा यस्य तथोक्तेनाग्रकरेणेति च तेभ्यः पाण्डवेभ्यस्तामात्मजां द्रौपदीम् । तस्या वह्न्युत्पन्नत्वादिति भावः । प्रादाद्दत्तवान् । इवेत्युत्प्रेक्षा । ददातेः कर्तरि लुङ् । अत्रात्मजादानेन प्रकृतयोरेवाग्निद्रुपदयोरौपम्यगम्यत्वात्तुल्ययोगिताया अग्नेर्दानोत्प्रेक्षायाश्चैकवाचकानुप्रवेशसंकरः । उत्प्रेक्षायास्तु अपह्नवरूपकाभ्यामुज्जीवितत्वाभ्यामङ्गाङ्गिभावेन संकरः । वसन्ततिलका वृत्तम् ॥ ९९ ॥

**अथेति** । अथ पाणिग्रहणानन्तरं पृथासुता धर्मादयो वध्वा द्रौपद्या सहिता वधूसखाः सन्तः । जतुना निर्मितो जातुषः । 'त्रपुजतुनोः षुक्' इति निर्वृत्तार्थे षुक् । 'जतुत्रपुविकारे तु जातुषं त्रापुषं त्रिषु' इत्यमरः । स चासावा-

१. 'विम्बम्' इति पाठः. २. 'सह' इति पाठः. ३. 'हुतवहम्' इति पाठः.

कठिनत्वसंपदवलेपभरात्कुचकुड्मलस्य कुरुवीरवधूः ।
कृतनिर्जयेव पतिपाणिधृतं पदमश्मनः शिरसि सा निदधे ॥१०१॥

कन्यया[1]भ्युपकृता विधिलाजाः कन्दलत्यनलरोचिषि पेतुः ।
पञ्चवल्लभकराग्रविमर्दाद्वाहुवंशगलिता इव मुक्ताः ॥ १०२ ॥

विधिचोदनासु मणिदीपयष्टिकापरितःस्फुरत्प्रतिकृतेश्च[2] सुभ्रुवः ।
उभयोर्विवेचनविधौ पुरोधसःस्खलनं बभूव न तु मन्त्रतन्त्रयोः॥१०३॥

---

लयो गृहं तस्य समर्पणाद्रक्षणार्थं प्रदानात्कृतं जातमस्याग्नेर्वपुषः शरीरस्य परिपोषं मांसलत्वमभिवीक्षितुं स्पृहयालवः । किलेति संभावनायाम् । कौतुकिन इवेत्युत्प्रेक्षा । तदा क्रमाज्ज्येष्ठानुक्रमेण हुतभुजमग्निं परिचक्रमुः प्रदक्षिणं चक्रुः । मञ्जुभाषिणीवृत्तम् ॥ १०० ॥

कठिनत्वेति । सा कुरुवीरवधूर्द्रौपदी कुचः कुड्मलो मुकुल इव तस्य कठिनत्वसंपदा काठिन्यसमृद्ध्या योऽवलेपभरो गर्वातिशयस्तस्माद्धेतोः कृतः स्वीकृतो निर्जयो विजयो यया तथोक्तेवेत्युत्प्रेक्षा । पतीनां पाणिभिर्धृतं पदं चरणमश्मनः पाषाणस्य शिरसि उपरि निदधे निहितवती । वैवाहिककर्म सप्तपद्याख्यमकरोदित्यर्थः । प्रमिताक्षरावृत्तम् ॥ १०१ ॥

कन्ययेति । कन्यया द्रौपद्या अभ्युपकृता अभितः समीपे उपकृताः विधये लाजहोमाख्यवैवाहिककर्मणे लाजाः पञ्चानां वल्लभानां कराग्रैर्विमर्दात्पाणिग्रहणसमये पीडनाद्धेतोर्बाहुरेव वंशो वेणुस्तस्माद्गलिता मुक्ता मौक्तिकानीवेत्युत्प्रेक्षा । कन्दलति प्रज्वलति अनलस्य वैवाहिकाग्ने रोचिषि ज्वालायां पेतुः । अत्र विधिलाजानां धावल्यादिगुणनिमित्तकोत्प्रेक्षा । बाहुवंशेति रूपकानुप्राणितत्वाद्वयोरङ्गाङ्गिभावेन संकरः । 'अभ्युपहृताः' इति पाठान्तरमुक्तार्थस्य लाक्षणिकत्वापत्तेरुपेक्ष्यम् । स्वागतावृत्तम् ॥ १०२ ॥

विधिचोदनास्विति । विधये वधूकर्तृकवैवाहिककर्मकरणार्थं चोदनासु प्रेरणासु विषये मणिमयीषु दीपयष्टिकासु परितः स्फुरन्त्याः फलन्त्याः प्रतिकृतेर्द्रौपदीप्रतिबिम्बस्य सुभ्रुवो द्रौपद्याश्च । उभयोर्विवेचनविधौ इयं द्रौपदी इयं तत्प्रतिकृतिरिति पार्थक्येन ज्ञान एव पुरोधसो धौम्यस्य स्खलनं प्रमादो बभूव । मन्त्रो वैवाहिककर्माङ्गम्, तन्त्रं तदनुष्ठानम्, तयोस्तु स्खलनं न बभूव । अत्र द्रौपदीतत्प्रतिकृत्युभयविवेचने मन्त्रतन्त्रद्वये च प्रसक्तस्य प्रमादस्य पूर्वस्मिन्नेव नियमनात्परिसंख्यालंकारः । यत्तु 'स्फुरदिन्दिराप्रतिकृतेः' इति पाठान्तरम्, यच्च 'मणिमय्या दीपयष्टिकायाः दीपस्तम्भस्य परित उपरि स्फुरन्त्या इन्दिराप्रतिकृतेर्लक्ष्मीप्रतिमायाः पूजार्थं निक्षिप्तायाः' इति नृसिंहव्याख्यानम्, तदुभयमप्यशुद्धम् । जगत्पूज्याया लक्ष्मीप्रतिमायाः पीठिकायामेव स्थाप्यतया दीपस्तम्भोपरि विन्यासस्य प्रसिद्धिविरुद्धत्वानामैकदोषापत्तेः, उक्तार्थस्य महतां पीडावहत्वादश्लीलदोषापत्तेश्च । 'कल्याणम्–' (१।१) इति मङ्गलश्लोकेनैतत्काम्य-

---

१. 'अभ्युपहृताः' इति पाठः. २. 'स्फुरदिन्दिराप्रतिकृतेः' इति पाठः.

वाहुप्रताप इव साक्षिणि हव्यवाहे
सामन्तराजधरणेरिव याज्ञसेन्याः ।
काङ्क्षासमं क्रमश एव करं गृहीत्वा
हर्षेण वृद्धिमभजन्नवनीन्द्रपुत्राः ॥ १०४ ॥

पाञ्चालराजश्च स पाण्डवश्च पुष्यत्तमौ पूजकपूज्यभावम् ।
आढ्यंभविष्णुत्वमकिंचनत्वं व्यत्यस्यतां[1] ताविव यौतकैस्ते[2] ॥ १०५ ॥

---

कर्तृकतया प्रत्यभिज्ञानात्कथंचित्पदस्थितायास्तस्या इति वक्तव्यत्वेऽपि गौरीप्रतिमाया एव तदालावश्यकत्वाच्छैवानां तत्राद्वेषेऽपि प्रकृताया द्रौपद्याः प्रकर्षाप्रसक्त्या तत्प्रकर्षाख्यदोषापत्तेश्चेति सुधीभिर्विभावनीयम् । मञ्जुभाषिणी ॥ १०३ ॥

वाह्विति । अवनीन्द्रस्य पाण्डोः पुत्रा युधिष्ठिरादयो वाहुप्रताप इव हव्यवाहेऽग्नौ तदुभयस्मिन्नपि साक्षिणि सति । द्वयं साक्षीकृत्येति यावत् । सामन्तराजानां शत्रुनृपाणां धरणे राज्यस्येव याज्ञसेन्या द्रौपद्याः करं पाणिं बलिं च क्रमशो ज्येष्ठानुक्रमेण काङ्क्षासमं वाञ्छासमकालमेव गृहीत्वा हर्षेण या वृद्धिस्ताम् । संतोषसमृद्धिमिति यावत् । अभजन्प्रापुः । अत्र वाहुप्रतापहव्यवाहयोः साक्षित्वकरणेन सामन्तराजधरणीयाज्ञसेन्योः श्लेषमित्तिकाभेदाध्यवसितकरग्रहणेन चौपम्यस्य गम्यमानत्वात्तुल्ययोगिताद्वयस्याङ्गाङ्गिभावेन संकरः । एवं तादृशग्रहणस्य विशेषणगत्या संतोषसमृद्धिप्राप्तिहेतुकत्वात्पदार्थहेतुकं काव्यलिङ्गम् । द्वयोश्च संसृष्टिः । वसन्ततिलकावृत्तम् ॥ १०४ ॥

पाञ्चालराज इति । पूजकः पूजाकर्ता, पूज्यः पूजार्हः, तयोर्भावं पूजकपूज्यत्वं पुष्यत्तमौ अतिशयेन पोषयन्तौ । एकः पूजयन्, अपरः पूज्यमान इति यावत् । स प्रसिद्धः पाञ्चालराजो द्रुपदश्च स पाण्डवः धर्मराजश्च तौ द्वौ यौतकैर्विवाहकालदेयद्रव्यैः करणैः आढ्यंभविष्णुत्वं धनिकत्वमकिंचनत्वं दारिद्र्यम् । द्वे अपि कर्मणी । ते धनिकत्वदारिद्र्ये तौ पाञ्चालराजपाण्डवाविव व्यत्यस्यतां विपरीतीचक्रतुः । व्यतिपूर्वादस्यतेः कर्तरि लङ् । प्रथमं द्रुपदः कन्यायौतकदानाभ्यां पूजकोऽकिंचनश्चाभूत् । तदुभयप्रतिग्रहाभ्यां युधिष्ठिरः पूज्य आढ्यंभविष्णुश्चाभूत् । पश्चाच्च श्वशुरस्य गुरुत्वस्मरणादकिंचनस्यैव प्रतिगृहीतृत्वाच्च द्रुपदः पूज्योऽभूत् धनिकस्यैव दानसमर्थत्वाज्जामातृत्वाच्च युधिष्ठिरः पूजकोऽभूदिति समुदायार्थः । आढ्यंभविष्णुत्वमित्यत्र 'कर्तरि भुवः—' इत्यादिना आढ्योपपदाद्भुव इष्णुच् । 'अरुर्द्विषदजन्तस्य मुम्' इति मुम् । 'तस्य भावस्त्वतलौ' इति त्वप्रत्यये च आढ्यंभविष्णुत्वमिति रूपम् । अनाढ्य आढ्यो भवतीति आढ्यंभविष्णुः । नास्ति किंचन यस्येति अकिंचनः । इत्युभयत्र विग्रहः । अत्र द्रुपदयुधिष्ठिरयोर्धनिकत्वदारिद्र्ययोश्च व्यत्यासीकरणेनौपम्यस्य गम्यमानत्वात्केवलप्रकृतास्पदतुल्ययोगिताभेदः । अत्र 'व्यत्यस्यतां ताविव यौतकैस्ते' इत्येव पाठः । 'यौतकैः स्वैः' इति

---

१. 'व्यत्यासताम्'; 'व्यत्यास्यताम्' इति पाठौ. २. 'स्वैः' पाठः.

एवमन्तरिक्षनिक्षिप्तलक्ष्यवेधनलक्षणेन शुल्कनिष्केण निजकण्ठनिष्कायितकन्याभुजलतानेतान्पथि कौन्तेयानवगन्तारो दुरहंतारोपितनिवर्तनमतयो विकर्तनतनयोपायविधेयैः सहायैः सह संमन्त्र्य समारब्धपूर्वस्य युद्धपलायनाध्ययनस्य द्वितीयावृत्तिविच्छित्तिं परिजिहीर्षमाणा इवे शकुनिभागिनेयाः सेनापुरःसरनिःसाणनिःसारितनिःस्वानलोलितैः क्ष्वेलितैः क्षालितगवाक्षमौनकक्ष्यं द्रुपदपुरं पुनरपि निरुध्य निरुच्छ्वासयांचक्रुः ।

---

पाठान्तरं तु सः ताविवेति पदत्रयार्थान्वयस्यासंगतत्वादिदोषादुपेक्ष्यम् । इन्द्रवज्रावृत्तम् ॥ १०५ ॥

**एवमिति ।** एवमुक्तप्रकारेणान्तरिक्ष आकाशे निक्षिप्तस्य वेण्वाद्यूर्ध्वदण्डे बद्धस्य लक्ष्यस्य वेधनलक्षणेन भेदनात्मकेन शुल्केन कन्यया आवर्जनार्थं परिदेयेन निष्केण दीनारेणेति जात्येकवचनम् । निजेषु कण्ठेषु निष्कायिता भूषणविशेषवदाचरन्ती कन्याया द्रौपद्या भुजलता येषां तान् । तादृशशुल्कलब्धद्रौपदीभुजालिङ्गितानित्यर्थः । 'साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले । दीनारेऽपि च निष्कोऽस्त्री' इत्यमरः । एतान्द्रौपदीपरिणेतॄन्कौन्तेयानवगन्तारः । पार्था इति जानन्त इत्यर्थः । एतान्कौन्तेयानवगन्तारोऽवज्ञातारः । तिरस्कर्तार इति यावदिति वा । अतएव पथि मार्गमध्ये । दुरहंतया दुरहंकारेणारोपिता प्रापिता निवर्तने पाण्डवेभ्यो द्रौपद्या अपहरणे पाण्डवानां द्रौपदीविवाहपलायने वा विषये मतिर्निश्चयो येषां ते । शकुनेर्भगिनी गान्धारी तत्पुत्रा भागिनेया दुर्योधनादयः । भागिनेयानां मातुलानुकारिणी प्रकृतिरिति प्रसिद्ध्या शकुनिवहुमतित्वद्योतनाय तेषां तथा निर्देशः । विकर्तनः सूर्यस्तत्तनयस्य कर्णस्योपायेषु कार्यालोचनेषु विधेयैः स्थितैः । 'विकर्तनार्कमार्तण्ड–', 'विधेयो विनयग्राही वचनेस्थित आश्रवः' इत्युभयत्राप्यमरः । सहायैर्दुःशासनादिभिः संमन्त्र्य सम्यगालोच्य । पूर्वं द्रुपदाय द्रोहकाले समारब्धस्य सम्यगुपक्रान्तस्य समारब्धपूर्वस्य । तदा नानादेशीयैः सहैषामपि पलायितत्वादिति भावः । युद्धे पलायनस्यैवाध्ययनस्य वेदस्य द्वितीयाया आवृत्तेरभ्यासस्य विच्छित्तिं विच्छेदं परिजिहीर्षमाणाः परिहर्तुमिच्छन्त इवेत्युत्प्रेक्षा । परिपूर्वाद्धरतेः सन्नन्ताल्लटः शानच् । सेनायाः पुरःसरादग्रवर्तिनो निःसाणाजयदुन्दुभेर्निःसारितैः प्रवर्तितैर्निःस्वानैर्भाङ्कारैर्लोलितैर्मिश्रितैः क्ष्वेलितैः सिंहनादैः क्षालितं निरस्तं गवाक्षाणां मौनमेव कक्ष्यं मालिन्यं यस्य तत् । प्रतिध्वनितगवाक्षमित्यर्थः । 'काक्ष्यम्' इति पाठे कक्ष्येव काक्ष्यम् । व्रतमित्यर्थः । 'मौनरौक्ष्यम्' इति

---

१. 'वेध' इति पाठः. २. 'इव ते' इति पाठः. ३. 'ललितैः' इति पाठः. ४. 'क्ष्वेडितैः' इति पाठः. ५. 'रौक्ष्यम्' इति पाठः. ६. 'नगरम्' इति पाठः. ७. 'निर्वार्य'; 'निवार्य' इति पाठौ.

तत्क्षणमेव सत्वरं निर्गतेषु विविधैरायुधैरशून्येषु द्रुपदसैन्येषु पृथासुतास्तेऽपि रथाधिरूढा द्विधा विचार्यैवं पुरान्निरीयुः।

शरैर्विधातुं द्विषतोऽपि चूर्णांस्तत्सुभ्रुवामप्यलकानचूर्णान्॥ १०६॥

शङ्खान्दध्मुस्ताडयन्ति स्म भेरीश्चक्रुः क्ष्वेलाश्चापनादान्विवव्रुः।
सिद्धादीनां द्योसदां लालनीये युद्धारम्भे ते द्वयेऽपि प्रवीराः॥१०७॥

अनयोर्वलयोर्महारथानामवलोकाय नभोजुषां सुरीणाम्।
सुदृशां च पुरस्य सौधभाजां वरणस्रग्विधृतैव भेदिकाभूत्॥ १०८॥

पाठे मौनकाठिन्यमित्यर्थः। द्रुपदस्य पुरं पुनरपि निरुध्य निरुच्छ्वासयांचक्रुर्निर्बन्धुः। निश्वासोऽपि यथा तत्रत्यानां न निर्गच्छेत्तथा चक्रुरित्यर्थः॥

**तदिति**। तत्क्षणं निरोधसमकालमेव विविधैः खड्गगदातोमरशरासनादिभिरायुधैरशून्येषु सहितेषु द्रुपदसैन्येषु सत्वरं निर्गतेषु युद्धार्थमागतवत्सु सत्सु इत्युत्तरेणान्वयः॥

**पृथेति**। ते पृथासुता अपि रथेष्वधिरूढाः सन्तः शरैः बाणैर्द्विषतः शत्रून्दुर्योधनादींश्चूर्णान्। लवच्छिन्नानित्यर्थः। तेषां द्विषतां संबन्धिनीनां सुभ्रुवां स्त्रीणामलकांश्चूर्णकुन्तलान् अचूर्णकुन्तलानपि वैधव्येन कुङ्कुमादिचूर्णरहितांश्च विधातुं कर्तुमेव द्विधा विचार्यालोच्येवेत्युत्प्रेक्षा। पुराद्द्रौपदान्निरीयुर्निर्गतवन्तः। उपजातिवृत्तम्॥ १०६॥

**शङ्खानिति**। ते द्वावपि पाञ्चालाः कौरवाश्च प्रवीरा दिवि स्वर्गे अन्तरिक्षे च सीदन्ति वसन्तीति द्योसदां सिद्धा योगसिद्धा नारदादयो देवयोनिविशेषाश्चादयो येषां तेषां लालनीये श्लाघनीये युद्धस्यारम्भे शङ्खान्दध्मुरपूरयन्। ध्मातेः कर्तरि लिट्। भेरीस्ताडयन्ति स्माताडयन्। क्ष्वेलाः सिंहनादांश्चक्रुरकुर्वन्। चापस्य नादांष्टंकारान्विवव्रुः चक्रुरित्यर्थः। वृणोतेः कर्तरि लिट्। अत्रानेकक्रियायौगपद्यसमुच्चयात्समुच्चयालंकारः। शालिनीवृत्तम्। 'शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः' इति लक्षणात्॥ १०७॥

**अनयोरिति**। अनयोर्वलयोः कौरवपाञ्चालचतुरङ्गयोः। युध्यमानयोरिति शेषः। महारथानामवलोकाय। दर्शनं कर्तुमित्यर्थः। 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति संप्रदानत्वम्। नभोजुषां गगनभाजां सुरीणां देवस्त्रीणाम्। 'जातेरस्त्रीविषयादयोपधात्' इति ङीष्। सौधभाजां प्रासादाग्रगतानां पुरस्य सुदृशां पौराङ्गनानां च विधृता करेण गृहीता वरणस्य युद्धे मृतानां पतित्वेन वरणार्थं स्रङ्मन्दारमालैवेति तादर्थ्ये षष्ठीसमासः। भेदिका इमाः सुर्यो वरणस्रग्धारणादिमाः पौर्यस्तदभा-

१. 'निर्गत्वरेषु' इति पाठः. २. 'एव' इति पाठः. ३. 'शङ्खम्' इति पाठः. ४. 'क्ष्वेडाम्' इति पाठः. ५. 'नादम्' इति पाठः.

आसीदताम्याशु धनुर्धराणामासीदताम्यत्करकौशलानाम् ।
क्षणं मिथो बाणगणोपरोधाद्व्रणं न कस्यापि रणं नवं यत् ॥ १०९ ॥
द्विरदं द्विरदस्तुरगं तुरगो रथिकं रथिकः पदगं पदगः ।
इतरेतरमेत्य रणं विदधे दिवि नारदविस्मयनाकतरुम् ॥ ११० ॥
रजोन्धकारेषु दृशोऽन्धयत्सु करैः करान्कौतुकसूत्रचिह्नान् ।
परामृशन्तो युधि पाण्डुपुत्राः परस्परं पर्यहरन्प्रहारान् ॥ १११ ॥
सोमकेष्वपसर्पत्सु सूर्यसूनोः शितैः शरैः ।

---

वादिति मिथो भेदानुमानिका अभूदित्यनुमानालंकारः । तेन पौराङ्गनानां मर्त्यातिशायि सौन्दर्यं व्यज्यत इत्यलंकारेण वस्तुध्वनिः । औपच्छन्दसिकम् ॥ १०८ ॥

**आसीदतामिति ।** आशु सत्वरमासीदतां युद्धाय संनह्यताम् । अताम्यदविच्छिद्यमानं करयोः कौशलं धनुर्ग्रहणशरसंधानादिषु नैपुण्यं येषां तेषां धनुर्धराणां मिथोऽन्योन्यं बाणगणानामुपरोधान्निरोधाद्धेतोः । कस्यापि धनुर्धरस्य व्रणं क्षतं नाभूत् । यद्यस्मात्कारणाद्रणं युद्धं नवं नूतनम्, न विद्यते वकारो यस्मिंस्तथोक्तमिति च । रणशब्दस्य वकारसहितत्वे व्रणं स्यादित्यर्थः । अत्र च पक्षे वाच्यवाचकयोरभेदाध्यवसायः । बाणैर्बाणानां निरोधे शरीरभेदनायोगाद्व्रणस्याप्रसक्तिरिति तत्त्वम् । 'बाणगणोपरोधाद्व्रणं न कस्यापि रणं नवं यत्' इत्येव पाठः । 'बाणगणान्निरुध्य व्रणं विना तत्र रणं महीयः' इति पाठान्तरे तु 'तत्र' इति 'महीयः' इति च पदद्वयस्य वैयर्थ्यान्निरर्थकत्वदोषः, उक्तस्यार्थस्यायोगश्चेति ध्येयम् ॥ १०९ ॥

**द्विरदमिति ।** द्विरदो गजः । तदारूढ इत्यर्थः । एवमग्रे द्विरदम्, तुरगोऽश्वस्तुरगम्, रथिको रथारूढो रथिकम्, पदगः पादचारी पदगं च, एवमितरेतरमन्योन्यमेत्य संगत्य दिव्यन्तरिक्षे नारदस्य मुनेर्यो विस्मय आश्चर्यं तस्य नाकतरुं कल्पवृक्षम् । आश्चर्यजनकमित्यर्थः । रणं युद्धं विदधे चकार । 'रथिकं रथिकः' इत्यादिपाठस्तु क्रमभ्रष्टदोषादुपेक्ष्यः ॥ ११० ॥

**रज इति ।** रजांस्येवान्धकाराः, रजांस्यन्धकाराणीवेति वा । तेषु दृशो नेत्राणि अन्धयत्स्वन्धीकुर्वत्सु सत्सु पाण्डुपुत्राः करैः स्वैः कौतुकसूत्रं प्रतिसरः चिह्नं येषु तान्करान्परामृशन्तः स्पृशन्तः सन्तः युधि परस्परमन्योन्यं प्रहाराञ्शस्त्रघातान्पर्यहरन्परिहृतवन्तः । अत्र नवकौतुकसूत्रहस्तस्पर्शेन पाण्डवानां स्वत्वानुमानादनुमानालंकारः । तथा असंबन्धे संबन्धरूपातिशयोक्तिश्च । द्वयोरेकवाचकानुप्रवेशः संकरः ॥ १११ ॥

**सोमकेष्विति ।** सूर्यसूनोः कर्णस्य शितैस्तीक्ष्णैः शरैर्बाणैः सोमकेषु

---

१. 'बाणगणं निरुध्य व्रणं विना तत्र रणं महीयः' इति पाठः. २. 'रथिकं रथिको द्विरदं द्विरदस्तुरगं तुरगः' इति पाठः. ३. 'विदधौ' इति पाठः.

कूजयामास कोदण्डं कुलिशायुधनन्दनः ॥ ११२ ॥

तेन जनन इव प्रधनेऽपि वृकोदरद्वितीयेन करोदरपरिकर्मीकृतस्य कार्मुकस्य वर्मनिर्माथिभिः शरोर्मिभिर्निकृत्तमर्माणो भयविसारिभिः स्वेदवारिभिः स्वपदान्येव यानपदेऽभिषिञ्चन्तः समराजिरकन्दलितपार्थयशश्चतुर्थीचन्द्रकलावलोकनं परिहर्तुमिव मुखं निवर्त्य सौबलेयाः केवलैरेव बाहुभिः कुरुपुटभेदनं प्रति पलायांबभूवुः ।

बीभत्सुचापविवृतेषु महत्सु कर्म-
स्वेकं दृढं जगृहिरे युधि धार्तराष्ट्राः ।
वीक्ष्य स्थितेषु विमतेषु विलोलजीवं
पृष्ठं प्रकाश्य गमनं पृथुना जवेन ॥ ११३ ॥

---

पाञ्चालेष्वपसर्पत्सु पलायमानेषु सत्सु कुलिशं वज्रमायुधं यस्य तस्येन्द्रस्य नन्दनोऽर्जुनः कोदण्डं चापं कूजयामास गुणाकर्षणे ध्वनयति स्म । सूर्यसूनोस्तत्प्रसूताया दीप्तेः शितैस्तीक्ष्णैः शरैरिव शरैः किरणैः सोमकेषु चन्द्रवद्धवलेषु जलेषु अपसर्पत्सु शुष्यत्सु सत्सु कुलिशायुधं नन्दयति वाहनत्वेनेति नन्दनो मेघः कस्य ब्रह्मण उत् ऊर्ध्वमण्डं ब्रह्माण्डोर्ध्वभागमाकाशं कूजयामास । गर्जितैरिति भावः । 'कश्चित्तात्मरविब्रह्मधातृमूर्धसुखेषु कम्' इति विश्वः । इत्यर्थान्तरे तु न श्लेषः । अभिधाया इत्यादेरुक्तत्वादिति ॥ ११२ ॥

**तेनेति** । जनने जन्मनीव प्रधने युद्धेऽपि । उभयत्र चेत्यर्थः । वृकोदरो भीमो द्वितीयः सहायो यस्य, वृकोदरस्य द्वितीय इति च । तेनार्जुनेन करस्य उदरे मध्ये परिकर्मीकृतस्यालंकारीकृतस्य कार्मुकस्य चापस्य संबन्धिभिः वर्माणि कवचानि निर्मथ्नन्तीति तथोक्तैः शराणामूर्मिभिः परम्पराभिः निकृत्तानि मर्माण्यायुःस्थानानि येषां ते सौबलेया दुर्योधनादयो भयेन विसारिभिः स्रवद्भिः स्वेदवारिभिः स्वेषां पदानि चरणान्येव यानपदे वाहनस्थानेऽभिषिञ्चन्तः पादचारिणः सन्तः समराजिरे युद्धप्राङ्गणे कन्दलितमङ्कुरितं पार्थयश एव चतुर्थीचन्द्रकला तस्या अवलोकनं परिहर्तुमिवेत्युत्प्रेक्षा । चतुर्थीचन्द्रदर्शनमपवादहेतुरिति प्रसिद्धम् । मुखं निवृत्य परावृत्य । लज्जावशादिति भावः । केवलैर्निरायुधैरेव बाहुभिरुपलक्षिताः कुरुपुटभेदनं हस्तिनपट्टनं प्रति पलायांबभूवुः पलायनं चक्रुः ॥

**बीभत्स्विति** । युधि युद्धे बीभत्सोरर्जुनस्य चापेन विवृतेषु प्रकटीकृतेषु महत्सु श्लाघ्येषु कर्मसु क्रियासु । तन्मध्ये इत्यर्थः । विमतेषु शत्रुषु वीक्ष्य स्थितेषु

---

१. 'कुकुशायुध' इति पाठः. २. 'कृत' इति पाठः. ३. 'निर्मितेर्मैर्मर्माणोभयप्रसारिभिः' इति नास्ति पाठः. ४. 'स्व' इति क्वचित्. ५. 'पट' इति पाठः.

विजयात्परमेतेषामृजवोऽप्यतिभीषणाः ।
सद्यो गुणाः समुन्नेमुरवनेमुस्तु धन्वनाम् ॥ ११४ ॥
ते निवृत्य नगरं समावसंस्तोषिता द्रुपदराजपूजया ।
अप्यशेषजनकेन शौरिणा जन्यभावमुपजग्मुषा समम् ॥११५॥
पार्थ एव सहजेष्वखिलेषु प्रायशो युधि बलं श्रुतवत्याः ।
अन्वभूदधिकमीक्षणवृष्टीरर्जकांशमिव राजसुतायाः ॥ ११६ ॥
वृत्तान्तमेवमवकर्ण्य स राजवृद्धः

---

संनद्धेषु सत्सु पृष्ठं चापदण्डपश्चाद्भागं प्रकाश्य पृथुना महता जवेन वेगेन विलोल-जीवा शिञ्जिनी यस्मिन्कर्मणि तत्तथा गमनं बाणप्रयोगार्थमाकर्षणाद्धनुर्मण्डलीभव-नात्मकं दृढमेकं कर्म धार्तराष्ट्रास्तदा पलायनकाले जगृहिरे गृहीतवन्तः । कुतः । विमतेषु वीक्ष्य स्थितेषु सत्सु विलोलो गतागतो जीवः प्राणधारणं यस्मिंस्तद्यथा तथा पृष्ठं देहपश्चाद्भागं प्रकाश्य पृथुना जवेन गमनं जगृहुरित्युत्प्रेक्षा व्यञ्जकाप्र-योगाद्गम्या श्लेषानुप्राणिता च । वसन्ततिलका वृत्तम् ॥ ११३ ॥

**विजयादिति** । एतेषां पाण्डवानां संबन्धिनो गुणाः शौर्यधैर्यादयः । ऋजवो विनयान्वितत्वान्मृदवोऽपि अकुटिला अपीति वा । अवक्रा अपीति च । विजयात्परं कौरवजयानन्तरमतिभीषणा अतिभयंकराः सन्तः । 'अरिभी-षणा' इति पाठान्तरम् । सद्यस्तत्क्षणमेव समुन्नेमुः सम्यगुन्नतिं प्राप्ताः । उन्नम्रा बभूवुरिति च । धन्वनां चापानां तु गुणाः शिञ्जिन्योऽतिभीषणा अपि विजयात्परमवनेमुरवनम्रा अवरोपिता इति च । एतेषां गुणा विजयादर्जुनात् । तत्प्रतापाद्धेतोरिति यावत् । इत्यपि प्राहुः । अत एव श्लेषप्रतिभोत्थापितस्य विरोधाभासद्वयस्य संसृष्टिः ॥ ११४ ॥

**त इति** । ते पाण्डवा नगरं द्रुपदपुरं प्रति निवृत्य युद्धात्प्रत्यागत्याशेषाणां लोकानां जनकेनापि जन्यस्य भावमुत्पत्तिं वरैः सख्यं च उपजग्मुषा प्राप्तवता । 'जन्या स्निग्धा वरस्य ये' इत्यमरः । शौरिणा समं श्रीकृष्णेन सह द्रुपदराजस्य पूजया तोषिताः सन्तः समावसन्वसन्ति स्म । द्रुपदपुर इति भावः । अत्रापि विरोधाभासालंकारः श्लेषानुप्राणितः । रथोद्धता वृत्तम् ॥ ११५ ॥

**पार्थ इति** । अखिलेषु सहजेषु । भ्रातॄणां मध्य इत्यर्थः । पार्थेऽर्जुन एव युधि युद्धे बलमात्मशौर्यं प्रायशः श्रुतवत्या राजसुताया द्रौपद्या ईक्षणवृष्टीः, कटाक्षपातान् अर्जकस्यांशमधिकं भागमिवान्वभूदनुभूतवान् । अर्जकस्यांशद्वयस्मरणादिति भावः । उत्प्रेक्षा । स्वागता वृत्तम् ॥ ११६ ॥

**वृत्तान्तमिति** । अथ स राजवृद्धो धृतराष्ट्र एवमा जतुगृहच्यवनमा कौरवपला-

---

१. 'अरिभीषणाः' इति पाठः. २. 'च' इति पाठः. ३. 'धन्विनाम्' इति पाठः. ४. 'समा-विशन्भूषिता' इति पाठः. ५. 'वन्यशेष' इति पाठः. ६. 'वृष्टे राजकोंऽशम्' इति पाठः.

क्षत्रा सकाशमुपनाय्य सहानुजातैः ।
धर्मात्मजाय धुरि कंसभिदोऽर्धभावा-
दन्वर्थतामथ विभज्य ददौ स्वनाम्नः ॥ ११७ ॥

तस्मिन्नाहितलक्षणे नृपसुते राज्याभिषिक्ते सति
स्वान्यक्षीणि दधुर्यदम्बु शिशिरं लिप्ताङ्गके कुङ्कुमैः ।
रागं यद्विभरांबभूवुरवहन्यद्वर्णिते बन्दिभि-
र्निष्पन्दत्वमतःस्वदृष्टिरिति तं पौरा विवव्रुः स्फुटम् ॥ ११८ ॥

इत्यनन्तभट्टकविकृतौ चम्पूभारते द्वितीयः स्तबकः ।

२०-९-१९४९ 10-9-1969

यनं प्रसिद्धं वृत्तान्तमवकर्ण्य श्रुत्वा । क्षत्रा विदुरेणानुजातैर्भ्रातृभिर्भीमादिभिः सह सकाशं स्वसमीपं प्रत्युपनाय्य प्रापय्य । धर्मात्मजमिति विभक्तिविपरिणामेन योज्यम् । कंसभिदः श्रीकृष्णस्य धुर्यग्रे धर्मात्मजाय युधिष्ठिराय स्वस्य नाम्नो धृतराष्ट्र इति संज्ञाया अन्वर्थतां धृतराष्ट्रत्वम् । राज्यधारणमिति यावत् । अर्धभावाद्विभज्यार्धत्वेन विभागं कृत्वा ददौ । अर्धराज्यं दत्तवानित्यर्थः । वसन्ततिलकावृत्तम् ॥ ११७ ॥

तस्मिन्निति । आहितानि संघटितानि लक्षणानि छत्रचामरादिराज्यचिह्नानि यस्मिंस्तथोक्ते तस्मिन्नृपसुते धर्मराजे राज्येऽभिषिक्ते सति । धृतराष्ट्रेणेति भावः । यद्यस्मात्स्वानि स्वीयान्यक्षीणि नेत्राणि शिशिरं शीतलमम्बु आनन्दोत्थं दधुर्धृतवन्तः । एवं तस्मिन्नृपसुते कुङ्कुमैश्चन्दनमिश्रितैर्लिप्तान्यङ्गानि यस्य तस्मिंस्तथोक्ते सति । शैषिकः कप्प्रत्ययः । स्वान्यक्षीणि । यद्यस्मात् रागमारुण्यमनुरागं च विभरांबभूवुर्दधुः । 'भीह्रीभृहुवां श्लुवच्च' इति विभर्तेरामि श्लुवद्भावाद्द्वित्वम् । 'भृञामित्' इत्यभ्यासस्य इत्वम् । तस्मिन्नृपसुते बन्दिभिः स्तुतिपाठकैर्वर्णिते स्तुते सति यद्यस्मात्स्वान्यक्षीणि निष्पन्दत्वं निश्चलत्वम् । उत्सेकादविकृतत्वमिति यावत् । अवहन्वहन्ति स्म । अत उक्तहेतुत्रयात्पौराः पुरजनास्तं धर्मराजं स्वेषां दृष्टिः चक्षुरिति विवव्रुः संभावयन्ति स्म । स्फुटमित्युत्प्रेक्षा । सा च अभिषेककुङ्कुमालेपबन्दिवर्णने राज्ञ इव स्वदृष्टेरप्यम्बुधारणरागभरणाविकृतत्ववहनवाक्यार्थानां हेतुत्वेन काव्यलिङ्गत्रयोज्जीवितेति तस्यास्तेषां चाङ्गाङ्गिभावेन संकरः । वृत्तं शार्दूलविक्रीडितम् ॥ ११८ ॥

इति श्रीसदाशिवपदारविन्दवन्दनकन्दलितानन्दसान्द्रस्य कुरविकुलचन्द्रस्य
रामकवीन्द्रस्य कृतौ चम्पूभारतव्याख्याने लास्याभिधाने
द्वितीयः स्तबकः ।

---

१. 'उपनीय' इति पाठः. २. 'भागात्' इति पाठः. ३. 'नरपतौ' इति पाठः. ४. 'अभजन्' इति पाठः.

## तृतीयः स्तवकः ।

पितृव्यवाचाथ पृथातनूजो हरिं पुरोधाय समं बलौघैः ।
परस्परस्नेहमिवैष मातुं प्रस्थं ययौ खाण्डवशब्दपूर्वम् ॥ १ ॥

तत्र वनीभवति [1] वनीपकजनमनीषितपूरकपूरुकुलावनीपसुरसुरभिगोष्ठीगौष्ठीने देशे [2] स्मरणमात्र[3]कृतसंनिधानेन सकलशिल्पपारदृश्वना [4] विश्वकर्मणा स्वकर्मणा [5] निर्मापितं रामणीयकावलोकन[6]सुलभविस्मयभारगुरुतरानमरान्वोढुमक्षमतया क्ष्मातलम[7]वलम्बमानैर्विमानैरिवाभ्रंलिहं कुरुविन्दमणिमन्दिरै[8]र्जम्भरिपुनिदेशेन लम्भिततन्ना-[9]

---

पितृव्येति । अथार्धराज्याभिषेकानन्तरम् । एष पृथातनूजो धर्मराजः पितृव्यस्य पितृभ्रातुर्धृतराष्ट्रस्य वाचा 'इन्द्रप्रस्थे वस' इत्यात्मिकया परस्परस्य स्नेषां दुर्योधनादीनां च स्नेहं प्रेमरसं मातुं प्रमाणीकर्तुमिवेत्युत्प्रेक्षा । खाण्डव इति शब्दः पूर्वो यस्य नामनि तथोक्तं प्रस्थम् । इन्द्रप्रस्थं प्रतीत्यर्थः । 'खाण्डवो बलसूदनः' इतीन्द्रपर्यायेषु शब्दार्णवः । हरिं श्रीकृष्णं पुरोधायाग्रे कृत्वा बलौघैः समं ययौ । 'कुडवः प्रस्थ इत्याद्याः परिमाणार्थकाः पृथक्' इत्यमरः । उपजातिः ॥ १ ॥

तत्रेति । वनीपकजनस्य याचकजनस्य मनीषितानां कामितानां पूरकाः समग्रं संपादकाः पूरोर्नाम राज्ञः कुलं वंशो येषां ते च तेऽवनीपा राजानस्त एव सुरसुरभयः कामधेनवस्तासां गोष्ठी समूहस्तस्या गौष्ठीने पूर्वतनस्थाने । 'वनीपको याचनको मार्गणो याचकार्थिनौ', 'गोष्ठं गोस्थानकं तत्तु गौष्ठीनं भूतपूर्वकम्' इत्युभयत्राप्यमरः । तत्र देश इन्द्रप्रस्थभागे वनीभवत्यरण्यायमाने सति । चिराद्राज्ञामनावासादिति भावः । स्मरणमात्रेण कृतं संनिधानं समीपस्थितिर्येन तेन सकलानां शिल्पानां गृहादिनिर्माणव्यापाराणां पारदृश्वना पारंगतेन विश्वकर्मणा देवशिल्पिना ( कर्त्रा ) स्वेन स्वीयेनैव कर्मणा व्यापारेण । न त्वन्यदीयेनेत्यर्थः । निर्मापितं रचितम् । अतएव रामणीयकस्य तत्पुरसौन्दर्यस्यावलोकनेन सुलभो यो विस्मयभार आश्चर्यातिशयस्तेन गुरुतरानतिदुर्भरानमरान्देवान्वोढुमक्षमतयाशक्त्या क्ष्मातलं भूप्रदेशं प्रत्यवलम्बमानैर्विमानैर्देवयानैरिव स्थितैः कुरुविन्दमणिमयैर्मन्दिरैर्गृहैरभ्रंलिहमाकाशचुम्बि जम्भरिपोरिन्द्रस्य निदेशेनाज्ञया लम्भितं प्रापितं तस्येन्द्रस्य नाम इन्द्रसंज्ञायां उपपदं स्वसंज्ञायां पूर्वशब्दो यस्य तथोक्तम् । पूर्वतनराजभिरिति शेषः । पुरमिन्द्रप्रस्थमधिष्ठिताय । तत्र प्रविष्टायेत्यर्थः ।

---

१. 'वनीभवती' इति पाठः. २. 'देशे प्रविश्य' इति पाठः. ३. 'नयनपात्रेण' इति पाठः. ४. 'पारदृश्वकर्मणा' इति पाठः. ५. 'स्वकर्मणा' इति नास्ति क्वचित्. ६. 'कामनीयकविलोकन' इति पाठः. ७. 'क्ष्मातलम्' इति पाठः. ८. 'कुरुविन्दमणिमन्दिरैरभ्रंलिहम्' इति पाठः. ९. 'तन्नमो' इति पाठः.

मोपपदमिन्द्रप्रस्थमधिष्ठिताय युधिष्ठिराय निवेद्य स्वपुरेऽपि सुषमामीदृशीं परीक्षितुमिव स्यन्दनेन यदुनन्दनेन प्रयये ।

प्राणायमानमहिलानथ पाण्डुपुत्रा-
न्क्षोणाविमाननुजिघृक्षुरुदारभूमा ।
एणाजिनेन घटितोद्गमनीयकृत्यो
वीणाविनोदरसिको मुनिराविरासीत् ॥ २ ॥

तपोनिधेरागमनेन सद्यः सभा विभोः स्तब्धजनारवापि ।
वीणारवानुद्रुतभृङ्गमालाकोलाहलैर्घोषितदिङ्मुखाभूत् ॥ ३ ॥

---

युधिष्ठिराय निवेद्य स्वपुरं गच्छामीति विज्ञाप्य । स्वस्य पुरे द्वारकायामपीदृशीमिन्द्रप्रस्थसदृशीं सुषमां कान्तिविशेषं परीक्षितुमिवेत्युत्प्रेक्षा । यदुनन्दनेन श्रीकृष्णेन स्यन्दनेन रथेन प्रयये प्रस्थितम् । रथमारुह्य श्रीकृष्णः प्रस्थितवानित्यर्थः । यातेर्भावे लिट् । 'स्मरणमात्रनयनपात्रेण' इति पाठान्तरम् । 'कुरुविन्दः पद्मरागः' इत्यमरः ॥

**प्राणायमानेति** । अथ कृष्णगमनानन्तरमुदारो महान्भूमा प्रभावो यस्य सः । 'अपारभूमा' इति पाठे अपारो निरवधिको भूमा प्रभावो यस्य तथोक्त इत्यर्थः । एणाजिनेन मृगचर्मणा घटितमुद्गमनीयस्य धौतवस्त्रद्वयस्य कृत्यमुत्तरीयान्तरीयकार्यं यस्य स वीणाविनोदरसिको मुनिर्नारदः प्राणवदाचरतीति प्राणायमाना महिला येषां तान् । प्राणतुल्यद्रौपदीकानित्यर्थः । इमान्पाण्डुपुत्राननुगृहीतुमिच्छुरनुजिघृक्षुः सन् । गृह्णातेः सन्नन्तादुप्रत्ययः । क्षोणौ पाण्डवावासभूमावाविरासीत्साक्षाद्बभूव । वसन्ततिलकावृत्तम् ॥ २ ॥

**तपोनिधेरिति** । विभोर्धर्मराजस्य सभा तपोनिधेर्नारदस्यागमनेन सद्यः स्तब्धः शान्तो जनानां सभासदामारवः कलकलरवो यस्यां तथोक्तापि । वीणाया नारदमहत्या रवांस्तन्त्रीनादाननुद्रुताया अनुधावन्त्या भृङ्गाणां मालायाः पङ्क्तेः कोलाहलैर्झङ्कारैर्घोषितानि मुखरितानि दिशां मुखानि अग्रभागाः यस्यास्तथोक्ताभूत् । अत्र शान्तेऽपि कोलाहले सभायाः पुनस्तद्वत्त्वकथनात्पूर्वरूपालंकारभेदः । 'पूर्वावस्थानुवृत्तिश्च विकृते सति वस्तुनि' इति लक्षणात् । यत्तु 'वीणारवानुद्रवणं भृङ्गाणां रवसाम्यात्सजात्यभ्रान्त्या' इति नृसिंहः, तदबोधात् । यतस्तेषां परिमलानुधावनमेव लोकसिद्धं कविकुलक्षुण्णं च । 'आलापकालसमपल्लविताङ्क' इत्यत्र ग्रन्थकारेणापि 'सौरभ्यपातिमधुपारव—' इत्युक्तम् । एवं च वीणारवाननु तत्समकालमेव द्रुतानामित्यर्थः । गानमाधुर्येण वीणायाः सद्यः कुसुमितत्वादिति व्याख्येयम् । अन्यथा प्रसिद्धिविरोधत्वदोषापत्तेरिति । वृत्तमुपजातिः ॥ ३ ॥

---

२. 'इरिप्रस्थम्' इति पाठः. ३. 'अधिष्ठाय' इति पाठः. ४. 'विनिवेद्य' इति पाठः. ५. 'अपारभूमा' इति पाठः. ६. 'निनाद' इति पाठः.

दृष्ट्वा नृपो देवमुनिं विनीतो मौलिस्रजां धूलिमधूलिवृन्दैः ।
सपङ्कमाधाय तदङ्घ्रियुग्मं विपङ्कमात्मानमयं व्यतानीत् ॥ ४ ॥

मेध्यां वृसीमधिगतस्य विरिञ्चिसूनो-
रास्थाय संविधिमुदारमुदां कुरूणाम् ।
तस्याद्भुतागमनहेतुपरिच्छिदायां
चित्तानि दूरपथवर्तनतामवापुः ॥ ५ ॥

निकुञ्चिते तेन धृता निजाङ्के विपञ्चिका मौनमवाप्य तस्थौ ।
पाञ्चालिकावन्दनवादशैलीमाधुर्यमाकर्ण्य विलज्जितेव ॥ ६ ॥

राज्ञामुना समुचितेषु सभाजनेषु
पात्रैश्च पाणिविधृतैः प्रचलैश्च वेत्रैः ।

---

दृष्ट्वेति । अयं नृपो धर्मराजो देवमुनिं नारदं दृष्ट्वा विनीतो विनयान्वितः सन् । मौलौ किरीटे । 'मौलिर्मूर्धकिरीटयोः' इति विश्वः । स्रजां पुष्पमालिकानां संबन्धिभिर्धूलीनां परागाणां मधूलीनां मकरन्दानां वृन्दैस्तस्य नारदस्याङ्घ्रियुग्मं पादयुगलं सपङ्कं पङ्केन सहितमाधाय कृत्वा । तं नमस्कृत्येत्यर्थः । आत्मानं विपङ्कं निष्पापं व्यतानीदकरोत् । तनोतेः कर्तरि लुङ् । 'पङ्कः कर्दमपापयोः' इति विश्वः । अत्र नारदनमस्कारकरणस्य विशेषणगत्या निष्पापत्वकरणहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् । वृत्तमुपजातिः ॥ ४ ॥

मेध्यामिति । मेध्यां पवित्रां वृसीं कुशादिनिर्मितासनम् । 'व्रतिनामासनं बृसी' इत्यमरः । अधिगतस्य । तत्रोपविष्टस्येत्यर्थः । विरिञ्चेर्ब्रह्मणः सूनोर्नारदस्य । 'सूनुः पुत्रेऽनुजे रवौ' इति विश्वः । संनिधिं समीपमास्थाय प्राप्य । उदारा महती मुत् आनन्दो येषां कुरूणां युधिष्ठिरादीनां चित्तानि तस्य अद्भुते आकस्मिकत्वादत्याश्चर्यकरे आगमने यो हेतुः कारणं तस्य परिच्छिदायां निष्कर्षे विषये दूरपथे वर्तनतां स्थितिमवापुः । सुदीर्घालोचनपराण्यासन्नित्यर्थः । वसन्ततिलका वृत्तम् ॥ ५ ॥

निकुञ्चित इति । निकुञ्चित आकुञ्चिते निजे स्वीयेऽङ्के । 'निजमात्मीयनित्ययोः' इति विश्वः । तेन नारदेन धृता निहिता विपञ्चिका महती वीणा । पाञ्चालिकाया द्रौपद्या वन्दनवादः 'भोः, पाञ्चाली अहमभिवादये' इति वचस्तस्य शीलमेव शैली आचारः । उच्चारणमिति यावत् । तस्या माधुर्यमाकर्ण्य विशेषेण लज्जितेवेत्युत्प्रेक्षा । मौनं तूष्णींभावमवाप्य तस्थौ स्थिता । अत्र वीणामौनस्य पाञ्चाल्युक्तिमाधुर्याकर्णनजनितलज्जाहेतुकत्वोक्तेर्हेतूत्प्रेक्षा । वृत्तमुपजातिः ॥ ६ ॥

राज्ञेति । धातृसूनुर्नारदोऽमुना राज्ञा धर्मराजेन ( कर्त्रा ) पाणिभिः परिजन-

---

१. 'तमङ्घ्रियुग्मे' इति पाठः. २. 'विरञ्चि' इति पाठः. ३. 'चपलैः' इति पाठः.

निर्वर्तितेषु रभसेन निवर्तितेषु
स्मित्वा मिथो गिरमभाषत धातृसूनुः ॥ ७ ॥
लाक्षागृहाद्यदच्यावि साक्षादिव रतिः प्रिया ।
यद्व्यवाहि च युष्माभिस्तद्द्वयं हि सतां मुदे ॥ ८ ॥
स्वतो भातमतीनां वः कुतो वान्यानुशासनम् ।
मौनं तु सुहृदाख्येये दूनं वक्तारमादिशेत् ॥ ९ ॥
अष्टमी किल शिखा वधूरियं भाति याजमखवेदिबर्हिषः ।
यूयमभ्रसरितावृतान्वयाः पावनः खलु भवत्समागमः ॥१०॥

---

हस्तैर्विधृतैः पात्रैः पूजाद्रव्यभाजनैः (करणैः) सम्यगुचितेष्वर्हेषु सभाजनेषु पूजनेषु निर्वर्तितेषु कृतेषु सत्सु । 'आनन्दनसभाजने' इत्यमरः । किं चेति चार्थः । पाणिविधृतैः कञ्चुकिहस्तगृहीतैः प्रचलैर्वेत्रैर्दण्डैः । सभायां जनेषु सभासत्सु रभसेन निवर्तितेषु निःसारितेषु सत्सु मिथो रहसि स्थित्वा । 'मिथोऽन्योन्यं रहस्यपि' इत्यमरः । गिरं वक्ष्यमाणामभाषतोक्तवान् । यत्तु 'सभाजनानामर्घ्यादिपूर्वकं धनादिभिर्बहुमानं कृत्वा तेषु यापितेषु सत्सु' इति नृसिंहः, तन्मन्दम् । प्रक्रान्तनारदपरित्यागेन पूजायां तेषां प्रसक्त्यभावादिति । वसन्ततिलकावृत्तम् ॥ ७ ॥

लाक्षेति । हे कुरवः, युष्माभिर्लाक्षागृहात् । तद्दाहादित्यर्थः । अच्यावि मुक्तं इति यत् । च्यवतेर्भावे लुङ् । किं च साक्षाद्रतिः स्मरपत्नीव स्थिता प्रिया द्रौपदी व्यवाहि ऊढा इति यत् । विपूर्वाद्वहतेः कर्मणि लुङ् । तद्द्वयं लाक्षागृहमुक्तिर्द्रौपदीपाणिग्रहणं च सतां मुदे संतोषाय भवति । परेषामापद्भङ्गे श्रेयःसङ्गे च सन्तः संतुष्यन्तीति भावः ॥ ८ ॥

स्वत इति । स्वत आत्मनैव भाता भास्वत्प्रतिभाशालिनी मतिर्येषां तेषाम् । अर्थानर्थचिन्तनसमर्थसहजबुद्धिमतामित्यर्थः । वो युष्माकमस्य संबन्धि अन्यानुशासनं कर्तव्याकर्तव्यशिक्षणं कुतो हेतोः । वाशब्दो ह्यर्थकः । न कुतोऽपीत्यर्थः । तर्हि कुतोऽनुशास्सीत्यत आह—मौनमिति । किं तु सुहृदां मित्राणामाख्येये वक्तव्ये विषये । 'सुहृद्दुर्हृदौ मित्रामित्रयोः' इति निपातनात्साधुः । मौनं (कर्तृ) वक्तारं कथनसमर्थं जनं दूनं कथनीयाकथनेन संतप्तमादिशेत्कुर्वीत । 'आवहेत' इति पाठेऽप्येवमेवार्थः । सुहृदां कथनीयस्य समयेऽकथने सति कदाचिद्विपत्तौ सत्यां जानतापि तदा किमिति नोक्तमिति सुहृद्दूयत इत्यर्थः ॥ ९ ॥

अष्टमीति । इयं वधूर्द्रौपदी याजेन मुनिना यो मखो यज्ञः । तत्कारितपुत्रकामेष्टिरिति यावत् । तत्संबन्धिन्यां वेदौ वेदिकायां बर्हिषोऽग्नेः । 'बर्हिः शुष्मा कृष्णवर्त्मा' इत्यग्निपर्यायेष्वमरः । अष्टमी सप्ताधिका शिखा किल

---

१. 'आवहेत' इति पाठः.

जायया च पतिभिश्च कदाचिज्ज्ञायते स्म नहि दम्पतिशब्दः ।
अद्भुतस्य खलु तस्य जगत्यामर्थतामनुभवन्ति भवन्तः ॥ ११ ॥

एकस्मै स्पृहयालूनामिष्टाय सुधियामपि ।
करस्थमेव ब्रुवते कलहं निधनावधिम् ॥ १२ ॥

सुन्दोपसुन्दौ सहजावभीकौ सुरेष्विव क्वापि सुराङ्गनायाम् ।
अन्योन्यमाहत्य पुरा यमस्य मनोभवेषोरिव लक्ष्यमास्ताम् ॥ १३ ॥

---

ज्वाला खलु । तद्वदतिपवित्रेत्यर्थः । किलशब्दः संभावनायाम् । भाति प्रकाशते । हे पाण्डवाः, यूयं अभ्रसरिता गङ्गया वृतो वहुमानितोऽन्वयो वंशो येषां तथोक्ताः किल । चन्द्रवंशश्च भवदीयो गङ्गावदतिनिर्मल इत्यर्थः । एतद्वंशस्य शन्तनोर्गङ्गया वृतत्वादित्यपि चाहुः । भवती च भवन्तश्च भवन्तस्तेषां तादृश्या द्रौपद्यास्ता-दृशानां युष्माकं समागमो दाम्पत्यसंवन्धः पावनोऽतिपवित्रः खलु । उभयवंश-शुद्धत्वादिति भावः । 'हिरण्या कनका रक्ता कृष्णा चैवाथ पिङ्गला । वहुरूपाति-रक्ता च सप्तजिह्वाः प्रकीर्तिताः ॥' इत्यत्र जिह्वाशब्दः शिखापर एवेति बोध्यम् । रथोद्धतावृत्तम् ॥ १० ॥

जाययेति । जायया भार्यया एकया पतिभिर्वहुभिश्च दम्पतीति शब्दः कदा-चिदपि नहि जायते स्म न व्यवह्रियते स्म । किं त्वेकयैव जायया एकेनैव पत्ये-त्यर्थः । भवन्तो द्रौपदी यूयं च उभये तु जगत्यां लोके अद्भुतस्य भार्याया एक-त्वेऽपि वहुत्वात्पतीनामाश्चर्यकरस्य तस्य दम्पतीशब्दस्यार्थतां वाच्यत्वमुक्तविधम-नुभवन्ति । आश्रयन्ति खल्वित्यर्थः । 'शेषे प्रथमः' इति भवच्छब्दस्य प्रयोगा-त्प्रथमपुरुषः । दम्पतीत्यत्र जायाशब्दस्य दम्भावः । स्वागतावृत्तम् ॥ ११ ॥

ततः किमित्यत आह—एकस्मा इति । एकस्मै इष्टाय भोग्यवस्तुने स्पृह-यालूनां स्पृहान्वितानां सुधियां कर्तव्याकर्तव्यकोविदानामपि । किमुतान्येषामि-त्यर्थः । निधनावधिं मरणान्तं कलहं युद्धं करस्थं हस्तगतमेव ब्रुवते वदन्ति । बुधा इति शेषः ॥ १२ ॥

उक्तार्थेऽनुभूतार्थं दृष्टान्तयति—सुन्देति । पुरा पूर्वस्मिन्काले सुन्दोपसुन्दौ नाम सहजौ भ्रातरौ क्वापि कस्यांचित्सुराङ्गनायामप्सरसि तिलोत्तमाख्यायां सुरेषु देवेष्विवाभीकौ कामुकौ निर्भीकौ च सन्तौ । 'अभीकः कामुके क्रूरे शंभौ च भयवर्जिते' इति विश्वः । अन्योन्यमाहत्य मनोभवेषोः कामबाणस्येव । पुरेति काकाक्षिन्यायेन योज्यम् । प्रथममित्यर्थः । यमस्य लक्ष्यं वेध्यं चक्षुर्विषयश्च । आस्ता-मभूताम् । हतावित्यर्थः । पुरा किल सुन्दोपसुन्दौ नाम राक्षसौ ब्रह्मणो वराद-नितरवध्यौ तद्वधाय सृष्टां तिलोत्तमां कामयन्तौ ममैवेयं ममैवेयमिति मिथो विरुध्य युद्ध्वा मृताविति भारती कथात्रानुसंधेया । अत्र श्लेषभित्तिकाभेदाध्य-वसिताभीकत्वधर्मेण सुरसुराङ्गनानां सुन्दोपसुन्दलक्ष्यकत्वेन यमकामबाणयोरौ-पम्यस्य गम्यत्वात्तुल्ययोगितादृयमङ्गाङ्गिभावेन संकीर्णम् । वृत्तमुपजातिः ॥१३॥

तत्सौभ्रात्रशरव्यस्य द्वैधीकरणकेलये ।
भवतां मारचापेषू भवतां मा वधूकृते ॥ १४ ॥

इति रहस्यं तपस्विनिदेशं शुभोदर्कं तर्कयन्तस्ते कौन्तेयास्तस्यैव समक्षमसिधारासगन्धां संधामिमामाबबन्धुः ।

एते वयं चातका इव जीवनमयं वर्षमेकैकमवलम्ब्य प्रियया सममनया सुखेन वत्स्यामः ।

तथाभूतेष्वस्मासु यो मिथुनकृतोपवेशे देशे दृशापि प्रविशेत्सोऽयं वृजिनं विहातुमजिनं परिधाय सुकृतसार्थसमर्थापकतीर्थपरिमृष्टास्वष्टासु दिक्षु तन्त्रिगुणसंख्यान्पक्षान्क्षपयेदिति ।

---

प्रकृते विवक्षितार्थमाह—तदिति । तत्तस्माद्भवतां भ्रातॄणां संबन्धिनः शोभनानां भ्रातॄणामिदं सौभ्रात्रं भ्रातृस्नेहः तदेव शरव्यं लक्ष्यं तस्य द्वैधीकरणं द्विधाभञ्जनमेव केलिः क्रीडाव्यापारस्तस्यै मारस्य मन्मथस्य चाप इषुश्च धनुर्बाणौ वधूकृते । वधूर्द्रौपदी तां निमित्तीकृत्येत्यर्थः । मा भवताम् । द्रौपदीनिमित्तकमान्मथविकारेण भ्रातृस्नेहो मा भज्यत्वित्यर्थः । परम्परितरूपकम् ॥ १४ ॥

इतीति । इत्युक्तप्रकारं रहसि भवं रहस्यं तपस्विनो नारदस्य निदेशमाज्ञावाक्यं शुभं सौभ्रात्रवर्धनात्मक उदर्कं उत्तरकालफलं यस्मात्तथोक्तं तर्कयन्तो भावयन्तः सन्तः । अतएव ते कौन्तेयास्तस्य नारदस्य समक्षमेव । तमेव साक्षीकृत्येत्यर्थः । असेः खड्गस्य धारयाग्रबलेन सगन्धां सदृशीम् । दुर्लङ्घ्यामिति यावत् । इमां वक्ष्यमाणां संधां प्रतिज्ञामाबबन्धुर्निबद्धवन्तः । 'संधा प्रतिज्ञा मर्यादा' इत्यमरः । अत्र नारदनिदेशस्य शुभोदर्कत्वभावनाया विशेषणगत्या प्रतिज्ञाबन्धहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् ॥

एत इति । एते पञ्चैकपत्नीका वयं चातकाः पक्षिविशेषा इव जीवनमयं मिथोविरोधनिरोधेन जीवनहेतुतया जीवनात्मकम् । 'आयुर्जीवितकालो ना' इत्युक्तत्वादायुरात्मकमिति । अन्यत्र उदकविकारं च । 'जीवनं जीवितेऽम्बुनि' इति विश्वः । एकैकं वर्षं संवत्सरं वृष्टिं चावलम्ब्य स्वीकृत्य । अनया प्रियया पञ्चानां पत्न्या द्रौपद्या समं सुखेन वत्स्यामः स्थास्यामः ॥

तथेति । तथाभूतेपूक्तप्रतिज्ञावलम्बिष्वस्मासु यः । अस्माकमन्यतम इत्यर्थः । मिथुनेन स्त्रीपुंसाभ्यां कृत उपवेशः शयनं यस्मिंस्तस्मिन्देशेदृशा दृष्ट्यापि प्रविशेत् । तं पश्यति चेदित्यर्थः । सोऽयं मिथुनोपवेशद्रष्टा अस्माकमन्यतमो वृजिनं पापं तद्दर्शनजन्यम् । 'कलुषं वृजिनैनोऽघम्' इत्यमरः । विहातुं परिहर्तुमजिनं

---

१. 'परिपुष्टासु' इति पाठः. २. 'संख्याकान्' इति पाठः. ३. 'प्रक्षिपेदिति' इति पाठः.

राजा निदेशकृदभूदिति धातृसूनो-
रन्तर्मुदो निरवधेरिदमास चिह्नम् ।
यत्तस्य पाणिरकरोन्मृदुकण्ठगीते-
र्वीणागुणे विवशरिङ्खणमङ्गुलीनाम् ॥ १५ ॥

तस्मिन्नभःसरणिमुत्पतिते मुनीन्द्रे
सा तेषु पञ्चसु समं ववृते मृगाक्षी ।
सांक्रन्दनेषु विटपिष्विव दानलक्ष्मी-
र्मानोभवेषु जयसिद्धिरिवाशुगेषु ॥ १६ ॥

विप्रः कश्चन तत्र जात्वथ भुजावुद्धृत्य चोरैर्हृता
गावो मे निखिला हतोऽस्मि विधिना वत्सोऽपि नो शिष्यते ।
राजन्राज्यमिदं विमुञ्च वसुधां शास्सीति सर्वान्नृपा-
न्किंवा हासयसीति रोषकटुवाग्द्वारं ययौ भूपतेः ॥ १७ ॥

---

मृगचर्म परिधाय धृत्वा सुकृतसार्थस्य पुण्यराशेः समर्थापकैः संपादकैस्तीर्थैर्नदनदीसरोभिः परिमृष्टासु पवित्रास्वष्टासु दिक्षु तासामष्टदिशां त्रिगुणा त्रिरावृत्ता संख्या चतुर्विंशत्यात्मिका येषां तान् । तस्या अष्टत्वसंख्यायास्त्रिगुणसंख्यानिति वा । पक्षान्पञ्चदशतिथ्यात्मकान्क्षपयेत् । संवत्सरं तीर्थयात्रया गमयेदित्यर्थः । इत्युक्तप्रकारां संधामाबबन्धुरिति पूर्वेणान्वयः ॥

**राजेति ।** मृद्वी सुकुमारा । मधुरेति यावत् । कण्ठस्य गीतिर्गानं यस्य तस्य नारदस्य पाणिः । वीणायाः गुणे तन्त्र्याम् । इति जात्येकवचनम् । महत्याः शततन्त्रीकत्वेन प्रसिद्धेरिति भावः । अङ्गुलीनां विवशमस्वायत्तं रिङ्खणमारोहणावरोहणात्मकं स्खलनमकरोदिति यत्तदिदं यत्नं विनैव स्खलनम् । राजा धर्मराजो निदेशकृत् स्वाज्ञाकारी अभूदित्युक्तप्रकाराया निरवधेरनन्ताया धातृसूनोर्नारदस्यान्तर्मनसि मुदः संतोषस्य चिह्नं ज्ञापकमास अभूत् । संतुष्टा विनैव संकल्पं गायन्तीति भावः । अत्र विवशाङ्गुलीस्खलनेनान्तर्मुदोऽनुमानादनुमानालंकारः । वसन्ततिलकावृत्तम् ॥ १५ ॥ इति नारदसंवादः ॥

**तस्मिन्निति ।** तस्मिन्मुनीन्द्रे नभःसरणिमाकाशमार्गं प्रत्युत्पतिते । गते सतीत्यर्थः । सा मृगाक्षी द्रौपदी पञ्चसु तेषु पाण्डवेषु दानलक्ष्मीर्वितरणसंपत्सांक्रन्दनेष्विन्द्रसंबन्धिषु विटपिषु कल्पकादिवृक्षेष्विव जयसिद्धिर्मानोभवेषु मन्मथसंबन्धिष्वाशुगेष्वरविन्दादिबाणेष्विव । उभयत्र पञ्चस्विति योज्यम् । सममविशेषं ववृते वर्तते स्म । वर्ततेः कर्तरि लिट् । उपमाद्वयस्य संसृष्टिः ॥ १६ ॥

**विप्र इति ।** तत्रेन्द्रप्रस्थे जातु कदाचित् । निखिला मे मम गावश्चोरैर्हृताः ।

---

१. एतदनन्तरम् 'इति नारदसंवादः' इति क्वचित्. २. 'इमान्' इति पाठः. ३. 'हासयति' इति पाठः.

दृष्ट्वा तं मधुरस्मितोऽथ विजयः कृत्वासनादुत्थितिं
नत्वाङ्घ्रौ समवेक्ष्य भृत्यमिह मां ब्रह्मन्सहस्व क्षणम् ।
गावस्ते स्वयमाव्रजेयुरधुनेत्याश्वास्य दस्यून्पुरः
प्राविक्षन्मनसा ततस्तु नृपतेः शस्त्राय गेहं स्वयम् ॥ १८ ॥

तत्र तेन जगृहे तरस्विना चक्षुषा नृपतिरङ्गनासखः ।
पाणिना च सशरं शरासनं पूर्तये सपदि विप्रवासयोः ॥ १९ ॥

विनिर्गतोऽसौ विशिखानिव स्वका-
न्विमुक्तजीवान्विरचय्य तस्करान् ।
नितान्तवेगामिव गोपरम्परां
निवर्तयामास शुचं द्विजन्मनः ॥ २० ॥

---

विधिना दैवेन प्राक्तनदुष्कृतेन वा हतोऽस्मि । वत्स एकवत्समात्रमपि नो शिष्यते नावशिष्टम् । हे राजन् युधिष्ठिर, इदमीदृगुपद्रवभूयिष्ठं राज्यं विमुञ्च त्यज । वसुधां राज्यं शास्सि दुष्टनिग्रहशिष्टानुग्रहरूपपालनं करोमि । इति सर्वान्। पालनसमर्थानपीत्यर्थः । नृपान्राज्ञः किं वा कुतो हासयसि सर्वेऽपीदृशा एव राजान इत्युपहासं कारयसि । जनैरिति शेषः । इत्युक्तप्रकारेण भुजावुद्धृत्य रोषेण कटुवः परुषा वाचो यस्य तथोक्तः कश्चन विप्रो भूपतेर्धर्मराजस्य द्वारं ययौ प्राप्तवान् । शार्दूलविक्रीडितवृत्तम् ॥ १७ ॥

दृष्ट्वेति । अथ विप्रागमनानन्तरं विजयोऽर्जुनो मधुरस्मितः कृतदरहासः सन्। तं ब्राह्मणं दृष्ट्वा आसनादुत्थितिमुत्थानं कृत्वा । उत्थायेत्यर्थः।अङ्घ्रौ तत्पादे नत्वा नमस्कृत्य । हे ब्रह्मन्, भृत्यं मां सम्यगवेक्ष्य इहेदानीं क्षणं सहस्व क्षमस्व । ते तव गावोऽधुना स्वयमाव्रजेयुर्गृहं प्रत्यागच्छेयुः । इत्याश्वास्य विशोकं कृत्वा । तमित्यनुषज्यते । पुरः प्रथमं मनसा दस्यूंश्चोरान्प्राविक्षत्प्रविवेश । चिन्तितवानित्यर्थः। ततोऽनन्तरं शस्त्रायायुधमादातुम् इति 'क्रियार्थ–'इत्यादिना संप्रदानत्वम् । नृपतेर्धर्मराजस्य द्रौपदीसहितस्य गेहमुपवेशगृहं स्वयमात्मना प्राविक्षत् । विशतेः कर्तरि लुङ् । आर्तत्राणसत्वरा न गणयन्त्यात्मीययोगक्षेमाविति भावः ॥ १८ ॥

तत्रेति । तत्र नृपोपवेशगृहे तरस्विना बलवता, आर्तत्राणत्वरावता वा । 'बले शौर्ये तरः क्लीवम्' इति विश्वः। सपदि द्रुतं विशेषेण प्रवासः परदेशस्थितिः। विप्रस्य वासो गृहं तयोर्द्वयोरपि पूर्तये पूरणार्थम् । एकत्र तीर्थयात्रया, अन्यत्र गोधनेनेति भावः । चक्षुषाङ्गनासखो द्रौपदीसहितो नृपतिर्धर्मराजो जगृहे । दृष्ट इत्यर्थः । पाणिना सशरं शरासनं धनुश्च जगृहे गृहीतम् । गृह्णातेः कर्मणि लिट् ॥ १९ ॥

विनिर्गत इति । असौ गृहीतशरासनोऽर्जुनो विनिर्गतः पुरान्निष्क्रान्तः सन्स्वकान्स्वीयान्विशिखान्बाणानिव तस्करांश्चोरान् उभयानपि विमुक्ता त्यक्ता

प्रयाणनम्रे तदनु स्वमौलौ पार्थस्य जज्ञे नियमाभिषेकः ।
प्रागेव तीर्थोपगमात्पवित्रैर्बाष्पैर्नरेन्द्रस्य वियोगभीरोः ॥ २१ ॥

स धीरधीरत्युच्छ्रितेन कृच्छ्रेण राज्ञा कृताभ्यनुज्ञो वल्कलं घनं घनाघलङ्घनाय परिधाय मलयानिल इव मनुष्यधर्मणा राजन्वतीं काष्ठां प्रतिष्ठमानस्तपःप्रसादितस्य भगवतो भवानीवल्लभस्य साक्षात्कृपामिव भगीरथरथपथानुसारिणीं तरंगिणीमुपगम्य तत्र पवित्रासु वीचिषु सायंतननियमाय ऋचोऽघमर्षणीर्जपन्मज्जनमकार्षीत् ।

---

जीवा मौर्वी यैस्तथोक्तान् त्यक्तप्राणधारणांश्च विरचय्य कृत्वा । 'जीवा जीवन्तिका भूमिर्मौर्वी जीवितवृत्तिषु' इत्यमरः । नितान्तोऽत्यन्तो वेगः चोरप्रकालनात्वरा तैक्ष्ण्यं च यस्यास्तां द्विजन्मनो ब्राह्मणस्य गवां परम्परां पङ्क्तिमिव शुचं दुःखं उभयमपि निवर्तयामास प्रत्यावर्तितवान् नाशितवांश्च । अत्र बाणानां चोराणां च श्लेषमित्तिकाभेदाध्यवसितविमुक्तजीवत्वेन गोपरम्परायाः शुचश्च निवर्तनेन चौपम्यस्य गम्यत्वात्तुल्ययोगिताद्वयस्याङ्गाङ्गिभावेन संकरः । वंशस्थवृत्तम् ॥२०॥

**प्रयाणेति** । तदनु ब्राह्मणगोनिवर्तनानन्तरं प्रयाणार्थं तीर्थयात्राभ्यनुज्ञानार्थं नम्रे नते । इति तादर्थ्ये षष्ठीसमासः । पार्थस्य स्वमौलौ आत्मनः शिरसि वियोगाद्भीरोस्त्रस्तस्य । तद्विरहमसहमानस्येति यावत् । नरेन्द्रस्य धर्मराजस्य पवित्रैर्निर्दोषैर्बाष्पैर्नियमाभिषेको व्रतस्नानम् । अत्रापि पूर्ववत्समासः । तीर्थानां गङ्गादीनामुपगमात्प्राप्तेः प्राक्पूर्वमेव जज्ञे जात इवेत्युत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या । असंबन्धे संबन्धरूपातिशयोक्तिसंकीर्णा च । वृत्तमुपजातिः ॥ २१ ॥

**स इति** । धीरा सुखे दुःखे वा अविकृता धीर्मनो यस्य तथोक्तः । अतएव सोऽर्जुनः । राज्ञा धर्मराजेनात्युच्छ्रितेन कृच्छ्रेण महता दुःखेन घनाघस्य मिथुनोपवेशदर्शनजनितस्य पापस्य लङ्घनाय निवृत्तये कृताभ्यनुज्ञा तीर्थयात्रानुमतिर्यस्य तथोक्तः सन् । 'राज्ञो गृहीताभ्यनुज्ञः' इति पाठे राज्ञो धर्मात्मनो गृहीताभ्यनुज्ञा येन तथोक्तः सन्नित्यर्थः । घनं सान्द्रं वल्कलं परिधाय धृत्वा मनुष्यधर्मणा कुबेरेण राजन्वतीं सुराजवतीं काष्ठामुत्तरदिशं प्रति मलयानिल इव प्रतिष्ठमानो गच्छन् । तपसा प्रसादितस्यानुग्रहं प्रापितस्य भगवतो भवानीवल्लभस्य साम्बशिवस्य साक्षान्मूर्तां कृपां दयामिव स्थितां भगीरथस्य राजर्षे रथपथं रथमार्गमनुसरतीत्यनुसारिणीं तरंगिणीं गङ्गानदीमुपगम्य प्राप्य सायंतनाय सायंकालोचिताय नियमाय । तत्र गङ्गायां पवित्रासु वीचिष्वघमर्षणीः पापभञ्जनीः ऋचः । 'समुद्रज्येष्ठाः सलिलस्य मध्यात्' इत्याद्यीर्जपन्पठन्सन् मज्जनमवगाहमकार्षीत्कृतवान् । करोतेः कर्तरि लुङ् । उपमोत्प्रेक्षयोः संसृष्टिः ॥

---

१. 'राज्ञो गृहीताभ्यनुज्ञो' इति पाठः. २. 'कल्कलङ्घनाय' इति पाठः. ३. 'रथानुसारिणीम्' इति पाठः.

नालीकात्कुवलयसंक्रमे स्खलित्वा
मग्नाधः पयसि रमेव तत्र काचित् ।
तं दृष्ट्वा भुजगसुता मिथो रिरंसुः
संतुष्टा हृदयमिवानयत्स्वगेहम् ॥ २२ ॥

प्रहृष्य हृदि तत्रैषा मनुष्यं फणिनां रतैः ।
संतर्पयितुमारेभे कंदर्पसममर्जुनम् ॥ २३ ॥

भोगाय तस्या भुजगेन्द्रपुत्र्याः फूत्कार एव स्फुटसीत्क्रियासीत् ।
कस्तूरिकाङ्कोऽजनि कैण्ठनैल्यं फणामणिः पल्लवशेखरोऽभूत् ॥२४॥

पाण्योर्ज्यामर्शकाठिन्यं तस्य तत्कुचमर्दने ।
तस्याश्च तन्मुखास्वादे फलायाभूद्द्विजिह्वता ॥ २५ ॥

---

**नालीकादिति** । तत्र गङ्गायां नालीकात्पद्मात् । सायमिति शेषः । कुवलयमुत्पलं प्रति संक्रमे प्रवेशे स्खलित्वा मध्ये निपत्य । पयसि अधो मग्ना निमग्ना रमा लक्ष्मीरिव स्थिता काचिद्भुजगसुता नागकन्या उलूपिका नाम तमन्तःस्नानाय मग्नमर्जुनं दृष्ट्वा मिथो रहसि रन्तुमिच्छू रिरंसुः सती । रमतेः सन्नन्तादुप्रत्ययः । हृदयं स्वचित्तमिव संतुष्टा सती स्वगेहमनयत्प्रापयामास । अत्रानयनेन मनःसदनयोरौपम्यस्य गम्यत्वात्केवलप्रकृतास्पदा तुल्ययोगिता । प्रहर्षिणीवृत्तम् ॥ २२ ॥

**प्रहृष्येति** । तत्र स्वगृहे एषा उलूपिका हृदि मनसि प्रहृष्य संतुष्य कंदर्पसमं मन्मथतुल्यं मनुष्यमर्जुनं फणिनां सर्पाणां संबन्धिभी रतैः संभोगैः सम्यक्तर्पयितुं तृप्तिं प्रापयितुमारेभ उपक्रान्तवती । आङ्पूर्वाद्रभेः कर्तरि लिट् । 'मनुष्यफणिनां रतैः' इति पाठे मनुष्याणां फणिनां च संबन्धिभी रतैरित्यर्थः । तयोरेकस्याः सर्पत्वादन्यस्य मनुष्यत्वाच्चेति भावः ॥ २३ ॥

**भोगायेति** । तस्या भुजगेन्द्रपुत्र्या उलूपिकाया भोगाय संभोगसुखार्थम् । इति पादत्रयं वाक्यत्रयेऽपि योज्यम् । फूत्कारः सर्पजातीयनिश्वासः स्फुटा सीत्क्रिया सीत्कार आसीत् । कण्ठनैल्यं तज्जातीयं कस्तूरिकाया अङ्कश्चिह्नमलंकारः । अजन्यासीत् । फणायां मणिः पल्लवमयः शेखरः शिरोभूषणमभूत् । स्त्रीणामलंकारस्यापि प्रियानुरञ्जनेन तदुपभोगसाधनत्वाद्भोगायेत्युक्तम् । वृत्तमुपजातिः ॥ २४ ॥

**पाण्योरिति** । तस्यार्जुनस्य पाण्योर्ज्यामर्शेन मौर्वीघर्षणेन यत्काठिन्यं किणीभूतत्वेन दार्ढ्यं तत् (कर्तृ) तस्या उलूपिकायाः कुचयोर्मर्दने विषये, तस्या उलूपिकाया द्विजिह्वता तस्यार्जुनस्य मुखास्वादे अधरचुम्बने विषये च फलायाभूत् । उभयोरुभयमुभयत्रोपकारकमासीदित्यर्थः । अत्रार्जुनपाणिकाठिन्यभुजगकन्याद्विजिह्वत्वयोरुभयत्रोपकारकथनेन कुचकाठिन्याधरमाधुर्ययोर्लोकोत्तरत्वप्रतीतेर्वस्तुध्वनिद्वयस्य संसृष्टिः ॥ २५ ॥

---

१. 'उत्सेहे' इति पाठः. २ 'कण्ठकान्तिः' इति पाठः.

सुखाच्चक्षुःश्रवस्तन्व्याः सुरते मीलनं दृशोः ।
चक्रे मणितवैदग्ध्यं तस्य काननकौमुदीम् ॥ २६ ॥
श्लाघाकम्पात्प्रियरतेः शिरसोऽन्तःपथादधः ।
च्युतो मणिरिवेरावान्सुषुवे तनयस्तया ॥ २७ ॥
इत्येकिकां स रजनीमपनीय तत्र
श्वासैः समं स्वकुलसंभवपृष्ठमित्रैः ।
मुक्तस्तया तटगतोऽनुचरान्द्विजाती-
नन्तर्वतोऽद्भुतरसैरतनोत्स्ववृत्त्या ॥ २८ ॥
उलूपिकाया रतिदंशनैस्तैरुन्मस्तकं मोहमिवापनेतुम् ।
उदग्रवीर्यौषधिजन्मभूमिमुमागुरुं शैलमयं प्रपेदे ॥ २९ ॥

**सुखादिति** । चक्षुषी एव श्रवसी श्रोत्रे यस्यास्तस्यास्तन्व्या उलूपिकाया दृशो-र्नेत्रयोः संबन्धि सुरते सुखादानन्दान्मीलनं ( कर्तृ ) तस्यार्जुनस्य मणितेषु रतिकूजितेषु वैदग्ध्यं चातुर्यं कानने कौमुदीं चन्द्रिकां चक्रे । तस्याश्चक्षुषोरेव श्रोत्रत्वा-त्तन्मीलनस्य श्रोत्रपिधानात्मकतया मणिताकर्णनायोगादर्जुनस्य तद्वैदग्ध्यं निष्फ-लमभूदित्यर्थः । 'चक्षुःश्रवाः काकोदरः फणी', 'मणितं रतिकूजितम्' इत्युभयत्राप्यमरः ॥ २६ ॥

**श्लाघेति** । तयोलूपिकया प्रियस्यार्जुनस्य रतेः सुरतस्य श्लाघायामभि-नन्दने कम्पाद्धेतोः शिरसोऽन्तःपथादन्तर्मार्गाच्च्युतो मणिः फणारत्नमिव स्थित इरावान्नाम तनयः सुषुवे प्रसूतः । उत्प्रेक्षा ॥ २७ ॥

**इतीति** । इत्युक्तप्रकारेण तत्र नागकन्यागृहे सोऽर्जुन एकामेवैकिकां रजनीं रात्रिमपनीय गमयित्वा तया स्वकुलसंभवानां सर्पाणां पृष्ठस्य मित्रैः सदृशैः । तद्वदतिदीर्घैरिति यावत् । श्वासैः समं निःश्वासैः सह मुक्तः सन् । 'दर्वीकरो दीर्घपृष्ठः' इति सर्पपर्यायेष्वमरः । तटगतो गङ्गातीरं प्राप्तश्च सन् । अनुचराननु-यातृकान्समस्तान्द्विजातीन्ब्राह्मणान् । स्वस्य वृत्त्या वृत्तान्तेन हेतुना अद्भुतरसैर-न्तर्वतः सगर्भानतनोत् । आश्चर्यपूर्णहृदयांश्चक्र इत्यर्थः । तनोतेः कर्तरि लङ् । 'अन्तर्वत्नी तु गर्भिणी' इत्यमरः । वसन्ततिलकावृत्तम् ॥ २८ ॥

**उलूपिकाया इति** । अयमर्जुन उलूपिकायाः सर्पकन्यायाः संबन्धिभिस्तैः प्रसिद्धै रतौ दंशनैर्दन्तक्षतैरुन्मस्तकं मूर्धानमतिक्रान्तं मोहं विषकृतविकारम् । तद्दन्तानां सविषत्वादिति भावः । अपनेतुमिवेत्युत्प्रेक्षा । उदग्रं महद्वीर्यं विष-विकारवारणशक्तिर्यासां तासामोषधीनां लतामूलिकादीनां जन्मभूमिमुत्पत्ति-स्थानमुमायाः पार्वत्या गुरुं पितरं शैलं हिमवन्तं प्रपेदे प्राप्तवान् । गङ्गातटादिति शेषः । वृत्तमुपजातिः ॥ २९ ॥

१. 'मणितवैदग्धी' इति पाठः ।

फालस्य पञ्चविशिखे पदयोः कृतान्ते
हासस्य दानवपुरेष्ववलोकनस्य ।
शम्बायुधे पशुपतेरपदानपद्यं
गायन्ति सिद्धमिथुनान्यशृणोत्स तस्मिन् ॥ ३० ॥

तत्र[2] तस्य हिमाचलस्य खरखुरपुटविनिमयविन्यासचन्द्रकितैरवतारपथैरपि रोमन्थफेनशकलतारकितैः प्रतीरनमेरुतलोपवेशैरप्यनुमेयहरवृषभस्वैरविहारासु कटकसरसीषु वृजिनानि विशोध्य वनमदावलकलभविदलितसरलद्रुमप्रवालपरिमलसुरभिलेनोपत्यकावर्त्मना दिवि भुवि भरणकुशलाभ्यां महेन्द्राभ्यां परिगृहीतां हरितमवजगाहे ।

फालस्येति । तस्मिन्हिमशैले सोऽर्जुनः पञ्चविशिखे मन्मथे फालस्य ललाटनयनसंबन्धि, कृतान्ते यमे पदयोः संबन्धि, दानवपुरेष्वाकाशगतेषु हासस्य संबन्धि शम्बो वज्रमायुधं यस्य तस्मिन्निन्द्रेऽवलोकनस्य संबन्धि, पशुपतेर्यदपदानं प्राक्तनं दाहादि कर्म यस्य पद्यं तद्बोधकश्लोकौ । इति जात्येकवचनम् । गायन्ति गानं कुर्वाणानि सिद्धानां देवयोनिविशेषाणां मिथुनानि द्वन्द्वान्यशृणोत् । सिद्धदम्पतीगीयमानशैवमन्मथदाहादिप्रतिपादकप्रबन्धाञ्श्रुतवानित्यर्थः । वसन्ततिलका वृत्तम् ॥ ३० ॥

तत्रेति । तत्र हिमशैले सोऽर्जुनः खरास्तीक्ष्णाः खुराः पुटा इव तेषां विनिमयविन्यासैः पर्यायप्रक्षेपैश्चन्द्रकितैः संजातार्धचन्द्राकृतिचिह्नैः । तारकादित्वादितच् । अवतारपथैरवरोहणमार्गैः रोमन्थाच्चर्वितग्रासपुनश्चर्वणाद्यत्फेनं डिण्डीरं तस्य शकलैः खण्डैस्तारकितैः संजाततारकैः प्रतीरनमेरूणां तटरुहच्छायाद्रुमाणां तलेषु मूलभागेषूपवेशैरपि शयनैश्चानुमेयास्तर्क्या हरवृषभस्य स्वैरविहारा इच्छाविहारा यासु तासु तस्य हिमशैलस्य कटकसरसीषु नितम्बसरःसु वृजिनानि विशोध्य पापान्यपनुद्य वनमदावलकलभैररण्यगजबालकैर्विदलितानां भञ्जितानां सरलद्रुमप्रवालानां देवदारुकिसलयानां परिमलैः सुरभिलेन सुगन्धवता उपत्यकायां पर्वतासन्नभूमौ वर्त्मना । 'उपत्यकाद्रेरासन्ना भूमिः' इत्यमरः । दिवि स्वर्गे भुवि च भरणे पालने वहने च कुशलाभ्यां समर्थाभ्यां महेन्द्राभ्यामिन्द्रेण पर्वतेन द्वाभ्यां परिगृहीतां भार्यात्वं प्रापितां हरितं दिशं प्राचीमवजगाहे प्राप्तवान् ॥

१. 'भालस' इति पाठः. २. 'तत्र तत्र स तस्य' इति पाठः. ३. 'खर' इति नास्ति क्वचित्. ४. 'तरलसरल' इति पाठः.

संफुल्यमाननवकेतकपांसुगर्भैः[1]
पर्यन्तनिर्झरजलैः फलिताभिषेकः[2]।
पार्थः स तत्र जनकाभिधयेव हृष्टः
पादे चिरं परिचचार गिरिं महेन्द्रम् ॥ ३१ ॥

निजे[3]नगरनिरीतो वासविर्दिक्षु सर्वा-
स्वपि परिणयहेतौ क्वापि यात्रामुहूर्ते।
जनकपरिगृहीता सा दिगित्येव तस्यां
कथमपि न स जातां कन्यकां पर्यणैषीत् ॥ ३२ ॥

जलधितटपदव्या झर्झरैश्चीरशब्दै-
रवमयमनुकुर्वन्राजतालीवनानाम्।
रतिपतिरथकारेणाद्रिणा लाञ्छितायां
दिशि विविधतटिन्यां दत्तचक्षुः प्रतस्थे ॥ ३३ ॥

---

**संफुल्यमानेति।** तत्र प्राग्दिशि स पार्थः संफुल्यमानानां भृशं विकसतां नवानां च केतकानां केतकीकुसुमानां पांसवः परागा गर्भे मध्ये येषां तैः पर्यन्तनिर्झराणां समीपस्थितप्रस्रवणानां जलैः फलितो लब्धोऽभिषेकः स्नानं यस्य तथोक्तः सन्। महेन्द्रं गिरिं जनकस्येवाभिधया महेन्द्रेत्याख्यया। हृष्ट इवेत्युत्प्रेक्षा। पादे चरणे प्रत्यन्तपर्वते च चिरं परिचचार शुश्रूषितवान्। परितः संचरति स्मेति च। 'पादो बुध्ने तुरीयांशे शैलप्रत्यन्तपर्वते। चरणे किरणे' इति नानार्थरत्नमालायाम्। अत्र चरणशुश्रूषाप्रत्यन्तपर्वतसंचारयोः श्लेषभित्तिकाभेदाध्यवसायमूलातिशयोक्तेरुक्तोत्प्रेक्षानुप्राणितत्वाद्वयोरङ्गाङ्गिभावेन संकरः ॥ ३१ ॥

**निजेति।** वासवस्येन्द्रस्यापत्यं वासविः सोऽर्जुनः सर्वासु चतसृषु दिक्षु परिणयानां विवाहानां हेतौ अतएव क्वापि कस्मिंश्चित्। अनिर्वाच्यशुभदायिनीत्यर्थः। यात्रामुहूर्ते प्रयाणलग्ने निजनगरात्स्वीयादिन्द्रप्रस्थान्निरीतः प्रस्थितः सन्नपि। सा दिक्प्राची जनकेनेन्द्रेण स्वपित्रा परिगृहीता ऊढेति हेतोः। तस्यां प्राच्यां कथमपि केनापि प्रकारेण जातां कन्यकां न पर्यणैषीन्नोढवान्। स्वस्वभावादिति भावः। परिपूर्वान्नयतेः कर्तरि लुङ्। अत्र दैविकस्य कलत्रालाभस्य स्वसत्वहेतुकत्वोक्तेर्हेतूत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या ॥ ३२ ॥

**जलधीति।** अयमर्जुनो रतिपतेर्मन्मथस्य रथं मलयमारुतं करोतीति तेनाद्रिणा मलयेन लाञ्छितायां चिह्नितायां विविधाः कृष्णागोदावरीकावेर्यादयो बहुविधास्तटिन्यो यस्यां तस्यां दिशि दक्षिणस्यां दत्तचक्षुः। तदभिमुखः सन्नित्यर्थः। अतएव झर्झरैस्तदात्मकैश्चीरस्य वल्कलस्य शब्दैः। वल्कलझर्झरध्वनिभिरिति

---

१. 'पंफुल्यमान' इति पाठः. २. 'कलिताभिषेकः' इति पाठः. ३. 'निज—' इति पद्यं क्वचिन्नास्ति.

अक्ष्णा प्रचारादतिवर्तमानमालोकमालोकमसौ पयोधिम् ।
तटेन गच्छंस्तरसोपलेभे चोलीहरिद्रासुरभीन्समीरान् ॥ ३४ ॥

शैलो गर्भे शिशुरिव भुवः शासनाद्यस्य शेते
वातापिं यो जठरदहने कल्पयामास[2] हव्यम् ।
क्षोणीनग्नंकरणमहिमा कोपलेशो यदीय-
स्तस्यावासं दिशमभिययौ तापसस्येन्द्रसूनुः ॥ ३५ ॥

---

यावत् । राजतालीवनानां तालीविशेषवनानां समुद्रतीरगाणां रवं झर्झरशब्द-मनुकुर्वन्सन् । जलधितटे समुद्रतीरे पदव्या मार्गेणोपलक्षितः प्रतस्थे प्रस्थित-वान् । प्रपूर्वात्तिष्ठतेः कर्तरि लिट् । मलयमारुतस्य मन्मथरथत्वम् 'मलयमरुदा-योधनरथः' इत्याद्यागमसिद्धम् । मालिनीवृत्तम् ॥ ३३ ॥

अक्ष्णामिति । असावर्जुनोऽक्ष्णां प्रचारादतिवर्तमानं दृष्टिपथमतिक्रम्य तिष्ठन्तं पयोधिं समुद्रमालोकमालोकं दृष्ट्वा दृष्ट्वा । आभीक्ष्ण्ये णमुलो द्विर्भावः । आश्चर्यादिति भावः । तटेन । समुद्रतीरमार्गेणेत्यर्थः । तरसा वेगेन गच्छन्सन् । चोलीनां चोलदेश्याङ्गनानां संबन्धिनीभिर्हरिद्राभिर्मुखकुचादिलिप्ताभिः सुरभीन्सु-गन्धान्समीरान्वायूनुपलेभे लब्धवान् । चोलदेशं प्रापेत्यर्थः । चोलदेशस्त्रीणां प्रायेण हरिद्रालेप इति प्रसिद्धिः । 'अक्ष्णां–' इत्येतच्छ्लोकः क्वचित्पुस्तकेषु न दृष्ट इति व्याख्याने लिखितः । वृत्तमुपजातिः ॥ ३४ ॥

शैल इति । इन्द्रसूनुरर्जुनो यस्यागस्त्यस्य शासनान्निदेशात् शैलो विन्ध्यः शिशुरिव भुवो गर्भे मध्ये कुक्षौ शेते च । वसतीत्यर्थः । अत्र वर्तमानार्थकक्रियो-गादद्यापि शैलस्तथैवास्त इत्याज्ञाया दुर्लङ्घ्यत्वं ध्वनितम् । योऽगस्त्यो वातापिं नाम दानवं विप्रभक्षकं जठरदहने जाठराग्नौ हव्यं हविः कल्पयामास चक्रे । इल्वलदत्तं मेषमांसरूपिणं तं भुक्त्वा जरितवानित्यर्थः । यस्यागस्त्यस्यायं यदीयः कोपस्य लेशः कणः न सर्वं इत्यर्थः । क्षोण्या भूमिकान्ताया नग्नंकरणो विवस्त्रकारी महिमा प्रभावो यस्य तथोक्तोऽभूत् । 'आढ्यसुभग–' इत्यादिना क्ष्योगात्ख्यचि खित्त्वात् 'अरुर्द्विषत्–' इत्यादिना मुम् । 'नग्नोऽवासा दिगम्बरः' इत्यमरः । तस्य तापसस्यागस्त्यस्यावासं निलयं दिशं दक्षिणामभिययौ प्राप्तवान् । अत्र वाक्यार्थत्रये कथात्रयं प्रसिद्धत्वाद्ग्रन्थगौरवभयाच्च न लिखितम् । अत्र शिशु-रिवेति वाक्यार्थे उपमा । इतरत्र वाक्यार्थद्वये वातापिहरणवाराशिपानयोर्भङ्ग्य-न्तरेण कथनात्पर्यायोक्तद्वयम् । त्रयाणां च विजातीयसजातीयानां संसृष्टिः । मन्दाक्रान्तावृत्तम् ॥ ३५ ॥

---

१. 'अक्ष्णां–' इति पद्यं क्वचिन्नास्ति. २. 'वर्तयामास' इति पाठः.

धृत्वा फलेषु सलिलानि कवेरजायाः
साम्यं परीक्षितुमिवाभ्रसरिद्गुणौघैः ।
अभ्रंलिहैर्निबिडितां तटनारिकेलै-
रालोक्य चोलवसुधामयमभ्यनन्दत् ॥ ३६ ॥

कालेन[1] संगततमां[2] कटुतामवेत्य
स्वर्गौकसा[3]मथ सुधारसनिःस्पृहाणाम् ।
[4]अभ्रंलिहः फलवतस्तटनारिकेला-
न्सह्यात्मजासलिलवैवधिकानमंस्त ॥ ३७ ॥

वाराशिवासजडमात्मवपुर्विशोष-
मानेतुमातपभरात्तटमुत्तरेण ।
लङ्कामिवागतवतीं निजपौरवर्जं
पार्थो विवेश नगरीमथ पाण्ड्यगुप्ताम् ॥ ३८ ॥

---

धृत्वेति । अयमर्जुनोऽभ्रसरितो गङ्गाया गुणानां माधुर्यधावल्यादीनामोघैर्वृन्दैः सह साम्यं परीक्षितुमिवेत्युत्प्रेक्षा । कवेरजाया कावेर्याः सलिलानि जलानि फलेषु धृत्वाभ्रंलिहैर्गगनस्पर्शिभिस्तटयोर्ये नारिकेला वृक्षास्तैर्निबिडितां पूर्णां चोलवसुधां चोलभूमिमालोक्याभ्यनन्दत्संतुष्टवान् । वसन्ततिलकावृत्तम् ॥ ३६ ॥

कालेनेति । कालेन चिरेण संगततमामत्यन्तसंजातां कटुतां काटवमवेत्य संभाव्य । अथ सुधायां कटुत्वसंभावनानन्तरं सुधाया अमृतस्य रसे माधुर्ये । सुधारसे अमृतरस इति वा । निःस्पृहाणां स्वर्गौकसां देवानामभ्रंलिहः फलवतस्तटनारिकेलान्सह्यात्मजासलिलस्य कावेरीजलस्य वैवधिकान्वार्तावहान् । 'वार्तावहो वैवधिकः' इत्यमरः । विविधः शिक्यद्वयसहितो दण्डविशेषो भारवहनसाधनं तेन हरति भारं । 'तेन वहति–' इति ठक् । अमंस्त तर्कितवान् । मन्यतेः कर्तरि लुङ् । चिरं पर्युषितानि मधुराणि कटूभवन्तीति प्रसिद्धिः । उत्प्रेक्षा । 'कालेन संगततमां–' इत्येतच्छ्लोको बहुषु न दृष्टः ॥ ३७ ॥

वाराशीति । अथ चोलदेशप्राप्त्यनन्तरं पार्थो वारां वारीणां राशिः समुद्रस्तस्मिन्वासेन स्थित्या जडं शैत्यान्वितम् । 'आपः स्त्री भूम्नि वार्वारि' इति जलपर्यायेष्वमरः । 'रो रि' इति रेफलोपः । आत्मनो वपुरातपस्य भरादतिशयाद्धेतोर्विशोषं शुष्कीभावमानेतुं प्रापयितुं तटमुत्तरेण समुद्रतीरस्योत्तरभागे । उत्तरतीर इति यावत् । 'एनपा द्वितीया' इति द्वितीया । निजैः पौरै राक्षसैर्वर्जं यथा तथागतवतीं लङ्कामिव स्थितामित्युत्प्रेक्षा । पाण्ड्येन राज्ञा गुप्तां रक्षितां नगरीं मणलूराख्यां विवेश प्राप्तवान् ॥ ३८ ॥

---

१. 'कालेन–' इति पद्यं क्वचिन्नास्ति. २. 'हन्त महता' इति पाठः. ३. 'अपि' इति पाठः. ४. 'अभ्रंलिहा' इति पाठः.

[1]मणलूरपुरे संपद्गुणलूनालकामदे ।
जनदृष्टिकृतानन्दो जगाम कुरुकुञ्जरः ॥ ३९ ॥

तत्र चित्राङ्गदा तेन व्यूढा राजकुमारिका ।
दर्शने दौहृदार्तौं च द्वयोरासीदनङ्गदा ॥ ४० ॥

एलालवङ्गतरुपिप्पलिकापटीर-
ताम्बूलिकाक्रमुकदम्पतिभावरम्याम् ।
उद्यानभूमिमुपगम्य तया स पार्थः
सुख्यन्पितुः पदममन्यत वल्वजेभ्यः ॥ ४१ ॥

दिवसे शुभंयुगुणकोरकिते दयितं हृदि स्थितमिवार्तिमती ।

---

मणलूरेति । इदं प्रक्षिप्तमपि व्याख्यायते—कुरुकुञ्जरोऽर्जुनः । 'स्युरुत्तरपदे व्याघ्रपुंगवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः ॥' इत्यमरः । संपदां गुणैर्धनकनकरत्नादिभिर्लूनो निरस्तोऽलकायाः कुबेरपुरस्य मदः समृद्धिकृतो येन तस्मिन्मणलूरपुरे जनदृष्टिभ्यः कृतो दत्त आनन्दो येन तथोक्तः सन् । जगाम संचचार । अत्र पुरस्यालकातिशायिसमृध्या विशेषणगत्यार्जुनसंचारहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् ॥ ३९ ॥

तत्रेति । तत्र पाण्ड्यनगर्यां द्वयोरर्जुनस्य स्वस्य च क्रमेण । दर्शने दौहृदार्तौ गर्भधारणे च । अनङ्गं मान्मथविकारं ददातीत्यनङ्गदा अङ्गदाभ्यां केयूराभ्यां रहिता अनङ्गदेति च । चित्राङ्गदा नाम राज्ञः पाण्ड्यस्य कुमारिका तेनार्जुनेन व्यूढा परिणीता आसीत् । द्वयोः क्रमेण दर्शने दौहृदार्तावनङ्गदापि । चकारोऽप्यर्थकः । स्वयं चित्राङ्गदेत्याश्चर्यमित्यर्थ इति प्राहुः । अत्रानङ्गदत्वेऽपि चित्राङ्गदेति विरोधाभासोऽलंकारः ॥ ४० ॥

एलेति । एलाया लताया लवङ्गस्य तरोः, पिप्पलिकाया लतायाः पटीरस्य तरोः, ताम्बूलिकाया लतायाः क्रमुकस्य तरोश्च, दम्पत्योर्भावेन दाम्पत्येन रम्यां मनोहराम् । लतानां स्त्रीत्वात्तरूणां पुंस्त्वाच्चेति भावः । उद्यानभूमिमुपगम्य प्राप्य स पार्थस्तया चित्राङ्गदया सह सुख्यन्सुखमनुभवन्सन् । 'सुखदुःखतत्क्रियायाम्' इति सुख्यतेः कण्ड्वादेर्यगन्ताल्लटः शत्रादेशः । पितुरिन्द्रस्य पदं स्वर्गं वल्वजेभ्यस्तृणविशेषेभ्योऽमन्यत । तानिवानादृतवानित्यर्थः । 'मन्यकर्मण्यनादरे' इति चतुर्थी । अत्र तादृगुद्यानविहारसौख्यस्य विशेषणगत्या स्वर्गतृणीकरणहेतुत्वात्पदार्थहेतुकेन काव्यलिङ्गेनोद्यानतरूणां कल्पवृक्षाधिकसौख्यदायित्वप्रतीतेरलंकारेण वस्तुध्वनिः । वसन्ततिलकावृत्तम् ॥ ४१ ॥

दिवस इति । अथ सा चित्राङ्गदा आर्तिमती गर्भधारिणी सती क्रमेणेति शेषः । शुभंयुभिः शुभान्वितैर्गुणैर्वारनक्षत्रयोगकरणैः कोरकिते । संगत इत्यर्थः ।

---

१. 'मणलूर–' इति पद्यं क्वचिन्नास्ति।

अवतार्य सा भुवि कुमारमधादथ बभ्रुवाहन इति प्रथितम् ॥ ४२ ॥

असावहंपूर्विकया प्रशंसतां सुतोदयं शोभनमीश्वरार्थिनाम् ।
ददौ तथा दक्षिणदेशवासिनां तमेव दायादमुदारतल्लजः ॥४३॥

इति स तत्र कानिचिद्दिनान्युषित्वा प्रयामीति भाषितस्य पक्ष्मावलम्बिबाष्पमेवोत्तरयन्तीं प्रेयसीं रहसि दृढालिङ्गनतरंगितवल्कलोत्तरीयमर्मरसहाध्यायिसीत्कार्तिं पुलकझर्झरे कपोलतले परिचुम्ब्य तस्याः कथंचिदुदञ्चितानुमतिर्निर्गत्य रक्षोयोधिभिरिक्ष्वाकुपतिसेनाध्यक्षैरुत्पाटितानां मलयदर्दुरमहेन्द्रपादानां मूलशिलातल-

---

दिवसे दिने हृदि हृदये वक्षसि वा स्थितं दयितं प्रियमर्जुनमिव स्थितं बभ्रुवाहन इति नाम्ना प्रथितं प्रसिद्धं कुमारं पुत्रमवतार्य जनयित्वा अवरोप्येति च । भुव्यधान्निहितवती पुपोषेति च । असह्यत्वे भुवि भारं निक्षिपन्तीति भावः । दधातेः कर्तरि लुङ् । अत्र बभ्रुवाहनेऽर्जुनत्वोत्प्रेक्षया तदीयशौर्यधैर्यादियावद्गुणसंपत्तिप्रतीतेरलंकारेण वस्तुध्वनिः । अत्र दुर्बोधविजृम्भिता नृसिंहकुस्पृष्टयो विस्तरभयान्न लिखिताः । प्रमिताक्षरा वृत्तम् ॥ ४२ ॥

**असाविति ।** उदारतल्लजो दातृषु प्रशस्तोऽसावर्जुनः । 'मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ । प्रशस्तवाचकान्यमूनि' इत्यमरः । अहं पूर्वमहं पूर्वमिति बुद्ध्या अहंपूर्विकया । शोभनं शुभकरं सुतस्य बभ्रुवाहनस्योदयमुत्पत्तिं प्रशंसतां स्तुवताम् । किंचेश्वरं स्वेषां राजानमर्थयन्ति याचन्तीति ईश्वरार्थिनां दक्षिणदेशवासिनां जनानाम् । तेभ्य इत्यर्थः । शेषत्वविवक्षया षष्ठी । तं दायादं सुतं बभ्रुवाहनं ददावेवेति योज्यम् । निसर्गवदान्यानां न किमप्यदेयमिति भावः । अत्रोदारतल्लज इति विशेषणस्य प्राणेभ्योऽपि प्रियत्वेनादेयस्यापि पुत्रस्य दानकरणाभिप्रायगर्भत्वात्परिकरालंकारः । वंशस्थवृत्तम् ॥ ४३ ॥

**इतीति ।** इत्युक्तप्रकारेण सोऽर्जुनः तत्र पाण्ड्यनगरे कानिचित्कतिपयानि दिनान्युषित्वा स्थित्वा प्रयामि गच्छामीति भाषितस्य वचनस्यार्जुनोक्तस्य पक्ष्मणोरवलम्बि वर्तमानम् । न तु पक्ष्मभ्यां पतदित्यर्थः । तथा सति पत्युरमङ्गलकरत्वादिति भावः । बाष्पं नयनजलमेवोत्तरयन्तीं प्रत्युत्तरं कुर्वन्तीं रहस्येकान्ते दृढमालिङ्गनेन तरंगितैर्जनितैरुत्तरीयवल्कलस्य मर्मरैर्ध्वनिभिः सहाध्यायिन्यः सदृश्यः सीत्कृतयः सीत्कारा दुःखजनिता यस्यास्तथोक्तां प्रेयसीं चित्राङ्गदां पुलकैः झर्झरे विषमे तस्याः कपोलतले परिचुम्ब्य कथंचिदतिकष्टेनोदञ्चिता कृतानुमतिर्गमनाभ्यनुज्ञा यस्य तथोक्तः सन् निर्गत्य । पाण्ड्यनगरादिति भावः । रक्षोभिः सह युध्यन्त इति तथोक्तैः । इक्ष्वाकुकुलपते रामस्य सेनाध्यक्षैः सेनापतिभिरङ्गदजा-

---

१. 'अभात्' इति पाठः. २. अयं श्लोको न दृश्यते क्वचित्. ३. 'इति तत्र दिनानि कानिचित्' इति पाठः. ४. 'सीत्कारम्' इति पाठः. ५. 'कपोले' इति पाठः.

परिदृश्यमानकराङ्गुलिनखरेखान्यावर्तितकुलिशभयोच्चलितशैलसंस्थानबुद्धिभिः संनिवेशावटैः स्थपुटितामटवीं विलङ्घ्य पुत्रीनिकाररुषा पुलस्त्यान्वयस्य पुरीमुन्मूलयितुं प्रसारितेन भुवो भुजेनेव सेतुना कृतसीमन्तमुदन्वन्तमभजत ।

समीक्ष्य सेतुं रघुवीरनिर्मितं स चित्रभित्तीकृतधीर्धनंजयः ।
दिनेशवंशस्य तपोविचारणे चिरावकाशं विततान चेतसि ॥४४॥

अन्धौ वानरपातिताचलशिलाभङ्गाभिघातैश्चिरा-
दक्ष्णान्धैः कुणिभिः करेण च पदा खञ्जैः पयोमानुषैः ।

---

म्ववदादिभिरुत्पाटितानामुद्धृतानां मलयदर्दुरमहेन्द्राणां शैलानां संबन्धिनां पादानां प्रत्यन्तपर्वतानां मूलशिलातलेष्वधःपाषाणप्रदेशेषु परिदृश्यमाना याः कराङ्गुलयस्तासां कराङ्गुलीनां नखरेखास्ताभिर्व्यावर्तिता निवर्तिता कुलिशाद्वज्रायुधाद्भयेनोच्चलितानामुत्थाय गतानां शैलानां संस्थानस्य निवेशस्थानस्य बुद्धिरूहो येषां तैः संनिवेशावटैः पर्वताधारगर्तैः स्थपुटितां निम्नोन्नताम् । 'गर्तावटौ भुवि श्वभ्रे', 'स्थपुटं तून्नतानतम्' इत्युभयत्राप्यमरः । अटवीं विलङ्घ्यातिक्रम्य पुत्र्याः सीताया निकारेणावमानेन या रुट् क्रोधस्तया हेतुना पुलस्त्यान्वयस्य रावणस्य पुरीं लङ्कामुन्मूलयितुं प्रसारितेन भुवो भुजेनेव स्थितेन सेतुना कृतः सीमन्तो मध्यरेखा यस्य तमुदन्वन्तं समुद्रं दक्षिणमभजत प्राप्तवान् । भजेः कर्तरि लुङ् ॥

**समीक्ष्येति** । स धनंजयोऽर्जुनो रघुवीरेण श्रीरामेण निर्मितं कारितं सेतुं समीक्ष्य चित्रमाश्चर्यमेवालेख्यमिति श्लिष्टरूपकम् । तस्य भित्तीकृता कुड्यभूता धीर्मनो यस्य तथोक्तः सन् । 'आलेख्याश्चर्ययोश्चित्रम्' इत्यमरः । दिनेशवंशस्य सूर्यवंशस्य तपसो विचारेण इदमेतादृगित्यालोचने विषये चेतस्यवकाशं चिरं वितताम विस्तारितवान् । कीदृग्वानेन तपः कृतं यदयमीदृक्प्रभावाभिरामो रामोऽप्यस्मिन्नवततारेत्यालोचितवानित्यर्थः । अत्र तादृक्सेतुदर्शनजनिताश्चर्यस्य विशेषणगत्या रविवंशतपश्चिरविचारणं प्रति हेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् । तस्य चोक्तश्लिष्टाश्लिष्टपरम्परितरूपकेण संसृष्टिः । वंशस्थवृत्तम् ॥ ४४ ॥

**अन्धाविति** । असावर्जुनोऽन्धौ वानरैर्हनूमज्जाम्बवदादिभिः पातितानाम् । सेत्वर्थमिति भावः । अचलानां पर्वतानां संबन्धिभिः शिलाभङ्गैः पाषाणखण्डैर्योऽभिघाताः प्रहारास्तैश्चिरात्प्रभृति अक्ष्णा चक्षुरिन्द्रियेणान्धैः करेणेन्द्रियेण कुणिभिः कुकरैः पदेन्द्रियेण खञ्जैः पङ्गुभिः पयोमानुषैर्जलमनुष्यैर्वीचीष्वेव

---

१. 'काठिनतरत्कराङ्गुलि' इति पाठः. २. 'उच्चालित' इति पाठः. ३. 'न्यक्कार' इति पाठः. ४. 'विततार चेतसा' इति पाठः.

वीचीवीथिषु कीर्त्यमानमनघं वृत्तं रघूणां प्रभो
श्लाघंश्लाघमसौ तटेन हरितं प्राचेतसीमभ्यगात् ॥ ४५ ॥

गोकर्णमेत्य स कुलाद्रिसुताप्रियस्य
पुष्पाणि मूर्ध्नि निदधे पुरुहूतसूनुः ।
आगामिनां निजशरासनताडनाना-
मत्रावकाश इति सूचयतेव दोष्णा ॥ ४६ ॥

गोपृष्ठलग्नं कुलशैलकन्यासहायमन्तः सततं दधानः ।
आश्चर्यमैक्षिष्ट तमेव देवं गोकर्णवासं कुरुराजसूनुः ॥ ४७ ॥

पापापनुत्यै परिकल्पितो यः प्रभासतीर्थे प्रथितोऽभिषेकः ।
सेतुं दृशा दृष्टवतोऽस्य सोऽसौ साध्यं विना जागरितो बभूव ॥४८॥

---

वीथिषु । 'वेदिषु' इति क्वचित्पाठः । उपविश्येति शेषः । कीर्त्यमानं गीयमानं न विद्यतेऽघं पापं यस्मात्तदनघं रघूणां प्रभोः श्रीरामस्य वृत्तं चरित्रं श्लाघंश्लाघं श्लाघित्वा श्लाघित्वा । आभीक्ष्ण्ये णमुल् । तटेन समुद्रप्रान्तमार्गेणोपलक्षितः प्रचेतसो वरुणस्येमां प्राचेतसीं हरितं प्रतीचीं दिशमभ्यगात्प्रस्थितवान् । गमे-रभिपूर्वात्कर्तरि लुङ् । अक्ष्णेत्यादिपदत्रये 'येनाङ्गविकारः' इति तृतीया । शार्दूलविक्रीडितं वृत्तम् ॥ ४५ ॥

**गोकर्णमिति** । स पुरुहूतसूनुः पार्थो गोकर्णं नाम शैवक्षेत्रमेत्य प्राप्य कुलाद्रिसुतायाः पार्वत्याः प्रियस्य शंभोर्मूर्ध्नि शिरसि आगामिनां कैरातयुद्धे भविष्यतां निजेन शरासनेन गाण्डीवेन ताडनानामत्रास्मिन्नेव भागेऽवकाश आस्पदमित्युक्तप्रकारेण सूचयता ज्ञापयतेव स्थितेनेत्युत्प्रेक्षा । दोष्णा हस्तेन पुष्पाणि निदधे निहितवान् । वसन्ततिलका वृत्तम् ॥ ४६ ॥

**गोपृष्ठेति** । गोर्वृषभस्य पृष्ठे लग्नमारूढं कुलशैलकन्यासहायं पार्वतीवल्लभ-मन्तर्मनसि सततं दधानो ध्यायन् कुरुराजसूनुरर्जुनस्तं गोपृष्ठलग्नमेव गोकर्णे वासो यस्य तम् । गोकर्णक्षेत्रवासमिति च । देवं साम्बशिवमाश्चर्यं यथातथा ऐक्षिष्टेक्षितवान् । श्लेषानुप्राणितो विरोधाभासः । वृत्तमुपजातिः ॥ ४७ ॥

**पापेति** । पापस्य मिथुनदर्शनजन्यस्यापनुत्यै निवारणार्थं प्रथितः प्रसिद्धः प्रभासनामतीर्थेऽभिषेकः स्नानं परिकल्पितः कृतः । अर्जुनेनेति शेषः । सोऽसौ प्रभासतीर्थेऽभिषेकः सेतुं रामनिर्मितं दृशा चक्षुषा दृष्टवतोऽस्यार्जुनस्य साधितुं योग्यं साध्यं फलं पापापनोदनात्मकं विना जागरितः प्रबुद्धो बभूव । फलान्तर-प्रवणः सन्नतिष्ठदित्यर्थः । 'सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां तरति' इत्यत्र ब्रह्म-हत्यापदस्य सर्वपापोपलक्षकत्वादिति भावः ॥ ४८ ॥

---

१. 'वेदिषु' इति पाठः. २. अत्र 'पापापनोदे' इति, 'पापापनुत्यै', 'गोपृ-ष्ठलग्नम्' इति च श्लोकक्रमः कुत्रापि. 'पापापनुत्यै' इति श्लोकः 'पापापनोदे' इति श्लोकस्य पाठान्तरं कल्पितं तत्र. ३. 'प्रथिते' इति पाठः. ४. 'स्पृष्टवतः' इति पाठः.

पापापनोदे फलितेऽर्जुनस्य प्रागेव सेतोरवलोकनेन ।
प्रभासतीर्थे नियमाभिषेकः पश्चात्सुभद्रागमहेतुरासीत् ॥ ४९ ॥
ततो घनाविर्भवनाद्धियेव तत्रामलं मानसमस्य भेजे ।
कर्णान्तरक्रौञ्चपथेन शोभायशोमरालो यदुकन्यकायाः ॥ ५० ॥
स्मृतिपथस्थितयापि सुभद्रया जनसमक्षमिवासितुमात्तभीः ।
द्विजकुलानि स तत्र समत्यजत्सहचराणि रतीशवशंवदः ॥ ५१ ॥
पयसा परिपूरितौ घटौ परिपश्यन्पथि पाकशासनिः ।
कमलाक्षकनीयसीकुचौ कलयामास करस्थिताविव ॥ ५२ ॥

---

तर्हि निष्फलत्वापत्तिस्तस्य नेत्याह—पापेति । अर्जुनस्य पापापनोदे प्राक्प्रभासतीर्थाभिषेकात्पूर्वमेव सेतोरवलोकनेन फलिते सिद्धे सति । पश्चात्प्रभासतीर्थे नियमाभिषेको व्रतस्नानं सुभद्रस्य श्रेष्ठशुभस्य सुभद्रायाश्च कृष्णकनीयस्या आगमे प्राप्तौ हेतुरासीत् । पापनाशः शुभं वा पुण्यस्य फलम् । तत्र पापस्यैवासत्त्वे तन्नाशरूपफलस्यासंभवाच्छुभरूपं फलं घटयतीति न निष्फलत्वमिति भावः ॥ ४९ ॥

तत इति । ततोऽनन्तरं घनानां मेघानां तत्कालस्य वा आविर्भवनादुदयाद्धिया भयेनेवेत्युत्प्रेक्षा । यदुकन्यकायाः सुभद्रायाः शोभायशः सौन्दर्येण कीर्तिरेव मरालो हंसस्तत्र प्रभासतीर्थेऽस्यार्जुनस्य संबन्धि अमलं मानसं मन एव मानसाख्यं सरः । 'मानसं सरसि स्वान्ते' इति विश्वः । कर्णयोरन्तरं मध्यरन्ध्रमेव क्रौञ्चपथः क्रौञ्चशैलरन्ध्रमार्गस्तेनोपलक्षितो भेजे विवेश । सुभद्रासौन्दर्यं कर्णाकर्णिकया श्रुतवानित्यर्थः । समस्तवस्तुवर्तिसावयवरूपकमुत्प्रेक्षानुप्राणितमिति द्वयोरङ्गाङ्गिभावेन संकरः । वर्षाकाले हंसा विहाय भारतं वर्षं मानसं प्रविशन्तीति प्रसिद्धिः ॥ ५० ॥

स्मृतीति । अथ सुभद्रासौन्दर्यस्मरणानन्तरं स्मृतिपथे संकल्पे स्थितयापि । किमुत समक्षस्थितयेत्यर्थः । सुभद्रया रतीशस्य मन्मथस्य वशंवदः परतन्त्रः । मन्मथविकारायत्तचित्त इति यावत् । अतएव स पार्थो जनानां समक्षमासितुं स्थातुमात्ता स्वीकृता भीर्भीतिर्येन तथोक्त इवेत्युत्प्रेक्षा । महतां मदनबाधाया गर्ह्यत्वादिति भावः । सहचराण्यनुयातृकाणि द्विजकुलानि ब्राह्मणवृन्दानि तत्र प्रभासतीर्थे समत्यजत् । अनुज्ञातवानित्यर्थः । संपूर्वात्त्यजतेः कर्तरि लङ् । द्रुतविलम्बितवृत्तम् ॥ ५१ ॥

पयसेति । पाकशासनिरर्जुनः पथि मार्गे पयसोदकेन परिपूरितौ पूर्तिं गमितौ घटौ कलशौ । जलपूर्णघटावित्यर्थः । परिपश्यन्सन् । करस्थितौ हस्तगतौ कमलाक्षस्य कृष्णस्य कनीयस्याः सुभद्रायाः कुचौ स्तनाविव कलयामास ।

---

१ 'नियमावगाहः' इति पाठः.

तदानीं खलु

चक्राङ्गीमदपश्यतोहरचलच्छम्पासमुन्मेषणैः
पुष्पत्केतकगन्धसिन्धुविलुठत्पुष्पंधयान्धीकृतैः ।
मेदस्वीकृतकेकिनीकलकलैर्मेघंकराशामुखैः
पान्थानामपमृत्युभिः कतिपयैः प्रादुर्बभूवे दिनैः ॥ ५३ ॥

कालाम्बुदालिनलिकात्क्षणदीप्तिवर्त्या
संधुक्षितात्सपदि सध्वनिनिःसरद्भिः ।
वर्षाश्मसीसगुलिकानिकरैः कठोरै-
र्घर्माभियातिमवधीद्घनकालयोधः ॥ ५४ ॥

---

कलयांबभूवेत्यर्थः । जलपूर्णकुम्भदर्शनं भाविशुभफलप्राप्तिहेतुरिति भावः । उत्प्रेक्षालंकारः ॥ ५२ ॥

तदानीं खलु द्विजकुलानुज्ञानसमय एवेत्यस्योत्तरेणान्वयः ॥

**चक्रेति** । चक्रं रथाङ्गमिवाङ्गं येषां तेषां स्त्रियश्चक्राङ्ग्यः । 'अङ्गगात्रकण्ठेभ्यो वक्तव्यः' इति ङीप् । तासां यो मदो दर्पोऽह्नि नैरन्तर्यसंभोगकृतस्तस्य पश्यतोहराणि प्रसह्यचोराणि । तद्दाम्पत्यसौख्यसर्वंकषलुम्पकानीति यावत् । 'वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु' इति षष्ठ्या अलुक् । 'पश्यतोऽर्थं हरति यः स चोरः पश्यतोहरः' इति हलायुधः । चलन्तीनां शम्पानां विद्युतां समुन्मेषणानि विलसनानि येषु तैः । सौरप्रकाश एव तासां तत्सौख्यमिति रामशापेन नियमनात्तस्य मेघैराच्छादने तत्प्रसक्ते दूरतोऽपास्तत्वादिति भावः । पुष्पतां विकसतां केतकानां केतकीकुसुमानां गन्धः सिन्धुः समुद्र एव तस्मिन्विलुठद्भिः संचरद्भिः पुष्पंधयैर्भृङ्गैरन्धीकृतैः । मलिनीकृतैरित्यर्थः । 'पाघ्राध्माधेट्दृशः शः' इति शप्रत्यये पृषोदरादित्वान्मुमि पुष्पंधय इति साधुः । मेदस्वीकृताः सान्द्रीकृताः केकिनीनां मयूराङ्गनानां कलकलाः केकाकोलाहला यैस्तैः मेघंकराणि मेघायमानान्याशानां दिशां मुखान्यग्रभागा येषु तैः । 'मेघर्तिभयेषु कृञः' इति खचि खित्त्वान्मुम् । पान्थानां प्रोषितानामपमृत्युभिः । तत्तुल्यैरित्यर्थः । कतिपयैस्त्रिचतुरैर्दिनैर्वार्षिकैः प्रादुर्बभूवे आविर्भूतम् । भावे लिट् । शार्दूलविक्रीडितं वृत्तम् ॥ ५३ ॥

**कालेति** । घनकालो वर्षाकाल एव योधो भटः क्षणदीप्तिस्तडिदेव वर्तिः साग्निरज्जुस्तया संधुक्षितात्संयोजितात्कालाम्बुदालेर्नीलमेघपङ्क्तेरेव नलिकादयो नालायुधविशेषात्सपद्यग्निसंयोजनक्षण एव सध्वनि सढांकारं यथातथा निःसरद्भिर्निर्गच्छद्भिः कठोरैर्दारुणैः कठिनैश्च । वर्षाश्मनां करकाणामेव सीसगुलिकानां

---

१. 'कलरवैः' इति पाठः.

माध्वीलिहा विरुरुचे मलिनीकृताग्रा
कान्दारसीम्नि नवकेतकवर्हरेखा ।
दग्धाञ्चले स्मरभिया दयिताजनेन
संप्रेषिता पथिकभर्तृषु पत्रिकेव ॥ ५५ ॥

अर्जुनेषु सकलेषु विकासिष्वद्रिसीम्नि धृततादृशशब्दः ।
एक एव विशुशोष विशेषादेतदम्बुभृदनेहसि चित्रम् ॥ ५६ ॥

वियत्यशेषासु विदिक्षु दिक्षु वियोगशिल्पीन्द्रविनिर्मितायाः ।
तस्या मृगाक्ष्याश्च तडित्ततेश्च धनंजयः संविविदे न भेदम् ॥५७॥

---

निकरैः समूहैर्घर्मं ग्रीष्मर्तुमेवाभियाति शत्रुमवधीद्धन्ति स्म । हन्तेः कर्तरि लुङि वधादेशः । समस्तवर्तिसावयवरूपकम् । वसन्ततिलकावृत्तम् ॥ ५४ ॥

**माध्वीति** । माध्वीलिहा भृङ्गेण मलिनीकृतमग्रं यस्याः सा नवा केतकवर्हरेखा केतकीकुसुमपत्रम् । 'रेखाकृतिदले वर्हम्' इत्यमरः । स्मराद्भिया भयेन हेतुना दयिताजनेन प्रोषितभर्तृकाजनेन पथिकेषु प्रवासिषु भर्तृषु पतिषु विषये संप्रेषिता अञ्चले अन्ते दग्धा पत्रिकालेख इव कान्तारसीम्नि वनप्रदेशे विरुरुचे रराज । विपूर्वाद्रोचतेः कर्तरि लुट् । आपद्यतिवेगमागमनायान्ते दग्धा पत्रिका प्रवासिभ्यः प्रेष्यत इति प्रसिद्धिः । उत्प्रेक्षा ॥ ५५ ॥

**अर्जुनेष्विति** । अम्बुभृतां मेघानां संबन्धिन्यनेहसि काले । वर्षाकाल इति यावत् । 'कालो दिष्टेऽप्यनेहापि' इत्यमरः । सकलेष्वर्जुनेषु ककुभवृक्षेषु पार्थेषु च विकासिषु प्रकाशवत्सु सत्सु । मुदितेषु सत्स्विति च । धृतस्तादृश्योऽर्जुन इत्याकारकशब्दः संज्ञापदं येन तथोक्तः । एकोऽर्जुन एव अद्रिसीम्नि रैवतकशैलप्रदेशे विशेषाद्भृशं विशुशोष शुष्कोऽभूदिति यत्, तदेतच्चित्रम् । सुभद्राचिन्तया कृशोऽभूदित्यर्थः । 'अर्जुनः ककुभे पार्थे' इति विश्वः । अत्रार्जुनत्वेऽपि वार्षिकावसरे विकासाभाव इति विरोधस्य पार्थत्वेन प्रमोदाभाव इति श्लेषेणाभासीकरणाद्विरोधाभासः । उत वार्षिकावसररूपकारणसत्त्वेऽपि श्लेषभित्तिकाभेदाध्यवसायमूलातिशयोक्त्या अर्जुने विकासरूपकार्यानुत्पत्तिरूपा विशेषोक्तिः । इत्युभयत्र साधकसाम्याच्छ्लेषानुप्राणितयोस्तयोः संदेहसंकरः ॥ ५६ ॥

**वियतीति** । वियत्याकाशेऽशेषासु सकलासु दिक्षु विदिक्षु दिक्संधिषु वियोगेन सुभद्राविरहेणैव शिल्पीन्द्रेण चित्रकारकश्रेष्ठेन विनिर्मिताया आलिखितायास्तस्या मृगाक्ष्याः सुभद्रायास्तडितां ततेः समूहस्य च भेदं विशेषं धनंजयोऽर्जुनो न संविविदे न ज्ञातवान् । विदेः कर्तरि लिट् । अत्र तडितां सुभद्राया व्यक्तितो भेदे प्रतीयमानेऽपीमास्तडित इयं सुभद्रेति विशेषज्ञानाभावस्य गुणसाम्यप्रयुक्तत्वात्सामान्यालंकारः । 'सामान्यं गुणसाम्येन विशेषो नोपलक्ष्यते' इति लक्षणात् । वृत्तमुपजातिः ॥ ५७ ॥

मान्मथे[1] ज्वलति वासवसूनुर्मानसे परिणये यदुपुत्र्याः ।
लाजवापमिव कर्तुमुपेन्द्रं तत्सगर्भ्यमथ चित्तमनैषीत् ॥ ५८ ॥

अणुमात्रमिदं सहेत वोढुं न हि विश्वंभरमद्य मामितीव ।
मनसोऽध्यवरुह्य[2] तस्य दृष्टेः पुरतः प्रादुरभूत्पुमान्पुराणः ॥ ५९ ॥

स्वस्य[3] चेष्टाकथानद्या द्वितीयर्तुगुणज्ञया ।
न बभूवे तयोस्तत्र नयनानन्दिनोर्मिथः ॥ ६० ॥

विजयो मधुरस्मितस्य भावं विदुषस्तस्य मतेन भिक्षुवेषः ।
कुसुमास्त्रभयादिवातिगूढः कुहरे रैवतकस्य तिष्ठति स्म ॥ ६१ ॥

---

मान्मथ इति । अथ वर्षाकालप्रादुर्भावानन्तरम् । वासवसूनुरर्जुनो यदुपुत्र्याः सुभद्रायाः संबन्धिनि मानसे संकल्पविषये परिणये । विवाहसमय इत्यर्थः । ज्वलति मान्मथे मन्मथविकारात्मकेऽग्नौ लाजवापं लाजहोमं वैवाहिकं कर्तुमिवेत्युत्प्रेक्षा । तस्याः सुभद्रायाः सगर्भ्यं सोदर्यमुपेन्द्रं श्रीकृष्णं चित्तं मानसं प्रत्यनैषीत्प्रापयामास । तत्रैवोक्तविवाहादिति भावः । दुह्यादित्वेन द्विकर्मकान्नयतेः कर्तरि लुङ् । लाजहोमस्य वधूसोदरकर्तृकत्वं प्रसिद्धम् । चिन्तितार्थानुकूल्याय हरिं सस्मारेति परमार्थः । स्वागतावृत्तम् ॥ ५८ ॥

अण्विति । पुराणः पुमान्कृष्णोऽणुमात्रमतिसूक्ष्ममिदमर्जुनस्य मनो विश्वंभरं ब्रह्माण्डधारिणम् । अतिदुर्भरमिति यावत् । मां वोढुमद्य न सहेत न क्षमेत । हिः अवधारणे । इतीव इत्यालोच्येवेत्युत्प्रेक्षा । तस्यार्जुनस्य मनसो हृदयादध्यवरुह्य दृष्टेः पुरतः प्रादुरभूदाविर्बभूव । भक्तपराधीनस्य हरेर्नैतदाश्चर्यमिति भावः । औपच्छन्दसिकवृत्तम् ॥ ५९ ॥

स्वस्येति । तत्र रैवतकाद्रौ तस्मिन्श्रीकृष्णप्रादुर्भावसमये वा । मिथो नयनानन्दिनोः परस्परमवलोकनजनितानन्दवतोस्तयोः कृष्णार्जुनयोः स्वस्यान्योन्यस्य चेष्टाकथया वृत्तान्तकथनेनैव नद्या द्वितीयस्य ऋतोर्ग्रीष्मस्य गुणं शोषणं जानातीति ज्ञया न बभूवे न भूतम् । भवतेर्भावे लिट् । वर्षासु सरिदिव तत्कथा ववृध इत्यर्थः । चिरात्संगमे सुहृदोः संलापोऽमृतायत इति भावः । रूपकालंकारः ॥ ६० ॥

विजय इति । विजयोऽर्जुनो भावं स्वाभिप्रायं सुभद्राविषयकं विदुषो जानतः अतएव मधुरं साकूतं स्मितं यस्य तस्य श्रीकृष्णस्य मतेनानुमत्या भिक्षोः संन्यासिन इव वेषो यस्य तथोक्तः सन् । कुसुमास्त्रान्मन्मथाद्भयादिव । रैवतकस्याद्रेः कुहरे गुहायामतिगूढः परैरलक्षितः सन् । तिष्ठति स्म । उत्प्रेक्षा । औपच्छन्दसिकवृत्तम् ॥ ६१ ॥

---

१. 'मन्मथे' इति पाठः. २. 'अभ्यवरुह्य' इति पाठः. ३. 'स्वस्व' इति पाठः.

कथं सुभद्राकमनीयतायाः कल्पेत नुत्यै कविरुन्नतोऽपि ।
चतुर्थमप्याश्रममस्य येन तां साधनीभूय दिदृक्षते स्म ॥ ६२ ॥
तदात्व एवाद्रितटात्पतिः श्रियः परिप्लवं तं प्रकृते शुभागमे ।
यदाशये ते शय एव तद्भवेदिति ब्रुवन्द्वारवतीं पुनर्ययौ ॥ ६३ ॥

तदनन्तरमहस्करमदतस्करमहा महान्मस्करी रैवतकं गिरिमुपस्कुरुते, तस्य नमस्करणमस्माकं श्रेयस्करणमिति पुरोधोजनबोधनात्कुतूहलिना हलिना नगरमानीयमानं बहिरपि ज्वलता विरहानल-

**कथमिति** । उन्नतश्चतुरोऽपि कविः । सुभद्रायाः कमनीयता सौन्दर्यं तस्या नुत्यै स्तुतिं कर्तुमिति 'क्रियार्थ–' इत्यादिना संप्रदानत्वम् । 'स्तवः स्तोत्रं स्तुतिर्नुतिः' इत्यमरः । कथं कल्पेत शक्तो भवेत् । न भवेदेवेत्यर्थः । येन कारणेन चतुर्थमाश्रमं यत्याश्रमोऽपि अस्यार्जुनस्य साधनीभूय सुभद्रावाप्तिकारणं भूत्वा तां सुभद्रां दिदृक्षते स्म द्रष्टुमैच्छत् । किमुतान्ये आश्रमाः, तत्रापि सचेतनाश्चेदित्यर्थः । 'आश्रमोऽस्त्री' इत्यनुशासनादाश्रमशब्दस्य क्लीबतया निर्देशः । अत्राङ्गनासङ्गप्रसङ्गमात्रासहस्याचेतनस्यापि यत्याश्रमस्य सुभद्रादिदृक्षायां सत्यामन्येषां तत्रापि सचेतनानां तद्दिदृक्षास्तीत्यत्र किमुतेति कैमुत्यन्यायसिद्धेरर्थापत्त्यलंकारात्मकवाक्यार्थेन कवीनां सुभद्रासौन्दर्यवर्णने सामर्थ्यनिषेधसमर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्गमिति द्वयोरङ्गाङ्गिभावेन संकरः । तेन च तत्सौन्दर्यस्य लोकातिशायित्वप्रतीतेरलंकारेण वस्तुध्वनिः । वृत्तमुपजातिः ॥ ६२ ॥

**तदात्व इति** । श्रियो लक्ष्म्याः रुक्मिणीरूपिण्याः पतिः श्रीकृष्णः प्रकृते शुभस्य सुभद्राविवाहरूपस्यागमे प्राप्तौ विषये परिप्लवं चञ्चलम् । भवेद्वा न भवेद्वेति सविकल्पमानसमिति यावत् । 'चञ्चलं चपलं चैव पारिप्लवपरिप्लवे' इत्यमरः । तमर्जुनं प्रति हे अर्जुन, ते तवाशयेऽभिप्राये यत्काङ्क्षितं वर्तते, तत् शय एव हस्त एव भवेदित्युक्तप्रकारेण ब्रुवन्कथयन्सन् । तदात्व एव तदानीमेवाद्रितटात्पुनर्द्वारवतीं द्वारकां प्रति ययौ गच्छति स्म । तदात्व एवेत्यनेन हरेर्भक्तवाञ्छितानुकूलनत्वरापारवश्यं ध्वन्यते । 'छन्दोऽभिप्राय आशयः', 'पञ्चशाखः शयः पाणिः' इत्युभयत्राप्यमरः ॥ ६३ ॥

**तदनन्तरमिति** । तदनन्तरं श्रीकृष्णस्य द्वारकाप्राप्त्यनन्तरमहस्करस्य सूर्यस्य यो मदस्तेजखिलाहंकारस्तस्य तस्करं लुम्पकं तत्सदृशं महस्तेजो यस्य तथोक्तः महान्मस्करी संन्यासी रैवतकं गिरिमुपस्कुरुतेऽलंकरोति । तत्रास्त इति यावत् । मस्करो वेणुदण्डोऽस्यास्तीति मस्करी । 'वेणुमस्करतेजनाः' इत्यमरः । तस्य संन्यासिनो नमस्करणं नमस्कारोऽस्माकं श्रेयसः करणं साधकतममित्युक्तप्रकारेण पुरोधोजनस्य पुरोहितजनस्य बोधनात्कुतूहलमस्यास्तीति कुतूहलिना हलिना बलरामेण नगरं प्रत्यानीयमानं प्रापयमाणं बहिरपि । किमुत

१. 'मह' इति पाठः. २. 'रैवतकगिरेः' इति पाठः.

ज्वालेनेव काषायवाससावगुण्ठितवपुषं सव्यसाचिशब्दमत्सरेण स्मरवीरेण प्रवासरन्ध्रमन्वीक्ष्य पन्नगपाण्ड्ययदुकुमारिकाणां कृते पृथगीरितां त्रिशरकाण्डीमिव त्रिदण्डीं बिभ्राणं निजपल्लवकोमलिमनिर्जयशोकादिव शुष्केण पटीरदारुणा पादुकीभूय परिचर्यमाणपादयुगलं तं कुहनाभिक्षुं संभ्रमेण वन्दमानेषु यदुवृन्देषु मुकुन्दोऽपि सविनयमुपागतश्चेतःपूर्णावशिष्टैः स्वसोदरीप्रेमरसैरिव तीर्थजलैः पिचण्डिलं कमण्डलुं तदीयपाणेरादाय 'भगवन्, इत इत एहि' इति राजभवनमुपनीय कन्यकान्तःपुरे निवेशयामास।

मार्गे शरत्रयममुष्य कृते विमुच्य
शेषं द्वयं पुनरिवोज्झितुमात्तलोभः।

---

मनसीति भावः। ज्वलता विरहानलज्वालेनेव स्थितेनेत्युत्प्रेक्षा। काषायवाससावगुण्ठितमाच्छादितं वपुर्यस्य तथोक्तम्। सव्येन हस्तेनापि साची बाणप्रयोक्तेत्यर्थके शब्दे संज्ञारूपे मत्सरेण द्वेषवता स्मरवीरेण मन्मथवीरेण प्रवासमेव रन्ध्रं प्रहर्तुमवकाशमन्वीक्ष्य विचार्य पन्नगकुमारिका उलूपिका, पाण्ड्यकुमारिका चित्राङ्गदा, यदुकुमारिका सुभद्रा, तासां कृते। तदर्थमित्यर्थः। पृथक्प्रत्येकमीरितां प्रयुक्तां त्रयाणां शराः काण्डा दण्डा इव तेषां समाहारं त्रिशरकाण्डीमिव स्थितां त्रिदण्डीं वैणवीम्। पूर्ववत्समासः। 'द्विगोश्च' इति ङीप्। बिभ्राणं दधतं निजपल्लवस्य कोमलिम्नो मार्दवस्य निर्जयेन यः शोकस्तस्मादिवेत्युत्प्रेक्षा। शुष्केण निर्द्रवेण पटीरदारुणा चन्दनकाष्ठेन पादुकीभूय पादुके भूत्वा परिचर्यमाणं शुश्रूषमाणं पादयोर्युगलं यस्य तथोक्तं तं कुहनाभिक्षुं मायासंन्यासिनमर्जुनं यदुवृन्देषु यादवसंघेषु संभ्रमेण वन्दमानेषु नमस्कुर्वत्सु सत्सु मुकुन्दः श्रीकृष्णोऽपि सविनयं यथातथोपागतः सन्। चेतसि पूरणादवशिष्टैः स्वसोदर्यां सुभद्रायां प्रेमसरसैरिव स्थितैः तीर्थजलैः पिचण्डिलं पूर्णं कमण्डलुं तदीयादर्जुनसंबन्धिनः पाणेरादाय स्वयं गृहीत्वा हे भगवन्, इत इत एहीति। वदन्निति शेषः। राजभवनमुपनीय प्रापय्य कन्यकान्तःपुरे निवेशयामास। उपमाया उत्प्रेक्षाचतुष्टयस्य च सजातीयविजातीययोः संसृष्टिः॥

**मार्ग इति।** तदनु कन्यान्तःपुरप्रवेशनानन्तरं स्मरो मन्मथो मार्गे तीर्थयात्रामार्गेऽमुष्य कृतेऽर्जुनार्थं शरत्रयम्। बाणपञ्चकमध्य इति शेषः। विमुच्य प्रयुज्य। उलूपिकाचित्राङ्गदासुभद्रास्वनुरागजननायेति भावः। शेषं द्वयं बाणयुगं

---

१. 'अन्विष्य' इति पाठः. २. 'पृथक्पृथक्' इति पाठः. ३. 'तरुणा' इति पाठः. ४. 'युगं' इति पाठः. ५. 'भावनाभिक्षुम्' इति पाठः. ६. 'अवशेषः' इति पाठः. ७. 'जलैः पूरितं' इति पाठः. ८. 'एहि' इति नास्ति क्वचित्. ९. 'कन्यान्तःपुरे' इति पाठः.

शुश्रूषितुं तदनु सोदरचोदिताया-
स्तन्व्याः स्मरो नयनमेव शरं व्यतानीत् ॥ ६४ ॥

वपुषा मधुरेण सुभ्रुवो[1] धनुषा चित्तभुवश्च[2] तर्जितः ।
तपसेव दिने दिने तनोस्तनिमानं जगृहे स मस्करी ॥ ६५ ॥

प्रतिनिश्वसिते दीर्घे पाणिना नासिकां स्पृशन् ।
भावयामास पार्थोऽयं प्राणायामसमापनम् ॥ ६६ ॥

प्रणवोच्चरणे पुरःप्रसर्पन्[3]प्रवभासे यतिनस्तदा[4]धरोष्ठः ।
मुहुरग्रगतावनीन्द्रपुत्रीमुखमास्वादयितुं किलोज्जिहानः[5] ॥ ६७ ॥

---

पुनरुज्झितुं प्रयोक्तुमात्तो लोभो येन तथोक्त इवेत्युत्प्रेक्षा । शुश्रूषितुमर्जुनयतेः परिचर्यां कर्तुं सोदराभ्यां रामकृष्णाभ्यां चोदितायाः प्रेरितायास्तस्याः सुभद्राया नयनं चक्षुरेव शरं व्यतानीद्बाणं चकार । तत्कटाक्षैरिक्षुचापरूक्षा क्षणे क्षणे संधुक्षिताभूदित्यर्थः । उत्प्रेक्षारूपकयोरङ्गाङ्गिभावेन संकरः । वसन्ततिलकावृत्तम् ॥ ६४ ॥

**वपुषेति** । स मस्करी कपटसंन्यासी मधुरेण कोमलेन मधुवता च सुभ्रुवः सुभद्राया वपुषा चित्तभुवः मन्मथस्य धनुषा पौष्पेण तर्जितः । संतापितः सन्नित्यर्थः । तपसेवेत्युत्प्रेक्षा । कपटसंन्यासिनो वस्तुतस्तपःप्रसक्त्यभावादिति भावः । तनोः शरीरस्य तनिमानं कार्श्यं जगृहे जगृहीतवान् । कृशोऽभूदित्यर्थः । एतेन पञ्चमी कृशता नाम मन्मथावस्थोक्ता । 'ततो घनाविर्भवनात्' इत्यत्र मनःसङ्गः, 'वियत्यशेषाशु' इत्यत्र दृक्सङ्गः, 'मन्मथे ज्वलति' इत्यत्र संकल्पः, 'विजयो मधुरस्मितस्य' इत्यत्र ह्रीत्यागश्च द्रष्टव्यः । वृत्तं वैतालीयम् ॥ ६५ ॥

**प्रतीति** । अयं पार्थो दीर्घे प्रतिनिश्वसिते निश्वासे पाणिना नासिकां स्पृशन्सन्प्राणायामस्य वायुधारणात्मकस्य तपसः समापनम् । समाप्तिबुद्धिमित्यर्थः । भावयामास जनयामास । पश्यतो जनस्येति शेषः । अन्यथा तैः स्वविकारस्य तर्क्यत्वापत्तेरिति भावः । अत्र नासिकास्पर्शनक्रियया प्राणायामसमाप्तिर्मया कृतेति भ्रान्त्युत्पादनेन मदनसंतापजनितनिश्वसितरूपमर्मोप्रकाशनाय परवञ्चनस्य कृतत्वाद्युक्तिरलंकारः । 'युक्तिः परातिसंधानं क्रियया मर्मगुप्तये' इति लक्षणात् ॥ ६६ ॥

**प्रणवेति** । तदा कपटयतित्वसमये प्रणवस्योंकारस्योच्चरणे पठने पुरः पुरस्तात्प्रसर्पन्प्रसरन् । यतिनः कपटसंन्यासिनोऽधर ओष्ठः । अग्रगताया अवनीन्द्रपुत्र्याः सुभद्राया मुखम् । अधरमित्यर्थः । आस्वादयितुं मुहुरुज्जिहान उत्थाय गच्छन् । किलेति संभावनायाम् । उत्पूर्वाज्जहातेस्ताच्छील्ये शानचि'श्लौ' इतिद्वित्वे

---

१. 'सुभ्रुवा' इति पाठः. २. 'चित्तभुवा' इति पाठः. ३. 'प्रसर्पद्' इति पाठः. ४. 'अधरोष्ठम्' इति पाठः. ५. 'उज्जिहानम्' इति पाठः.

कन्याकरे मृद्नति पादपद्मं पुष्यन्ति[1] गात्रे पुलकाङ्कुराणि[2] ।
हरे हरे माधव माधवेति हरिस्मृतेरन्यथयांचकार ॥ ६८ ॥

एकदा निर्वर्त्य प्रत्यवसानकृत्यं प्रतिक्षणमिक्षुचापक्षुरप्रसंतक्षणेन समन्तात्पतितैः सत्त्वगुणशकलैरिव स्वेद[3]विन्दुभिर्व्याकीर्णां चामूरवीं त्वचमध्यास्य विश्राम्यन्तं तं[4] कुहनासंन्यासिनं धवित्रेण वीजयन्ती सुभद्रा तैस्तैरिङ्गितैर्यतित्वे संशय्य तस्य तत्त्वजिज्ञासया सविनयमनुरहसि व्यजिज्ञपत् ॥

---

'भृज्ञामित्' इत्यभ्यासस्येत्वम् । प्रबभासे । अत्रार्जुनाधरस्य प्रणवोच्चारणक्रियानिमित्तेन सुभद्राधरोद्देश्यकतत्समीपगन्तृत्वोत्प्रेक्षणात्क्रियानिमित्ता स्वरूपोत्प्रेक्षा । वृत्तमौपच्छन्दसिकम् ॥ ६७ ॥

**कन्येति** । स पार्थः कन्यायाः सुभद्रायाः करे पादपद्मं मृद्नति प्रक्षालयति सति गात्रे स्वशरीरे पुष्यन्ति वर्धमानानि पुलकाङ्कुराणि हे हरे हरे माधव माधवेत्युक्तप्रकाराया हरिस्मृतेर्विष्णुकीर्तनं कृत्वेति ल्यब्लोपे पञ्चमी । अन्यथयांचकार । वञ्चयामासेत्यर्थः । अत्राङ्कुरशब्दस्य क्लीबत्वेन प्रयोगश्चिन्त्यः । अतः 'पुष्यत्सु गात्रे पुलकाङ्कुरेषु' इति पाठो रमणीयः । तत्र च तानन्यथयांचकारेति योज्यम् । 'गम्यमानार्थत्वादप्रयोगः' इति न न्यूनपदत्वाख्यदोष इत्यपि द्रष्टव्यम् । अत्र हरिकीर्तनक्रियया तत्स्मरणानन्दादिमे पुलकाङ्कुरा इति सुभद्राया भ्रान्तिमुत्पाद्य तत्पाणिस्पर्शकृतराजसविकारे सत्यपि सात्त्विकविकाररूपमर्मप्रकाशनेन तद्वञ्चनस्य कृतत्वाद्युक्तिरलंकारः । वृत्तमुपजातिः ॥ ६८ ॥

**एकदेति** । एकदा कस्मिंश्चिद्दिने प्रत्यवसानकृत्यं भोजनव्यापारं निर्वर्त्य समाप्य । 'प्रत्यवसानं भोजनमभ्यवहारश्च जग्धिश्च' इति हलायुधः । क्षणे क्षणे प्रतिक्षणमिक्षुचापस्य मन्मथस्य क्षुरप्रैर्बाणविशेषैः संतक्षणेन छेदनेन समन्तात्पतितैः सत्त्वगुणस्य शकलैः खण्डैरिव स्थितैः । सत्त्वगुणस्य परिशुद्धत्वाच्छुभ्रत्वेन व्यवहारः । स्वेदविन्दुभिर्व्याकीर्णां व्याप्तां चमूरोर्हरिणस्येमां चामूरवीं त्वचमजिनमध्यास्य । तत्रोपविश्येत्यर्थः । विश्राम्यन्तं श्रममपनुदन्तं कुहनासंन्यासिनं मायायतिं धवित्रेण मृगाजिनव्यजनेन वीजयन्ती मृदुपवनं चालयन्ती । 'धवित्रं व्यजनं तद्यद्रचितं मृगचर्मणा' इत्यमरः । तैस्तैरिङ्गितैः पुलकाद्याकारविशेषैर्यतित्वे संशय्यायं यतिर्वा न वेति संदिह्य तस्य कपटसंन्यासिनस्तत्त्वस्य यथार्थस्य ज्ञातुमिच्छया जिज्ञासया अनुरहस्येकान्ते सविनयं यथा तथा वक्ष्यमाणप्रकारेण व्यजिज्ञपद्विज्ञापयामास । 'विपूर्वाज्ज्ञापेः कर्तरि लुङि—' 'णिश्रि—' इत्यादिना चङि सन्वद्भावात् अभ्यासस्य 'सन्यतः' इतीत्वम् ॥

---

१. 'पुष्यत्सु' इति पाठः. २. 'पुलकाङ्कुराणि' इति पाठः. ३. 'श्वेत' इति पाठः. ४. 'तं कुहनासंन्यासिनं' इति नास्ति क्वचित्.

तपस्विन्नद्य मे प्रीतिस्तवाभ्यागमसंभवा[1] ।
कन्यामौनावकीर्णित्वे कल्पशाखाशिखायते ॥ ६९ ॥

इदानीममी

यदवः खलु पुण्यराशयो यतिनामिन्द्र तवाङ्घ्रिसेवनात् ।
शिरसैकमवाप्य यद्रजो[2] मनसान्यत्परिवर्ज्यते च यैः ॥ ७० ॥
भगवन्नखिलं विबुध्यसे परमार्थं वद भावि मे शुभम् ।
प्रयता यतयो भवद्विधाः प्रणिधानेन हि दिव्यचक्षुषः ॥ ७१ ॥
अवकर्ण्य तदेष मीलितः क्षणमक्ष्णोः प्रतिवाचमाददे ।
वहुना किमपि स्वकैर्गुणैर्विजयं प्राप्स्यसि योषितां कुले ॥ ७२ ॥

---

**तपस्विन्निति** । हे तपस्विन्, तवाभ्यागमात् । संभवतीति संभवा । मे मम प्रीतिः संतोषः कन्याया यन्मौनं व्रतं कन्यकाजनोचितान्यसंलापानर्हत्वं तस्यावकीर्णित्वे भङ्गे विषये । 'अवकीर्णी क्षतव्रतः' इत्यमरः । कल्पस्य सुरतरोः शाखायाः शिखामिवाचरतीति शिखायते । वहुसंलापेच्छां जनयतीत्यर्थः । उपमानात् 'कर्तुः क्यङ् सलोपश्च' इति क्यङन्तात्कर्तरि लट् ॥ ६९ ॥

**यदव इति** । यत इन्द्रियसंयम एषामस्तीति यतिनः । 'ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च ते' इत्यमरः । हे यतिनामिन्द्र, यदवो यादवाः पुण्यराशयः खलु शरीरधारिणः पुण्यसमूहा एव यद्यसाध्यैर्यदुभिस्तवाङ्घ्रिसेवनात्पादप्रणामाच्छिरसा एकं रजः रेणुं भवत्पदलग्नमवाप्य मनसा । चस्त्वर्थः । अन्यद्रजो रजोगुणः । तज्जन्यकामादिविकार इति यावत् । परिवर्ज्यते त्यज्यते । वर्जेः कर्मणि लट् । 'रजः स्यादार्तवे रेणौ परागगुणभेदयोः' इति विश्वः । वाक्यार्थहेतुकं काव्यलिङ्गम् । अत्र 'शिरसैकमवाप्य यद्रजः' इत्येव तृतीयपादपाठः । पाठान्तरे तु अन्यदित्यस्य एकमित्यनेन साकाङ्क्षत्वात् साकाङ्क्षत्वदोषापत्तेरुक्तस्वारस्यायोगाच्चेति । वृत्तं वैतालीयम् ॥ ७० ॥

**भगवन्निति** । हे भगवन् यतीन्द्र, अखिलं कालत्रयवस्तुजातं विबुध्यसे जानासि । त्वमिति शेषः । अतो मे मम भावि भविष्यच्छुभं परमार्थं यथार्थं यथा तथा वद । परं भृशमर्थमर्थशक्त्या गम्यमानं वदेति च । ननु सर्वज्ञत्वं चेद्वक्तव्यम् । तदेव कुत इत्याह—प्रयता इति । हि यस्मात् । प्रयता जितेन्द्रियाः । भवतो विधा रीतिर्येषां ते भवद्विधा यतयः प्रणिधानेन योगेन दिव्यं सर्वदर्शि चक्षुर्येषां तथोक्ता भवन्तीति योज्यम् । अत्र वैभवसंपन्नदिव्यचक्षुष्मत्तारूपवाक्यार्थेन सर्वावबोधसमर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ७१ ॥

**अवकर्ण्येति** । एषोऽर्जुनयतिस्तत्सुभद्रावाक्यमवकर्ण्य श्रुत्वा क्षणमक्ष्णोर्मीलितः । मीलिताक्षः सन्नित्यर्थः । कृत्रिमयोगप्रकाशनायेति भावः । प्रतिवाचं

---

१. 'संगमे' इति पाठः. २. 'शिरसा यदवाप्यते रजो' इति पाठः.

पादाङ्गुष्ठनखं यस्ते फाले[1] कुर्याद्विशेषकम् ।
स नरोऽपि स्मरेणार्तः सद्यः स्यादामिषं दृशोः ॥ ७३ ॥

इति सा तस्य वक्रिमस्पृशा वचसा श्रवसा च विश्रुतपूर्वैस्तैस्तैर्लक्षणैः[2][3] सोऽयं[4] संक्रन्दननन्दन इति निश्चयमणिं हृदयपेटिकापुटे[5] निधाय 'भगवन्, भवदभिहितयोर्विजयनरशब्दयोः क्रमेण[6] धर्मिपरता च[7] विशेषनामता[8] च तव कृपया भविता'[9] इति तस्मै व्रीडातरलतरनयनं[10] वदनमवनमन्ती[11] तस्थे ॥

---

प्रत्युत्तरमाददे स्वीकृतवान् । अयि सुभद्रे, बहुनोक्तेन किम् । योषितां कुले स्वकैर्निजैर्गुणैः सौन्दर्यशीलादिभिर्विजयं सर्वोत्कर्षं अर्जुनं च प्राप्स्यसि । 'विजयस्तु जये पार्थे' इति विश्वः ॥ ७२ ॥

पादेति । यो नरस्ते तव पादाङ्गुष्ठनखं फाले स्वस्य ललाटे विशेषकं तिलकं कुर्यात् । प्रणयकलहादिकृतमानापनोदनाय पादयोः प्रणमेदित्यर्थः । सोऽपि नरोऽर्जुनश्च स्मरार्तः सन् सद्य इदानीमेव दृशोर्भवन्नेत्रयोरामिषं भोग्यवस्तु । दृश्य इति यावत् । स्याद्भवेत् । 'आमिषं भोग्यवस्तुनि' इति विश्वः । य इदानीं पादाङ्गुष्ठनखं ते फाले विशेषकं कुर्यात्, स त्वया प्रणम्यमानः नरोऽहम् । अपिरेवकारार्थः । सोऽपि नरोऽर्जुनः । 'नरोऽर्जुने मनुष्येऽपि' इत्यजयः । यत्तु 'मन्मथबाणविद्धः सन्मांसभूत एव भवेत्' इति भावार्थमाह नृसिंहः, तदामिषपदस्य जुगुप्सादायकत्वेनाश्लीलदोषापत्तेस्तस्यैव हृद्यम् ॥ ७३ ॥

इतीति । इत्युक्तप्रकारेण वक्रिमाणमर्थान्तरगर्भतया कौटिल्यं स्पृशतीति तेन तस्य कपटसंन्यासिनो वचसा वाक्येन च श्रवसा श्रोत्रेण विशेषेण पूर्वं श्रुतैर्विश्रुतपूर्वैः । आगन्तुकजनसकाशादिति शेषः । तैस्तैर्लक्षणैश्चिह्नैः प्रमाणरूपवयःशीलादिभिश्च हेतुद्वयेन । सा सुभद्रा । अयं पुरोवर्ती कपटयतिः स प्रसिद्धः संक्रन्दननन्दन इन्द्रपुत्रोऽर्जुनः इत्युक्तप्रकारं निश्चय एव मणिस्तं हृदयमेव पेटिका तस्याः पुटेऽन्तरे निधाय । बहिरप्रकटय्येत्यर्थः । हे भगवन्, भवताभिहितयोर्विजयनरशब्दयोः श्लोकद्वयघटितयोः क्रमेण धर्मिपरता विशेषनामता च । विजयशब्दस्य विजयो धर्मः सोऽस्यास्तीति धर्मी अर्जुनो विजयः । अर्शआदित्वादजन्तः । तत्परता तत्तात्पर्यं नरशब्दस्य संज्ञाशब्दत्वं चेत्यर्थः । 'वः कृपया' इति पाठे वो युष्माकमिति पूजायां बहुवचनम् । तव कृपया करुणया भविता भविष्यति । भवतेर्लुट् । एवं वो धर्मिपरता युष्मदभिन्नधर्मिपरत्वम् । 'राहोः शिरः' इत्यादिवदभेदे षष्ठी । वो युष्माकं विशेषनामता च ।

---

१. 'भाले' इति पाठः. २. 'निपीतपूर्वैः' इति पाठः. ३. 'लक्षणैश्च' इति पाठः. ४. 'अयं यतिः' इति पाठः. ५. 'पेटक' इति पाठः. ६. 'क्रमेण' इति नास्ति क्वचित्. ७. 'च' इति नास्ति क्वचित्. ८. 'नामपरता' इति पाठः. ९. 'भवेत्' इति पाठः. १०. 'तरलनयनं' इति पाठः. ११. 'अवनमयन्ती' इति पाठः.

यमेवमुद्दिश्य तवोक्तिभङ्गी स एष दासोऽस्म्यनुकम्पनीयः।
इति प्रकाश्य क्षणमर्जुनत्वं चुचुम्ब तां चोरयतिः कपोले॥ ७४ ॥

स्वेदाम्बुपूरभरिते सुदृशस्तदास्याः
क्षेत्रे स्वकिंशुकशिलीमुखसीरकृष्टे।
पुष्पास्त्रकर्षकवरः पुलकच्छलेन
शृङ्गारबीजनिकरान्निविडानवाप्सीत्॥ ७५ ॥

तस्यामेव वधूमिमां स रजनौ सद्योऽनुकूलां रहः
पाणौकृत्य विलोकितोत्सवभरो द्वाभ्यां हरिभ्यामपि।
पौरेषूभयथा जनेष्वबलतां प्राप्तेषु पार्थस्तया
जाग्रत्सारथिविद्यया सह रथारूढः पुरान्निर्ययौ॥ ७६ ॥

---

अर्थस्तु पूर्ववदित्यपि बोध्यम्। इत्युक्तप्रकारेण तस्मै कपटसंन्यासिने। उक्त्वेति शेषः। वदनं ग्रीडैव तरलतरेऽत्यन्तचञ्चले नयने यस्मिंस्तद्यथा तथा अवनमन्ती सती तस्थेऽतिष्ठत्। अत्र हेतुद्वयेन अर्जुनत्वानुमानादनुमानालंकारः। तदुज्जीवितश्चायं 'निश्चयमणिं हृदयपेटिकापुटे' इति सावयवरूपकालंकार इति द्वयोरङ्गाङ्गिभावेन संकरः॥

**यमिति**। ततः हे सुन्दरि, यं दासं सेवकमर्जुनमुद्दिश्य एवमुक्तप्रकारा तव उक्तीनां वचनानां भङ्गी रीतिर्भवति, स दासोऽर्जुन एषोऽहमस्म्यनुकम्पनीयस्त्वया दयनीयः। इत्युक्तप्रकारेणार्जुनत्वं क्षणं प्रकाश्य चोरयतिस्तस्करमस्करी तां सुभद्रां कपोले चुचुम्ब। बलदेवादिभयात्क्षणमित्युक्तम्। वंशस्थवृत्तम्॥७४॥

**स्वेदेति**। तदा चुम्बनसमये पुष्पास्त्रकर्षकवरः मन्मथ एव हलिकश्रेष्ठः स्वेदाम्बुनः पूरेण प्रवाहेण भरिते पूर्णे स्वस्य किंशुकशिलीमुखेन पलाशबाणेनैव सीरेण हलेन कृष्टे क्षते। किंशुकग्रहणं सीरत्वारोपोपयोगिवक्रमुखलाभायेति बोध्यम्। तस्याः सुदृशः सुभद्रायाः क्षेत्रे शरीर एव केदार इति श्लिष्टरूपकम्। 'क्षेत्रं कलत्रे केदारे गात्रे च' इति विश्वः। पुलकानां छलेन व्याजेन निबिडाञ्छृङ्गारस्य रसस्य बीजनिकरानवाप्सीदुप्तवान्। वपेः कर्तरि लुङि सिचि वृद्धिः। समस्तवस्तुवृत्तिसावयवरूपकम्। वसन्ततिलका वृत्तम्॥ ७५ ॥

**तस्यामिति**। तस्यामर्जुनत्वप्रकाशवासरसंबन्धिन्यां रजनौ रात्रावेवानुकूलामिमां वधूं सुभद्रां सद्यो द्रुतं रहः पाणौकृत्य परिणीय द्वाभ्यामपि हरिभ्यामिन्द्रोपेन्द्राभ्यां विलोकितो दृष्ट उत्सवभरो विवाहोत्सवातिशयो यस्य तथोक्तः स पार्थः। पौरेषु जनेषु द्वारकावासिषु उभयथा द्विविधामबलतां न विद्यते बलो रामो बलं शौर्यं च येषां तेषां भावं प्राप्तेषु सत्सु। 'बलः संकर्षणे रक्षोभेदे शौर्ये तु न द्वयोः' इति विश्वः। बलदेवस्य यदुभिः सह शंभुपूजनाय सामुद्रं द्वीपान्तरं प्रति गतत्वादिति भावः। जाग्रती प्रकाशमाना सारथिविद्या रथचर्या-

---

१. 'तु तस्याः' इति पाठः.

आकर्ण्येदं जृम्भितानां यदूनां पार्थोद्देशात्क्रोधनत्वस्य जातेः ।
म्लानिं दातुं माधवो माधवोऽभूद्यत्रायत्ता कौरवी सा समृद्धिः ॥७७॥

रणोत्साहे शान्ते यदुजडिमकीर्तिध्वजलतां
मुहुः स्मारं स्मारं कपटयतितां वल्गितकुचम् ।
हसन्त्याः प्रेयस्या दशनरुचिमित्रीकृतयशाः
शताङ्गेनाविक्षत्सुरपतितनूजो निजपुरीम् ॥ ७८ ॥

ततो मुहूर्ते सकलाभिनन्द्ये कुरूद्वहानां कुशलोदयाय ।
सुतं सुभद्रा सुषुवेऽभिमन्युं प्रवीरसूः सा तमिव प्रवीरम् ॥ ७९ ॥

---

नैपुण्यं यस्यास्तया सुभद्रया सह रथारूढः सन् पुराद्द्वारकानगराग्निर्ययौ निर्गतवान् । प्रसन्ने भगवति श्रीकृष्णे किं दुष्करमिति भावः । शार्दूलविक्रीडितवृत्तम् ॥ ७६ ॥

आकर्ण्येति । इदं सुभद्राहरणमाकर्ण्य श्रुत्वा पार्थोद्देशात्पार्थमुद्देशं कृत्वा । ल्यब्लोपे पञ्चमी । जृम्भितानां युद्धाय संनद्धानां यदूनां यादवानाम् । क्रोधनस्य भावः क्रोधनत्वं कोपः तस्यैव जातेर्मालतीकुसुमस्य । 'जातिश्छन्दोधर्ममेदमालतीगोत्रजन्मसु' इत्यजयः । म्लानिमप्रकाशं दातुं माधवः कृष्णो माधवो वसन्तोऽभूत् । सा प्रसिद्धा कुरूणां कुरुवंश्यानामियं कुरवाणां वृक्षविशेषाणामियं च कौरवी । एकत्र उदन्तात् 'तस्येदम्' इत्यण् । 'ओर्गुणः' इति गुणेऽवादेशे चान्यत्र अदन्तादणि च 'टिड्ढाणञ्–' इत्यादिना ङीप् । समृद्धिः संपत् । यत्र कृष्णे वसन्ते च आयत्ता अधीना । युद्धसंनद्धान्यदून्पाण्डवपक्षपाती कृष्णो निवारितवानित्यर्थः । 'माधवो मासि वैशाखे लक्ष्मीपतिवसन्तयोः' इति विश्वः । वसन्ते म्लायन्ति जातयः पुष्यन्ति कुरवा इति प्रसिद्धम् । शालिनीवृत्तम् ॥ ७७ ॥

रणेति । सुरपतेरिन्द्रस्य तनूजोऽर्जुनो रणोत्साहे शान्ते सति । यदूनामिति शेषः । यदूनां जडिम्ना मौग्ध्येन या कीर्तिः प्रसिद्धिस्तस्या ध्वजलताम् । तत्प्रख्यापनीमित्यर्थः । कपटयतितां कुहनासंन्यासित्वं स्मारं स्मारं स्मृत्वा स्मृत्वा । आभीक्ष्ण्ये णमुल् । 'न लोकाव्यय–' इत्यादिना 'अधीगर्थ–' इति षष्ठीप्रतिषेधः । वल्गितौ किंचिच्चलौ कुचौ यस्मिंस्तद्यथा तथा मुहुर्हसन्त्याः प्रेयस्याः सुभद्रायाः दशनानां दन्तानां हासादाविर्भवतां रुचेर्धवलकान्तेर्मित्रीकृतं सदृशीकृतं यशो यस्य तथोक्तः सन् शताङ्गेन रथेन निजपुरीमिन्द्रप्रस्थमविक्षद्विशति स्म । यदवो जडा अन्यथा यदि जानीयुरीदृशं यतित्वं तदा बध्नीयुरेवेति हासप्रकारः । अत्र कीर्तिध्वजलतामिति रूपकेण दशनरुचिमित्रीकृतयशा इत्युपमोज्जीवितेति द्वयोरङ्गाङ्गिभावेन संकरः । शिखरिणीवृत्तम् ॥ ७८ ॥

तत इति । तत इन्द्रप्रस्थवेशानन्तरं प्रवीरसूर्वीरमाता । 'वीरमाता च वीरसूः' इत्यमरः । सा सुभद्रा कुरूद्वहानां कुरुवंश्यानां कुशलस्येहपरसौख्यस्योद-

---

१. 'तातमिव'. इति पाठः.

पाञ्चालपुत्री च पतिव्रतानां प्रधानभावे कृतपट्टवन्धा ।
पञ्चापि सद्यः प्रतिभूरिव स्वान्पतीन्पितॄणामनृणानकार्षीत् ॥८०॥

अथ तेषां तादृशं पुत्रोत्सवमाकर्ण्य ऋतुर्वसन्तसामन्तो रा-जन्यसंवन्धितया हर्षादिव समाजगाम ॥[1]

तदानीं भगवान्पवमानस्तु भीमस्य पुत्रोत्पत्तिनिमित्ताशौचव-त्तया लोकस्पर्शाय संकुचन्निव कतिचन दिनानि मलयं विहाय पदमेकमपि न चचाल ॥[2][3]

एतेन खल्वकरुणेन तपागमेन
जीवातुरद्य मम दूरत एव देशात् ।[4]

---

यायोत्पत्त्यर्थं सकलैर्गुणैश्चन्द्रताराबलादिभिरभिनन्दितुं योग्ये अभिनन्द्ये श्लाघनीये मुहूर्ते लग्ने तं प्रवीरमर्जुनमिव स्थितमभिमन्युं नाम सुतं सुषुवे जनयामास । उत्प्रेक्षा, सा प्रसिद्धा प्रवीरसूः कुन्ती तं प्रवीरमर्जुनमिवेत्युपमा वेत्युभयत्र बाध-काभावात्साधकसाम्याच्च द्वयोः संदेहसंकरः । उपेन्द्रवज्रा वृत्तम् ॥ ७९ ॥

**पाञ्चालपुत्रीति** । पतिव्रतानां प्रधानभावे प्राधान्ये कृतः पट्टबन्धः पट्टा-भिषेको यस्यास्तथोक्ता पाञ्चालपुत्री द्रौपदी च प्रतिभूर्लग्निकेव । 'स्युर्लग्नकाः प्रति-भुवः' इत्यमरः । स्वान्स्वीयान्पञ्चापि पतीन्युधिष्ठिरादीन् । सद्यः पितॄणामनृणान् ऋणविमुक्तान् । सपुत्रानिति यावत् । अकार्षीत् । एकैकस्यैकैकं पुत्रं जनयामासे-त्यर्थः । 'एष वा अनृणो यः पुत्री' इति श्रुतेः पुत्रजननेन पितृऋणापाकरण-श्रवणादिति भावः । उपमा । वृत्तमुपजातिः ॥ ८० ॥

अथ ग्रीष्मर्तुं वर्णयति—**अथेति** । अथानन्तरं वसन्तस्य सामन्तस्तुल्यकक्ष्यः ऋतुर्ग्रीष्मस्तेषां युधिष्ठिरादीनां तादृशमुक्तविधं पुत्रोत्सवमाकर्ण्य राजन्यसंव-न्धितया क्षत्रियवन्धुत्वेन यो हर्षस्तस्मादिवेत्युत्प्रेक्षा । 'ग्रीष्मो वै राजन्यस्यर्तुः' इति श्रुतेरिति भावः । समाजगाम ॥

**तदानीमिति** । तदानीं ग्रीष्मप्रवेशसमये भगवान्पवमानो दक्षिणमारुतस्तु भीमस्य स्वपुत्रस्य पुत्रोत्पत्तिनिमित्तं यदाशौचं जातं तद्वत्तया लोकस्य जनस्य भुव-नस्य च स्पर्शाय । स्प्रष्टुमित्यर्थः । 'तुमर्थाच्च भाववचनात्' इति चतुर्थी । संकु-चन् लज्जमान इवेत्युत्प्रेक्षा । कतिचन दिनानि मलयं गिरिं विहायैकं पदमपि न चचाल न प्रसृतवान् । मलयानिलवार्तापि दुर्लभाभूदित्यर्थः ॥

**एतेनेति** । अकरुणेन निर्दयेन एतेन तपागमेन । ग्रीष्मेणेत्यर्थः । 'उष्ण ऊष्मागमस्तपः' इत्यमरः । ममात्मनो जीवातुर्जीवनौषधं मधुर्वसन्तोऽद्य देशादेव दूरत उत्सारितो निष्कासितः खलु । इत्युक्तप्रकारया रुषा कोपेनेवेत्युत्प्रेक्षा ।

---

१. 'वसन्तः सामन्तराजसंवन्धितया' इति पाठः. २. 'सुतोत्पत्ति' इति पाठः. ३. 'कतिचिद्दिनानि' इति पाठः. ४. 'देशत एव दूरात्' इति पाठः.

उत्सारितो मधुरितीव रुषा वनान्ते
तत्स्वागतं परभृतो न समाचचार ॥ ८१ ॥
शिरीषपङ्क्तेः कुरुकामिनीनां शरीरवल्ल्या सह मार्दवेन ।
उपस्थिताभूदुपमा तदानीं तपःस्थितानां सुलभं हि सर्वम् ॥ ८२ ॥
कुरुकेलिवनेषु मल्लिकाकुसुमेषु भ्रमरावलिर्बभौ ।
ऋतुना मधुगन्धगुप्तये जतुनाग्रे निहितेव मुद्रिका ॥ ८३ ॥
शुभसौरभसंभृतानि भूमौ शुचिभूतान्यपि यानि पाटलानि ।
कलयेयुरतीव चित्रभावं क्षणपीतानि दृशा कथं न तानि ॥ ८४ ॥

---

परभृतः कोकिलः । जातावेकवचनम् । वनान्ते वनमध्ये तस्य ग्रीष्मस्य स्वागतं कुशलागमप्रश्नं न समाचचार नाचरितवान् । ग्रीष्मे कोकिला न कूजन्तीति प्रसिद्धम् । वसन्ततिलकावृत्तम् ॥ ८१ ॥

**शिरीषेति** । तदानीं कुरुकामिनीनां पाश्चात्यादीनां शरीरवल्ल्या सह शिरीषाणां कुसुमानां पङ्क्तेरुपमा सादृश्यं मार्दवेन गुणेन हेतुना उपस्थिता प्राप्ताभूत् । तथा हि—तपसि कृच्छ्रचान्द्रायणादौ तपे ग्रीष्मे च स्थितानां सर्वं वस्तु सुलभम् । 'तपश्चान्द्रायणादौ स्याद्ग्रीष्मे लोकान्तरेऽपि च' इति विश्वः । अत्र सान्तादन्तयोस्तन्त्रेण निर्देशः । लिङ्गविवेकस्तु 'तपेन वर्षाः शरदा हिमागमे' इत्यादिप्रयोगविज्ञेयः । अत्र ग्रीष्मचान्द्रायणाद्योः श्लेषभित्तिकाभेदाध्यवसायमूलातिशयोक्त्यनुप्राणितः सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ८२ ॥

**कुर्विति** । कुरूणां केलिवनेषु मल्लिकाकुसुमेषु भ्रमराणामावलिः पङ्क्तिः ऋतुना ग्रीष्मेण मधुनो मकरन्दस्य गन्धस्य परिमलस्य च द्वयोर्गुप्तये रक्षणार्थमग्रे कुसुमोपरि जतुना नीललाक्षया निहिता न्यस्ता मुद्रिका मुद्रेव बभौ । इत्युत्प्रेक्षा । वैतालीयवृत्तम् ॥ ८३ ॥

**शुभेति** । शुभैर्मनोहरैः सौरभैः परिमलैः संभृतानि संपूर्णानि शुचौ ग्रीष्मे भूतानि जातान्यपीत्यपिः समुच्चयार्थकः । शुभ्रत्वेन वर्तमानान्यपीत्यपिर्विरोधार्थकः । अभ्युत्पन्नानि चेति त्रिधा बोधः । यानि पुष्पाणि भूमौ पाटलानि पाटलसंज्ञानि श्वेतरक्तानि चाभूवन्, तानि पाटलकुसुमानि दृशा दृष्ट्या क्षणं पीतानि दृष्टानि सन्ति । पिङ्गलानि सन्तीति च । चित्रभावं आश्चर्यकरत्वं शबलवर्णत्वं अभिन्नत्वं च कथं न कलयेयुर्न योजयेयुः । किं तु योजयेयुरेवेत्यर्थः । श्वेतानां पाटलत्वस्य पाटलानां पिङ्गलत्वस्य च क्षणादेवाविर्भावादाश्चर्यम् । अनेकजातीयरूपाणामेकत्र मेलनाच्छबलत्वम् । अभ्युत्पन्नानाम् । 'आत्मा वै पुत्रनामासि' इति श्रुतेरभिन्नत्वं चेति भावः । 'शुचिः शुभ्रेऽनुपहते शृङ्गाराषाढयोरपि । ग्रीष्मे हुतवहेऽपि स्यात्' इति विश्वः । 'आश्चर्यालेख्ययोश्चित्रं नात्वमा-

---

१. 'मुद्रणा' इति पाठः.

सीमन्तविद्युदवतंसशिरीषचापं
केश्यं घनोऽयमिति कैः सुदृशां न जज्ञे ।
तस्याध एव निटिले सततं यदासी-
त्तत्तादृशी सलिलशीकरदुर्दिनश्रीः ॥ ८५ ॥

उग्रैः करैरुष्णरुचेः समन्तादूष्मायमाणाखिलदिङ्मुखस्य ।
आगन्तुमह्नः सविधं स्वकालेऽप्यनीश्वरेवापससर्प रात्रिः ॥ ८६ ॥

वर्षास्वियं त्वरितमस्मदुपान्तभूमे-
रुन्मूलनं कलयतीति रुषावलीढैः ।
तीरद्रुमैः स्वनिकटादपसारितेव
मध्यं जगाम सरितां सलिलस्य वेणी ॥ ८७ ॥

---

चुडुनि स्त्रियाम्' इति हलायुधः । विरोधाभाससमालंकारयोः श्लेषसंकीर्णयोः संसृष्टिः । औपच्छन्दसिकवृत्तम् ॥ ८४ ॥

**सीमन्तेति** । सीमन्तः केशमध्यरेखेव विद्युत्तडिद्यस्य तत् । अवतंसं शिरीषं कुसुममेव चाप इन्द्रधनुर्यस्य तत् । सुदृशां कौरवीणां कैश्यं केशवृन्दम् 'तद्वृन्दे कैशिकं कैश्यम्' इति केशपर्यायेष्वमरः । कैर्जनैरयं पुरोवर्ती । विशेष्यापेक्षी पुंस्त्वनिर्देशः । घनो मेघ इति न जज्ञे न ज्ञातम् । सर्वैरपि ज्ञातमेवेत्यर्थः । यद्यस्मात्तस्य सुदृक्केशवृन्दस्य अधः अधोभागस्थित एव निटले ललाटे सततं निरन्तरं तत्तादृशी अतिमहती सलिलशीकरैः स्वेदजलविन्दुभिर्दुर्दिनश्रीः मेघच्छन्नदिनलक्ष्मीः । वर्षसमृद्धिरिति यावत् । आसीत् । तस्मादिति योज्यम् । अत्र सलिलशीकरदुर्दिनश्रिया केशवृन्दे मेघत्वानुमानादनुमानालंकारः । सीमन्तविद्युदित्यादि सावयवरूपकोज्जीवित इति तयोरङ्गाङ्गिभावेन संकरः ॥ ८५ ॥

**उग्रैरिति** । उग्रैरत्युष्णैरुष्णरुचेः सूर्यस्य करैः समन्तादूष्मायमाणान्यग्निकल्पीभवन्त्यखिलानां दिशां मुखानि यस्मिंस्तस्य । उपमानात्क्यङ् । लटः शानच् । अह्नो वासरस्य सविधं समीपं प्रत्यागन्तुमनीश्वरा असमर्थेवेत्युत्प्रेक्षा । रात्रिः स्वस्य काल आगमनसमयेऽप्यपससर्प दूरं पलायते स्म । रात्रयोऽभवन्नल्पा इत्यर्थः ॥ ८६ ॥

**वर्षास्विति** । इयं वेणी प्रवाहः वर्षासु वर्षर्तौ । 'स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षाः' इत्यमरः । अस्माकं तटवृक्षाणामुपान्तभूमेः प्रान्तदेशस्योन्मूलनं पातनं त्वरितं यथा तथा कलयति करोति । इत्युक्तप्रकारया रुषा कोपेनावलीढैर्व्याप्तैस्तीरयोरुभयोर्द्रुमैः स्वनिकटादात्मसमीपादपसारिता शाखाभुजैर्निष्कासितेवेत्युत्प्रेक्षा । सरितां नदीनां सलिलस्य वेणी मध्यं मध्यप्रदेशं प्रति जगाम ॥ ८७ ॥

---

१. 'निटिले' इति पाठः. २. 'सविधे' इति पाठः. ३. 'हि' इति पाठः.

देशे देशे जडिमकुरङ्गास्तेजोभल्लैर्दिनकरभिल्ले ।
धावं धावं प्रहरति राज्ञां धारागेहं शरणमवापुः ॥ ८८ ॥

अङ्गाङ्गसङ्गासहने तपर्तावन्योन्यमेवाभिमुखा[1] युवानः ।
वाचापि केचिन्मनसापि केचिद्दृशापि केचिद्दृढमालिलिङ्गुः ॥ ८९ ॥

एवं पचेलिमां हेलिमयूखकठोरिम[2]केलिं तस्य तनयायै निवेदयितुकामाभिरिव रामाभिर्निरन्तरोपान्तौ दृगध्वनि वसन्तौ वसन्तरतिकान्ताविव जयन्तजनकानन्तरजकौन्तेयौ परिपाटलहंसपादद्रुखगाढवनजातसनाथे पाथसि रोधसि च विहारैस्तेषां दिनानामौपयिकमातिथ्यमापादयितुं तामेव[3] भगवतीं सरितमापतताम् ॥

---

देशे देश इति । जडिमानः शैत्यान्येव कुरङ्गा हरिणा दिनकरः सूर्य एव भिल्ले व्याधे । 'पुलिन्दाः शबरा भिल्लाः किराताश्चान्त्यजाः पृथक्' इति त्रिकाण्डशेषः । तेजोभिः किरणैरेव भल्लैर्बाणविशेषैर्देशे देशे प्रतिदेशम् । वीप्सायां द्विर्भावः । धावं धावं धावित्वा धावित्वा । आभीक्ष्ण्ये णमुल् । प्रहरति सति राज्ञां धारागेहं यन्त्रधारागृहं शरणं रक्षकमवापुः । क्रूरैरुपद्रुतानां राजा तदाश्रितो वा शरणमिति भावः । अत्र जडिमकुरङ्गाणां पर्यायेण तत्तद्देशत्यागपूर्वकं राजधारागृहाश्रयोक्तेः पर्यायालंकारः सावयवरूपकोज्जीवित इति तयोरङ्गाङ्गिभावेन संकरः । तेन च राजधारागृहातिरिक्तस्य सर्वस्यापि निःशैत्यप्रतीत्या परिसंख्यालंकारप्रतीतेरलंकारेणालंकारध्वनिः । मत्तावृत्तम्—'ज्ञेया मत्ता मभसगयुक्ता' इति लक्षणात् ॥ ८८ ॥

अङ्गाङ्गेति । अङ्गानां स्वीयानामङ्गैः परकीयैः सङ्गं स्पर्शं न सहत इत्यसहने तपर्तौ ग्रीष्मे । युवतयश्च युवानश्च युवानः । 'पुमान्स्त्रिया' इत्येकशेषः । अन्योन्यं अभिमुखाः सन्त एव केचिद्वाचा आश्लिष्ये इति वाङ्मात्रेणैव दृढमालिलिङ्गुः । तावन्मात्रमप्यसहन्तः केचिद्दृशा दृष्ट्यैव दृढमालिलिङ्गुः । केचिन्मनसैवालिलिङ्गुः । सर्वत्र अपिरेवकारार्थः । अत्र यूनामुत्तरोत्तरेषां पूर्वपूर्ववाचिकाद्यालिङ्गनमात्रासहत्वेनोत्तरोत्तरं सौकुमार्योत्कर्षप्रतीतेः सारालंकारः—'उत्तरोत्तरमुत्कर्षः सार इत्युच्यते बुधैः' इति लक्षणात् । स च वाचिकादेरालिङ्गनस्य पूर्वपूर्ववर्णनात्प्रतीयत इति वस्तुनालंकारध्वनिः । 'पाठक्रमादर्थक्रमो बलीयान्' इति न्यायेन द्वयोर्वाचिकदार्शनिकयोरुत्तरत्वेन मानसिकस्य लेखनमित्यपि ध्येयम् ॥ ८९ ॥

अथ कृष्णार्जुनयोः कालिन्द्यां जलविहारं वर्णयति—एवमिति । एवमुक्तप्रकारेण पचेलिमां परिपक्काम् । 'पच एलिमजुपसंख्यानम्' इति पचेः कर्म-

---

१. 'अभिमुखं' इति पाठः. २. 'कठोर' इति पाठः. 'कठोरिम' इति नास्ति क्वचित्. ३. 'भगवतीं तामेव' इति पाठः.

कल्लोलजालकपटेन कलिन्दपुत्र्या
पादं प्रति प्रससृपे परमस्य पुंसः ।
तिष्ठन्ति मे पुनरिह त्रिजगत्पवित्राः
सख्यः कतीति समवीक्षितुकामयेव ॥ ९० ॥

तस्या जलेषु तरुणाम्बुदजातिवैरि-
ष्वावर्तजालमनयोरुभयोर्व्यतानीत् ।
वीचीकराग्रविनिवारितरामसीर-
व्यावल्गनोपजनितव्रणगर्तशङ्काम् ॥ ९१ ॥

---

ण्येलिमच् । 'परिपक्वं पचेलिमम्' इत्यमरशेषः । हेलेः सूर्यस्य मयूखानां किर-णानां कठोरिम्ण उग्रत्वस्य केलिं चेष्टाम् । 'हेलिरालिङ्गने सूर्ये' इति वैजयन्ती । तस्य सूर्यस्य तनयायै यमुनायै निवेदयितुं ज्ञापयितुं कामो यासां ताभिरिव स्थि-ताभिरित्युत्प्रेक्षा । रामाभी रमणीभिर्निरन्तराः सान्द्रा उपान्ताः पार्श्वौ ययोस्तौ दृगध्वनि चक्षुर्मार्गे वसन्तौ वर्तमानौ । मूर्तीभूय साक्षादिव स्थिताविव्यर्थः । वसन्तरतिकान्तौ मधुमन्मथाविव स्थितावित्युत्प्रेक्षा । जयन्तजनकस्येन्द्रस्यान-न्तरजोऽनुज उपेन्द्रः । श्रीकृष्ण इति यावत् । कौन्तेयोऽर्जुनश्च द्वौ । परिपाटलै-रुरुणैर्हंसानां पक्षिविशेषाणां पादैश्चरणैर्दुरवगाहैर्दुष्प्रवेशैर्वनजातैर्जलजैः सनाथे सहिते पाथसि यमुनाजले, परिपाटलैर्हंसस्य सूर्यस्य पादैः किरणैः दुरवगाहेन वनजातेनारण्यसमूहेन सनाथे रोधसि यमुनातीरे च । 'हंसो विहङ्गभेदेऽर्के' इति विश्वः । विहारैः क्रीडाभिस्तेषां दिनानां ग्रीष्मवासराणामौपयिकं युक्तमातिथ्यं पूजनम् । ग्रीष्मावसरोचितसौख्यमिति यावत् । आपादयितुं संपादयितुं तां स्वरामाभिर्विज्ञाप्यत्वेन संभावितामेव भगवतीं सरितं यमुनां प्रत्यापततां प्राप्त-वन्तौ । पततेराङ्पूर्वात्कर्तरि लङ् । उत्प्रेक्षाद्वयश्लेषाणां संसृष्टिः ॥

**कल्लोलेति** । कलिन्दस्य गिरेः पुत्र्या यमुनया इह भगवत्पादे त्रिषु जगत्सु पवित्रा मे मम सख्यो गङ्गाः पुनः कति अन्याः कियन्त्यस्तिष्ठन्ति । इत्युक्त-प्रकारेण सुष्ठु समवीक्षितुं द्रष्टुं कामो यस्यास्तथोक्तयेवेत्युत्प्रेक्षा । कल्लोलानां महा-तरङ्गाणां जालस्य वृन्दस्य कपटेन परमस्य पुंसः श्रीकृष्णस्य पादं प्रति प्रससृपे प्रसृतम् । सृपेः प्रपूर्वाद्भावे लिट् ॥ ९० ॥

**तस्या इति** । तरुणाम्बुदानां कालमेघानां जातिवैरिषु जन्मशत्रुषु । तद्व-दतिनीलेष्वित्यर्थः । तस्या यमुनाया जलेषु आवर्तानां जलभ्रमाणां जालं कर्तृ वीच्यस्तरङ्गा एव कराग्राणि तैर्विनिवारितस्य रामसीरस्य बलरामहलस्य व्याव-

---

१. 'वेग' इति पाठः. २. 'सुविलोकितुकामयेव' इति पाठः. ३. 'अतानीत्' इति पाठः. ४. 'विनिवर्तित' इति पाठः.

मुरारिनारीमुखपद्मपङ्क्तिर्जवेन योद्धुं जलदुर्गपद्मैः ।
तीरेऽवतस्थे तिलकापदेशात्कृत्वा पुरः खेटकमण्डलानि ॥ ९२ ॥

तासां विलासगमनं समवेक्ष्य तत्र
लाल्यत्वहेतुरपि लज्जितचेतनायाः ।
वेगात्तिरोभवनविघ्नतया मराल्या
गर्ह्या बभूव नितरां गतिमन्दिमश्रीः ॥ ९३ ॥

शनैः शनैस्तासु सरितमवगाहमानासु ॥

कासांचिदीर्ष्ययेवं नितम्बविम्बानि निजावकाशदानावलम्बितोन्नतिभिरम्बुभिः पुलिनानि निचोलयांचक्रुः ॥

---

लग्नैः प्रहारैरुपजनितानां व्रणानां संबन्धिनां गर्तानां निम्नभागानां शङ्कां वितर्कमनयोरुभयोः कृष्णार्जुनयोर्व्यतानीद्विस्तारयामास । उत्प्रेक्षालंकारः । पुरा किल बलरामो यमुनां कृष्णेन सेव्यमानां जलक्रीडार्थमाहूय तामनागच्छन्तीं हलेनाचकर्षेति पौराणिकी कथात्रानुसंधेया ॥ ९१ ॥

**मुरारीति** । मुरारेः श्रीकृष्णस्य नारीणां मुखानामेव पद्मानां पङ्क्तिर्जले यामुन एव दुर्गे यानि पद्मानि तैः सह जवेन योद्धुं युद्धं कर्तुं तिलकानां विशेषकाणामपदेशाद्व्याजात्खेटकानां चर्मणां मण्डलानि पुरः कृत्वा । शस्त्राघातनिवारणार्थमिति भावः । तीरे यमुनातटेऽवतस्थेऽतिष्ठदिवेत्युत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या । भीरुतयान्तरवतीर्य क्षणं तीरेऽवतस्थिरे इत्यर्थः ॥ ९२ ॥

**तासामिति** । तत्र यमुनातटे तासां हरिसुन्दरीणां विलासयुक्तं गमनं समवेक्ष्य लज्जिता चेतना बुद्धिर्यस्यास्तस्या मराल्या हंसाङ्गनाया लाल्यत्वे स्वस्याः श्लाघनीयत्वे हेतुरपि गतेर्गमनस्य मन्दिमश्रीर्मान्द्यसमृद्धिर्वेगात्तिरोभवनेऽन्तर्धाने विघ्नतया प्रतिबन्धकत्वेन हेतुना नितरां गर्ह्या निन्द्या बभूव । अत्र गतिमान्द्यस्य गुणस्य दोषत्वकल्पनाल्लेशालंकारः । तेन च हरिसुन्दरीणां मन्दयानसौन्दर्यमनन्यादृशमिति प्रतीतेरलंकारेण वस्तुध्वनिः । 'लेशः स्याद्दोषगुणयोर्गुणदोषत्वकल्पनम्' इति तल्लक्षणम् ॥ ९३ ॥

**शनैरिति** । तासु सुन्दरीषु शनैः शनैर्भयान्मन्दं मन्दं यथा तथा सरितं यमुनामवगाहमानासु प्रविशन्तीषु सतीषु । इतीदमुत्तरगद्यत्रयेणान्वीयते ॥

**कासांचिदिति** । कासांचित्पुरःप्रविष्टानां कतीनां नितम्बविम्बानि कटिपश्चाद्भागमण्डलानि (कर्तॄणि) पुलिनानीर्ष्यया निजसादृश्यासहनेनेवेत्युत्प्रेक्षा । निजस्य स्वीयस्यावकाशस्य दानेनावलम्बिता स्वीकृतोन्नतिर्गौरवमुत्प्लवनं च येषां तैः । स्थूलोन्नतानामन्तःप्रवेशे जलस्योत्प्लवनं प्रसिद्धम् । अम्बुभिः (करणैः) निचोलयांचक्रुराच्छादयामासुः । अत्र नितम्बाघातोत्प्लुतजलकृतपुलिनाच्छादने

---

१. 'गर्हित' इति पाठः. २. 'एव' इति पाठः. ३. 'विम्बाः' इति पाठः.

अपरासामसूययेव नाभिकुहराणि चलचूषणादावर्तजवावलेप[1]मवालुम्पन्[2] ॥

इतरासां क्रुधेव कुचकलशाः[3] क्षोभणात्कनक[4]कोकनदकोशान्विदलयांचक्रुः[5] ॥

वक्षोजकुम्भनिवहाद्वनिताजनानां
ग्रीष्मर्तुना विनिहितं ग्रहराजपुत्री ।
तापं पितुः स्वमहरत्तरलोर्मिहस्तै-
रन्यं न याति हि विभूतिरपत्यभाजाम् ॥ ९४ ॥

सुरनायकानुजमनोवशीकृतौ
सुदृशो मुखैर्निपुणतां यथा ययुः ।
सरसीरुहैर्न नलिनीलतास्तथा
सकचान्यमूनि विकचानि तानि यत् ॥ ९५ ॥

---

जलानां स्वावकाशदानजन्योन्नतिमत्त्वेन पुलिनसाम्यासहनितम्बबान्धव्यं संपाद्य तद्वारा तादृशनितम्बकृतत्वमुत्प्रेक्ष्यते ॥

**अपरासामिति** । अपरासां कासांचिन्नाभ्यः कुहराणीव नाभिरन्ध्राणि । असूयया स्वसादृश्याद्द्वेषेणेवेत्युत्प्रेक्षा । आवर्तानां जवेन योऽवलेपस्तं जलानामावर्तीयानां चूषणात्कवलनं कृत्वेति ल्यब्लोपे पञ्चमी । अवालुम्पन्नाशयामासुः । अवपूर्वाल्लुम्पतेः कर्तरि लुङ् ॥

**इतरासामिति** । इतरासामन्यासां कुचाः कलशा इव स्तनकुम्भाः क्रुधा स्वसादृश्यकोपेनेवेत्युत्प्रेक्षा । कनककोकनदकोशान्सुवर्णसौगन्धिकमुकुलान्क्षोभणान्निजाघातेन क्षोभं कृत्वेति पूर्ववत्पञ्चमी । विदलयांचक्रुर्विभिदुः ॥

**वक्षोजेति** । ग्रहराजस्य सूर्यस्य पुत्री यमुना ग्रीष्मर्तुना विनिहितं न्यासरूपेण निक्षिप्तं पितुः सूर्यस्य संबन्धिनं तापमेव स्वं धनम् । 'स्वोऽस्त्रियां धने' इत्यमरः । वनिताजनानां हरिसुन्दरीणां वक्षोजकुम्भानां कुचकलशानां निवहाद्वृन्दात्तरलैश्चलैरूर्मिभिरेव हस्तैरहरज्जग्रहे । हि यस्मात् । अपत्यभाजां पुत्रवतां विभूतिरैश्वर्यमन्यमपत्येतरं न याति न प्राप्नोति । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ९४ ॥

**सुरनायकेति** । सुदृशः सुन्दर्यः । सुरनायकानुजस्य श्रीकृष्णस्य मनसः वशीकृतौ वशीकरणे विषये मुखैः (करणैः) यथा निपुणतां कौशल्यं ययुः, तथा नलिनीलताः पद्मवल्ल्यः तन्मनोवशीकृतौ सरसीरुहैर्निपुणतां न ययुः । तत्र हेतुमाह—सकचानीति । यद्यस्मात् अमूनि मुखानि सकचानि केशसहितानि, तानि सरसीरुहाणि विकचानि केशरहितानि विकस्वराणीति च । अत इति

---

१. 'आवर्तकुलजवा' इति पाठः. २. 'अवलुम्पन्' इति पाठः. ३. 'कुचयुगलानि' इति पाठः. ४ 'कनक' इति नास्ति क्वचित्. ५. 'विदलयामासुः' इति पाठः.

यमस्वसुः संनिधिमेत्य रात्रौ स्वकान्तिचोरं सुदृशामुरोजः ।
नालाग्रशूले नलिनं निवेश्य ववल्ग हर्षादिव वारिमध्ये ॥ ९६ ॥
व्यात्युक्षिकायां विपुलेक्षणासु वर्षन्नखद्योतवलक्षमम्भः ।
सखीमुदारां सरितस्तु तस्याः करोऽप्यसावीदिव कंसहन्तुः ॥ ९७ ॥
उल्लासभाजा हरिणा प्रियायाः कह्लारमाल्ये कलिते कवर्याम् ।
अस्रैरसूयाहसितैश्च चित्रमुत्तंसितं वक्त्रमभूत्सपत्न्याः ॥ ९८ ॥
ग्लहं निमग्नग्रहणेषु कल्पयन्स्वयंग्रहालिङ्गसुखं यदूद्वहः ।
सवर्णवर्ष्मा सलिले तडित्तनूः सुखादगृह्णात्सुदृशस्तु ता न तम् ॥ ९९ ॥

---

योज्यम् । अत्र सुदृशां मुखैरिव नलिनीलतानां सरसीरुहैर्हरिमनोवशीकरणनैपुण्याभावं प्रति विकासकेशराहित्ययोः श्लेषमित्तिकाभेदाध्यवसायलब्धकेशराहित्यरूपसाधनवैकल्यवाक्यार्थहेतुकं काव्यलिङ्गमतिशयोक्तिसंकीर्णम् । मञ्जुभाषिणीवृत्तम् ॥ ९५ ॥

**यमस्वसुरिति** । सुदृशां उरोजः कुचः । इति जातावेकवचनम् । रात्रौ स्वकान्तिचोरं तदानीमेव कमलस्य मुकुलनाच्चौर्यानुकूल्याच्चेति भावः । नलिनम् । पद्मकोशमित्यर्थः । यमस्वसुर्यमुनायाः संनिधिं समीपमेत्य वारिमध्ये नालाग्र एव शूले निवेश्य हर्षात् स्वकान्तिचोरशूलारोपजन्यात् ववल्ग ननर्तेवेत्युत्प्रेक्षा नालाग्रशूलेति रूपकोज्जीविता । 'यमस्वसुः संनिधिमेत्य' इत्यनेनोक्तदण्डस्य मरणान्तत्वं सूच्यते ॥ ९६ ॥

**व्यात्युक्षिकायामिति** । व्यात्युक्षिकायाम् । 'अन्योन्योपरि हस्ताभ्यां व्यात्युक्षिर्जलसेचनम्' इति हलायुधः । विपुलेक्षणासु कान्तासु नखानां द्योतैः प्रकाशैर्वलक्षं शुभ्रमम्भो वर्षन्कंसहन्तुः श्रीकृष्णस्य करोऽपीत्यपिना पदसमुच्चयः । तस्याः सरितो यमुनायाः । तुशब्दो वाक्यालंकारे । उदारां महतीं सखीं गङ्गामन्यां असावीदिवेत्युत्प्रेक्षा । सूयतेः कर्तरि लुङ् । नखद्योत इव वलक्षं वियति विक्षेपादिति भाव इत्यपि बोध्यम् ॥ ९७ ॥

**उल्लासभाजेति** । उल्लासं भजतीति तद्भाजा प्रेमौत्कट्ययुक्तेन हरिणा प्रियायाः कवर्यां केशपाशे कह्लारमाल्ये रक्ताब्जमाल्ये कलिते योजिते सति सपत्न्या वक्त्रं अस्रैरश्रुभिः । असूयया यानि हसितानि हासास्तैश्च उत्तंसितं भूषितं अभूदिति यत्, तच्चित्रम् । एकेन माल्येन तत्कवर्यामलंकरणे द्वयैरश्रुहसितैरेतद्वक्त्रालंकरणादित्याश्चर्यम् । परमार्थस्तु सपत्न्या वक्त्रमस्रैः उत्तं आर्द्रं असूयाहसितैः सितं श्वेतं चाभूदिति । 'आर्द्रं सार्द्रं क्लिन्नं तिमितं स्तिमितं समुन्नमुत्तं च' इत्यमरः । इन्द्रवज्रावृत्तम् ॥ ९८ ॥

**ग्लहमिति** । सवर्णं यमुनासलिलसमानकान्ति वर्ष्म शरीरं यस्य सः

---

१. 'यमः स्वसुः' इति पाठः. २. 'आश्लेष' इति पाठः.

फूत्कृतैः क्वचिदधःस्थितिचिह्नं बुद्बुदं हरिरुदस्य निमग्नः ।
वञ्चयन्प्रतिवधूं क्वचिदूरुस्तम्भमम्बुषु चुचुम्ब वराङ्ग्याः ॥ १०० ॥

क्रीडती मण्डलीभूय कृष्णयोरप्सु यौवते ।
तटिन्यास्तटयोः प्रान्ते ताटङ्के इव रेजतुः ॥ १०१ ॥

---

यदूद्वहः श्रीकृष्णो निमग्नस्य जलान्तर्लीनस्य जनस्य ग्रहणेषु स्वयंग्रहालिङ्ग-सुखं ग्लहं पणं कल्पयन्सन् । 'ग्लहो द्यूतादिपूत्सृष्टे पणे' इत्यमरः । तडिदिव तनुर्यासां तास्तडित्तनूः सुदृशः सुन्दरीः । सलिले । तदन्तरित्यर्थः । सुखात् अनायासादेव अवगृह्याज्जग्राह । ताः सुदृशस्तु तं नागृह्णन् । गृह्णातेः कर्तरि लङ् । अत्र तडित्तनूरिति सुदृग्विशेषणस्य सवर्णवर्ष्मेति हरिविशेषणस्य च सुखेन ग्रहण-योगायोगतात्पर्यगर्भत्वात्परिकरद्वयं सजातीयत्वेन संसृष्टम् । यत्तु 'सुवर्णवर्ष्मा' इत्यपपाठे भ्रमेण 'सुवर्णवदमलं वर्ष्म यस्य सः' इति नृसिंहः, तत्तस्य मूलनिर्मूलकस्य न चोद्यम्, यतस्तथा विशेषणस्य जले कृष्णाग्रहणासमर्थत्वात्सुदृशस्तं कुतो नागृह्णन्नित्यत्र हेत्वनुक्तेर्हरेः सुखेन ग्रहणापत्तेश्च असमर्थत्वाख्यपददोषापत्तिरिति । किं च सुवर्णस्य अमलत्वेन साम्ये उपमया अप्रसिद्धत्वाख्यालंकारदोषापत्तिरिति च । वंशस्थवृत्तम् ॥ ९९ ॥

**फूत्कृतैरिति** । अम्बुषु निमग्नो हरिः फूत्कृतैर्मुखमारुतैः अधःस्थितिचिह्नं जलान्तरावस्थानसूचकं बुद्बुदं क्वचित् एकत्र उदस्य उत्थाप्य प्रतिवधूं प्रियायाः सपत्नीं वञ्चयन्सन् तत्रैव स्थितो नान्तर्मार्गेण तत्संनिधिं गत इति भ्रामयन् सन्निति यावत् । क्वचित् अन्यत्र । वराङ्ग्याः प्रस्तुतोचितनिर्देशोऽयम् । ऊरुः स्तम्भ इव तं चुचुम्ब । अत्र बुद्बुदोत्पादनक्रियया वराङ्ग्यूरुचुम्बनात्मकमर्म-प्रकाशनाय हरिणा सपत्नीवञ्चनं कृतमिति युक्तिरलंकारः । स्वागतावृत्तम् ॥ १०० ॥

**क्रीडतीति** । तटयोरुभयोः प्रान्ते समीपे अप्सु जलेषु मण्डलीभूय वलयाकृत्या अवस्थाय क्रीडती विहरती । कृष्णयोः कृष्णार्जुनयोर्यौवते युवतिसमूहौ । 'कृष्णाख्याः शमनव्यासधनंजयजनाः' इति विश्वः । तटिन्या यमुनायास्ताटङ्के इव रेजतुः । अत्र गौरवर्तुलत्वगुणनिमित्ता युवतिसमूहयोः कुण्डलत्वोत्प्रेक्षा । यत्त्वत्र 'प्र इति वर्णः अन्ते यस्य तादृशे दीप्रे जाज्वल्यमाने इत्यर्थः' इति नृसिंहः, तत्तत्साहितीपरिचयं विशदयति । यतः 'प्रान्ते' इत्यस्य द्विवचनान्तत्वे तादृशशब्दद्वयोपस्थापनावश्यकत्वेन दीप्रशब्दवरकस्यचित्क्षिप्रकम्प्रादेरुपस्थापने प्रकृतानन्वयः । सप्तम्येकवचनान्तत्वे प्रथमाद्विवचनान्तवाच्यताटङ्कविशेषणत्वायोगः । प्रवर्णान्तानां बहूनां सत्त्वेपि दीप्रशब्दस्यैवोपस्थितिरित्यत्र नियामकाभावश्च । किं बहुना कथंचित्तदुपस्थापनेऽपि तस्य शब्दरूपस्यार्थ-विशेषणत्वायोगेनावाच्यवचनाख्यदोषापत्तिरिति ॥ १०१ ॥

---

१. 'प्रतिवधूः' इति पाठः.

इति चिरं विहृत्य प्रतीरमुत्तीर्णाभिर्जलमेलनव्रीडादिव संकुचितात्मभिः कुचैरानमिताभिस्तदङ्गसङ्गसंगतशर्माणि[1] मर्मरगिरा संस्तुत्य पवनचञ्चलैरञ्चलैः श्लाघमानानीव वसनानि निवसित[2]वतीभिः कायकान्तिलता[3]कोरकाणि[4] कनकाभरणानि कामनीयकपुनरुक्तिमात्रस्य पात्रयन्तीभिर्वधूटीभिः सह तटाटवीं पर्यटतोस्तयोरग्रे दिशि दिशि कृशित[5]शिशिरेतराभीशुप्रकाशो जनदृशां कोशीकरण[6]देशिकः कोऽपि महसां राशिराविरासीत् ।

उन्मिष्योन्मिष्य यत्नात्परिचलितयथापूर्वशक्त्याथ दृष्ट्या
तन्मध्ये वीक्ष्य कंचित्पुरुषमनुदितच्छायहस्तातपत्रम् ।

---

इतीति । इत्युक्तप्रकारेण चिरं विहृत्य जलक्रीडां कृत्वा प्रतीरं तटं प्रति उत्तीर्णाभिः जलानां लडयोरभेदान्मूर्खाणां च मेलनेन संगत्या व्रीडात् लज्जयेवेत्युत्प्रेक्षा । संकुचितः मुकुलितः आत्मा मनः स्वरूपं च येषां तैः । कुचा जलसङ्गेन स्वल्पीभवन्तीति प्रसिद्धम् । कुचैरानमिताभिः । तासामङ्गैः सङ्गेन संगतं शर्म सुखं येषां तान्यत एव मर्मरः वेष्टनजन्यः ध्वनिरेव गीः वाक् तया संस्तुत्य पवनेन चञ्चलैरञ्चलैः प्रान्तैः श्लाघमानानि शिरोभिरभिनन्दयमानानीव स्थितानि वसनानि वस्त्राणि निवसितवतीभिर्वेष्टितवतीभिः । कायकान्तेः शरीरशोभाया एव लतायाः कोरकाणि मुकुलानि कनकाभरणानि कामनीयकेन सौन्दर्येण नैसर्गिकेण पुनरुक्तिरेव पुनरुक्तिमात्रं तस्य पात्रयन्तीभिः पात्राणि कुर्वन्तीभिः । निसर्गसुन्दरीणां किमेतैः सौन्दर्यमिति तेषां वैयर्थ्यं सूचयन्तीभिरित्यर्थः । पात्रशब्दात् 'तत्करोति–' इति ण्यन्ताल्लटः शतरि 'उगितश्च' इति ङीप् । वधूटीभिः कान्ताभिः सह । 'वधूटी महिला भामा' इति त्रिकाण्डशेषः । तटाटवीं यमुनातीरकाननं पर्यटतोः स्वैरं संचरतोस्तयोः कृष्णार्जुनयोरग्रे पुरस्तात् दिशि दिशि प्रतिदिशं कृशितः क्षीणीकृतः शिशिरेतराभीशोरुष्णकिरणस्य प्रकाश आतपो येन तथोक्तः अत एव जनस्य दृशां नेत्राणां कोशीकरणे मुकुलने देशिकः आचार्यः । तत्कारयितेति यावत् । महसां तेजसां राशिः कोऽपि पुमानाविरासीत्प्रादुर्बभूव । 'कायकान्तिलताकोरकाणीव' इति इवशब्दपाठः क्वाचित्कः प्रामादिकः । तत्रोत्प्रेक्षायाः प्रसक्त्यभावात् । यत्तु तदङ्गेत्यत्र कुचरूपाङ्गेति नृसिंहः, तन्न । अग्रे निवसनस्य सर्वाङ्गसंबन्धित्वेन संदर्भविरोधापत्तेरिति । उत्प्रेक्षारूपकसंसृष्टिः ॥

उन्मिष्येति । तस्मिन्नेव क्षणे तत्क्षणम् । 'देशकालाध्वगन्तव्याः' इति कर्मत्वम् । यत्नात् । कृच्छ्रादित्यर्थः । उन्मिष्योन्मिष्योन्मील्योन्मील्य । वीप्सायां

---

१. 'संगमशर्माणि' इति पाठः. २. 'वसित' इति पाठः. ३. 'कनकलता' इति पाठः. ४. 'कोरकाणीव' इति पाठः. ५. 'काशित' इति पाठः. ६. 'कोशीकार' इति पाठः.

अक्ष्णा ज्ञातेयमोतोर्विदधतमनयोः प्रश्रयाश्चर्यैर्लब्धा-
द्वैराज्यादाकुलाभूद्यदुकुरुवरयोस्तत्क्षणं चित्तसीमा ॥१०२॥

मुखे तिरोवेपथुभिर्वयःकृतैर्मुकुन्दवध्वः कृतसूचना इव ।
द्विजातिवृद्धस्य पथोऽस्य पार्श्वयोर्द्विधापसस्रुः सहसातिभीरवः ॥१०३॥

ताभ्यां ततस्तस्य पदोः पुरस्तादपङ्कमात्मानमहो विधातुम् ।
स्पृष्टान्युदञ्चद्बहुघर्मतोयैरष्टाभिरङ्गैरवनीरजांसि ॥ १०४ ॥

---

द्विर्भावः । पक्ष्मणी इति शेषः । परिचलिता तेजोभिघाताद्भग्ना । पूर्वं यथा वर्तते स्म यथापूर्वम् । वास्तवीत्यर्थः । शक्तिर्वस्तुग्रहणसामर्थ्यं यस्यास्तया दृष्ट्या चक्षुषा (करणेन) तस्य तेजोराशेर्मध्ये अनुदिता अनुत्पन्ना छाया अनातपः यस्मात्त-थोक्तम् । उपरितनसौरप्रकाशनिरोधेऽप्यधस्तनाभिप्रकाशानिरोधादिति भावः । तादृशं हस्ते आतपत्रं यस्य तम् । अक्ष्णा नेत्रगोलकेन ओतोर्बिडालस्य ज्ञातेयं बान्धव्यं विदधतं कुर्वन्तम् । मार्जारसदृशाक्षमित्यर्थः । 'कपिज्ञात्योर्ढक्' इति भावे ढक्येयादेशः । 'अक्ष्णोः' इति पाठे नेत्रयोरित्यर्थः । कंचित् अनिर्देश्यमहि-मानं पुरुषं वीक्ष्य । अथ यदुवरस्य कृष्णस्य कुरुवरस्य अर्जुनस्य च द्वयोश्चित्तसीमा मनोदेशः प्रश्रयेण विनयेनाश्चर्येण च लब्धात्प्राप्तात् । द्वौ राजानौ यस्यास्तस्या भावात् द्वैराज्याद्धेतोराकुला अभूत् । राजयुग्मस्य प्राणघातुकत्वप्रसिद्धेरिति भावः । विस्मितौ विनीतौ चाभूतामिति तत्त्वार्थः । स्वभावोक्त्युपमयोः संसृष्टिः । स्रग्धरा वृत्तम् ॥ १०२ ॥

**मुख इति** । मुकुन्दस्य कृष्णस्य वध्वः कामिन्यः अस्यागच्छतो द्विजाति-वृद्धस्य वृद्धब्राह्मणस्य संबन्धिभिर्वयसा वार्धकेन कृतैर्जातैः । मुखे तिरोवेपथु-भिस्तिरश्चीनकम्पैः कृतं सूचनं पार्श्वोपसर्पणप्रेरणं यासां तथोक्ता इवेत्युत्प्रेक्षा । अतिभीरवोऽतिभीतिवत्यः सत्यः पथस्तन्मार्गस्य पार्श्वयोः द्विधा द्विप्रकारं सहसा अपसस्रुरगच्छन् । वंशस्थवृत्तम् ॥ १०३ ॥

**ताभ्यामिति** । ततस्ताभ्यां कृष्णार्जुनाभ्यां आत्मानं शरीरं च अपङ्कं निष्पापं कर्दमशून्यं च विधातुं उदञ्चन्ति अङ्कुरन्ति बहूनि घर्मतोयानि खेद-बिन्दवो येषु तैः अष्टाभिरङ्गैः फालभुज[जानु]वक्षःपादैः तस्य दिव्यपुरुषस्य पदोः पादयोः पुरस्तात् अग्रे अवन्या भुवः रजांसि रेणवः राजसविकाराश्च स्पृष्टानि । साष्टाङ्गं नमश्चक्रतुरित्यर्थः । अहो इत्याश्चर्ये । जगत्पावनयोरपि नरनारायणयो-रात्मनो निष्पापत्वकरणाभिप्राय इत्याश्चर्यमिति भावः । अत्र खिन्नाङ्गावनीरजः-स्पर्शनजन्यसपङ्कत्वप्रयत्नस्य राजसविकाराश्रयणप्रयत्नस्य वा स्वस्वविपरीतनिष्प-ङ्कत्वनिष्पापत्वफलेच्छाजन्यत्वाद्विचित्रालंकारः—'विचित्रं तत्प्रयत्नश्चेद्विपरीतफले-च्छया' इति लक्षणात् । स च श्लेषभित्तिकाभेदाध्यवसायमूलातिशयोक्त्युज्जीवित इति तयोरङ्गाङ्गिभावेन संकरः ॥ १०४ ॥

---

१. 'दत्त' इति पाठः. २. 'घन' इति पाठः.

परस्परासङ्गफलप्रदित्सया स्वजन्मतारैन्दववासराविव ।
उपस्थितौ तावुपसृत्य संभ्रमात्स आशिषोऽनन्तरमेवमब्रवीत् ॥ १०५ ॥
क्षुत्प्रपीडयति मामयि वीरौ कुक्षिमेत्य चकितेव युवाभ्याम् ।
याच्यते तदशनं बहु भोक्तुं यस्य तृप्यति पुरातिथिरेषः ॥ १०६ ॥
इत्थं स्वदक्षिणकरं पुरतः प्रसार्य
तस्यार्दतो वचनपार्ष्ण्यनुधाविवेगा ।
ताभ्यां तथेति फणितिस्तु समाललम्बे
सत्स्वर्थना फलमदौहृदमेव सूते ॥ १०७ ॥

---

**परस्परेति** । सोऽग्निर्वृद्धब्राह्मणवेषः परस्परासङ्गेनान्योन्यमेलनेन यत्फलं भोजनं तस्य प्रकर्षेण दातुमिच्छा प्रदित्सा । ददातेः सन्नन्तादप्रत्ययः । तया उपस्थितौ प्रत्यासन्नौ स्वौ स्वीयौ जन्मतारा जन्मनक्षत्रं ऐन्दववासरः सोमवारश्च तौ द्वाविव स्थितावित्युत्प्रेक्षा । तौ कृष्णमर्जुनं च उपसृत्य संनिधाय आशिष आशीर्वादस्य अनन्तरं संभ्रमात्संतोषात् एवं वक्ष्यमाणप्रकारेणाब्रवीत् । संभ्रमादुपसृत्येति वा योजना । 'अध्वा भोजनमालस्यम्' इत्यादिना भानुवारादेः जन्मर्क्षयोगे प्रत्येकं फलश्रवणात्तत्रत्यभोजनफलप्रदातृत्वेन कृष्णार्जुनयोस्तत्त्वेनोत्प्रेक्षणम् । 'तदाशिषोऽनन्तरम्' इत्यपपाठे क्रमेण नृसिंहव्याख्यानं कर्तृवाचकपदाभावेन न्यूनपदत्वाख्यदोषापत्तेरुपेक्ष्यम् । वंशस्थवृत्तम् ॥ १०५ ॥

**क्षुदिति** । अयि वीरौ हे कृष्णार्जुनौ, क्षुत् जठराग्निजनितोदरदाहः युवाभ्यां युष्मत्तः चकिता भीतेवेत्युत्प्रेक्षा । कुक्षिमुदरं एत्य मां प्रकर्षेण पीडयति । एषोऽतिथिर्यस्यान्नस्य पुराग्रे तृप्यति । येनान्नेन तृप्तो भविष्यतीत्यर्थः । 'यावत्पुरानिपातयोर्लट्' इति लट् । 'निकटागामिके पुरा' इत्यमरः । अनेन मया तदशनं अन्नं खाण्डववनरूपं बहु यथातथा भोक्तुं याच्यते । याचेः कर्मणि लट् । अत्र क्षुत्पीडाया अशनयाच्ञाहेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गमुत्प्रेक्षासंसृष्टम् । स्वागतावृत्तम् ॥ १०६ ॥

**इत्थमिति** । इत्थमुक्तप्रकारेण स्वस्य दक्षिणकरं पुरतोऽग्रे प्रसार्य । अर्दतः । अशनं प्रार्थयत इत्यर्थः । चुरादिणेरनित्यत्वादप्रयोगः । तस्य ब्राह्मणस्य यद्वचनम् 'याच्यते तदशनं बहु भोक्तुम्' इत्येवंरूपं तस्य पार्ष्ण्यनुधावी वेगो यस्याः सा । अविलम्बितानन्तर्येत्यर्थः । तथा तदशनं दास्यावः इत्युक्तप्रकारा फणितिः वाक्यं ताभ्यां तु कृष्णार्जुनाभ्यामपि समाललम्बे गृहीता । लम्बतेः कर्मणि लिट् । तथाहि—सत्सु सज्जनेषु अर्थना याच्ञा स्त्रीलिङ्गेन स्त्री च अदौहृदं गर्भधारणं विनैव । सद्य एवेत्यर्थः । फलं सूते जनयति । सन्तोऽविलम्बितमेवार्थिनः कृतार्थयन्तीत्यर्थः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ १०७ ॥

---

१. 'तदाशिषोः' इति पाठः. २. 'याचते' इति पाठः. ३. 'भणितिः' इति पाठः.

अथ मुदा कथितात्मयथातथभावो भगवान्बृहद्भानुर्दन्तपटीयवनिकान्तर्नटत्स्मितयोर्देवकीपृथासुतयोर्धुरि गिरिदरीवसतिधुरीणविभावरीचरसरीसृपदिविषदीशमेदुरीकृतदुरीहितताण्डवस्य खाण्डवस्य जगत्कण्ठेगडुत्वं तत्परिरक्षणदक्षस्य ऋभुक्षणस्तक्षके पक्षपातं च विनिवेद्य युवयोः कटाक्षबलेन क्षणाद्दिधक्षामीति स्वमपेक्षितविशेषमाचचक्षे ॥

भ्रूसंज्ञया यदुपतेः पुरुहूतसूनुः
संतुष्यतोऽथ जगृहे स तनूनपातः ।
तूणौ च गाण्डिवसखौ तुरगांश्च शुभ्रा-
न्कान्तं रथं च नटता कपिकेतनेन ॥ १०८ ॥

---

अथेति । अथ तयोः प्रतिज्ञानन्तरं मुदा संतोषेण याचितार्थदानप्रतिज्ञाजन्येनात्मनः यथातथाभावः याथातथ्यम् । अभिलमिति यावत् । स कथितोनि वेदितो येन सः भगवान् बृहद्भानुरग्निः दन्तपट्याः अधरोष्ठस्यैव यवनिकायाः तिरस्करिण्याः अन्तर्मध्ये नटत्प्रसरत् स्मितं ययोस्तयोः । स्मेराधरयोरित्यर्थः । देवकीसुतस्य पृथासुतस्य च तयोः कृष्णार्जुनयोर्धुरि पुरस्तात् । गिरिदरीषु शैलगुहासु वसतिधुरीणैर्निवासिभिः विभावरीचरै राक्षसैः, सरीसृपैः सर्पैः, दिविषदीशैः असुरश्रेष्ठैश्च मेदुरीकृतं सान्द्रीकृतं दुरीहितानां लोकोपद्रवाणां ताण्डवमाविर्भावो यस्मिन् तस्य खाण्डवस्य खाण्डवनामारण्यस्य जगतः लोकस्य कण्ठेगडुत्वं रोगजन्यकिणत्वम् । अभोज्यत्वमिति यावत् । तस्य खाण्डवस्य परिरक्षणे दक्षस्य समर्थस्य ऋभुक्षण इन्द्रस्य तक्षके तत्र वर्तमाने नागराजे पक्षपातं च विनिवेद्य युवयोः कटाक्षबलेन साहाय्योपजीवनेन क्षणात् दिधक्षामि दग्धुमिच्छामि । तदिति शेषः । इत्युक्तप्रकारं स्वं स्वीयमपेक्षितविशेषं कामितार्थमाचचक्षे कथितवान् । चक्षेः कर्तरि लिट् । 'सातिजवम्' इति पाठे ससहायं यथातथेत्यर्थः । 'सहायोऽतिजवस्तुल्यौ' इत्यमरः ॥

भ्रूसंज्ञयेति । अथ स पुरुहूतसूनुरर्जुनो यदुपतेः श्रीकृष्णस्य भ्रुवः संज्ञया प्रेरणेन संतुष्यतः कामितार्थप्रतिज्ञया प्रहृष्यमाणात्तनूनपातोऽग्नेः । 'जातवेदास्तनूनपात्' इत्यमरः । गाण्डिवस्य नाम धनुषः सखायौ सहवर्तमानौ गाण्डिवसखौ । 'राजाहःसखिभ्यष्टच्' इति समासान्तष्टच् । तूणौ निषङ्गौ च । त्रीनपीत्यर्थः । शुभ्रान् श्वेतान् तुरगान् अश्वांश्च । नटता नृत्यता कपिना आञ्जनेयेन युक्तेन केतनेन ध्वजेन कान्तं मनोहरम् । शाकपार्थिवादिना समासः । रथं जगृहे गृहीतवान् । लौकिकसाधनैरलौकिकैर्योद्धुमशक्यत्वादिति भावः ॥ १०८ ॥

---

१. 'जवनिका' इति पाठः. २. 'नटीभवत्' इति पाठः. ३. 'खाण्डवस्य' इति नास्ति क्वचित्. ४. 'गडुत्वं च' इति पाठः. ५. 'निवेद्य' इति पाठः. ६. 'स्वयमपेक्षित'; 'स्वयमपेक्ष्य' इति पाठः.

मरुन्मनोमार्गणवैनतेयपृथग्जयात्तैरिव कीर्तिशावैः ।
चतुर्भिरश्वैः समुपास्यमानं स फाल्गुनस्तं रथमारुरोह ॥१०९॥

दशमुखनगरे पुरानुभूतं दहनहठात्करणं पुनर्दिदृक्षुः ।
उपगत इव मारुतिः स साक्षादुदलसदस्य रथाग्रकेतनाङ्कः ॥ ११०॥

तद्भुजावनुधावन्त्याः संग्रामेषु जयश्रियः ।
जङ्घाद्वयधियं तूण्यौ जनयामासतुस्तदा ॥ १११ ॥

पवनसखदृशोर्मुदं वितन्वन्पटुतरटंकृतिकम्पिताटवीकः ।
कुटिलमतनुतार्जुनः कराभ्यां गुणमिव दण्डमथास्य गाण्डिवस्य११२

अथ गरुडवलीमुखध्वजाभ्यामनुमतिमेत्य स संननाह हर्षात् ।
बलरिपुमणिनीलमुत्प्रवालं वनमशितुं वडवास्यभूरिवाग्निः ॥ ११३ ॥

---

**मरुदिति** । स फाल्गुनोऽर्जुनः । मरुतो वायोः मनसः मार्गणस्य बाणस्य वैनतेयस्य गरुडस्य च चतुर्णां पृथक् प्रत्येकं ये जयाः चत्वारस्तेभ्यः आत्तैः कीर्तिशावैः कीर्तिशिशुभिरिव स्थितैश्चतुर्भिरश्वैः समुपास्यमानं संयुज्यमानं तं तादृग्वेगवत्त्वेन प्रसिद्धमग्निदत्तं रथमारुरोह । उत्प्रेक्षा ॥ १०९ ॥

**दशमुखेति** । अस्यार्जुनस्य रथाग्रकेतनोऽङ्कः चिह्नत्वेन वर्तमानः स प्रसिद्धो मारुतिर्हनूमान् । दशमुखस्य रावणस्य नगरे लङ्कायां पुरा दाहसमये अनुभूतं दृष्टं दहनस्य अग्नेर्हठात्करणं बलाद्दाहं पुनर्द्रष्टुमिच्छुर्दिदृक्षुः सन् । अतएव साक्षान्मूर्तीभूय उपगतः आगत इवेत्युत्प्रेक्षा । उदलसत्नृत्यति स । पुष्पिताग्रावृत्तम् ॥११०॥

**तदिति** । संग्रामेषु युद्धेषु तस्यार्जुनस्य भुजौ प्रत्यनुधावन्त्या अनुसरन्त्या जयश्रियो जयलक्ष्म्याः जङ्घाद्वयस्य धियं संभावनां तूण्यौ अग्निदत्ताक्षयतूणीरौ तदा खाण्डवदाहोद्योगावसरे जनयामासतुः । उत्प्रेक्षा ॥ १११ ॥

**पवनसखेति** । अथार्जुनः पवनसखस्याग्नेर्दृशोर्मुदं चक्षुरुत्सवं वितन्वन्करिष्यमाणः । वर्तमानसामीप्ये वर्तमाननिर्देशः । कराभ्यां पटुतरयातिकठोरया टंकृत्या कम्पिताटवी खाण्डवारण्यभागो येन तथोक्तः सन् । 'नद्यृतश्च' इति कप् । अस्याग्निदत्तस्य गाण्डिवस्य कार्मुकस्य गुणं ज्यामिव दण्डं कुटिलं वक्रं अतनुत कृतवान् । आकर्षणेनेति भावः । अत्र गाण्डिवगुणदण्डयोः कौटिल्यकरणेनौपम्यस्य गम्यत्वात्तुल्ययोगितामेदः । पुष्पिताग्रावृत्तम् ॥ ११२ ॥

**अथेति** । अथ सोऽग्निः । गरुडवलीमुखध्वजाभ्यां कृष्णार्जुनाभ्यामनुमतिं दाहाभ्यनुज्ञामेत्य । हर्षात् वडवा अश्वयोषिदाकारः और्वमुनिकोपः तस्यास्यात् मुखात् भवतीति भूरग्निः वडवानल इव बलरिपुमणिरिन्द्रनीलरत्नमिव नीलं

---

१. 'जयास्तैः' इति पाठः. २. 'केतनाङ्कम्' इति पाठः. ३. 'तूणौ' इति पाठः. ४. 'असकृत्' इति पाठः, ५. 'अपि' इति पाठः. ६. 'इव' इति पाठः.

शोणरुचा शिखयातिमहत्या बाणपुरावृतिवासनयेव ।
चण्डतरोऽस्य[1] वनस्य समन्तात्कुण्डलनां[2] कलयन्ववृधेऽग्निः ॥ ११४ ॥

प्रथमं पावकषिङ्गे परिरभ्य गृहीतपल्लवोष्ठपुटे ।
उपकण्ठे[3] वनराजेरुदगादाकुलकपोतनादततिः ॥ ११५ ॥

क्रमेण प्रवलीभवतो भगवतः पवमानसखस्य तमालादिषु केषुचित्तरुषु[4] पर्णोच्चयायमानैर्धूमैः[5] किंशुकादिषु केषुचिद्द्रुमेषु[6] स्तबकायमानैर्ज्वालाकंदलैस्तिलकादिषु केषुचित्पचेलिमफलबीजायमानैः[7] स्फुलिङ्गैर्हरिचन्दनादिषु केषुचिद्विटपिषु[8] वल्कलायमानैरालोकैर्नीडवत्सु

श्यामं उद्गतानि प्रवालानि किसलयानि विद्रुमाश्च यस्मिंस्तत् । वनं खाण्डवं सामुद्रजलं चाशितुं भक्षितुं संननाह संनद्धोऽभूत् । श्लिष्टविशेषणेयमुपमा ॥११३॥

शोणेति । अथ चण्डतरोऽतिभीषणोऽग्निर्बाणपुरस्य बलिपुत्रनगरस्य शोणाख्यस्य आवृतिवासनया प्राकारात्मना स्वावस्थानसंस्कारेणेव स्थितयेत्युत्प्रेक्षा । अतिमहत्या शोणरुचा रक्तप्रभया शिखया ज्वालया अस्य वनस्य खाण्डवस्य समन्तात्परितः कुण्डलनां कुण्डलाकारेण वेष्टनं कलयन्कुर्वन्सन् । ववृधे वर्धते स्म । वर्धतेः कर्तरि लिट् । बाणपुरस्याग्निमयः प्राकारः पुराणप्रसिद्धः । तोटकवृत्तम्—'तोटकवृत्तमिदं भभभा गौ' इति लक्षणात् ॥ ११४ ॥

प्रथममिति । पावकोऽग्निः षिङ्ग इव तस्मिन् । 'षिङ्गः पाल्लविको विटः' इत्यमरः । प्रथममादौ परिरभ्य संवेष्ट्य आश्लिष्य च गृहीतो दग्ध आस्वादितश्च पल्लव ओष्ठपुट इव येन तथोक्ते सति । वनराजेः खाण्डवस्य स्त्रीलिङ्गात्कस्याश्चिन्नायिकायाश्च । उपकण्ठे समीपे कण्ठदेशे च आकुला तापार्ता दन्तक्षतवेदनया च संकुला कपोतानां पारावतानां तेषामिव च नादततिः कलकलरवराशिः उदगादाविर्बभूव । अत्र प्रस्तुताग्निवनराजिश्लिष्टसाधारणविशेषणसाम्यादप्रस्तुतपरिरम्भपूर्वकाधरचुम्बनमणितमनोहरविटकामिनीसंभोगव्यापारप्रतीतेः समासोक्तिरलंकारः । 'समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत्' इति लक्षणात् । अत्र संभोगस्यालिङ्गनपूर्वकत्वं रतिकूजितानां कपोतनादसाम्यं च रतिरहस्ये—'आदौ रतं बाह्यमिह प्रयोज्यं तत्रापि चालिङ्गनमेव पूर्वम्' इति । तत्र भावुककपोतवारिदेत्यादिना प्रसिद्धं रत्यायासजनितो हुंकारो मणितमिति । आर्यावृत्तम् ॥ ११५ ॥

क्रमेणेति । क्रमेण प्रवलीभवतः प्रवर्धमानस्य भगवतः पवमानसखस्याग्नेः संबन्धिभिः । इतीदं तृतीयान्तपञ्चकेऽपि योज्यम् । तमालादिषु केषुचित्तरुषु

१. 'चण्डतरस्य' इति पाठः. २. 'कुण्डलनम्' इति पाठः. ३. 'उपकण्ठम्' इति पाठः. ४. 'द्रुमेषु' इति पाठः. ५. 'पत्रोच्चयाय' इति पाठः. ६. 'द्रुमेषु' इति नास्ति क्वचित्. ७. 'पक्रिम' इति पाठः. ८. 'केषुचिद्वल्कायमानैः' इति पाठः.

केषुचित्परस्परपक्षिपक्षताडनरटनायमानैः प्लोषचटचटत्कारैश्च परितः परीतमपि तद्वनं मुहूर्तं यथापुरमवतस्थे ॥

हुताशनपरित्रासादुच्चलन्त्या वनश्रियः ।
कबरीव श्लथावेगात्कापि धूम्या खमानशे ॥ ११६ ॥

वलयं धूमरेखाया वर्त्मनि द्योसदां बभौ ।
भाविनः शरकूटस्य परितो मानसूत्रवत् ॥ ११७ ॥

अस्यैव गाण्डिवभृतो भुवि भो जन त्वं
मल्लं तृणाय मरुतामपि मन्यमानम् ।

---

वृक्षेषु नीलदलेषु पर्णोच्चयः दलसमूह इव आचरद्भिः पर्णोच्चयायमानैः । उपमाना-त्क्यङ् । लटः शानच् । एवमग्रेऽपि । धूमैः । किंशुकादिषु केषुचिद्द्रुमेषु तरुषु रक्तकुसुमेषु स्तबकायमानैः पुष्पगुच्छवदाचरद्भिः ज्वालाकन्दलैः शिखाङ्कुरैः । तिलकादिषु केषुचित्तरुषु रक्तबीजेषु पचेलिमानां पक्वानां फलानां बीजायमानैः स्फुलिङ्गैरग्निकणैः । हरिचन्दनादिषु केषुचिद्विटपिषु तरुषु रक्तवल्कु वल्कलायमानैः। 'त्वक्स्त्री वल्कं वल्कलमस्त्रियाम्' इत्यमरः । आलोकैः प्रकाशैः । नीडवत्सु पक्षिकुटीरधारिषु केषुचित्तरुषु परस्परं पक्षिणां पक्षाभ्यां ताडनेन यद्रटनं चट-च्चटशब्दस्तद्वदाचरद्भी रटनायमानैः । प्लोषाणां दाहानां संबन्धिभिश्चटचटात्कारैः परितः सर्वतः परीतं व्याप्तमपि तद्वनं खाण्डवं मुहूर्तमल्पकालं यथापुरं दाहा-त्पुरेव अवतस्थेऽवर्तत । 'अव्ययं विभक्ति–' इत्यादिना सादृश्यार्थेऽव्ययीभावः । 'नाव्ययीभावात्–' इत्यम् । अत्राग्निदाहेन विकृतस्य वनस्य पुनर्धूमादिभिः पूर्वावस्थासंपादनात्पूर्वरूपालंकारभेदः—'पूर्वावस्थानुवृत्तिश्च विकृते सति वस्तुनि' इति लक्षणात् । तस्य चोपमापञ्चकोज्जीवितत्वात्तयोरङ्गाङ्गिभावेन संकरः ॥

**हुताशनेति** । कापि महत्त्वेनानिर्वाच्या धूम्या धूमपङ्क्तिः । पाशादित्वाद्यत् । हुताशनादग्नेः परित्रासात्परितो भयात् उच्चलन्त्या ऊर्ध्वं पलायमानाया वनश्रियो वनलक्ष्म्या वेगात् पलायनसंभ्रमात् श्लथा मुक्तबन्धना कबरी केशपाश इवे-त्युत्प्रेक्षा । आकाशं आनशे व्याप्नोति स्म ॥ ११६ ॥

**वलयमिति** । धूमरेखाया वलयं मण्डलम् । द्यवि आकाशे सीदन्तीति द्योसदां देवानां वर्त्मनि आकाशे भाविनो भविष्यतः शरमयस्य कूटस्य शालायाः परितः यावच्छालं मानसूत्रवत् प्रमाणसूत्रमिवेत्युत्प्रेक्षा । बभौ । 'वासः कुटी द्वयोः शाला' इति गृहपर्यायेष्वमरः ॥ ११७ ॥

**अस्यैवेति** । भो जन हे लोक, त्वं मरुतां देवानां मल्लं वीरमिन्द्रमपि भुवि तृणाय मन्यमानं तृणकल्पत्वेन संभावयमानम् । अस्य गाण्डिवभृतोऽर्जुनस्यैव

---

१. 'प्रोद्यच्चटचटात्कारैः' इति पाठः. २. 'सर्वतः' इति पाठः. ३. 'मुहूर्तम्' इति नास्ति क्वचित्. ४. 'द्युसदां' इति पाठः. ५. 'हे जन' इति पाठः. ६. 'मन्यमानः' इति पाठः.

बाह्वोर्बलं पठ पठेति वदन्निवाग्निः
स्फोटारवं स झटिति स्फुटयांचकार ॥ ११८ ॥

स्वपार्श्वयुग्मज्वलदग्निकन्दला वनान्तभाजोऽजगरा महत्तराः ।
निशातवज्रक्षतनिःस्रुतासृजां दशामयत्नाज्जगृहुर्महीभृताम् ॥ ११९ ॥

तत्र निकुरुम्बाणि स्तम्बेरमाणामामूलमनलार्चिरवलम्बितदन्तमुसलानि प्रेमपरवशतया वशासु वितरितुं स्वसृक्कभागविन्यस्तजग्धार्धसल्लकीपल्लवकवलानीव क्षणमलक्ष्यन्त ॥

सविधज्वलनोष्मवीचिभिः सपदि म्लानकपित्थशाखिनाम् ।
परिपाकसिताः फलव्रजाः प्रबभुः स्फोटकबुद्बुदा इव ॥ १२० ॥

---

बाह्वोर्भुजयोर्बलं शौर्यं पठ पठोच्चारयोच्चारय इत्युक्तप्रकारेण वदन् ब्रुवन्निवेत्युत्प्रेक्षा । सोऽग्निः स्फोटैर्वेण्वादीनां दाहजन्यदलनैर्य आरवः पटपटात्कारस्तं झटिति द्रुतं स्फुटयांचकार प्रकटितवान् ॥ ११८ ॥

स्वपार्श्वेति । वनान्तभाजः खाण्डववनवासिनो महत्तरा अतिस्थूलायतोन्नता अजगराः सर्पविशेषाः स्वयोः स्वीययोः पार्श्वयोर्युग्मे ज्वलन्तोऽग्नेः कन्दला ज्वाला येषां तथोक्ताः सन्तः । निशातेनातितीक्ष्णेन वज्रेणेन्द्रायुधेन यानि क्षतानि । व्रणानीत्यर्थः । तेभ्यो निःस्रुतान्युद्गतानि असृञ्जि शोणितानि येषां तेषां महीभृतां पर्वतानां दशामवस्थाम् । साम्यमिति यावत् । अयत्नाद्यत्नं विनैव जगृहुः । अत्रान्यदशाया अन्यत्रासंभवेनौपम्याक्षेपादसंभवधर्मनिबन्धनरूपो निदर्शनालंकारः ॥ ११९ ॥

तत्रेति । तत्र दह्यमाने खाण्डवे स्तम्बेरमाणां गजानां निकुरुम्बाणि वृन्दानि । 'इभः स्तम्बेरमः पद्मी', 'वृन्दं निकुरुम्बं कदम्बकम्' इत्युभयत्राप्यमरः । आमूलं मूलदेशपर्यन्तमनलार्चिर्भिरग्निज्वालाभिरवलम्बितानि व्याप्तानि दन्ता मुसलानीव तानि येषां तथोक्तानि सन्ति । प्रेम्णा प्रियानुरागेण परवशतया पारवश्येन हेतुना वशासु करिणीषु विषये वितरितुं सृक्कभागयोरोष्ठप्रान्तयोर्विन्यस्ता अर्धं जग्धा जग्धार्धाश्च सल्लकीपल्लवमयाः कवला यैस्तथोक्तानीवेत्युत्प्रेक्षा । क्षणमलक्ष्यन्तादृश्यन्त । लक्षतेः कर्मणि लङ् ॥

सविधेति । सविधे समीपे ज्वलनस्य ज्वलतोऽग्नेरूष्मणो वीचिभिः परम्पराभिः सपदि म्लानानां शुष्कानां कपित्थानां नाम शाखिनां वृक्षाणां संबन्धिनः परिपाकेन सिताः श्वेताः फलानां व्रजाः समूहाः । स्फोटकस्य मसूरिकारोगस्य बुद्बुदाः व्रणविशेषा इवेत्युत्प्रेक्षा । प्रबभुः । वैतालीयम् ॥ १२० ॥

---

१. 'बाह्वोः' इति पाठः. २. 'स्फुटयांबभूव' इति पाठः. ३. 'क्षतिनिःसृतासृजां' इति पाठः. ४. 'भाग' इति नास्ति क्वचित्.

निशि केवलं तमसि दीप्रतनुं निजजातिमोषधितरुं निखिलम्।
इतरे विजेतुमिव ते तरवो दिवसेऽपि जज्वलुरतीवतराम् ॥१२१॥

दृप्तदानवनिशाचरवर्गस्तत्र गाण्डिवभृता निहतोऽपि।
तन्निषङ्गयुगबाणगणानां संख्यया प्रतिभटत्वमकार्षीत् ॥१२२॥

ज्वालतापभरकुण्डलिताङ्गीः क्ष्वेडसारघृतसेचनमृद्वीः।
सर्पपुंगवततीरतिहृष्टः शष्कुलीरिव चचर्व कृशानुः ॥ १२३ ॥

तावत्तक्षकरक्षणाय सहसा शक्रोऽधिरुह्य द्विपं
वज्रं न्यस्य तदीयमूर्ध्नि मरुता संनाहयन्वाहिनीम्।
ब्रह्माण्डप्रतिरोधनेन विमुखैर्धूमैरिवारण्यजै-
रातस्तार नभस्तलं जलधरैरारब्धघोरारवैः ॥ १२४ ॥

निशीति। निशि केवलं रात्रावेव तत्रापि तमस्येव दीप्रा प्रकाशमाना तनुर्देहो यस्य तं निजजातिं निखिलं समस्तमोषधितरुं ज्योतिर्लतां विजेतुमिवेत्युत्प्रेक्षा। इतरे तद्भिन्नास्ते खाण्डवीयास्तरवो दिवसे अह्न्यपीत्यपिना किमुत रात्राविति ध्वन्यते। अतीवतरां भृशं जज्वलुर्ज्वलन्ति स्म। प्रमिताक्षरावृत्तम् ॥ १२१ ॥

दृप्तेति। तत्र खाण्डवे गाण्डिवभृतार्जुनेन निहतः पलायनसमये खण्डितोऽपि दृप्तानां दानवानामसुराणां निशाचराणां राक्षसानां च वर्गः समूहस्तस्यार्जुनस्य निषङ्गयुगेऽक्षयतूणीरयुग्मे बाणगणानां संबन्धिन्या संख्यया सह प्रतिभटत्वं प्रतिवीरत्वं तुल्यत्वं च अकार्षीत् चक्रे। कृञः कर्तरि लुङ्। सिचि वृद्धिः। अत्र निहतस्य प्रतिभटत्वमिति विरोधस्य तुल्यत्वेनाभासीकरणाद्विरोधाभासः। एवं तादृशदानवनिशाचरवर्गस्य साक्षाच्छत्रुणार्जुनेन सह योद्धुमशक्त्या तन्निषङ्गबाणगणसंख्यया प्रतिभटत्ववर्णनात्प्रत्यनीकालंकारः। द्वयोश्च श्लेषैकोत्थापितत्वादैककालिकत्वाच्च समप्राधान्यसंकरः। स्वागतावृत्तम् ॥ १२२ ॥

ज्वालेति। कृशानुरग्निर्ज्वालानां तापभरेण तापातिशयेन कुण्डलितानि कुण्डलाकृतिं नीतान्यङ्गानि देहा यासां ताः। क्ष्वेडसारस्य विषरसस्यैव घृतस्य सेचनेनोक्षणेन मृद्वीः। 'ओतो गुणवचनस्य' इति ङीप्। शष्कुलीश्चक्राकृतिभक्ष्यविशेषानिव स्थिता इत्युत्प्रेक्षा। सर्पपुंगवानां सर्पश्रेष्ठानां ततीः समूहान्। अतिहृष्टः सन्। चचर्व। ददाहेत्यर्थः। चर्वतेः कर्तरि लिट्। 'द्वयोर्ज्वालकीलौ' इति ज्वालशब्दस्य पुंस्त्वानुशासनात्तत्त्वेन निर्देशः ॥ १२३ ॥

तावदिति। तावत्सर्पदाहसमये शक्रः इन्द्रस्तक्षकस्य नाम सर्पराजस्य रक्षणाय रक्षणं कर्तुं इति 'क्रियार्थ—' इत्यादिना चतुर्थी। सहसा द्रुतं द्विपमै-

१. 'दीप्त' इति पाठः।

ततस्तैरनेकैर्नाकौकसामनीकैर्मत्सरेण तदुपरि निपात्यमानदिग्भित्तिशिखराणामिव वेगादापततां वारिधौ वाडवहव्यवाडपि कवलितोऽयमस्माभिरितीव विद्युतः प्रकाश्य गर्जितेन तर्जयतामिव पर्जन्यानामासारसर्वाभिसारेण निर्वापिते वनाग्नौ मनाक्श्यामायमाने सति शोणायमानलोचनेन कपिकेतनेन तत्प्रतिचिकीर्षया शरकदम्बैरम्बरे निरवलम्बमाकलितां शालां छत्रीकृत्य पुनरपि समुन्नीयमाननिजकेतुरुषर्बुधो भगवानुद्दिदीपे ॥

तत्रान्तरे प्रोषितवल्लभतया प्रेम्णा कुमारमश्वसेनं निगीर्य दहना-

रावतमधिरुह्यारुह्य तदीये मूर्ध्नि शिरसि वज्रमायुधं न्यस्य निधाय मरुतां वाहिनीं देवसेनां संनाहयन्युद्धायोद्योजयन् सन् ब्रह्माण्डे तद्भित्तौ प्रतिरोधनेन प्रत्याघातेन विमुखैः प्रत्यावृत्तैरारण्यजैः खाण्डवदाहोद्भवैः धूमैरिव स्थितैरित्युत्प्रेक्षा । आरब्धाः कृताः घोराः कठोराः आरवा गर्जितानि यैस्तैर्जलधरैर्मेघैर्नभस्तलं गगनप्रदेशमातस्तारान्छादितवान् । स्तृणातेः कर्तरि लिट् । शार्दूलविक्रीडितवृत्तम् ॥ १२४ ॥

**तत इति** । ततः अनेकैस्तैर्नाकौकसां देवानामनीकैः बलैः मत्सरेण द्वेषेण तेषां कृष्णार्जुनपावकानामुपरि शिरसि निपात्यमानानां दिशामेव भित्तीनां शिखराणामिव स्थितानाम् । अत एव वेगादापतताम् । गुरुत्वादिति भावः । वारिधौ समुद्रे अयं वाडवहव्यवाट् वडवानलोऽपि अस्माभिः कवलितो भक्षितः । किमुत यूयमित्यपिशब्दार्थः । इतीव विद्युतः प्रकाश्य गर्जितेन । तन्मिषेणेत्यर्थः । तर्जयतां अवस्थितानां पर्जन्यानां मेघानां संबन्धिना आसारस्य धारासंपातस्य सर्वाभिसारेण सर्वोद्योगेन निर्वापिते शमिते वनाग्नौ खाण्डववह्नौ मनागल्पं श्यामायमाने सति । 'धारासंपात आसारः', 'सर्वाभिसारः सर्वौघः सर्वसंनहनार्थकः' इति चामरः । शोणायमाने कोपादरुणीभवती लोचने यस्य तथोक्तेन कपिकेतनेन कपिध्वजेनार्जुनेन तस्यासारसर्वाभिसारस्य प्रतिकर्तुमिच्छा प्रतिचिकीर्षा तयाम्बर आकाशे निरवलम्बं कुड्यस्तम्भाधारवर्जं यथा तथा शरकदम्बैर्बाणवृन्दैराकलितां संघटितां शालां छत्रीकृत्य पुनरपि सम्यगुन्नीयमान ऊर्ध्वं प्रसार्यमाणो निजकेतुर्धूमो येन तथोक्तः भगवान् उषर्बुधोऽग्निरुद्दिदीपे प्रजज्वाल । 'शोचिष्केश उषर्बुधः' इत्यग्निपर्यायेष्वमरः । शुद्धसापह्नवोत्प्रेक्षयोः संसृष्टिः ॥

**तत्रेति** । तत्रान्तरे तस्मिन्समये प्रोषितः कुरुक्षेत्रं प्रति प्रस्थितो वल्लभः पतिस्तक्षको यस्यास्तस्या भावः तत्ता तया हेतुना । अश्वसेनं नाम कुमारं प्रेम्णा निगीर्य ग्रसित्वा । कण्ठे निधायेति यावत् । दहनस्याग्नेरर्चिषां ज्वालानामुष्णस्य

१. 'अनेकैः' इति नास्ति क्वचित्. २. 'हव्यवाहोऽपि' इति पाठः. ३. 'वने' इति पाठः. ४. 'शरशालां' इति पाठः.

च्चिरुष्णासहिष्णुतया पुनरपि निवृत्य दिवं प्रयान्तीभिर्घनधाराभिरिव पन्नगकन्यकाभिः सह वनादुत्पतन्तीं तक्षककुटुम्बिनीमविलम्बितमेव श्वेतवाहनः शितमुखेन शिलीमुखेन रसनायामिव ग्रीवायामपि द्विधा विदलयांचक्रे ॥

नभसि कृते शरकूटे न पपाताशुगविनुन्नमम्बुमुचाम् ।
तस्मिन्खाण्डववह्नौ तक्षकपत्न्याः कबन्धमेव परम् ॥ १२५ ॥

अथ स कुपितः स्वयं कौशिकोऽपि चकितचकितं वियति विहितोपसरणं नवजननीशोकदयनीयं हृतवालं तमहिवालं परिगृह्य लालनया परितोषमनैषीत् ॥

---

स्पर्शस्य असहिष्णुतया सोढुमशक्त्या निवृत्य प्रत्यावृत्य पुनरपि दिवमाकाशं प्रति प्रयान्तीभिर्घनानां मेघानां धाराभिरिव स्थिताभिरित्युत्प्रेक्षा । पन्नगकन्यकाभिर्नागनारीभिः सह । वनात्खाण्डवादुत्पतन्तीं तक्षकस्य कुटुम्बिनीं भार्याम् । 'कन्या कुमारिका नार्यो दाराः स्यात्तु कुटुम्बिनी' इति विश्वप्रकाशामरौ । अपेः किमुतान्य इत्यर्थः । श्वेतवाहनोऽर्जुनोऽविलम्बितं सत्वरं यथातथा शितमुखेन तीक्ष्णाग्रेण शिलीमुखेन बाणेन रसनायां जिह्वायामिव ग्रीवायां कन्धरायामपि द्विधा द्विप्रकारं विदलयांचक्रे विपाटितवान् । उत्प्रेक्षोपमयोः संसृष्टिः ॥

**नभसीति** । शरकूटे बाणमयगृहे नभसि आकाशे कृते सति । अर्जुनेनेति शेषः । आशुगैर्बाणैरेव वायुभिरिति श्लिष्टरूपकम् । विनुन्नमुद्धूतम् । 'आशुगौ वायुविशिखौ' इत्यमरः । अम्बुमुचां मेघानां संवन्धि कबन्धं उदकं तस्मिन्खाण्डववह्नौ न पपात । परं किंतु तक्षकपत्न्याः कबन्धं निःशिरःकलेवरमेव पपात । 'कबन्धमुदके न स्त्री गतमूर्धकलेवरे' इति वैजयन्ती । अत्रोभयोः कबन्धयोः प्रसक्तस्य पतनस्य तक्षकपत्नीकबन्ध एव नियमनात्परिसंख्यालंकारः । स च कबन्धशब्दश्लेषमित्तिकाभेदाध्यवसायमूलातिशयोक्त्यनुप्राणित इति तयोरङ्गाङ्गिभावेन संकरः । गीतिरार्या ॥ १२५ ॥

**अथेति** । अथ तक्षकपत्नीशिरश्छेदानन्तरं कुपितः स इन्द्रः स्वयं कौशिको व्यालग्राह्यपि इन्द्रश्च सन्निति च । 'महेन्द्रगुग्गुलूलूकव्यालग्राहिषु कौशिकः' इत्यमरः । व्यालः । सर्प इत्यर्थः । वियति आकाशे चकितचकितं भीतभीतं विहितं कृतमुपसरणं संनिधानं येन तथोक्तम् । नवेन जनन्याः संबन्धिना शोकेन दयनीयं शोचनीयं हृतबालं मातृकण्ठलग्नतया छिन्नपुच्छं तं अहिबालं

---

१. 'निवर्त्य' इति पाठः. २. 'शातमखेन' इति पाठः. ३. 'अपि' इति नास्ति क्वचित्. ४. 'विदलितां चक्रे' इति पाठः. ५. 'विनय' इति पाठः.

सुतं तमभ्येत्य सुरैरशेषैः क्रुध्यन्नथायुध्यत घोरमिन्द्रः ।
चक्रे स दावस्य च तक्षकस्य यदग्निमत्तां यदनग्निमत्ताम् ॥ १२६ ॥
वनस्य तस्योपरि केवलं तदा सहस्रनेत्रस्य च सव्यसाचिनः ।
निषङ्गनीडोत्पतितानि पत्रिणां कुलानि कोलाहलकेलिमादधुः॥१२७॥
शरान्विपाठानपि पारदृश्वनः श्रुतेर्विधायाशु विमुञ्चतस्ततः ।
कुरूद्वहात्साध्वसरोगिणो हरेरभूद्भिषग्दूरतरप्रसर्पणम्[1] ॥ १२८ ॥

---

सर्पशिशुं अश्वसेनं परिगृह्य लालनया आश्वासनेन परितोषमनैषीत्प्रापयामास । नयतेर्दुहादित्वेन द्विकर्मकात्कर्तरि लुङ् । विरोधाभासालंकारः ॥

सुतमिति । अथाश्वसेनाश्वासनानन्तरं क्रुध्यन् कुप्यन् इन्द्रः सुतमात्मजमपि तमर्जुनमशेषैः सुरैः सहाभ्येत्यागत्य घोरं यथा तथायुध्यत युध्यते स्म । नन्वयुक्तमात्मजेन सह युद्धमत आह—चक्र इति । यद्यस्मात्स सुतोऽर्जुनो दावस्य खाण्डववनस्य । 'दवदावौ वनारण्यवह्नी' इत्यमरः । अग्निरस्मिन्नस्तीत्यग्निमान् तस्य भावस्तत्ता तां चक्रे । अग्निना खाण्डवं ददाहेत्यर्थः । यत् यस्मात् च तक्षकस्य अग्निं न मश्नाति इत्यनग्निमत् तस्य भावस्तत्ता ताम् । अग्निमन्थनाभावमिति यावत् । चक्रे । सपत्नीकस्यैव तत्राधिकारात् प्रकृते तेन तन्नाशनाच्चेति भावः । तथा च तक्षकखाण्डवयोरिन्द्रस्य प्राणेभ्योऽपि प्रियत्वात्तत्पीडाकरेणामार्गवर्तिना पुत्रेण युद्धं नायुक्तमिति भावः । वाक्यार्थहेतुकं काव्यलिङ्गम् ॥१२६॥

वनस्येति । तदा युद्धकाले सहस्रनेत्रस्य इन्द्रस्य सव्यसाचिनोऽर्जुनस्य च । द्वयोः संबन्धीनि । निषङ्गास्तूणीरा एव नीडानि कुलायास्तेभ्य उत्पतितान्युत्थितानि पत्रिणां बाणानामेव पक्षिणामिति श्लिष्टरूपकम् । कुलानि वृन्दानि । 'पत्रिणौ शरपक्षिणौ' इत्यमरः । तस्य वनस्य खाण्डवस्योपरि केवलमूर्ध्वभाग एव । कोलाहलकेलिं कलकलरवमादधुश्चक्रुः । एकेषां शरकूटभेदनाशक्त्या अन्येषां प्रसक्त्यभावेन च न वनमध्ये प्रवेश इति भावः । श्लिष्टाश्लिष्टघटितसावयवरूपकम् । वंशस्थवृत्तम् ॥ १२७ ॥

शरानिति । ततो विपाठान् तत्संज्ञान्, विगतः पाठः पठनं येषां तानिति च । अपिः क्रमेण समुच्चये, विरोधे च । शरान्बाणान् श्रुतेः श्रोत्रस्य वेदस्य च । पारमन्तं पश्यन्तीति पारदृश्वनः । विधाय कृत्वा । आशु विमुञ्चतस्त्यजतः, चादाय प्रेरयतश्च कुरूद्वहादर्जुनात् साध्वसं भयमेव रोगोऽस्यास्तीति तद्वतो हरेरिन्द्रस्य दूरतरमतिदूरं प्रसर्पणं पलायनं भिषक् वैद्योऽभूत् । भीतः पलायितवानित्यर्थः । 'भिषग्वैद्यश्चिकित्सकः' इत्यमरः । अत्र प्रस्तुतार्जुनेन्द्रविशेषणसाम्यादप्रस्तुतशिष्यप्रतिभाकरप्रसङ्गक्षमतदक्षमविद्वदविद्वद्वृत्तान्तप्रतीतेः समासोक्तिः । एवं विपाठानपि श्रुतेः पारदृश्वनः इत्यत्र विरोधाभासश्च । द्वयोश्च तिलत-

---

१. 'दूरतरापसर्पणम्' इति पाठः.

जयन्तमेकं युधि सोढुमक्षमे जयन्तमन्यं सुतमीक्षितुं गते ।
पुरीं वलद्वेषिणि घोषकैतवाज्जहास शङ्खद्वितयं च कृष्णयोः ॥ १२९॥

ततः कृशानोर्विपरीतवर्णस्वनामवाच्यादिव भीतभीतम् ।
मयं वने दैत्यमयं ररक्ष स चक्रपाणेरिव शक्रसूनुः ॥ १३० ॥

क्षेत्रमप्यधिपतिः कुरुपूर्वं संश्रितौ सपदि दैववलेन ।
चर्वितुः सकलखाण्डवमग्नेस्तक्षकावभजतां विघसत्वम् ॥ १३१॥

ण्डूलन्यायेन स्फुटागम्यमानभेदयोः संसृष्टिः । पूर्ववद्वंशस्थं वृत्तम् ॥ १२८ ॥

**जयन्तमिति** । जयन्तं स्वस्य जेतारम् । जयतेः कर्तरि लटः शत्रादेशः । एकं सुतमर्जुनं युधि युद्धे सोढुमक्षमेऽसमर्थे । अतएव वलद्वेषिणि इन्द्रे अन्यं जयन्तं नाम सुतमीक्षितुं पुरीं स्वर्गं प्रति गते सति । पलायिते सतीति यावत् । कृष्णयोः कृष्णार्जुनयोः शङ्खद्वितयं च पाञ्चजन्यदेवदत्तयुग्ममपि घोषस्य कैतवाद्व्याजात् जहास हसति स्मेवेत्युत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या सापह्नवा च । तथा चाचेतनेनापि सपरिहासे किमुत सचेतनेन परिहास इत्यर्थान्तरापत्तिरूपार्थापत्त्यलंकारो व्यज्यत इत्यलंकारेणालंकारध्वनिः ॥ १२९ ॥

**तत इति** । ततः सोऽयं शक्रसूनुरर्जुनो विपरीते प्रातिलोम्यं गते वर्णे मकारयकारौ यस्मिंस्तस्य स्वस्य नाम्नो यमात्मकतामापन्नस्य स्वीयस्य मयेति संज्ञाशब्दस्य वाच्यादभिधेयात् । अन्तकादिव स्थितादित्युत्प्रेक्षा । कृशानोरग्नेश्चक्रपाणेः श्रीकृष्णादिव । उभयस्मादपीत्यर्थः । भीतभीतमत्यन्तभीतम् । वीप्सायां द्विर्भावः । मयं नाम दैत्यं दानवं वने ररक्ष रक्षितवान् । अत्र कृष्णानलयोर्मयाभयदायकत्वेनौपम्यस्य गम्यत्वात्केवलप्रकृतास्पदस्तुल्ययोगिताभेदः । खाण्डवदाहसमयेऽग्नेर्भीतः पलायमानो मयः श्रीकृष्णेन दृष्टः । तस्माद्वधमाशङ्क्य अर्जुनं शरणं गत्वा तेन रक्षित इति भारती कथात्रानुसंधेया ॥ १३० ॥

**क्षेत्रमिति** । पूर्वं कुरुर्यस्य तत् यस्य तमिति च क्षेत्रं कुरुक्षेत्रम् । तस्य कुरुस्वामिकत्वादिति भावः । अधिपतिः राजा अर्जुनः । तस्य कुरुवंशसंभवत्वादिति भावः । पूर्वमादौ कुरुरिति पदं यस्येति व्याख्याने शब्दस्यार्थविशेषणत्वायोगादसमर्थत्वाख्यदोषः । वाच्यवाचकयोरभेदाभिमानेन कथंचिदुपपादनेऽपि क्लिष्टत्वाख्यदोष इति । तच्च तमपि सपदि खाण्डवदाहसमये । दैवस्य बलेनाश्रितौ । एकः प्रवासेन, अन्यः चरणत्वेनेति भावः । तक्षकः सर्पराजः तक्षैव तक्षकः राक्षसशिल्पी मयः । द्वावपि तक्षकौ । 'तक्षको नागवर्धक्योः' इत्यमरः । सकलं तत्रत्यसर्वस्थावरजङ्गमसहितं खाण्डवं वनं चर्वितुर्भक्षयितुरग्नेर्विघसत्वं भोजनशेषत्वमभजतां प्राप्तवन्तौ । न दग्धावित्यर्थः । 'अमृतं विघसो यज्ञशेषभोजनशेषयोः' इत्यमरः । अत्र तक्षकद्वयादन्यस्मिन्प्रसक्तस्याग्निदाहस्य

१. 'अधिपतिम्' इति पाठः.

अथ स्मित्वा तुन्दं परिमृशति मन्दायितगतौ
समापृच्छ्य प्रीत्या त्रिदिवमुपयाते हुतवहे ।
रथाभ्यां मौनिभ्यां घनसलिलसेकेन महता
विजेत्रौ तौ कृष्णौ विविशतुरुपान्तं नरपतेः ॥ १३२ ॥

इत्यनन्तभट्टकविकृतौ चम्पूभारते तृतीयः स्तवकः ।

---

तद्द्वये भोजनशेषत्वकथनेन तदन्यस्मिन्नेव नियमनात्परिसंख्यालंकारः । स्वागतावृत्तम् ॥ १३१ ॥

**अथेति** । अथ खाण्डवदाहानन्तरम् । स्मित्वा दरहासं कृत्वा तुन्दमुदरं परिपूर्णं परिमृशति संस्पृशति । आनन्दातिरेकादिति भावः । करेणेति शेषः । मन्दायिता मन्दायमाना गतिर्यस्य तस्मिन् । आहाराधिक्यादिति भावः । हुतवहेऽग्नौ प्रीत्या समापृच्छ्य गच्छामीत्युक्त्वा त्रिदिवं स्वर्गं प्रत्युपयाते गते सति । विजेत्रौ विशेषेण जयसमन्वितौ तौ कृष्णौ महता घनानां मेघानां संबन्धिनः सलिलस्य वर्षोदकस्य सेकेनोक्षणेन मौनिभ्यां निःशब्दाभ्याम् । जलक्लिन्ना न ध्वनन्तीति प्रसिद्धम् । रथाभ्यां उपलक्षितौ सन्तौ नरपतेर्धर्मराजस्योपान्तं समीपं विविशतुः । स्वभावोक्तिरलंकारः—'स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम्' इति लक्षणात् ॥ १३१ ॥

इति श्रीसदाशिवपदारविन्दवन्दनकन्दलितानन्दसान्द्रस्य कुरविकुलचन्द्रस्य
रामकवीन्द्रस्य कृतौ चम्पूभारतव्याख्याने लास्याभिधाने
तृतीयः स्तवकः ।

---

१. 'अभियाते' इति पाठः.

## चतुर्थः स्तबकः ।

यातेतो निजपुरीं यदुवंशकेतौ
राज्ञे मयो मणिसभां रचयांबभूव ।
यस्या रुचं समवलोक्य शुचाधुनापि
जीवं गतागतजुषं वहते सुधर्मा ॥ १ ॥
तामधिष्ठास्नुमभ्येत्य तं मखं कर्तुमन्वशात् ।
विपञ्चीरवसारज्ञो नृपं चीरवसां वरः ॥ २ ॥

ततो दूताहूतः पुरुहूतानुजो निरन्तरायमेव महान्तं सप्ततन्तुमुपहर्तुमनसः कौन्तेयस्योपान्ते रहसि मुहूर्तं संमन्त्र्य साक्षादुत्साहप्रभावाभ्यां मूर्तो मन्त्र इव तत्प्रहिताभ्यां गन्धवहसुधान्धोधिपनन्दनाभ्यामनुसंधीयमानगमनो नदीतटाकैर्द्विमातृकतया स्वपा-

---

यात इति । ततो युधिष्ठिरसमीपप्राप्त्यनन्तरं यदुवंशस्य केतौ ध्वजे । तद्वत्प्रख्यापक इति यावत् निजपुरीं द्वारकां प्रति याते सति राज्ञे युधिष्ठिराय मयोऽर्जुनरक्षितो मणिसभां मणिमयीं मणीनां वा सभामास्थानशालां रचयांबभूव । निर्माय दत्तवानित्यर्थः । यस्या मणिसभाया रुचं शोभां समवलोक्य सुधर्मा देवसभा शुचा शोकेन तादृशशोभाराहित्यजनितेन अधुनापि अद्यापि जीवमात्मानं बृहस्पतिं च । गतागतं यातायातं जुषत इति तथोक्तं वहते । अत्र सुधर्मायास्तादृग्दुःखकृतजीवयातायातासंबन्धेऽपि संबन्धरूपातिशयोक्तिः जीवात्मबृहस्पत्योः श्लेषभित्तिकाभेदाध्यवसायमूलेति तयोरङ्गाङ्गिभावेन संकरः । 'जीवः प्राणिनि गीष्पतौ' इत्यमरः । वसन्ततिलकावृत्तम् ॥ १ ॥

तामिति । तामधिष्ठास्नुम् । तत्र सभायां स्थितवन्तमित्यर्थः । 'स्थास्नुः स्थिरतरः' इत्यमरः । तं नृपं धर्मराजमभ्येत्यागत्य विपञ्चीरवसारज्ञो वीणानादोपनिषद्वेदी चीरं वल्कलं वसते परिदधत इति चीरवसां मुनीनां वरो नारदो मखमश्वमेधं कर्तुमन्वशाददिदेश । शास्तेः कर्तरि लुङ् ॥ २ ॥

तत इति । ततो नारदनिदेशानन्तरं महान्तं लोकैकश्लाघ्यं सप्ततन्तुं क्रतुं राजसूयं निरन्तरायं निर्विघ्नमुपहर्तुमनुष्ठातुं मनो यस्य तस्य अतएव कौन्तेयस्य उपान्ते संनिधौ रहस्येकान्ते दूतैराहूतः पुरुहूतानुजः श्रीकृष्णो मुहूर्तं संमन्त्र्यालोच्य । 'वशीकृताखिलनृपेणैव राजसूयः कार्यः, जरासंधश्चाखिलस्य जेता, जिते तस्मिन् जितकल्पा एव सर्वे नृपाः, तत्र प्रथमं तज्जय एवानुष्ठेयः' इत्यालोचनप्रकारः । तेन धर्मराजेन प्रहिताभ्यां प्रेषिताभ्यां गन्धवहो वायुः, सुधान्धसां देवानां अधिप इन्द्रः, तयोर्नन्दनाभ्यां भीमार्जुनाभ्यां अनुसंधीयमानं अनुसंयुज्यमानं गमनं यस्य तथोक्तः सन् । अतएव साक्षान्मूर्तीभूताभ्यां उत्साहप्रभावाभ्यां उत्साहशक्तिप्रभुशक्तिभ्यां अनुसंधीयमानः मन्त्रः मन्त्रशक्तिरिव स्थित इत्युत्प्रेक्षा । नदीभिस्तटाकैश्च द्वे मातरौ सस्यजनयित्र्यौ

---

१. 'आगत्य' इति पाठः. २. 'आहर्तुमनसः' इति पाठः. ३. 'साक्षात्' इति नास्ति क्वचित्. ४. 'प्रभवाभ्याम्' इति पाठः. ५. 'स्वपालयितारमिव' इति पाठः.

लयितारमनुकुर्वतो विविधान्यदुर्लभवसुधान्यसमेधितवसुधान्मगधा-नवगाह्य विश्रृङ्खलमोदितगिरिव्रजमपि शृङ्खलाखेदितमहीभृत्कुलं जराघटितदेहमपि देदीप्यमानबलसंपन्नमाशाजेतारमपि परार्थापहारजागरितारं मागधमपि विगीतव्यापारं द्वैमातुरं महारथं जरासंधं पृथिवीनाथमेत्य प्रधनं ननाथ ॥

तत्क्षणमतितितिक्षया 'त्वमष्टादशकृत्वो दृष्टापजयोऽसि, अयं पुन-

---

येषां तेषां द्विमातृकाणां नदीमातृकाणां देवमातृकाणां च भावेन द्विमातृकतया। 'देशो नद्यम्बुवृष्ट्यम्बुसंपन्नव्रीहिपालितः। स्यान्नदीमातृको देवमातृकश्च यथाक्रमम् ॥' इत्यमरः। तेषां पालयितारं राजानं जरासंधं अनुकुर्वतः विडम्बयतः। तस्यापि द्विमातृकत्वादिति भावः। विविधैः कनकमणिरूपैः नवविधैश्च अन्यस्मिन्देशान्तरे दुर्लभैः वसुभिः धनैः धान्यैश्च समेधिता प्रवर्धिता वसुधा भूर्येषु तान्मगधान्नाम जनपदान् अवगाह्य प्रविश्य विश्रृङ्खलं निष्प्रतिबन्धं यथा तथा आमोदितः संतोषितः गिरीणां शैलानां व्रजः समूहः गिरिव्रजनामकराजधानी च येन तथोक्तमपि शृङ्खलाभिः। पादबन्धनायसयन्त्रैः खेदितं दुःखं प्रापितं महीभृतां शैलानां राज्ञां च कुलं बृन्दं येन तथोक्तम्। जरया चरमवयसा तन्नाम्न्या पिशाच्या च घटितः संयुक्तः संयोजितश्च देहो यस्य यथोक्तमपि। देदीप्यमानेन बलेन सत्त्वेन संपन्नं समृद्धं। आशानां तृष्णानां दिशां च जेतारमपि। परार्थानां अपहारे जागरितारं प्रवणं मागधं वैतालिकमपि। मगधाधिपं च विगीतव्यापारं गानशून्यं निन्दितकर्माणं च। द्वयोर्मात्रोरपत्यं द्वैमातुरम्। 'मातुरुत्संख्यासंभद्रपूर्वायाः' इत्यपत्यार्थे अण् उत्त्वं च। महारथम्। 'आत्मानं सारथिं चाश्वान्रक्षन्युध्यति यो भटः। स महारथसंज्ञः स्यात्' इत्युक्तलक्षणलक्षितं जरासंधं पृथिवीनाथमेत्य प्रधनं युद्धं ननाथ याचितवान्। नाथतेः कर्तरि लिट्। अत्र सर्वस्यापि शब्दस्य विरोधसमुच्चयार्थद्वयाभिधायकतया विरोधाभासालंकारः। श्लेषानुप्राणितश्चेति संकरः। अत्र पुरा किल केनचिन्मुनिना दत्तं फलं द्विधा खण्डयित्वा खण्डमेकैकं भुक्त्वा अर्धमर्धं मातृभ्यां प्रसूय त्यक्तं शरीरखण्डद्वयं जरानाम्न्या पिशाच्या एकीकृतं जरासंधोऽभूदिति पौराणिकी कथानुसंधेया। 'वसुधनधान्य-' इति पाठे 'वसू रश्मौ धने वसु' इति कोशात् धनशब्दवैयर्थ्यं छेकानुप्रासभङ्गश्चेति बोध्यम् ॥

तत्क्षणमिति। तस्मिन्नेव क्षणे तत्क्षणम्। अत्यन्तसंयोगे द्वितीया। हे कृष्ण, त्वं अष्टादशकृत्वः अष्टादशवारम्। अभ्यावृत्तौ कृत्वसुच्। दृष्टापजयोऽसि। लोकैरिति भावः। इतरः त्वदन्योऽयमर्जुनस्तु किशोरः बाल इति अतितितिक्षया अत्यन्तक्षमया। 'अतितीक्ष्णतया' इति पाठे अतिकोपेनेत्यर्थः। उभा-

---

१. 'मागधान्' इति पाठः. २. 'अधिगम्य' इति पाठः. ३. 'हर्षित' इति पाठः. ४. 'देहबलसंपदम्' इति पाठः. ५. 'जरासंधं' इति नास्ति क्वचित्. ६. 'पृथ्वीनाथमुपेत्य' इति पाठः. ७. 'अतितितिक्षुतया' इति पाठः.

रितरः किशोरः' इति कृष्णावुभावप्यवधीर्य हिडिम्बबकैकुटुम्बशोको-
दयादारभ्य प्रवीरजनकर्णिकामौक्तिकायमानकीर्तेरात्मनः संमुखी-
नं दृढतरपरिकरबन्धं जरासंधं गन्धवहनन्दनः पञ्चदशदिनानि नि-
युध्य तेषां तृतीयभागपरिसंख्यानपदाभिधेयेन सह योजयामास ॥

हते तस्मिंस्त्रयो दीप्रा हरिप्रस्थमुपाययुः ।
आगामिनि मखे हव्यमादित्सव इवाग्नयः ॥ ३ ॥

कृष्णे गते यदुपुरीं क्षितिपानुजानां
जित्वा दिशः प्रतिनिवृत्तवतां चतुर्णाम् ।
कोशे ममुः परमसिप्रवरा गृहीता
दोष्णोर्बलेन महता न तु हेमपुञ्जाः ॥ ४ ॥

---

वपि कृष्णौ कृष्णार्जुनौ अवधीर्य तिरस्कृत्य हिडिम्बबकयोः राक्षसयोः संबन्धिनोः कुटुम्बयोः दारापत्याद्योः शोकस्य उदयादारभ्य । तदुभयवधात्प्रभृतीत्यर्थः । प्रवीरजनस्य कर्णिका कर्णभूषणं तस्यां मौक्तिकानीवाचरन्ती मौक्तिकायमाना किर्तिर्यस्य तस्य । अत एव आत्मनः स्वस्य । भीमस्येत्यर्थः । तस्यैव मुख्यविशे-ष्यत्वादात्मस्वशब्दयोर्व्यवधाने मुख्यविशेष्यपरत्वव्यवस्थापनाचेति भावः । संमु-खीनम् । 'यथामुखसंमुखस्य दर्शनः खः' इति खस्येनादेशः । आभिमुख्यभाजं दृढतरः अतिगाढः परिकरबन्धः हस्तन्यासविशेषः सव्यदक्षिणपाण्योर्निकुञ्च्य दक्षिणसव्यभुजाग्रविन्यसनात्मको यस्य तम् । परिकरो मध्यबन्ध इति केचित् । जरासंधं गन्धवहनन्दनो भीमः पञ्चदशदिनानि नियुध्य बाहुयुद्धं कृत्वा तेषां पञ्चदशदिनानां तृतीयभागस्य दिवसपञ्चकस्य परिसंख्यानं संख्याभिधायकं यत्पदं पञ्चतेति शब्दः तस्य अभिधेयेन वाच्येन । मरणेनेति यावत् । योजयामास संघटितवान् । मारयामासेत्यर्थः । 'समीरकुमारः' इति पाठान्तरं प्रक्रान्तानु-प्रासभङ्गादुपेक्ष्यम् ॥

**हत इति** । तस्मिन् जरासंधे हते सति दीप्राः तज्जयेन प्रकाशमानाः त्रयः कृष्णभीमार्जुनाः आगामिनि भविष्यति मखे राजसूये हव्यं आदातुमिच्छवः आदित्सवः अग्नयः आहवनीयगार्हपत्यदक्षिणाग्नय इवेत्युत्प्रेक्षा । हरिप्रस्थं इन्द्र-प्रस्थपुरं प्रति उपाययुः आगतवन्तः ॥ ३ ॥

**कृष्ण इति** । कृष्णे यदुपुरीं द्वारकां प्रति गते सति दिशश्चतस्रो जित्वा प्रतिनिवृत्तवतां इन्द्रप्रस्थं पुनरागतानां चतुर्णां क्षितिपस्य धर्मराजस्य अनुजानां भीमादीनां दोष्णोः बाह्वोः महता बलेन सत्त्वेन शौर्येण च गृहीताः असिप्रवराः

---

१. 'बक' इति नास्ति क्वचित्. २. 'भुजकीर्तेः' इति पाठः. ३. 'जरासंधं' इति नास्ति क्वचित्. ४. 'समीरकुमारः' इति पाठः. ५. 'एषाम्' इति पाठः. ६. 'परि' इति नास्ति क्वचित्. ७. 'घटयांबभूव' इति पाठः.

उपायनत्वेन नृपाय सर्वैर्दत्तेषु वित्तेष्वखिलेषु भूपैः ।
पार्थस्य पुर्याः क्षितिरेव भेजे वसुंधरावाचकवाच्यभावम् ॥५॥
नरदेवमगाज्जये प्रतीच्या नकुलेनैव वसूनि विस्तृतानि ।
दधदानकदुन्दुभिस्वनैर्द्यां दलयन्नानकदुन्दुभेः कुमारः ॥ ६ ॥
हरिणा स ततः कृताभ्यनुज्ञो हविरादातुमिवागतेन साक्षात् ।
क्रमवेदिपुरोधसां समूहैः क्रतुमाहर्तुमुपक्रमं प्रचक्रे ॥ ७ ॥

---

परं खड्गश्रेष्ठा एव कोशे खड्गपिधाने ममुः मिलन्ति स्म । हेमपुञ्जाः उपायनत्वेन तत्तद्देश्यराजदत्ता धनराशयस्तु कोशे धनगृहे न ममुः । अपरिमितत्वादिति भावः । 'कोशोऽस्त्री कुड्मले खड्गपिधाने धनवेश्मनि' इति विश्वः । अत्र हेमपुञ्जानां खड्गानां च प्रसक्तस्य कोशमिलनस्य खड्गमात्र एव नियमनात्परिसंख्यालंकारः । स च कोशशब्दश्लेषमितिकालब्धखड्गपिधानधनगृहाभेदाध्यवसायमूलातिशयोक्त्यनुप्राणित इति द्वयोरङ्गाङ्गिभावेन संकरः । वसन्ततिलकावृत्तम् ॥ ४ ॥

उपायनत्वेनेति । सर्वैः नानादेश्यैः भूपैः राजभिः अखिलेषु वित्तेषु धनेषु नृपाय धर्मराजाय उपायनत्वेन दत्तेषु उपहारीकृत्य समर्पितेषु सत्सु पार्थस्य पुर्याः इन्द्रप्रस्थसंबन्धिन्याः क्षितिः भूमिरेव वसुंधरेति वाचकस्य पदस्य वाच्यभावं अभिधेयत्वम् । वसु धरतीति व्युत्पत्त्या धनधारणरूपं भेजे प्राप । सर्वत्र सर्वैः सर्वस्वस्यापि राज्ञे दत्तत्वेन वसुशून्यत्वादिति भावः । अत्रापि वसुंधरत्वस्यान्यत्र निषिध्य पार्थपुरभुव्येव नियमनात्पूर्ववत्परिसंख्यालंकारस्य असंबन्धे संबन्धरूपातिशयोक्तेश्च द्वयोरपि धर्मराजसंप्रदानकाखिलनृपकर्तृकसर्वस्वकर्मकोपायनीकारणात्मकपदार्थहेतुककाव्यलिङ्गमूलकत्वादेककालिकत्वाच्च समप्राधान्यसंकरः ॥ ५ ॥

नरदेवमिति । विस्तृतानि बहूनि वसूनि दधत् गृह्णन् आनकदुन्दुभेः वसुदेवस्य कुमारः कृष्णः आनकानां पटहानां दुन्दुभीनां भेरीणां स्वनैर्ध्वनिभिः द्यां आकाशं दलयन् भिन्दन् । पूरयन् सन्निति यावत् । 'आनकः पटहोऽस्त्री स्यात्', 'भेरी स्त्री दुन्दुभिः पुमान्' इत्युभयत्राप्यमरः । प्रतीच्या दिशः जये सति । तद्देश्यान् भूपान् जितवतेत्यर्थः । नकुलेन सहैव नरदेवं धर्मराजं अगात् प्राप्तवान् । औपच्छन्दसिकवृत्तम् ॥ ६ ॥

हरिणेति । ततः कृष्णागमनानन्तरं स धर्मराजः साक्षात् मूर्तीभूय हविरादातुमागतेनेव स्थितेन हरिणा श्रीकृष्णेन कृताभ्यनुज्ञः सन् । क्रतुकरणायेति शेषः । क्रमवेदिनां तत्तत्कर्मतदनुष्ठानपौर्वापर्यविदां पुरोधसां ऋत्विजां समूहैः सह क्रतुं राजसूयं आहर्तुं कर्तुं उपक्रमं आरम्भं प्रचक्रे । 'क्रमवेदिभिर्ऋत्विजां'

---

१. 'इव' इति पाठः. २. 'विस्मृतानि' इति पाठः. ३. 'क्रमविद्भिरथर्त्विजां समाजैः' इति पाठः.

प्राग्वंशेऽप्युत्तमे तिष्ठन्प्राग्वंशं पुनराविशत् ।
कुरीरशिरसा पत्न्या कुरुवीरः स दीक्षितः ॥ ८ ॥

आघ्रातुमिच्छुरनलो हविरत्र रुच्य-
मानीलधूमकुलनिर्गमनापदेशात् ।
जग्धान्पुरा जतुनिकेतनभित्तिखण्डा-
न्कुक्षिस्थितानिव ववाम गुरूनजीर्णान् ॥ ९ ॥

तत्र प्रवर्ग्यजनितं दिवि धूमचक्र-
मालक्ष्यते स्म विबुधान्प्रति पावकेन ।
आनाकदुर्वहहविर्द्रविणेन वेगा-
दाह्वानपत्रवलयं किल नीयमानम् ॥ १० ॥

---

इति पाठस्तु षट्कलानियतस्य वैतालीयविषमपादस्य कलाधिक्येन छन्दोभङ्गादुपेक्ष्यः ॥ ७ ॥

**प्राग्वंश इति ।** उत्तमे प्राग्वंशे हविर्गेहे तिष्ठन्नपीति विरोधः । प्राचां कुरुययात्यादिनां राज्ञां वंशे तिष्ठंश्चेत्याभासः । दीक्षितः स कुरुवीरः धर्मराजः कुरीरं जालं शिरसि यस्यास्तया पत्न्या द्रौपद्या सह प्राग्वंशं पुनः हविर्गेहं आविशत्प्रविष्टवान् ॥ ८ ॥

**आघ्रातुमिति ।** अनलः अग्निः अत्र राजसूये रुच्यं आस्वाद्यं हविः आघ्रातुम् । भक्षितुमित्यर्थः । इच्छुः सन् । पुरा लाक्षागृहदाहसमये जग्धान् भक्षितान् गुरून् अतिसारान् अत एव अजीर्णान् जाठराग्निना अपक्वान् कुक्षौ स्थितान् जतुनिकेतनस्य लाक्षागृहस्य भित्तीनां खण्डान् आसमन्तान्नीलस्य धूमकुलस्य यन्निर्गमनं बहिरुद्गमनं तस्य अपदेशात् व्याजात् वा उद्गिरति स्मेवेत्युत्प्रेक्षा सापह्नवा च । अत्र अग्नेरजीर्णजतुगृहभित्तिखण्डवमनोत्प्रेक्षायास्तृतीयस्तवके 'क्षुत्प्रपीडयति मामपि वीरौ कुक्षिमेत्य' इति खाण्डवदाहहेतुताया अग्नेः क्षुद्बाधायाश्च संदर्भविरोधः सूक्ष्मधीगोचरः । वसन्ततिलकावृत्तम् ॥ ९ ॥

**अत्रेति ।** तत्र राजसूये प्रवर्ग्येण होमात्मककर्मविशेषेण जनितं दिवि आकाशे धूमस्य चक्रं वलयाकृति वृन्दम् । नाकस्य स्वर्गस्य पर्यन्तं आनाकं दुर्वहं वोढुमशक्यं हविरेव द्रविणं धनं येन तेन । अत एव पावकेन विबुधान् देवान् प्रति वेगात् नीयमानं प्रापयमाणं आह्वानस्य पत्रं लेख्यमिवेत्युत्प्रेक्षा । प्रकृतिविकृतिभावाभावात्तादर्थ्ये षष्ठीसमासः । आलक्ष्यते स्म दृदृशे । लोकैरिति शेषः ॥१०॥

---

१. 'आत्सातुम्' इति पाठः. २. 'निर्गलना' इति पाठः.

मेदस्विनं विपुलखाण्डवभक्षणेन
देहं निजं चलयितुं शिखिनोऽक्षमस्य ।
उद्गम्य संज्वलितुमुत्तरवेदिकाया-
मालम्बनाय किल यूपवरोऽन्तिकेऽभूत् ॥ ११ ॥

विम्बेन सङ्गं विसपुष्पवन्धोर्नाथः कलानां न यथा विदध्यात् ।
तथैव देवास्ततृपुस्तदानीमत्यद्भुतानां हविषां विशेषैः ॥ १२ ॥

सर्वेषु वर्णेष्वपि दातुरस्मात्संप्राप्तवत्स्वर्थमजातशत्रोः ।
न वर्ण एकस्तु कदापि लेभे नार्थं क्रतूनामिह सार्वभौमे ॥१३॥

तत्र नानाजनपदमेदिनीवल्लभमल्लमुकुटमणिकिरणपल्लविते यज्ञ-

---

मेदस्विनमिति । विपुलस्य अतिविस्तारस्य खाण्डवस्य वनस्य भक्षणेन मेदस्विनमतिमांसलं निजं देहं चलयितुं अक्षमस्य असमर्थस्य शिखिनः अग्नेः । आहवनीयस्येति यावत् । उद्गम्य उत्थाय गत्वा उत्तरवेदिकायां सम्यक् ज्वलितुम् । अन्तिके । आहवनीयायतनोत्तरवेदिमध्य इत्यर्थः । आलम्बनाय किल अवलम्बनायेवेत्युत्प्रेक्षा । यूपवरः यज्ञियस्तम्भविशेषः पशुवन्धनार्थः अभूत् वर्तते स्म ॥ ११ ॥

विम्बेनेति । कलानां नाथः चन्द्रः विसपुष्पाणां पद्मानां वन्धोः सूर्यस्य विम्बेन मण्डलेन सङ्गं मेलनं यथा न विदध्यात् न कुर्यात् तथा तदानीं देवाः अग्न्यादयः अत्यद्भुतानां हविषां विशेषैरेव । नतु चन्द्रकलाभिरित्यर्थः । ततृपुः तृप्यन्ति स्म । राजसौयिकात्यद्भुतहविर्भक्षणपूर्णोदराणां चन्द्रकलापानप्रसक्त्यभावे सार्वकालिकपूर्णविम्बतया चन्द्रस्य सूर्यविम्बसङ्गः कलामात्रशेषलभ्यो न प्रसज्यत एवेत्यर्थः । अत्र देवानां तादृशतृप्त्यसंवन्धेऽपि संवन्धोक्तेरतिशयोक्तिः । तथा चैष राजसूयो लोकोत्तर इति प्रतीतेरलंकारेण वस्तुध्वनिः ॥ १२ ॥

सर्वेष्विति । इह क्रतूनां सार्वभौमे राजसूये, वर्णेषु सर्वेषु ब्राह्मणादिषु अकाराद्यक्षरेषु च दातुरस्मादजातशत्रोः धर्मराजादर्थं धनं अभिधेयं च संप्राप्तवत्सु सत्स्वपि । एकः नवर्णः नकारस्तु अर्थं धनं निषेधं चाभिधेयं कदापि न लेभे । एको वर्णो न लेभ इति नेति च । 'वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु वाक्षरे,' 'अर्थोऽभिधेयरैवस्तुप्रयोजनसमृद्धिषु' इत्युभयत्राप्यमरः । अत्र सर्ववर्णेषुलभार्थदातृरूपसामग्रीसत्त्वेऽपि नवर्णस्यार्थप्राप्तिरूपकार्यानुत्पत्तेर्विशेषोक्तिरलंकारः । स च कुलाक्षरयोर्धनाभिधेययोश्च श्लेषभित्तिकाभेदाध्यवसायमूलातिशयोक्त्यनुप्राणित इति तयोस्तस्य चाङ्गाङ्गिभावेन संकरः ॥ १३ ॥

तत्रेति । नानाजनपदानां समस्तदेशानां ये मेदिनीवल्लभमल्लाः राजश्रेष्ठाः तेषां मुकुटेषु किरीटेषु मणीनां किरणैः कान्तिभिः पल्लविते रञ्जिते तत्र तस्मिन्

---

१. 'हविषामशेषाः' इति पाठः.

वाटे त्रिपथगा[1]पृथातनूजाभ्यां नियुक्तो वैमात्रेयैर्भ्रातृभिर्जतुभवनवनसवनेषु पृथक्पृथगाराधिततया स्वेनाप्यातिथ्याया[2]मन्त्र्यमाणेन वीतिहोत्रेणेव ज्वलता हेमपात्रेण परिष्क्रियमाणपाणितलः सहदेवो निखिलभक्तजनकृत्यनिर्वहण[3]भारेणेव[4] निभृतावयवं सभ्यलोकलोचनपक्ष्मयुगल[5]पङ्क्तिपरस्परवैमुख्यवदान्यरूपकोमलिमानं महर्षिजनवलयमध्यसहेन्द्रनीलरत्नं चिरंतनं[6] पुमांसं समासाद्य[7] प्रथममर्घ्येण परिपूजयांचक्रे ॥

तावत्प्रकोपात्तरलाधरस्य प्रतिक्षितीशानभयानकस्य ।

वेदीभुवं तत्र विहाय वह्निश्चेदीशितुश्चित्तमिवाविवेश ॥ १४ ॥

सदसि न विकृतो यदच्युतोऽभूत्स तु परुषाक्षरमण्डलेन शत्रोः ।

---

यज्ञवाटे राजसूयशालायां त्रिपथगातनूजेन भीष्मेण पृथातनूजेन धर्मराजेन च द्वाभ्यां नियुक्तः 'कृष्णमग्रे पूजय' इत्याज्ञप्तः । विरुद्धाया मातुरपत्यैः वैमात्रेयैः भ्रातृभिः भीमार्जुनयुधिष्ठिरैः क्रमेण जतुभवने वने खाण्डवे सवने राजसूये च तेषु पृथक् पृथक् प्रत्येकं प्रत्येकं आराधिततया संतर्पितत्वेन स्वेनात्मनापि आतिथ्याय पूजनाय आमन्त्र्यमाणेन आहूयमानेन वीतिहोत्रेण अग्निनेव स्थितेनेत्युत्प्रेक्षा । ज्वलता हेमपात्रेण परिष्क्रियमाणं अलंक्रियमाणं पाणितलं यस्य सः । निखिलानां भक्तजनानां यानि कृत्यानि कार्याणि काङ्क्षितानि तन्निर्वहणेन संपादनेनैव भारेणेवेत्युत्प्रेक्षा । निभृता निश्चला अवयवाः यस्य तम् । सर्वस्मादग्रपूजनेऽप्यनुद्धतमित्यर्थः । सभायां साधुः सभ्यः स चासौ लोकः जनः तस्य लोचनानां यानि पक्ष्मयुगलानि तेषां पङ्क्त्योः परस्परवैमुख्यस्य अनभिमुखत्वस्य । निर्निमेषत्वस्येति यावत् । वदान्यो दाता रूपकोमलिमा शरीरसौन्दर्यं यस्य तथोक्तम् । निर्निमेषदर्शनीयसौन्दर्यमित्यर्थः । महर्षिजनस्य वलयं मण्डलमेव कटकाभरणं तस्य मध्ये महेन्द्रनीलरत्नमिति श्लिष्टाश्लिष्टपरम्परितरूपकम् । चिरंतनं पुमांसं पुराणपुरुषं श्रीकृष्णं समासाद्य अर्घ्येण प्रथमं सर्वेभ्य आदौ परिपूजयांचक्रे परिपूजितवान् । रूपकोत्प्रेक्षयोः संसृष्टिः ॥

**तावदिति** । तावत् तत्क्षणमेव प्रकोपात् कृष्णस्याग्रपूजनजन्यात् तरलौ अधरौ ओष्ठौ यस्य तस्य अतएव प्रतिक्षितीशानां प्रत्यर्थिपार्थिवानां भयानकस्य भयंकरस्य चेदीशितुः शिशुपालस्य चित्तं वह्निः यज्ञियः तत्र यज्ञवाटे वेदीभुवं आयतनप्रदेशं विहाय आविवेशेवेत्युत्प्रेक्षा । 'परवृद्धिमत्सरि मनो हि मानिनाम्' इति न्यायादिति भावः ॥ १४ ॥

**सदसीति** । यत् यस्मात् सः अच्युतः कृष्णस्तु शत्रोः शिशुपालस्य परु-

---

१. 'त्रिपथा' इति पाठः. २. 'निमन्त्र्यमाणेन' इति पाठः. ३. 'निर्वाहभारेण' इति पाठः. ४. 'इव' इति नास्ति क्वचित्. ५. 'युग्म' इति पाठः. ६. 'चिरत्नम्' इति पाठः. ७. 'आसाद्य' इति पाठः.

बहिरवसदुपेत्य[1] तच्छ्रवोभ्यां बहुतरकुण्डलनीलरत्नलक्ष्यात् ॥ १५ ॥

अश्लीलवागिह समाप्तिमती[2] न वेति
संद्रष्टुकाममिव दानववैरिचक्रम् ।
कल्पान्ततिग्मकरकल्पमनल्पवेगं
कण्ठे बिभेद रणकर्मणि[3] दामघोषम् ॥ १६ ॥

इति तस्य दुर्मतेरायुषा सह समापिते सवनकर्मणि निर्मितावभृथाप्लवनमुपदात्वेन दत्तपूर्वाणि वित्तान्युत्तमर्णानिव पुनर्द्विगुणमेव ग्राहितान्सर्वानुर्वीपतीन्प्रस्थापितवन्तं पौरवं तमनुज्ञाप्य चैद्यनिधनोत्सवेन सुदर्शनस्येव स्वपुरजनलोचनस्यापि[4] नवास्रकणिकार्द्रतामनुभवितुमना[5] इव सनातनः पुमान्पुरीं पुरानुभूतकुशस्थलीनाम्नीं प्रतस्थे ॥

---

षाक्षरमण्डलेन निष्ठुरवाक्यवृन्देन सदसि मनसीति वा विकृतः रुष्टः नाभूत् । तत् तस्मात् कारणात् तत् परुषाक्षरमण्डलं उपेत्य शिशुपालात् कृष्णं प्रत्यागत्य तस्य कृष्णस्य श्रवोभ्यां कर्णाभ्यां बहिः बहुतराणां कुण्डलयोर्नीलरत्नानां लक्षात् व्याजात् अवसत् अवर्ततेवेत्युत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या सापह्नवा च । नीचावमानो न महतां कोपायेति भावः । पुष्पिताग्रा ॥ १५ ॥

**अश्लीलेति** । ततः कल्पान्ततिग्मकरकल्पं प्रलयार्कतुल्यं अनल्पवेगं दानववैरिणः श्रीकृष्णस्य चक्रं (कर्तृ) इह शिशुपालकण्ठे अश्लीलवाक् निष्ठुरवाक्यं समाप्तिमती समाप्ता वा न समाप्तिमतीवेति संद्रष्टुं कामो यस्य तथोक्तमिवेत्युत्प्रेक्षा । रणकर्मणि वाक्कलहे दमघोषस्यापत्यं दामघोषं शिशुपालं कण्ठे बिभेद ॥ १६ ॥

**इतीति** । इति उक्तप्रकारेण दुष्टा मतिः बुद्धिः यस्य तथोक्तस्य तस्य शिशुपालस्य आयुषा जीवितकालेन सह सवनकर्मणि राजसूये समापिते समाप्तिं नीते सति । निर्मितं अवभृथे दीक्षान्ते आप्लवनं स्नानं येन तथोक्तं उपदात्वेन उपायनत्वेन पूर्वं दत्तानि दत्तपूर्वाणि । स्वस्मा इति शेषः । वित्तानि धनानि द्विगुणं यथा तथा ग्राहितान् । ग्रहेर्ण्यन्तात्कर्तरि क्तः । अत एव उत्तमर्णान् ऋणप्रदातॄनिव स्थितान् । तेषामेव दत्तद्विगुणग्राहित्वादिति भावः । सर्वान् उर्वीपतीन् राज्ञः प्रस्थापितवन्तम् । निजनगरेभ्य इति शेषः । तं पौरवं पुरुवंश्यं धर्मराजं अनुज्ञाप्य गच्छामीत्यापृच्छ्य सनातनः पुमान् पुराणपुरुषः कृष्णः चैद्यस्य शिशुपालस्य निधनेन मरणेन य उत्सवः तेन सुदर्शनस्य चक्रस्येव स्वस्य पुरे द्वारकायां जनानां लोचनस्यापि । जात्येकवचनम् । नवाभिरस्रकणिकाभिः आनन्दाश्रुबिन्दुभिः शोणितबिन्दुभिश्च आर्द्रतां सेकं अनुभवितुं द्रष्टुं मनो यस्य तथोक्त इवेत्युत्प्रेक्षा । 'अस-

---

१. 'बहिरिव सदुपेत्य' इति पाठः. २. 'समाप्तवती' इति पाठः. ३. 'रणसीमनि दामघोषिम्' इति पाठः. ४. 'पौरजनस्यापि'; 'स्वपौरलोचनस्यापि' इति पाठः. ५. 'अनुभावयितुमनाः' इति पाठः.

अन्धभूपतनयोऽपि वलौघैर्हास्तिनं पुरमवाप्य विलक्षः ।
सौवलिं गिरमसौ वलवन्तं दुर्विचाररचनासु चचक्षे ॥ १७ ॥

अग्नेरपत्यमिति हेम यदाहुरेत-
न्मिथ्या न मातुल विरोधिमखेऽनुभूतम् ।
तत्स्मर्यमाणमखिलक्षितिपोपनीतं
नक्तंदिवं दहति चित्तमिदं यतो मे ॥ १८ ॥

वल्गत्कुचं परिजहास सभावलोके
मां द्रौपदी मणिभुवि स्खलितं यदुच्चैः ।
तत्साधुजातमिति वक्तुमिव स्नुषां स्वां
मत्प्राणवायुरयमुत्क्रमणेच्छुरास्ते[1] ॥ १९ ॥

---

मश्रुणि शोणिते' इति विश्वः । पुरा कृष्णवासात् पूर्वं अनुभूतं स्वीकृतं कुशस्थलीति नाम यस्यास्तां पुरीं अधुना द्वारकानाम्नीं प्रति प्रतस्थे प्रस्थितवान् । 'अनुभावयितुमना इव' इति पाठेऽप्युक्त एवार्थः । पौरवन्तं 'पौरवं तम्' इति क्वचित्पाठः । पौरा एवास्य सन्तीति पौरवन्तं पौरमात्रशेषमित्यर्थको व्यर्थविशेषणत्वादुपेक्ष्यः ॥

**अन्धेति** । असौ अन्धभूपतनयोऽपि दुर्योधनोऽपि वलानां चतुरङ्गाणां ओघैः वृन्दैः हस्तिना निर्मितं हास्तिनं पुरमवाप्य विलक्षः धर्मराजैश्वर्यं दृष्ट्वा विस्मयान्वितः सन् दुर्विचाराणां दुरालोचनानां रचनासु करणेषु वलवन्तं समर्थं सुवलस्यापत्यं सौवलिं शकुनिं प्रति गिरं वाचं वक्ष्यमाणां चचक्षे उक्तवान् । चक्षेः कर्तरि लिट् । स्वागतावृत्तम् ॥ १७ ॥

**अग्नेरिति** । हे मातुल मातृभ्रातः शकुने, हेम सुवर्णं अग्नेरपत्यं अग्निजन्यमिति यद्वाक्यमाहुः । जना इति शेषः । एतद्वाक्यं न मिथ्या नानृतम् । यतः कारणात् अखिलैः क्षितिपैः राजभिः उपनीतं समर्पितं तेभ्यः करत्वेनानीतमिति वा । विरोधिनो ज्ञातेः धर्मराजस्य मखे राजसूये अनुभूतं दृष्टं तदिदं अग्निजन्यं हेम स्मर्यमाणं सदेव । मयेति योज्यम् । मे मम चित्तं नक्तंदिवं रात्रंदिवम् । 'अचतुर—' इत्यादिना निपातः । दहति । चित्तसंतापं जनयतीत्यर्थः । ततो न मिथ्येति योज्यम् । अत्र 'कारणगुणा हि कार्यगुणानारभन्ते' इति न्यायात् 'आत्मा वै पुत्रनामासि' इति श्रुतेर्वा । अत्र प्रसिध्यमानतापकत्वप्रतिपादकोत्तरवाक्यार्थेन हेम्नोऽग्निजन्यत्वसमर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्गम् । मनोव्यथादाहयोः श्लेषभित्तिकाभेदाध्यवसायमूलातिशयोक्त्यनुप्राणितमिति द्वयोरङ्गाङ्गिभावेन संकरः ॥ १८ ॥

**वल्गदिति** । किंच सभायाः मणिमयसभायाः अवलोके दर्शनसमये मणिभुवि वज्रकुट्टिमे स्खलितं स्थले जलं जले स्थलं इति भ्रान्तम् । माम् । दृष्ट्वेति शेषः ।

---

१. एतदनन्तरम् 'ततः' इति क्वचित्.

अधुना युधि सेनाभिर्विधुन्वानो धरातलम् ।
विधाय निधनं तेषां निगृह्णीयमिमां शुचम् ॥ २० ॥

इति निगद्य व्रीडाव्यथानद्योः संगमे निमग्नमेनमभग्नकैतवबन्धुः गान्धारपतिरुत्तारयितुमेवमुत्तरमादत्त ।

जय्यतां कथमुपैति तेऽर्जुनो वत्स यद्युधि भयात्पलायिताः ।
केवलं हरिमुखा न नामतो वेगतोऽपि मरुतोऽभवन्सुराः ॥ २१ ॥

अपि च ।

तं वीक्षितुं जगति शक्नुयुरत्र के वा
भीमं प्रकोपधृतभीमगदाङ्कबाहुम् ।

---

द्रौपदी वलान्तौ हासक्षोभात् चलन्तौ कुचौ यस्मिन् तद्यथा तथा । उच्चैः परिजहास हासमकरोदिति यत्, तत् परिहसनं साधु उचितं जातमभूदिति । स्वां स्वीयां स्नुषां पुत्रपत्नीं प्रति वक्तुमिवेत्युत्प्रेक्षा । अयं मम प्राणमयो वायुः उत्क्रमणेच्छुः निर्गमनेच्छावान् सन् आस्ते । परैरवमानो मानिनां मरणादतिरिच्यत इति भावः ॥ १९ ॥

अधुनेति । अतोऽहमधुना सेनाभिः चतुरङ्गाभिः धरातलं भूतलं विधुन्वानः कम्पयन् सन् युधि युद्धे तेषां विरोधिनां धर्मराजादीनां निधनं मरणं विधाय कृत्वा इमां शुचं शोकं निगृह्णीयां निरुन्ध्याम् । गृह्णातेर्निपूर्वाद्विध्यर्थे लिङ् ॥२०॥

इतीति । इति उक्तप्रकारेण निगद्य उक्त्वा व्रीडाव्यथे लज्जादुःखे एव नद्यौ तयोः संगमे निमग्नं एनं दुर्योधनं उत्तारयितुं तीरं प्रापयितुं अभग्नस्य अप्रतिहतस्य कैतवस्य अक्षविद्यायाः बन्धुः । तत्र कुशल इत्यर्थः । गान्धारस्य देशविशेषस्य पतिः राजा शकुनिः एवं वक्ष्यमाणप्रकारेण उत्तरं प्रतिवाक्यं एव उत्तीर्यतेऽनेनेत्युत्तरं प्लवमिति श्लिष्टरूपकम् । 'ऋदोरप्' इत्यप् । आदत्त गृहीतवान् । ददातेराङ्पूर्वात्कर्तरि लङ् । श्लिष्टाश्लिष्टपरम्परितरूपकम् ॥

जय्यतामिति । हे वत्स दुर्योधन, ते । त्वयेत्यर्थः । अर्जुनः जेतुं शक्यो जय्यः तस्य भावः तत्तां कथमुपैति । नोपैत्येवेत्यर्थः । कुतः । यस्यार्जुनस्य युधि भयात् पलायिताः । खाण्डवदाहसमय इत्यर्थः । हरिमुखा इन्द्रादयः सुराः नामतः केवलं नाम्नैव मरुतः नाभवन् किंतु वेगतः पलायनवेगादपि मरुतः वायवः अभवन् । 'मरुद्देवे समीरणे' इति विश्वः । सोऽर्जुन इति योज्यम् । उत्तरवाक्यार्थहेतुकं काव्यलिङ्गम् । रथोद्धतावृत्तम् ॥ २१ ॥

अपि च । इत्युत्तरेणान्वयः ॥

तमिति । अपि च किंच प्रकोपात् धृता भीमा भयंकरा च गदा अङ्कः चिह्नं

---

१. 'विधुनानो' इति पाठः. २. 'रसातलम्' इति पाठः. ३. 'निधाय' इति पाठः. ४. 'तेषु' इति पाठः. ५. 'बन्धो' इति पाठः.

एकैकमुष्टिहतये स्म भवन्ति नालं
यस्याहवे बकबृहद्रथभूहिडिम्बाः ॥ २२ ॥
ताभ्यामुपास्यमानस्य तपसस्तनुजन्मनः ।
व्यापादेऽपि प्रसक्तिः का विशेषात्तादृशां रणे ॥ २३ ॥

तथाप्यहं तु तव च तेषां च परस्परं विभवे परिपणनपदाधिरोहिणि क्षणादक्षममाणेन जगत्सामान्यतामक्षसंप्रदायेन तं पराजयघण्टापथे संचारयिष्यामि ॥

वित्ते हृते दरिद्रास्ते विसृष्टा बन्धुभिः स्वयम् ।
विनाशं वा शुचा यायुर्विदेशं वाथ लज्जया ॥ २४ ॥

---

यस्य तादृशो बाहुर्यस्य तथोक्तं तं भीमं वीक्षितुम् अत्र जगति लोके के वा शक्नुयुः समर्थाः । न केऽपि शक्नुयुः । कुतः यस्य भीमस्य आहवे युद्धे एकैकस्यैव मुष्टिहतये मुष्ट्याघाताय बकोऽसुरः, बृहद्रथभूः जरासंधः, हिडिम्बोऽसुरश्च, ते त्रयः अलं पर्याप्ताः न भवन्ति स्म । अत्रापि पूर्ववत्काव्यलिङ्गम् ॥ २२ ॥

**ताभ्यामिति** । ताभ्यां भीमार्जुनाभ्यां उपास्यमानस्य पार्श्वद्वये सेव्यमानस्य स्वयं तपसस्तनुजन्मनः यमपुत्रस्य व्यापादे द्रोहचिन्तन एव प्रसक्तिः का । नास्तीत्यर्थः । विशेषात् तत्रापि तानिव पश्यन्तीति तादृशां लोकैकवीराणां संबन्धिनि रणे प्रसक्तिः का । दूरतोऽपास्तेत्यर्थः । उभयत्रास्माकमिति शेषः । अत्र युधिष्ठिरे विशेषणद्वयस्य लोकैकाजय्यत्वाभिप्रायगर्भत्वात्परिकरालंकारः । एवं द्रोहचिन्तनमात्रस्याप्यसंभवोक्त्या रणे प्रसक्त्यभावस्य कैमुतिकन्यायसिद्धत्वादर्थापत्त्यलंकारश्च । द्वयोस्तिलतण्डुलन्यायेन मेलनात्संसृष्टिः ॥ २३ ॥

**तथापीति** । तथापि तेषामजय्यत्वेऽपि तेषां युधिष्ठिरादीनां विभवे भाग्ये तव विभवे च परस्परं परिपणनं द्यूतपणः तस्य पदं स्थानं अधिरोहतीत्यधिरोहिणि सति । पणत्वेन निर्दिष्टे सतीति यावत् । अहं तु जगतः सर्वस्य सामान्यतां साधारण्यं अक्षममाणेन असहता । अनन्यसामान्येनेत्यर्थः । अक्षविद्यायाः संप्रदायेन शिक्षानैपुण्येन तं धर्मराजं पराजय एव घण्टापथः राजमार्गः तस्मिन् क्षणात् संचारयिष्यामि । द्यूतेन सर्वमपहरिष्यामीत्यर्थः ॥

**वित्त इति** । वित्ते सर्वस्वे हृते सति । द्यूतेनेति शेषः । अनन्तरं दरिद्राः ते पाण्डवाः बन्धुभिः मातृपुत्रादिभिरपि स्वयं विसृष्टाः सन्तः शुचा धनस्वजनत्यागजन्येन शोकेन विनाशं वा यायुः गच्छेयुः । लज्जया विदेशं परदेशं वा यायुः । 'परिम्लाने माने मरणमथवा दूरगमनम्' इत्युक्तत्वादिति भावः । अत्र विनाशविदेशयोरेकदा गन्तुमशक्यत्वाद्विकल्पालंकारः—'विरोधे तुल्यबलयोर्विकल्पालंकृतिर्मता' इति लक्षणात् ॥ २४ ॥

---

१. 'तपस्यातनु' इति पाठः. २. 'मादृशाम्' इति पाठः. ३. 'च' इति नास्ति क्वचित्. ४. 'परस्परस्य' इति पाठः. ५. 'परिणयनपथा' इति पाठः. ६. एतदनन्तरम् 'इति' इति क्वचित्.

त्वं ततस्तु सुखमात्मसंयुतैः सोदरैः सदृशसंख्यकाः समाः ।
नीरराशिहरिनीलमेखलां निःसपत्नमनुभुङ्क्ष्व मेदिनीम् ॥२५॥

इत्थंकारं रहसि कल्पिते[1] कैतवदुरध्वे तावुभावप्यनुधावितुं दिव्यचक्षुषा तेनान्धेन वसुंधराधिपतिना नवमणिमण्डपिकाप्रवेशोत्सवव्याजादाहूतः सानुजो धर्मजः[2] कुरुपत्तनमुपेत्य बन्धुतया प्रत्युद्गम्यमानो दुस्तरं भाविवनवासवर्षमेकैकमेकैकेन[3] प्रणिपातपुण्येन सुप्रतरं करिष्यन्निव पितृव्यं द्वादशकृत्वः पादयोः प्राणंसीत् ॥

अवभृथाम्बुकणैरिव नूतनैरधिगतामथ जालकमौक्तिकैः[4] ।
स्वकवरीं द्रुपदस्य सुतापि सा सुबलजा पदयोः समनीयत[5] ॥२६॥

**त्वमिति** । ततः पाण्डवानामुक्तद्वयान्यतरप्राप्त्यनन्तरं त्वं तु नीरराशिः समुद्र एव हरिनीलमेखला इन्द्रनीलमयकाञ्ची यस्यास्तां मेदिनीं भूमिं आत्मना संयुतैः सोदरैः अनुजैः सदृशी तुल्या संख्या शतात्मिका यासां ताः सदृशसंख्यकाः समाः शतसंवत्सरान् । शैषिकः कप्प्रत्ययः । 'आपोऽन्यतरस्याम्' इति वैकल्पिको ह्रस्वः । निःसपत्नं निःशत्रुकं अनुभुङ्क्ष्व पालय । भुजेर्विध्यर्थे लोट् । रथोद्धता वृत्तम् ॥ २५ ॥

**इत्थमिति** । रहसि इत्थंकारं उक्तप्रकारम् । आलोचनं कृत्वेत्यर्थः । 'अन्यथैवं कथमित्थं सुसिद्धाप्रयोगश्चेत्' इतीत्थमुपपदात्करोतेर्णमुल् । कल्पिते । शकुनिदुर्योधनाभ्यामिति शेषः । कितवस्य भावः कैतवं तस्मिन्नेव दुरध्वे कुमार्गे । 'धूर्तोऽक्षदेवी कितवः' इत्यमरः । तावुभौ शकुनिं दुर्योधनमपि अनुधावितुं अनुसृत्य वेगेन गन्तुं दिव्यं ज्ञानमयं चक्षुः यस्य तेन । ताभ्यां दुष्टभावं गमितेनेत्यर्थः । अन्धेन वसुंधराधिपतिना धृतराष्ट्रेण नवायां द्यूतार्थं निर्मितायां मणिमय्यां मण्डपिकायां सभायां प्रवेशोत्सवस्य व्याजात् व्याजं कृत्वा । ल्यब्लोपे पञ्चमी । आहूतः सानुजः धर्मजः युधिष्ठिरः कुरुपत्तनं हास्तिनपुरं उपेत्य बन्धुतया बन्धुसमूहेन प्रत्युद्गम्यमानः क्रियमाणप्रत्युत्थानः सन् । दुस्तरं तरितुमशक्यं भाविनि द्यूते पराजयेन भविष्यति वनवासे एकैकं वर्षं संवत्सरं एकैकेन प्रणिपातेन यत्पुण्यं तेन सुप्रतरं करिष्यन् कर्तुमिच्छन्निवेत्युत्प्रेक्षा । पितृव्यं पितृभ्रातरं धृतराष्ट्रं पादयोः द्वादशकृत्वः द्वादशवारं प्राणंसीत् प्रणतवान् । प्रपूर्वान्नमतेः कर्तरि लुङ् ॥

**अवभृथेति** । अथ सा द्रुपदस्य सुता द्रौपद्यपि नूतनैः प्रत्यग्रैः अवभृथस्य राजसूयावभृथस्नानस्य संबन्धिभिरम्बुकणैरिव स्थितैः जालके नाम केशभूषणे मौक्तिकैः अधिगतां संगतां स्वस्य कवरीं केशपाशं सुबलजायाः गान्धार्याः पदयोः समनीयत प्रापयति स्म । नमश्चक्र इत्यर्थः । अत्र धावल्यगुणनिमित्ता मौक्तिकेष्ववभृथाम्बुबिन्दुत्वोत्प्रेक्षा । द्रुतविलम्बितं वृत्तम् ॥ २६ ॥

१. 'कल्पितकैतव' इति पाठः. २. 'धर्मानुजः'; 'धर्मात्मजः' इति पाठौ. ३. 'एकैक' इति पाठः. ४. 'मौक्तिकजालकैः' इति पाठः. ५. 'समनीनयत्' इति पाठः.

अनुजाभिरनामयानुयुक्तेरभिनन्द्य क्रतुलाभलालनाभिः ।
सदनाय ससर्ज तं विनीतं स धृताकारनिगूहनो महीपः ॥२७॥

तावन्मदीयतनुभेदिभटान्तहेतु-
वैरं मिथः प्रभविता कुरुभूभुजां श्वः ।
इत्यन्तराहतशुचेव दिशि प्रतीच्यां
मन्दायमानमहसा रविणा निपेते ॥ २८ ॥

दिग्धे संतमसैः सान्द्रैर्दिशापदिशचत्वरे ।
सर्वाः प्रजास्तदा [2]राज्ञा समारुक्षन्दृशा तुलाम् ॥ २९ ॥

मनुजावलीनयनवर्त्मने पुनर्मघवादिदेवमसभावगोचराः ।
ककुभो विभेजुरमृतांशुभानवः क्षणमेव [3]तं प्रथमशैलरोहिणः ॥ ३० ॥

---

अनुजाभिरिति । धृतं आकारस्य कपटभावजनितचेष्टायाः निगूहनं आच्छादनं येन स तथोक्तः स महीपः धृतराष्ट्रः अनामयस्य आरोग्यस्य अनुयुक्तेः प्रश्नस्य अनुजाभिः । आनन्तर्येणोच्चरिताभिरित्यर्थः । 'ब्राह्मणं कुशलं पृच्छेत्क्षत्रबन्धुमनामयम्' इति स्मरणादिति भावः । क्रतोः राजसूयस्य यो लाभः अनुष्ठानं तत्संबन्धिनीभिः लालनाभिः प्रशंसाभिः अभिनन्द्य श्लाघित्वा विनीतं विनयान्वितं धर्मराजं सदनाय उपकार्यायै ससर्ज प्रेषितवान् । औपच्छन्दसिकवृत्तम् २७

तावदिति । तावत् तदानीं श्वः परस्मिन् दिने मदीयायास्तनोः मण्डलस्य भेदिनां भटानां अपरावर्तिनां अन्तस्य मरणस्य हेतुः । 'द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । युद्धेऽपरावृत्य मृतः शिरो योगाच्छिनत्ति यः ॥' इति स्मरणादिति भावः । कुरूणां कुरुवंश्यानां भूभुजां राज्ञां पाण्डवानां धार्तराष्ट्राणां च मिथः अन्योन्यं वैरं विरोधः प्रभविता प्रकर्षेण भविष्यतीति हेतोः । अन्तः मनसि आहृता संगता शुक् दुःखं यस्य तेनेवेत्युत्प्रेक्षा । मन्दायमानं क्षीयमाणं महः तेजो यस्य तेन रविणा सूर्येण प्रतीच्यां दिशि निपेते पतितम् । पतेर्भावे लिट् ॥ २८ ॥

दिग्ध इति । ततः सान्द्रैः संतमसैः तमोभिः दिशानां अष्टानां अपदिशानां तन्मध्यभागानां च चत्वरे प्राङ्गणे दिग्धे लिप्ते सति तदा सर्वाः प्रजा दृशा अन्धीभूतया राज्ञा तुलां धृतराष्ट्रसादृश्यं समारुक्षन् प्राप्नुवन् । रुहेः कर्तरि लुङ् । उपमालंकारः ॥ २९ ॥

मनुजावलीति । ततः अमृतांशोः चन्द्रस्य भानवः किरणाः प्रथमशैलात् उदयात् रुहन्तीति रोहिणः तस्मादाविर्भूताः सन्तः तं क्षणम् । तस्मिन्नेव क्षण इत्यर्थः । अत्यन्तसंयोगे द्वितीया । मनुजावल्याः प्रजावृन्दस्य नयनयोः वर्त्मने ।

---

१. 'आहित' इति पाठः. २. 'राज्ञः' इति पाठः. ३. 'ताः' इति पाठः.

अथोपकार्यामधितिष्ठतोऽस्य संदर्शनायानिशमापतद्भिः ।
अशेषपौरैरतिबाल्यमित्रैरशेषि किंचिन्न तया रजन्या ॥ ३१ ॥

धर्मजन्मा ततः कर्म निर्मायाहर्मुखोचितम् ।
सभां स भासुरां पौरैर्भूपैश्चापाक्षवेदिभिः ॥ ३२ ॥

तत्र चित्रीयमाणेष्वनल्पचतुरिमजल्पाकेषु सभाशिल्पेषु दृशं परिकल्पयतः प्रज्ञादृशं निकषा मूर्ते तृतीयगुण इव दिविषदृषभ-

---

प्रचारायेत्यर्थः । मघवा इन्द्रः आदिः येषां ते देवाः इन्द्राग्न्यादयः तेषां मम भावस्य स्वीयत्वस्य गोचराः विषयाः ककुभः दिशः पुनर्विभेजुः । इयमैन्द्री इयमाग्नेयी इत्यादिना विभागमकुर्वन्नित्यर्थः । पूर्वं तमोभिस्तासामेकीभूतत्वादिति भावः । मञ्जुभाषिणी वृत्तम् ॥ ३० ॥

**अथेति** । अथ चन्द्रोदयानन्तरम् । उपकार्यामधितिष्ठतः । उपवेशशालायां वर्तमानस्येत्यर्थः । 'अधिशीङ्स्थासां कर्म' इति द्वितीया । अस्य धर्मराजस्य संदर्शनाय अनिशं अविरतं यथा तथा आपतद्भिः आगच्छद्भिः अत्यन्तं बाल्यमित्रैः सखीभिः अशेषं पौरैरेव किंचित् कैश्चित् । कतिभिरिति यावत् । अशेषि शिष्टम् । तया रजन्या रात्र्या तु नाशेषि । तेषां बहुलादस्याश्च परिमितत्वादिति भावः । किंचिदिति ईषदपीत्यर्थः । रात्रावपि योज्यम् । उभयत्र 'अव्ययादाप्सुपः' इति तृतीयाया लुक् । अत्रोभयत्र प्राप्तस्य शेषीभवनस्य पौरमात्रे नियमनात्परिसंख्यालंकारः ॥ ३१ ॥

**धर्मजन्मेति** । ततः प्रभाते धर्मात् यमात् जन्म यस्य स युधिष्ठिरः अहर्मुखे प्रातः उचितं कर्तव्यं कर्म स्नानसंध्यावन्दनादि निर्माय कृत्वा पौरैः अक्षवेदिभिः द्यूतविद्याकुशलैः भूपैः राजभिश्च भासुरां सभां द्यूतशालां आप प्राप्तवान् । पौरैर्भूपैरक्षवेदिभिश्चेति वा योजना । 'अक्षदेविभिः' इति पाठे अक्षैः पाशकैः दीव्यन्ति क्रीडन्तीत्यक्षदेविभिरित्युक्तैव योजना । यत्तु 'चापाक्षदीक्षिभिः' इति पाठे 'आवृत्त्या चापरूपाक्षमालाविहारिभिः' इति नृसिंहव्याख्यानम्, तत्प्रकृतासंगतेः तस्यैवाशास्यम् ॥ ३२ ॥

**तत्रेति** । तत्र सभायां अनल्पानां महतां चतुरिम्णां चातुर्याणां जल्पाकेषु प्रख्यापकेषु । तन्निधानेष्विति यावत् । 'स्याज्जल्पाकस्तु वाचालः' इत्यमरः । अत एव चित्रीयमाणेषु आश्चर्यकरेषु । 'नमो वरिवश्चित्रङः क्यच्' इति क्यजन्ताल्लटः शानच् । 'क्यचि च' इतीत्वम् । सभायां आस्थानमण्डपस्य शिल्पेषु निर्माणविशेषेषु दृशं परिकल्पयतः प्रसारयतः । तानि तानि शिल्पचातुर्याणि पश्यत इत्यर्थः । प्रज्ञादृशं निकषा धृतराष्ट्रस्य समीपे । 'अभितःपरितः–' इत्यादिना द्वितीया । मूर्ते शरीरधारिणि तृतीये गुणे तमसीव स्थित इत्युत्प्रेक्षा । दिविषदृषभस्य इन्द्रस्य याः नीलदृषदः नीलरत्नानि तन्मये आसने पीठे निषीदतः उपविशतः । अमुष्य

---

१. 'बाल' इति पाठः. २. 'भूयः प्रापाक्षदेविभिः' इति पाठः. ३. 'चारिम' इति पाठः. ४. 'दृशः' इति पाठः. ५. 'गुण इव तृतीये' इति पाठः.

नीलदृषदासने निषीदतोऽमुष्य कुरुकुलप्रदीपस्य प्रतीपं निविशमानः शकुनिः स्थानाद्भ्रंशयितुं साक्षात्कृतसंनिधी रिक्तमध्यमवर्णया तदीयाभिख्यया वाच्यो ग्रहविशेष इव प्रासङ्गिकेन पथा दुरोदरविहारेऽवतारमचिरमभिरोचयामास ॥

अथ सदसि महत्या चाज्ञयासौ नियत्याः
सुमतिमपि विमुह्य द्यूतमार्गे प्रवृत्तम्।
बहुषु जनपदेषु प्राप्तुवत्सु ग्लहत्वं
सपदि सुबलसूनुर्धर्मसूनुं विजिग्ये ॥ ३३ ॥

एकेन यत्सुबलभूर्युगपद्ग्रहीतु-
मक्षेण सर्वविषयान्नृपतेरशक्नोत्।

---

कुरुकुलप्रदीपस्य धर्मराजस्य प्रतीपं अभिमुखं प्रतिकूलं यथा तथा निविशमानः उपविशन् प्रविशंश्च स्थानात् ऐश्वर्यात् भ्रंशयितुं च्यावयितुं साक्षात् मूर्तीभूय कृतः संनिधिः समीपवर्तित्वं येन सः रिक्तः शून्यः मध्यमवर्णः कुकारः यस्यां तया तदीयया शकुनिशब्दसंबन्धिन्या अभिख्यया नाम्ना। कुकारशून्येन शनिरिति संज्ञाशब्देनेति यावत्। वाच्यः प्रतिपाद्यः ग्रहविशेषः शनैश्वर इव स्थित इवेत्युत्प्रेक्षा। शकुनिः दुर्योधनमातुलः प्रासङ्गिकेन पथा। तत्तत्प्रस्तावपारम्पर्येण दुरोदरविहारे द्यूतक्रीडायां अवतारं प्रवेशं अचिरं सत्वरं अभिरोचयामास। तदभिलाषं जनयामासेत्यर्थः॥

**अथेति**। अथ अनन्तरं महत्यां सदसि सभायाम्। 'स्त्रीनपुंसकयोः सदः' इत्यनुशासनात्सदःशब्दस्य स्त्रीत्वम्। असौ सुबलसूनुः शकुनिः शोभना कर्तव्याकर्तव्यकोविदा मतिः बुद्धिः यस्य तथोक्तमपि नियत्याः दैवस्य आज्ञया गत्या विमुह्य मौढ्यं प्राप्य द्यूतमार्गे दुरोदरविहारे प्रवृत्तं धर्मसूनुं युधिष्ठिरं बहुषु जनपदेषु नानादेशेषु ग्लहत्वं पणत्वं प्राप्तुवत्सु। पणकृतेष्वित्यर्थः। सपदि द्रुतं विजिग्ये जितवान्। जयतेः कर्तरि लिट्। 'सँल्लिटोर्जेः' इति कुत्वम्। यद्वा 'धर्मसूनुं विमोह्य' इति पाठमाश्रित्य योज्यम्। अत्र जनपदानामेव कर्मत्वम्। दुर्लङ्घ्या दैवगतिरिति भावः। मालिनी वृत्तम् ॥ ३३ ॥

**एकेनेति**। सुबलभूः शकुनिः एकेन अक्षेण पाशकेन इन्द्रियेण च। 'अक्षं रथाङ्गे सेनायां पाशकेन्द्रिययोरपि' इति विश्वः। नृपतेः युधिष्ठिरस्य संबन्धिनः सर्वान्विषयान्। देशान् शब्दादींश्च। युगपत् एकदा ग्रहीतुं स्वीकर्तुं ज्ञातुं च अशक्नोत् समर्थोऽभूदिति यत्। 'विषयो देशशब्दाद्योः' इति विश्वः। अस्मादेकाक्षेणैकदा सर्वविषयग्रहणात् परं अन्यत् वस्तु परमाद्भुतेति यद्वाचकं पदं

---

१. 'संनिधिरमध्यम' इति पाठः. २. 'वाच्य इव ग्रहविशेषः' इति पाठः. ३. 'अचिरात्' इति पाठः. ४. 'अनुज्ञया' इति पाठः. ५. 'प्रासवत्सु' इति पाठः.

अस्मात्परं जगति वाच्यतयाभ्युपेत्य
तिष्ठेत किं नु परमाद्भुतवाचकाय ॥ ३४ ॥

प्रतिदेवनमेवमेव भूषाः प्रचुरान्रत्न[1]चयांश्च हेमरा[2]शीन् ।
सहजान्सह जाययास्य जित्वा स तु गान्धारपतिर्जगर्ज हर्षात् ॥३५॥

[3]तत्रान्तरे

घटीचेटी नोऽभूद्बहुपतिवधूटी द्रुपदजा
वराकीं तामत्रानय परिषदीत्यग्रजगिरम् ।
हरन्द्वैतीयीकः सुबलतनयासूनुषु जवा-
त्समुत्तस्थौ साक्षाद[4]वनिमवतीर्णो यम इव ॥ ३६ ॥

---

तस्मै वाच्यतया अर्थत्वेन अभ्युपेत्य आगत्य तिष्ठेत वर्तेत किम् । न तिष्ठेदेवेत्यर्थः। केचित्तु 'परं आ अद्भुत–' इति छित्वा 'आ' इति यत् अद्भुतस्य वाचकं तस्मै परं अत्यन्तं वाच्यतयेत्यर्थः । 'आकारः सर्वगे भाव ईषदर्थे च विसये' इति विश्वः । अद्भुतमपश्यतां शृण्वतां वा । आ इत्याश्चर्याभिलापकशब्दोच्चारणं प्रसिद्धमित्याहुः । तत्र पुनरुक्तिवारणाय परशब्दस्यात्यन्तिकत्वार्थवर्णनेऽपि तस्यावसान एवान्वयात्प्रकृतासंगतिः । बहुतरचतुरङ्गबलेन चिरेणाप्यसाध्यस्य युधिष्ठिरसर्वदेशापहारस्य एकाक्षेण पञ्चभिरपीन्द्रियैर्युगपदसंभाविनः शब्दादिपञ्चकज्ञानस्यैकेन्द्रियेण वासंपादनरूपस्य परमत्वस्य अद्भुत एवान्वयस्य ग्रन्थकाराभिमतत्वादिति सुधीभिरालोचनीयम् ॥ ३४ ॥

**प्रतिदेवनमिति** । स गान्धारपतिः शकुनिस्तु देवने देवने प्रतिदेवनं प्रत्यक्षक्रीडायाम् । वीप्सायामव्ययीभावः । एवं उक्तप्रकारेण अस्य धर्मराजस्य भूषाः भूषणानि प्रचुरान् बहुलान् रत्नानां चयान् राशीन् हेम्नां राशीन् जायया द्रौपद्या सह सहजान् भीमादींश्च जित्वा हर्षाज्जगर्ज सिंहनादं चक्रे। औपच्छन्दसिकवृत्तम् ३५

**तत्रान्तरे** । इत्युत्तरेणान्वयः ॥

**घटीति** । तत्र तस्मिन्नन्तरे युधिष्ठिरसर्वस्वजयकाले बहूनां पतीनां वधूटी भार्या द्रुपदजा द्रौपदी नः अस्माकं घटीचेटी जलकुम्भाहरणदासी अभूत् । घटीचेटीनामेव बहुपतित्वात्तथोक्तम् । वराकीं तुच्छां तां द्रौपदीम् अत्र परिषदि एतत्सभायां आनय प्रापय । इति उक्तप्रकारां अग्रजस्य दुर्योधनस्य गिरं वाक्यं हरन् गृह्णन् । तदाज्ञां वहन्निति यावत् । अत एव अवनिं भूमिं अवतीर्णः प्राप्तः साक्षात् प्रत्यक्षः यम इव स्थितः सुबलतनयायाः गान्धार्याः सूनुषु द्वितीय एव द्वैतीयीकः दुःशासनः । 'तीयादिकक् स्वार्थे वाच्यः' इतीकक् । जवात्समुत्तस्थौ समुत्थितवान् । द्रौपद्यानयनायेति शेषः । शिखरिणीवृत्तम् ॥३६॥

---

१. 'रत्नमयांश्च' इति पाठः. २. 'कोशान्' इति पाठः. ३. 'तत्रान्तरे' इति नास्ति क्वचित्. ४. 'धरणिम्' इति पाठः.

दृष्ट्वा भिया सदसि धावनमाचरन्त्याः
कैश्ये चकार स कराङ्गुलिमानताङ्ग्याः।
वक्षोरुहेषु च महीपपुरंध्रिवर्गो¹
नासाग्रसीम्नि सुधियश्च नदीसुताद्याः॥ ३७॥

तत्र स दुर्मेधा वलवदाकर्पणोद्भिदुराणि² स्वेदपृपन्तीव भूषाजाल³-कमुक्ताफलानि धारयन्त्याश्चिकुरभारात्⁴करतलनिष्पीडननिर्गलितां कालिमधारामिव निर्भरकुवलयगर्भकमाल्यरसझरीमश्रुभिः सह वर्षन्त्यास्तस्याः पातिव्रत्यलक्ष्मीनिवासस्फटिकप्राकारमिव दुकूलमप्यांहर्तुं⁵ प्रावर्तत॥

तादृक्षे समुपस्थिते परिभवे सभ्येषु वाचंयमे-
ष्वाध्यायत्सु विधेर्बलं स्वदयितेष्वन्येष्वशक्तेष्वपि।
निश्चित्यार्तिमतां गतिं यदुपतिं⁷ नीव्यां करौ कुर्वती
सा चक्रन्द तदोच्चकैरि⁶हँ हरे त्रायस्व हा मामिति॥ ३८॥

दृष्ट्वेति। दृष्ट्वा तं आगतं वीक्ष्य भिया भयेन सदसि सभायां धावनं इतस्ततः पलायनं आचरन्त्याः कुर्वन्त्याः आनताङ्ग्याः द्रौपद्याः कैश्ये केशपाशे स दुःशासनः कराङ्गुलिं चकार। कराग्रेण वेणीं गृहीतवानित्यर्थः। महीपस्य धृतराष्ट्रस्य पुरंध्रिवर्गाः अन्तःपुरस्त्रीसंघाः वक्षोरुहेषु कुचेषु कराङ्गुलिं चक्रुः। दुःखादिति भावः। नदीसुताद्याः भीष्मादयः सुधियः सज्जनाश्च नासायाः नासिकायाः अग्रसीम्नि अग्रदेशे कराङ्गुलिं चक्रुः। अहो दुर्लङ्घ्यता दैवस्येत्याश्चर्यादिति भावः॥ ३७॥

तत्रेति। तत्र सभायां दुष्टा मेधा बुद्धिर्यस्य तथोक्तः दुर्मेधाः। 'नित्यमसिच्प्रजामेधयोः' इत्यसिच्। स दुःशासनः बलवत् दृढं आकर्षणेन उद्भिदुराणि अङ्कुरितानि स्वेदस्य पृषन्ति बिन्दूनि इव स्थितानि भूषायाः जालकस्य मुक्ताफलानि धारयन्त्याः चिकुरभारात् केशपाशात् करतलेन निष्पीडनात् निर्गलितां कालिम्नः नैल्यस्य धारामिव स्थितां निर्भराणि सान्द्राणि कुवलयानि गर्भे मध्ये यस्य तस्य तादृशगर्भस्य। तन्मयस्येत्यर्थः। शैषिकः कप्। माल्यस्य रसझरीं मकरन्दधारां अश्रुभिः सह वर्षन्त्याः तस्याः द्रौपद्याः पातिव्रत्यलक्ष्म्याः यो निवासः गृहं तस्य स्फटिकमयं प्राकारमिव स्थितं दुकूलं धवलांशुकं आहर्तुं आक्रष्टुं प्रावर्तत उपक्रान्तवान्। उत्प्रेक्षात्रयसंसृष्टिः॥

तादृक्ष इति। सा द्रौपदी तादृक्षे तथाविधे परिभवे अवमाने समुपस्थिते प्राप्ते सति सभ्येषु भीष्मादिषु सभाजनेषु वाचंयमेषु तूष्णींभवत्सु सत्सु। धर्म-

१. 'वर्गो' इति पाठः. २. 'आकर्पणभयोद्भिदु' इति पाठः. ३. 'जालक' इति नास्ति क्वचित्. ४. 'भरात्' इति पाठः. ५. 'अपहर्तुम्' इति पाठः. ६. 'तमुच्चकैः' इति पाठः. ७. 'यदुपतेः' इति पाठः.

तस्याः सभायां ह्रियमाणवस्त्रात्तन्व्या नितम्बात्सहसाविरासीत् ।
कंसारिकारुण्यपयःपयोधेः कल्लोलमालेव दुकूलपङ्क्तिः ॥ ३९ ॥
हृते हृते वाससि हृद्यरूपं वासोऽन्तरं यद्ववृधे वराङ्ग्याः ।
नरस्य तेनैव न कस्य तत्र चित्तस्य नाव्यो[1]ऽजनि चित्रपूरः[2] ॥ ४० ॥

अदृश्यस्यापहारेऽपि वर्धितानेकवाससः ।
अम्बरप्रायता तस्या[3] मध्यस्योभयथाप्यभूत् ॥ ४१ ॥

सौक्ष्म्यस्य निर्धारणाशक्त्येति भावः । स्वदयितेषु युधिष्ठिरादिषु विधेः दैवस्य बलं दुर्लङ्घ्यमहिमानं आध्यायत्सु चिन्तयत्सु सत्सु । 'स्याच्चिन्ता स्मृतिराध्यानम्' इत्यमरः । अन्येषु उदासीनेषु अशक्तेषु सत्सु । यदुपतिं श्रीकृष्णं आर्तिमतां दुःखवतां गतिं परायणं निश्चित्य । नीव्यां वस्त्रग्रन्थौ करौ द्वावपि कुर्वती । कराभ्यां नीवीं संगृह्णन्ती सतीत्यर्थः । इह अस्मिन् अवमानसमये हे हरे, मां त्रायस्व रक्ष । हा इति खेदे । इति उक्तप्रकारं तदा उच्चकैः गलितकण्ठं यथा तथा चक्रन्द रुरोद । शार्दूलविक्रीडितं वृत्तम् ॥ ३८ ॥

**तस्या इति** । अथ सभायां ह्रियमाणं आकृष्यमाणं वस्त्रं यस्मात्तस्मात्तस्याः श्रीकृष्णं शरणं प्रपन्नायाः तन्व्याः द्रौपद्याः नितम्बात् । कंसारेः श्रीकृष्णस्य कारुण्यमेव पयःपयोधिः क्षीराब्धिः तस्य कल्लोलानां महातरङ्गाणां माला पङ्क्तिरिव स्थितेत्युत्प्रेक्षा । दुकूलानां क्षौमवस्त्राणां पङ्क्तिः सहसा सत्वरम् । हरिस्मरणक्षण एवेति यावत् । आविरासीत् प्रादुर्बभूव । प्रसन्ने भगवति किं दुर्लभमिति भावः । इन्द्रवज्रा वृत्तम् ॥ ३९ ॥

**हृत इति** । यत् यस्मात् वराङ्ग्याः द्रौपद्याः वाससि वस्त्रे एकैकस्मिन् हृते हृते सति । वीप्सायां द्विर्भावः । हृद्यरूपं वासोऽन्तरं अन्यद्वासः ववृधे आविर्बभूव । तेन कारणेन प्रत्यपहारं वस्त्रान्तराविर्भावरूपेण चित्रपूरः आश्चर्यरसप्रवाहः तत्र सभायां कस्य नरस्य संबन्धिनश्चित्तस्य नावा तार्यः नाव्यः अगाधः नाजनि नाभूत् । सर्वस्याप्यजन्येव । सर्वेऽप्यत्याश्चर्यान्विता बभूवुरित्यर्थः ॥४०॥

**अदृश्यस्येति** । अदृश्यस्य निसर्गतः सौक्ष्म्येण द्रष्टुमयोग्यस्यापहारे वस्त्राणामपकर्षणे सत्यपि वर्धितानि हरिकरुणयाविर्भूतानि अनेकानि वासांसि यस्य तथोक्तस्य तस्याः द्रौपद्याः मध्यस्य उभयथा निसर्गादृश्यत्वेन अनेकवासोवर्धनेन च द्विधापि अम्बरप्रायता आकाशसाम्यं अम्बराणां वस्त्राणां प्रायो बाहुल्यं यस्मिन् तस्य भावः तत्ता । बहुवस्त्रवत्त्वं चेत्यर्थः । अभूत् आसीत् । 'अम्बरं व्योम्नि वाससि', 'प्रायो वयसि बाहुल्ये साम्ये निरशनव्रते' इत्यमरविश्वप्रकाशौ । सतां मानभङ्गाय दुरात्मभिश्चिन्तितं दैवेन भज्यत इत्यत्र इदमेव साक्षि । यद्द्रौपदीमध्यदिदृक्षुणा दुःशासनेन कृतं द्रौपद्या वस्त्रापहरणं दैवेन भग्नमिति । 'तस्य' इति मध्यविशेषणत्वेन पाठान्तरं व्यर्थविशेषणत्वेनोपेक्ष्यम् । अत्रादृश्यत्ववस्त्रप्राचुर्ययोर्विशेषणगत्या अम्बरप्रायत्वं प्रति हेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् । अस्य

१. 'नव्यो' इति पाठः. २. 'चित्रकूटः' इति पाठः. ३. 'तस्य' इति पाठः.

चेलानि[1] कर्षंश्चिरमन्धसूनुस्तस्यास्तु नग्नंकरणः स नाभूत् ।
श्रमात्स्खलित्वा धरणौ पतन्सन्दन्तावलेरेव जनव्रजानाम् ॥ ४२ ॥

अथ तथाभूतपरुषयोषाभिषङ्गरोषकलुषेण पृषदश्वजनुषा परिषदि भीषणमेवं बभाषे ॥

उरसि स्खलदूष्मलं मृगाक्ष्याः समितावस्रमिदं यथाहमक्ष्णा ।
द्विषतः कचकर्षिणो[2]ऽप्यमुष्या रसनेनानुभवेयमेवमेव ॥ ४३ ॥

किं च सरसीव चलत्[3]कबन्धबन्धुरे समराजिरे तामरसच्छदा[4]निव शतमपि विमतानेतान्हेमन्त इवाहं धार्तराष्ट्रशब्दशेषां महागदापत्तिं गमयिष्यामीति ॥

---

वस्राकाशयोर्बाहुल्यसाम्ययोश्च भेदेऽपि श्लेषभित्तिकया भेदाध्यवसायादतिशयोक्तिभेदद्वयेन संसृष्टिः ॥ ४१ ॥

**चेलानीति** । सः अन्धसूनुः दुःशासनः चेलानि द्रौपद्या वस्राणि चिरं कर्षन् सन् तस्याः द्रौपद्याः नग्नंकरणः विवस्त्रत्वकारी नाभूत् । किंतु श्रमात् वस्त्रापकर्षणजन्यात् स्खलित्वा संक्षुभ्य धरणौ भुवि पतत् सन् जनव्रजानां जनसंघानां दन्तानामावलेः पङ्क्तेरेव नग्नंकरणोऽभूत् । तं वीक्ष्य पतितं विवृतदन्तपङ्क्ति जहसुर्जना इत्यर्थः । अत्र द्रौपदीजनदन्तावल्योः प्रसक्तस्य नग्नीकरणस्य जगदन्तावल्यामेव नियमनात्परिसंख्यालंकारः ॥ ४२ ॥

**अथेति** । अथ तथाभूतेन तादृशेन । 'भूतं पिशाचे सादृश्येऽपि' इति विश्वः । परुषेण क्रूरेण योषाया द्रौपद्या अभिषङ्गेण पराभवेन यो रोषः तेन कलुषेण विकृतचित्तेन । पृषदश्वात् वायोः जनुः जन्म यस्य तेन भीमेन । परिषदि सभायां भीषणं भयंकरं यथा तथा । एवं वक्ष्यमाणप्रकारेण बभाषे । प्रतिज्ञातमित्यर्थः । भाषतेर्भावे लिट् । 'पृषदश्वो गन्धवहः', 'जनुर्जननजन्मानि' इत्युभयत्राप्यमरः ॥

**उरसीति** । समितौ सभायां मृगाक्ष्याः द्रौपद्याः उरसि वक्षसि स्खलत् पतत् क्षुभ्यच्च ऊष्मलं संतापातिरेकादत्युष्णम् । इदं अस्रं अश्रु अहं अक्ष्णा लोचनेन यथा अन्वभवं अपश्यं एवमेव अमुष्या द्रौपद्याः कचकर्षिणः द्विषतः दुःशासनस्यापि उरसि स्खलत् ऊष्मलं अस्रं शोणितं रसनेन जिह्वया अनुभवेयम् । पिबेयमित्यर्थः । अत्र केवलप्रकृतश्लेषः । औपच्छन्दसिकं वृत्तम् ॥ ४३ ॥

**किं चेति** । किं च चलद्भिः नृत्यद्भिः कबन्धैः निःशीर्षकलेवरैः जलैश्च बन्धुरे विषमे सरसीव समराजिरे युद्धाङ्गणे विमतान् विरोधिनः शतं एतान् दुर्योधनादीन् तामरसस्य पद्मस्य च्छदान् दलानीव अहं हेमन्तः ऋतुरिव । धार्तराष्ट्र इति शब्दः नामपदं शेषः अवशिष्टः यस्यां ताम् । महत्या गदया आपत्तिं आपदम् । अन्यत्र

---

१. 'चैलानि' इति पाठः. २. 'कर्षणो' इति पाठः. ३. 'विचलत्' इति पाठः. ४. 'च्छदानीव' इति पाठः.

तत्र सुत्राम्णः पुत्रोऽप्येवं प्रतिजज्ञे ॥

उत्सेकात्कृतहस्ततालममुना गान्धारपुत्रीभुवा
राधासूनुरसौ जहास सदसि ग्राम्यं ब्रुवन्यत्ततः[1] ।
यस्यां जात्वपि देहिनोऽभ्युदितता नैवाभिनिर्मुक्तता[2]
स्यातां द्वे अपि गाण्डिवो मम तु तां निद्रामसुं नेष्यति ॥४४॥

इति तयोस्तादृशेन वीरवादेन 'अयि[3], सुखमिहास्स्व' इति करा-स्फालननिदर्शिते[4] सक्थिन्येव[5] तव मृत्युः स्यादिति सुयोधनं प्रति

---

महता गदेन रोगेण हिमरूपेण आपत्तिं च । गमयिष्यामि प्रापयिष्यामि इति बभाष इति पूर्वेण संबन्धः । 'धार्तराष्ट्रोऽसिते हंसे धृतराष्ट्रसुतेऽपि च', 'गदो भ्रातरि विष्णोः स्यादामये चायुधे गदा' इत्युभयत्र विश्वः । अनेकेवेयमुपमा श्लिष्टविशेषणा च ॥

तत्रेति । तत्र तस्मिन्नेव समये सुत्राम्णः इन्द्रस्य पुत्रः अर्जुनोऽपि एवं वक्ष्यमाणप्रकारेण प्रतिजज्ञे प्रतिज्ञातवान् । प्रतिपूर्वाज्जानातेः कर्तरि लिट् ॥

उत्सेकादिति । असौ राधासूनुः कर्णः अमुना गान्धारपुत्रीभुवा दुर्योधनेन सह सदसि ग्राम्यं असभ्यं वाक्यं ब्रुवन् सन् कृताः हस्ताभ्यां तालाः शब्दविशेषा यस्मिंस्तत्तथा यत् यस्मात् जहास हसति स्म । ततः कारणात् यस्यां निद्रायां देहिनः जन्तोः जातु कदाचिदपि अभ्युदितता सूर्योदयः अभिनिर्मुक्तता तदस्तमयश्च । द्वे अपि नैव स्याताम् । पुनर्बुद्धस्य हि तयोः प्रसक्तिरिति भावः । तां दीर्घां निद्राम् । मृतिमिति यावत् । अमुं राधासूनुं मम गाण्डिवस्तु नेष्यति गमयिष्यति इति प्रतिजज्ञे इति पूर्वेण संबन्धः । 'सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च । अंशुमानभिनिर्मुक्तोऽभ्युदितश्च यथाक्रमम् ॥' इत्यमरः । अत्र कर्णनिधनस्य तादृशभङ्ग्यान्तरेण कथनापर्यायोक्त्यलंकारः—'पर्यायोक्तं तु गम्यस्य वचो भङ्ग्यन्तरेण यत्' इति लक्षणात् । शार्दूलविक्रीडितं वृत्तम् ॥ ४४ ॥

इतीति । इति उक्तप्रकारेण तयोः भीमार्जुनयोः तादृशेन तथाविधेन वीरवादेन प्रतिज्ञावाक्येन अयि द्रौपदि, इह मम सक्थिनि सुखं यथा तथा आस्स्व उपविश इति करस्य करतलस्य आस्फालनेन सशब्दं स्पर्शनेन निदर्शिते निर्दिष्टे सक्थिनि ऊरावेव तव मृत्युः मरणं स्यात् भूयात् । इति उक्तप्रकारेण याज्ञसेन्याः द्रौपद्याः संबन्धिना सुयोधनं प्रति दुर्योधनमुद्दिश्य शापेन च यद्भयं तस्मात् आत्तगन्धाभ्यां तिरस्कृताभ्यां अन्धदंपतीभ्यां गान्धारीधृतराष्ट्राभ्याम् । 'आत्तगन्धोऽभिभूतः स्यात्' इत्यमरः । पुरेव यथापुरं द्यूतात्पूर्वमिव राज्यं द्यूतनिर्जितं प्रत्यर्प्य पुनः समर्प्य हरिप्रस्थं इन्द्रप्रस्थं प्रति प्रस्थापितः प्रेषितः अयं युधिष्ठिरः

---

१. 'यत्नतः' इति पाठः. २. 'निर्मुक्तता' इति पाठः. ३. 'अयि' इति नास्ति क्वचित्. ४. 'आस्फालितदर्शिते' इति पाठः. ५. 'निजसक्थिन्येव' इति पाठः.

याज्ञसेन्याः शापेन च भयात्तगन्धाभ्यामन्धदंपतीभ्यां यथापुरं राज्यं प्रत्यर्प्य हरिप्रस्थं प्रस्थापितो युधिष्ठिरः पुनरपि कृतमन्त्रैरमित्रैरयमा-हूतमात्रोऽर्धपथाद्विधिना गलहस्तिकया विनिवर्तित इव तामेव सभां प्रत्यावर्तत ॥

भूताभिविष्ट इव बोधवतां वरोऽपि
भूयोऽपि धर्मतनयः सह सौबलेन ।
आधत्त देवनविहारमनार्यजुष्ट-
माद्यक्षरं विजहदेव पणोऽपि योऽभूत् ॥ ४५ ॥

कितवे शकुनौ वशंवदान्किरति स्वेन करेण पाशकान् ।
विजयेन सदा पुरस्कृतोऽप्यभवत्तेन स पृष्ठतः कृतः ॥ ४६ ॥

---

कृतः मन्त्रः आलोचनं एवं निकृता एते नास्मान् क्षमन्ते तत्पुनर्द्यूतेन वनं नेष्याम इत्याकारकं यैस्तैरमित्रैः शत्रुभिः दुर्योधनादिभिः पुनरप्याहूतमात्रः आकारितः सन्नेव । न किंचिदालोचयन्नेव सन्निति यावत् । विधिना दैवेन ( कर्त्रा ) गले कण्ठे हस्तं निक्षिप्य चोदनात्मिका चेष्टा गलहस्तिका तया (करणेन) अर्धपथात् निवर्तितः प्रत्यावर्तित इवेत्युत्प्रेक्षा । तामेव सभां द्यूतशालां प्रत्या-वर्तत पुनरागतवान् । अत्र भयात्तगन्धतायाः विशेषणगत्या राज्यप्रत्यर्पणहे-तुत्वात् पदार्थहेतुकं काव्यलिङ्गमुत्प्रेक्षया संसृज्यते । अन्धदंपतीभ्यामित्यत्र गान्धार्यन्धस्य पत्युर्भावमनुसरन्ती पट्टेनाक्षिणी पिधाय यावज्जीवमन्धा बभूवेति पौराणिकी कथानुसंधेया ॥

भूतेति । बोधवतां कर्तव्याकर्तव्यकोविदानां मध्ये वरः श्रेष्ठोऽपि धर्मत-नयः भूतेन पिशाचेन अभिविष्टः उन्मादित इव भूयः पुनरपि सौबलेन शकुनिना सह अनार्यैः खलैः जुष्टं सेवितम् । आर्यैर्जुष्टं न भवतीति वा । देवनविहारे अक्ष-क्रीडां आधत्त चक्रे । यो देवनविहार एव आद्यक्षरं देकारं विजहत् त्यजत् सन् । 'नाभ्यस्ताच्छतुः' इति नुमभावः । पणः ग्लहोऽपि वनविहाररूपः अभूत् । तं देवन-विहारमिति संबन्धः । वाच्यवाचकयोरभेदाभिधानान्नावाच्यवचनदोषः ॥ ४५ ॥

कितव इति । कितवे अक्षविद्यानिपुणे शकुनौ वशंवदान् स्वाधीनान् पाशकान् अक्षान् स्वेन स्वीयेन करेण किरति प्रचारयति सति विजयेन जयेन अर्जुनेन च सदा पुरस्कृतः अग्रे कृतोऽपि पूजितश्च सन्निति च । स धर्म-राजः तेन विजयेन पृष्ठतः कृतः पराजितः अवमानितश्च अभवत् । विरोधाभासः । वैतालीयवृत्तम् ॥ ४६ ॥

---

१. 'आहूतमात्रोऽयम्' इति पाठः. २. 'निवर्तित' इति पाठः. ३. 'आद्याक्षरम्' इति पाठः. ४. 'सः' इति पाठः.

उत्थायाथ क्षितीन्द्रः क्षणमपि धरणौ स्थातुमस्यामयुक्तं
प्रत्यर्थिस्वीकृतायामिति सह सहजैः सत्यसंधः सजानिः ।
पाणौ क्षत्तुर्निधाय प्रसुवमतितरामन्तरुत्तप्यमानां
पद्भ्यां प्रापद्वनानि व्यथितहृदमुचत्पौरलोकस्तु दृग्भ्याम् ॥ ४७ ॥

कान्तारवर्त्मनि मृगाः पुरतो निषण्णाः
शान्ताकृतेः सधनुषोऽपि निषङ्गिणोऽपि ।
उत्थाय तस्य पटुमर्मरचारु चीरं
रोमन्थलोलचिबुकेन मुखेन जिघ्रुः ॥ ४८ ॥

परागपूर्णे पथि तस्य पादरेखा घटस्य प्रतिमा मनोज्ञाः ।
भक्त्योपनीता वनदेवताभिः पाद्योदकुम्भा इव जाग्रति स्म ॥४९॥

---

**उत्थायेति** । अथ पराजयानन्तरं सत्यसंधः तथ्यप्रतिज्ञः अत एव क्षितीन्द्रः धर्मराजः प्रत्यर्थिभिः शत्रुभिः स्वीकृतायां अर्थिनं अर्थिनं प्रत्यर्थि स्वीयत्वेन कृतायामिति च । अस्यां धरणौ । राज्य इत्यर्थः । क्षणमपि स्थातुं अयुक्तम् । इत्यालोच्येति शेषः । उत्थाय अन्तः मनसि अतितरां भृशं उत्तप्यमानां खिद्यमानां प्रसुवं मातरं क्षत्तुः विदुरस्य पाणौ निधाय हस्ते समर्प्य । सजानिः सभार्यः सन् सहजैः सोदरैर्भीमादिभिः सह पद्भ्यां पादाभ्याम् । पादचारेणेति यावत् । वनानि अरण्यानि प्रापत् प्राप्तवान् । व्यथितं दुःखितं हृत् मनः यस्य सः पौरलोकः पुरजनस्तु दृग्भ्यां वनानि अश्रुजलानि अमुचत् । दुःखाद्रुरोदेत्यर्थः । आप्नोतेः कर्तरि लुङ् । स्रग्धरावृत्तम् ॥ ४७ ॥

**कान्तारेति** । कान्तारवर्त्मनि अरण्यमार्गे पुरतः अग्रे निषण्णाः उपविष्टाः मृगाः हरिणाः उत्थाय सधनुषोऽपि निषङ्गोऽस्यास्तीति निषङ्गिणोऽपि शान्ता शमप्रधाना आकृतिः आकारः यस्य तस्य धर्मराजस्य चीरं वल्कलं रोमन्थेन चर्वितचर्वणेन लोलं चिबुकं ओष्ठाधोभागो यस्य तेन मुखेन वक्त्रेण पटुना स्फुटेन मर्मरेण शब्देन चारु रमणीयं यथा तथा जिघ्रुः चुचुम्बुः । जिघ्रतेः कर्तरि लिट् । 'अथ मर्मरः । स्वनिते वस्त्रपर्णानाम्' इत्यमरः । अत्र शान्ताकृतित्वस्य विशेषणगत्या चुम्बनहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् ॥ ४८ ॥

**परागेति** । परागेण मृदुरजसा पूर्णे पथि मार्गे आरण्यके घटस्य प्रतिमाः सदृश्यः मनोज्ञाः रमणीयाः तस्य धर्मराजस्य पादयोः रेखाः कलशरेखाः वनदेवताभिः भक्त्या उपनीताः पाद्यस्य पादोदकस्य उदकुम्भाः जलघटा इवेति तादर्थ्ये षष्ठीसमासः । 'मन्थौदन–' इत्यादिना उदकशब्दस्य उदादेशः । जाग्रति स्म रेजुः । उत्प्रेक्षा ॥ ४९ ॥

---

१. 'न युक्तम्' इति पाठः. २. 'सीमनि' इति पाठः.

क्रमेण ते [1]सजानयः विलङ्घ्य विविधानि विपि[2]नानि जह्नुमुनिकर्ण-श[3]ष्कुलीपथवशेन शिक्षितैर्गतिविशेषैरिव [4]गभीरैरावर्तै[5]रुपासिकजन-ताहृतानि संसारचक्राणीव दर्शयन्तीं कोकनदवदनोदि[6]तैरि[7]व कोक-[7]कुटुम्बकूजितैः कुमारस्य देवव्रतस्य [8]कुशलं पृच्छन्तीमि[9]व भागीरथीं पुरस्कृत्य त[10]त्रं तां निशीथिनीं पश्चाच्चक्रुः ।

अपरेद्युरतिमात्रबुभुक्षितानुयात्रिकसत्रिजनपरित्राणाय पवित्रैः स्तोत्रैः प्रसेदुषा चित्रभानुना दत्तमक्षय्यमन्नपात्रमादाय ते[11] कलत्रे निदधुः ।

---

क्रमेणेति । समाना एका जाया येषां ते सजानयः ते पाण्डवाः विविधानि विपिनानि वनानि क्रमेण विलङ्घ्य अतिक्रम्य । जह्नोर्नाम मुनेः कर्णः शष्कुलीव । तस्यां पन्थाः कुटिलमार्गः तद्वशेन । तत्र संचारबलेनेत्यर्थः । शिक्षितैः अभ्यस्तैः गतिविशेषैः चक्रगमनैरिव स्थितैः गभीरैः निम्नैः आवर्तैः भ्रमिभिः । तद्व्याजेनेवे-त्यर्थः । उपासिकायाः आत्मसेविकायाः जनतायाः जनसमूहात् । 'ग्रामजन–' इत्यादिना समूहार्थे तल् । आहृतानि उपाकृष्टानि संसाराण्येव चक्राणि दर्शयन्ती-मिव स्थितां कोकनदं रक्ताब्जमेव वदनं तस्य उदितैः भाषितैरिव स्थितैः तस्मा-दुदितैः । 'आविर्भूतैः' इति वा । अभिहितः पाठः सुगन्धः । 'रक्ताम्बुजे कोकन-दम्' इति नानार्थरत्नमालायाम् । कोककुटुम्बानां चक्रवाकमिथुनानां कूजितैः शब्दैः कुमारस्य स्वपुत्रस्य देवव्रतस्य भीष्मस्य कुशलं पृच्छन्तीमिव स्थिताम् । भगी-रथस्य नाम राजर्षेरपत्यं भागीरथीं गङ्गां पुरस्कृत्य अग्रे कृत्वा । तीरं प्राप्येति यावत् । तत्र गङ्गातीरे तां निशीथिनीं प्रथमां रात्रिं पश्चाच्चक्रुः नयन्ति स्म ॥

अपरेद्युरिति । अपरेद्युः परस्मिन्दिने ते पाण्डवाः अतिमात्रं अत्यन्तं बुभुक्षितानां क्षुधितानां अनुयात्रिकाणां सहागन्तॄणाम् । अनुयात्रा प्रयोजनमेषा-मित्यर्थे कक् । सत्रं क्रतुरेषामस्तीति सत्रिणां यज्वनां जनानां परित्राणाय । बुभुक्षाशमनायेत्यर्थः । पवित्रैः स्तोत्रैः वैदिकैः प्रसेदुषा प्रसन्नेन चित्रभानुना सूर्येण दत्तं क्षेतुं शक्यं न भवतीत्यक्षय्यं अन्नपात्रं आदाय कलत्रे निदधुः । द्रौपद्यै समर्पयन्नित्यर्थः ॥

---

१. 'सजानयः' इति नास्ति क्वचित्. २. 'वनानि' इति पाठः. ३. 'शष्कु-लिकापथेन' इति पाठः. ४. 'गम्भीरैः' इति पाठः. ५. 'उपासकजनादाहृतानि' इति पाठः. ६. 'उदीरितैः' इति पाठः. ७. 'कुटुम्बिनी' इति पाठः. ८. 'कुशलमिव' इति पाठः. ९. 'इव' इति नास्ति क्वचित्. १०. 'तत्र' इति नास्ति क्वचित्. ११. 'ते' इति नास्ति क्वचित्.

वनं ततः काम्यकमेत्य तेषु वसत्सु भीमस्तु नियोद्धुकामम् ।
किर्मीरमुग्रं कुणपाशनेन्द्रं क्षिप्रं तदाहारदशामनैषीत् ॥ ५० ॥
ततश्चरन्द्वैतवने स सार्धं वध्वा कदध्वालसतामबुद्ध्वा ।
मूलानि सर्वस्य शुभस्य भूपो मूलानि जग्राह मुनीन्द्रसंघात्॥५१॥
तत्राथ ते सत्यवतीसुतस्य पादारविन्दात्प्रविसृत्वरीभिः ।
नखप्रभाभिर्नवपुष्पपङ्क्तीर्जटालतानां जनयांबभूवुः ॥ ५२ ॥
तस्मिन्कवौ तापसयूथनाथे स्वातींमथाजग्मुषि वासभूमिम् ।
तेषामतिक्षामतया युतानां शुचाक्षिदेशेष्वतिवृष्टिरासीत् ॥ ५३ ॥

स्वाति.

**वनमिति** । ततस्तेषु पाण्डवेषु काम्यकं नाम वनं अरण्यं एत्य वसत्सु सत्सु भीमस्तु नियोद्धुं बाहुयुद्धं कर्तुं कामो यस्य तं उग्रं भयकरं किर्मीरं नाम कुणपः शवं अशनं येषां तेषामिन्द्रं राक्षसश्रेष्ठं तस्य राक्षसस्य आहारः शवं तस्य दशामवस्थां क्षिप्रं आगमनक्षण एव अनैषीत् । अवधीदित्यर्थः ॥ ५० ॥

**तत इति** । स भूपो धर्मराजः कदध्वनि कापथे । कण्टकशर्करादिसंकुलमार्ग इति यावत् । अलसतां श्रमं अबुद्ध्वा अविचार्य । महोदयहेतुत्वादिति भावः । वध्वा सार्धं द्रौपद्या सह ततः काम्यकवनात् चरन् निर्गच्छन् द्वैते नाम वने मुनीन्द्राणां सङ्घात् सर्वस्य शुभस्य मूलानि मुख्यकारणानि मूलानि कन्दान् जग्राह । आतिथ्यं प्राप्तवानित्यर्थः ॥ ५१ ॥

**तत्रेति** । अथ ते पाण्डवाः तत्र द्वैतवने सत्यवतीसुतस्य व्यासस्य पादारविन्दं पादपद्ममिव तस्मात् प्रकर्षेण विसृत्वरीभिः प्रसरणशीलाभिः । 'इण्नशजिसर्तिभ्यः क्वरप्' इति क्वरपि पित्त्वात्तुक् । नखानां प्रभाभिः । जटा एव लताः तासां नवाः पुष्पाणां पङ्क्तीः जनयांबभूवुः जनयन्ति स्म । तत्पादयोः प्रणेमुरित्यर्थः । रूपकालंकारः ॥ ५२ ॥

**तस्मिन्निति** । अथ तापसयूथस्य मुनिबृन्दस्य नाथे तस्मिन् कवौ पण्डिते । व्यास एव शुक्र इति श्लिष्टरूपकम् । 'कविः काव्यकरे शुक्रे पण्डिते जलपक्षिणि' इति विश्वः । वासभूमिं निजावासस्थानमेव स्वातीं नक्षत्रविशेषं प्रति आजग्मुषि प्राप्तवति सति । स्वातीनक्षत्रस्य तुलाराशिघटकत्वात् 'तुलावृषभयोर्भृगुः' इति शुक्रस्य तदधिपतित्वोक्तेश्च वासभूमिमित्युक्तम् । शुचा दुःखेनैव अतिक्षामतया अनावृष्ट्या अतिकार्श्येनेति च युतानां सहितानां तेषां पाण्डवानां अक्षीण्येव देशाः तेषु अतिवृष्टिरासीत् । 'स्वातीगते शुक्र इवातिवृष्टिः' इत्यादिप्रसिद्धेरिति भावः । आपदि बन्धुदर्शने महान्तोऽपि बाष्पायन्त इति परमार्थः । समस्तवस्तुवर्तिसावयवरूपकम् । 'स्वातीमथाजग्मुषि' इत्येव पाठः । इवकारपाठस्तु प्रक्रान्तसावयवरूपकभङ्गापत्तेरुपेक्ष्यः ॥ ५३ ॥

१. 'किम्मीर' इति पाठः. २. 'चिरम्' इति पाठः. ३. 'पङ्क्तिम्' इति पाठः. ४. 'इव' इति पाठः.

प्रसृमरतनुभासा प्रावृषेण्यान्स मेघा-
न्दिशि दिशि विदधानो दीर्घदर्शी तदानीम् ।
कुरुव इति महान्तं शब्दमाबिभ्रतोऽपि
स्ववचननिपुणिम्ना तानशोकानकार्षीत् ॥ ५४ ॥

तस्मात्प्रतिश्रुतिरिति प्रतिपद्य विद्या-
मालिङ्ग्य धर्मतनयेन विसृज्यमानः ।
पार्थो हिमाचलमगात्परमास्त्रमाप्तुं
शंभोः कृपाजलनिधेश्चरणार्चनाभिः ॥ ५५ ॥

यस्मिन्हिमानीभृति यक्षवृन्दमङ्गेषु सर्वेष्वपि मञ्जुलेषु ।
नखंपचोष्णं नलिनेक्षणानामुरोजमेवातितरामुपास्ते ॥ ५६ ॥

---

**प्रसृमरेति** । प्रसृमरया परितो व्याप्नुवन्त्या तनोः शरीरस्य भासा नील-कान्त्या प्रावृषि वर्षर्तौ जातान् प्रावृषेण्यान् । 'प्रावृष एण्यः' इत्येण्यप्रत्ययः । मेघान् दिशि दिशि प्रतिदिशम् । वीप्सायां द्विर्भावः । विदधानः संपादयन् दीर्घं कालत्रयेऽपि निरपायं पश्यति आलोचयतीति दीर्घदर्शी स व्यासः । कुत्सितं यथा तथा रुवन्ति शब्दायन्त इति कुरुवः इति हेतोः कुरुत्वादिति यावत् । मृगय्वादित्वात्कुः । गणपाठादन्तलोपो निपात्यते । महान्तं शब्दं रोदनं कुरवेति संज्ञापदं च आबिभ्रतः वाचकत्वेन स्वीकुर्वतोऽपीति विरोधः । दधानानपीत्या-भासः । तान् पाण्डवान् वृक्षविशेषांश्च । स्वस्य स्वीयस्य वचनस्य वाक्यस्य 'क्ष्मा भूम्या सह रुवन्ति क्षान्त्या स्थैर्येण वा गर्जन्ति' इति व्युत्पत्त्या भूसदृशक्षमावन्तः तादृशस्थैर्यवन्तो वेति विवरणात्मकस्य 'विपदि धैर्य—' इत्याद्यापद्धर्मबोधकस्य च निपुणिम्ना कौशल्येन । पृथ्वादित्वादिमनिच् । अशोकान् शोकरहितान् तन्नामकवृ-क्षांश्च अकार्षीत् कृतवान् । रुदतस्तानाश्वासितवानित्यर्थः । मालिनीवृत्तम् ॥५४॥

**तस्मादिति** । पार्थोऽर्जुनः तस्मात् व्यासात् प्रतिश्रुतिरिति । तन्नाम्नीमित्यर्थः । विद्यां शैवीं प्रतिपद्य लब्ध्वा धर्मतनयेन आलिङ्ग्य विसृज्यमानः । अनुज्ञातः सन्नित्यर्थः । कृपाजलनिधेः शंभोः चरणयोः अर्चनाभिः पूजाभिः । यद्वा चरणा-र्चनाभिः कृपाजलनिधेः दयमानात् शंभोः सदाशिवादिति वा । परमास्त्रं पाशुपतं आप्तुं लब्धुं हिमाचलं हिमवन्तं प्रत्यगात् गतवान् । अत्र पाशुपतास्त्रलाभशिव-चरणार्चनयोः कार्यकारणयोर्द्वयोरुक्तेर्हेत्वलंकारः ॥ ५५ ॥

**यस्मिन्निति** । हिमानीं हिमसंहतिं बिभर्तीति तस्मिन् शीतशैले यक्षाणां देवयोनिविशेषाणां वृन्दं नलिनेक्षणानां कामिनीनां सर्वेषु अखिलेष्वङ्गेषु मञ्जुलेषु मनोहरेषु सत्स्वपि । नखान् पचति क्वाथयतीति नखंपचः उष्णः ऊष्मा यस्मिंस्त-

---

१. 'अस्मात्' इति पाठः.

यो वत्सतामेत्य वसुंधराया निपीय[1] रत्नावलिकान्तिपूरान् ।
मनःशिलावप्रझरीमिषेण दरीमुखैरुद्गिरतीव तृप्तः ॥ ५७ ॥

आरोहतस्तं तरसा समीरकिशोरकः स्वेदजलाणुराजिम् ।
निपीय तस्यानन[2]पद्ममाध्वीं[3] द्विरेफभावं प्रकटीचकार ॥ ५८ ॥

शिवाख्ययोरेकतनुत्वकारणं
त्रिलोकपित्रोर्महसोस्तपोवनम् ।
मिथोऽर्च्यमानं मिथुनैस्तपस्विनां
तथेच्छुभिस्तत्र ननाम पाण्डवः ॥ ५९ ॥

---

थोक्तम् । 'मितनखे च' इति पचेः खशि खिलात् 'अरुर्द्विषत्–' इत्यादिना मुम् । उरोजं कुचं अङ्गमेव अतितरां उपास्ते सेवते । शीतबाधाविधूननायेति भावः । अत्र नखंपचौष्ण्यस्य विशेषणगत्या कुचसेवनहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम् ॥ ५६ ॥

य इति । यो हिमशैलः वत्सतां गोशिशुत्वं एत्य स्वीकृत्य वसुंधरायाः भूमेः गोरूपधरायाः रत्नावलीनां कान्तिपूरान् प्रभाप्रवाहान् क्षीरात्मकान् निपीय तृप्तः सन् दर्यः गुहा एव मुखानि तैः मनःशिला नाम धातुः तन्मयीनां वप्रझरीणां निर्झराणां मिषेण व्याजेन उद्गिरति आधिक्याद्वमतीवेत्युत्प्रेक्षा । पुरा वेने राजनि राजदोषादन्तर्धानिताखिलजीवनौषधां ऋषिभिः शस्त्वा वेनं तद्भुजमन्थनेन जनितात्पृथोर्भयात्रस्तां गोरूपधरां भुवं शैला हिमवन्तं वत्सं मेरुं दोग्धारं च कृत्वा रत्नान्योषधीश्च दुदुहुः स्वजीवनसारानिति पौराणिकी कथात्रानुसंधेया ॥ ५७ ॥

आरोहत इति । तं उक्तविशेषणविशिष्टं हिमशैलं आरोहतः तस्य अर्जुनस्य स्वेदजलस्य अणूनां बिन्दूनां राजिमेव आननस्यैव पद्मस्य माध्वीं मकरन्दं इति व्यस्तरूपकम् । तरसा द्रुतं निपीय पीत्वा । अपहृत्येति यावत् । समीरकिशोरकः तरुणमारुतः द्विरेफभावं भ्रमरत्वम् । भ्रमरस्येव रेफद्वयवत्पदवाच्यत्वमिति यावत् । समीरकिशोरक इति शब्दस्य रेफद्वयवत्त्वादिति भावः । प्रकटीचकार स्फुटीकृतवान् ॥ ५८ ॥

शिवेति । तत्र हिमशैले पाण्डवः अर्जुनः त्रयाणां लोकानां पित्रोः जननीजनकयोः शिवेति शिव इति च आख्या ययोस्तयोः महसोः तेजसोः एका तनुः ययोः तयोर्भावः एकतनुत्वं तस्य कारणम् । तपःसिद्धिजनकत्वेनेति भावः । अतएव तथा शिवयोरिवात्मनोरपि तदेकतनुत्वं भूयादितीच्छा येषां तैः । तपस्विन्यश्च तपस्विनश्च तपस्विनः तेषां मिथुनैः स्त्रीपुंसैः मिथः रहसि अर्च्यमानं पूज्यमानं तपोवनं शिवाश्रमवनं ननाम नमस्कृतवान् । हेतुरलंकारः । वंशस्थवृत्तम् ॥ ५९ ॥

---

१. 'निपीत' इति पाठः. २. 'तस्या' इति पाठः. ३. 'माध्वी' इति पाठः.

तत्र दर्भदलमुष्टिमाहरन्संनिधास्यदृषभोपदामिव ।
चित्तमीशपदयोः समादधत्तमुमारभत दुश्चरं तपः ॥ ६० ॥

चतुरस्तपःस्थितिविशेषविधौ
चरणं विधातुमखिलेन निजम् ।
स जुगुप्समान इव शत्रुजिते
प्रपदेन तिष्ठति भुवः स्म तले ॥ ६१ ॥

भानौ ललाटंतपभानुजाले प्रविष्टदृष्टिं परितस्तमग्निः ।
भूयोऽपि भोक्तुं विपिनं दिशेति प्रेम्णोपरुन्धन्निव दृश्यते स्म ॥६२॥

तपोविधौ स पावकेन सर्वदिक्षु वासवि-
स्तदा बभूव वेष्टितो धनंजयत्वबान्धवात् ।

---

**तत्रेति** । तत्र शिवतपोवने पाण्डवः संनिधास्यतः शिवप्रसादसमये समीपं गमिष्यतः ऋषभस्य हरवृषभस्य उपदां उपायनमिव स्थितं दर्भदलानां कुशाङ्कुराणां मुष्टिम् । मुष्टिमितदर्भानित्यर्थः । आहरन् दीक्षाङ्गत्वेन संपादयन् सन् । किंच ईशस्य सदाशिवस्य पदयोः चित्तं समादधत् निवेशयन् सन् । 'नाभ्यस्ताच्छतुः' इति नुम्निषेधः । दुश्चरं अनितरानुष्ठेयं तपः तमुम् । कर्तुमित्यर्थः । आरभत उपक्रान्तवान् । रभतेराङ्पूर्वात्कर्तरि लङ् । रथोद्धता वृत्तम् ॥ ६० ॥

**चतुर इति** । तपसः संबन्धिनां स्थितिविशेषाणां आसनभेदानां विधौ अनुष्ठाने चतुरः निपुणः सोऽर्जुनः शत्रुर्भिर्जिते भुवस्तले निजं चरणं अखिलेन यावत्प्रदेशेन विधातुं कर्तुम् । यावत्पदं स्थापितुमित्यर्थः । जुगुप्समानः कुत्सयन्निवेत्युत्प्रेक्षा । प्रपदेन पादाग्रभागेन तिष्ठति स्म । पादाग्रेण भुवमालम्ब्य तपश्चचारेत्यर्थः । प्रमिताक्षरावृत्तम् ॥ ६१ ॥

**भानाविति** । ललाटं तपतीति ललाटंतपं भानूनां किरणानां जालं वृन्दं यस्य तस्मिन् । 'असूर्यललाटयोर्दृशितपोः' इति खशि खित्वान्मुम् । भानौ सूर्ये प्रविष्टा दृष्टिः यस्य तथोक्तं तं परितः । तस्य चतुःपार्श्वेष्वित्यर्थः । 'अभितः-परितः-' इत्यादिना द्वितीया । अग्निः भूयः पुनरपि भोक्तुं भक्षितुं विपिनं अन्यद्वनं दिश देहि इति प्रेम्णा स्नेहेन उपरुन्धन् आवृण्वान इवेत्युत्प्रेक्षा । दृश्यते स्म । लोकैरिति शेषः । पञ्चाग्निमध्ये तपश्चचारेत्यर्थः ॥ ६२ ॥

पञ्चाग्निमध्यस्थितिं प्रकारान्तरेणोत्प्रेक्षते—**तपोविधाविति** । तदा वासविः इन्द्रपुत्रः सोऽर्जुनः तपसः विधौ अनुष्ठाने धनंजयत्वेन धनंजय इत्येकनामकत्वेन यद्बान्धवं बन्धुत्वं तस्मादिवेति गम्योत्प्रेक्षा । सर्वासु दिक्षु चतुर्षु पार्श्वेषु पावकेन अग्निना वेष्टितः बभूव । अर्जुनस्तु हे अज्ञ हे दिनेश, भवान् त्वं तं

---

१. 'निधातुम्' इति पाठः.

अजीजनत्तमङ्गराजमङ्ग वैरिणं भवा-
नितीव रोषतो दिनेश एव चक्षुरक्षिपत् ॥ ६३ ॥

पाराशरिप्रापितमन्त्रभागैराराधयञ्शंकरमन्तरङ्गे ।
सप्तापि चर्षींस्तपसा विजेतुं सप्तत्वमाप स्वयमेक एव ॥ ६४ ॥

फलपर्णजलानिलाशनानि प्रविहाय क्रमशस्तपस्यतोऽस्य ।
विषयेषु न लोलतां प्रपेदे विजयस्याक्षगुणः कराग्र एव ॥६५॥

---

प्रसिद्धं वैरिणं निसर्गतो विरोधिनं अङ्गराजं कर्णं अजीजनत् अजनयः । जनेर्णि-जन्तात्कर्तरि लुङ् । 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इति च्लेश्चङि 'णेरनिटि' इति णिलोपे द्वित्वे सन्वद्भावेऽभ्यासस्येत्वे दीर्घः । 'शेषे प्रथमः' इति भवच्छब्द-प्रयोगात्प्रथमपुरुषः । इत्युक्तप्रकारात् रोषतः कोपादिवेत्युत्प्रेक्षा । दिनेशे सूर्य एव चक्षुः दृष्टिं अक्षिपत् निहितवान् । क्षिपतेः कर्तरि लङ् । उत्प्रेक्षाद्वयस्य संसृष्टिः । 'अङ्गेत्यामन्त्रणेऽव्ययम्' इत्यमरः । पञ्चचामरं वृत्तम्—'लघुर्गुरुर्निर-न्तरं भवेच्च पञ्चचामरम्' इति लक्षणात् ॥ ६३ ॥

**पाराशरीति** । सोऽर्जुनः पराशरस्य मुनेरपत्येन पाराशरिणा व्यासेन प्रापि-तस्य उपदिष्टस्य मंत्रस्य प्रतिश्रुतिविद्यायाः भागैः खण्डैः सप्तभिः अन्तरङ्गे मनसि शंकरं शंभुं आराधयन् ध्यायन् सन् । स्वयमेकोऽपि सन्नेव तपसा उक्तविधेन सप्तर्षींश्चापि मरीच्यादीन् विजेतुमिवेत्युत्प्रेक्षा । सप्तत्वं सप्तानां भावं सप्या जटया सहितत्वं च । आप प्राप्तवान् । 'सप्तोऽदन्तो जटायुक्ते नान्तः संख्या-न्तरे स्मृतः' इति सारस्वतः । उत्प्रेक्षाश्लेषसंकीर्णो विरोधाभासः ॥ ६४ ॥

**फलेति** । फलानि पर्णानि जलानि अनिलश्च तन्मयान्यशनानि क्रमशः प्रविहाय । फलाशनं कतिचिद्दिनानि कृत्वा तद्विहाय पर्णाशनमेवं क्रमेण सर्वाण्य-पि त्यक्त्वेत्यर्थः । तपस्यतः तपः कुर्वतः । 'कर्मणो रोमन्थतपोभ्यां वर्तिचरोः' इति क्यचि लटः शत्रादेशः । अस्य विजयस्य अर्जुनस्य अक्षाणां इन्द्रियाणां गुणः । स्वभाव इत्यर्थः । विषयेषु रूपादिषु विषये लोलतां तृष्णां न प्रपेदे न प्राप । 'विषया विनिवर्तन्ते निराहारस्य देहिनः' इत्यागमादिति भावः । किं त्वक्षगुणः जपमालेव कराग्रे अग्रहस्ते लोलतां चाञ्चल्यं प्रपेदे । 'लोलश्चलस-तृष्णयोः' इत्यमरः । अत्र श्लेषभित्तिकाभेदाध्यवसायेनैक्यमापन्नस्येन्द्रियस्वभाव-जपमालाद्वयस्य संबन्धिन्या उक्तन्यायेनैकमापन्नायास्तृष्णाचाञ्चल्याद्वयात्मिकायाः लोलतायाः विषयेषु कराग्रे चोभयत्र प्राप्तावेकत्र कराग्र एव नियमनात् परिसंख्या-लंकारः । भेदातिशयोक्तिद्वयोज्जीवित इति संकरः । औपच्छन्दसिकवृत्तम् ॥६५॥

---

१. 'रोषितः' इति पाठः. २. 'पत्र' इति पाठः. ३. 'अक्षगणः' इति पाठः.

तत्तादृशेन तपसा तरुणेन्दुमौलिं
तन्वन्[1]दयापरवशं[2] तनयो मघोनः ।
पादाग्रमेव धरणौ प्रणिधाय[3] तस्था-
वुद्यम्य[4] बाहुमुपरीव फलानि लिप्सुः ॥ ६६ ॥

निरुध्य वायुं निभृतं तपस्यतः
शिरःसमुत्था दशदिग्विसृत्वरी ।
नटत्स्फुलिङ्गा नवधूमसंततिः
स्फुटीचकारास्य धनंजयाभिधाम् ॥ ६७ ॥

तस्याथ नारदमुखात्तपसः प्रभावं
श्रुत्वा हरस्त्रिजगतामधिपो दयालुः ।

---

तदिति । मघोनः इन्द्रस्य तनयः अर्जुनः तत्तदिव पश्यतीति तत्तादृशेन । असदृशेनेत्यर्थः । तपसा तरुणेन्दुः बालचन्द्रः मौलौ शिरसि यस्य तं साम्बं दयया परवशं पराधीनं तन्वन् कुर्वन् सन् फलानि वाञ्छितार्थानेव चूतपनसादीनीति श्लिष्टरूपकम् । लिप्सुः ग्रहीतुमिच्छुरिवेत्युत्प्रेक्षा । लभेः सन्नन्तादुप्रत्ययः । 'सनिमीमा—' इत्यादिनाभ्यासस्य लोपः । बाहुं उपरि ऊर्ध्वं उद्यम्य उद्धृत्य पादयोरग्रमेव धरणौ प्रकर्षेण निधाय तस्थौ स्थितवान् । अत्र रूपकोत्थापितोत्प्रेक्षया चन्द्रचूडस्य—फलवृक्षोपमाप्रतीतेरलंकारेणालंकारध्वनिः ॥ ६६ ॥

निरुध्येति । वायुं प्राणं निभृतं निश्चलं निरुध्य तपस्यतः अस्य अर्जुनस्य शिरसः समुत्था उत्थिता नटन्तः स्फुलिङ्गाः अग्निकणाः यस्यां तथोक्ता दशसु दिक्षु विसृत्वरी व्यापनशीला नवा धूमस्य संततिः पङ्क्तिः धनंजयेत्यभिधां संज्ञापदं स्फुटीचकार । अत्र धूमेनाग्नित्वनिश्चयादनुमानालंकारः । धनंजयशब्दश्लेषमित्तिकाशब्दार्जुनाग्न्यभेदाध्यवसायातिशयोक्त्युज्जीवित इति तयोः संकरः । वंशस्थवृत्तम् ॥ ६७ ॥

तस्येति । अथ त्रयाणां जगतामधिपः दयालुः भक्तवत्सलः हरति स्वाश्रितसर्वानिष्टानीति हरः सदाशिवः—सदसि नारदस्य मुखात् वदनात् तस्य अर्जुनस्य संबन्धिनः तपसः प्रभावं शीर्षादग्न्युत्थानादिरूपं माहात्म्यं श्रुत्वा देव्या पार्वत्या (कर्त्र्या) दृशा दृक्संज्ञया (करणेन) सूचिता ज्ञापिता तस्य अर्जुनस्य दिदृक्षा द्रष्टुमिच्छा यस्य तथोक्तः सन् । देव्यास्तद्दर्शनेच्छां च ज्ञात्वेत्यर्थः । सपदि अभीष्टं अर्जुनस्य वाञ्छितं दित्सन् दातुमिच्छन् सन्नपि । ददातेः

---

१. 'कुर्वन्' इति पाठः. २. 'कृपा' इति पाठः. ३. 'प्रविधाय' इति पाठः. ४. 'प्रोद्यम्य' इति पाठः.

देव्या दृशा सदसि सूचिततद्दिदृक्षो-
र्दित्सन्नमीष्टमपि लुब्धकतामयासीत् ॥ ६८ ॥

हेरम्बगण्डमदपङ्कविशेषकौ[1] तौ
स्कन्दौपवाह्यशिखिपिच्छकृतावचूडौ[2] ।
भूषाधुनीतटतरुच्छदक्लृप्तवस्त्रौ[3]
कोदण्डिनौ व्यरुचतां कुहनाकिरातौ ॥ ६९ ॥

शवरत्वजुषः परस्य[4] पुंसः शशिखण्डान्नु शकारसंविधानम्[5] ।
भजति स्म तदा शिखण्डभावं भगवन्मस्तकभूषणं यदेषः ॥७०॥

---

सन्नन्ताल्लटः शत्रादेशः । 'सनिमीमा-' इत्यादिनाभ्यासलोपः । लुब्ध एव लुब्धकः तस्य भावस्तत्ता तां लोभं शवररूपं च । अयासीत् प्राप्तवान् । यातेः कर्तरि लुङ् । 'लुब्धो मृगयुकाङ्क्षिणोः' इति विश्वः । विरोधाभासः ॥ ६८ ॥

**हेरम्बेति** । तौ देवीमहादेवौ हेरम्बस्य गजाननस्य गण्डयोः कुम्भयोः मदस्य पङ्कमयो विशेषकः तिलकं ययोस्तौ स्कन्दस्य कुमारस्य औपवाह्यः राजवाहनं स चासौ शिखी मयूरः तस्य पिच्छेन कृतः अवचूडः शिखाभूषणं ययोस्तौ । 'राजवाह्यस्त्वौपवाह्यः', 'शिखावलः शिखी केकी' इत्युभयत्राप्यमरः । भूषाधुन्याः शिरोभूषणगङ्गायाः तटयोस्तरूणां छदैः पर्णैः क्लृप्ते वस्त्रे ययोस्तौ कोदण्डः धनुः अनयोरस्तीति कोदण्डिनौ कुहनाकिरातौ मायया शवरदम्पती सन्तौ व्यरुचतां रेजतुः । स्वीयेनैव परिकरेण महतामभीष्टसिद्धिः न तु तत्र पराकाङ्क्षेति भावः ॥ ६९ ॥

**शवरत्वेति** । शवरत्वं किरातभावं जुषते सेवत इति जुषः । परस्य पुंसः परमपुरुषस्य शंभोः पवयोरभेदात् शस्य शकारस्य परत्वं मुख्यत्वम् । प्राथम्येनावस्थानमिति यावत् । तज्जुषत इति जुषः पुंसः पुंलिङ्गस्य परस्य । परेति भगवद्वाचकशब्दस्येत्यपि बोध्यम् । शशिखण्डात् चन्द्रशकलवाचकशशिखण्डशब्दात् शकारस्य संविधानं नु संघटनमभूत्किमित्युत्प्रेक्षा । यत् यस्मात् भगवतः शंभोः मस्तके शिरसि भूषणं एषः शिखण्डः तदा शंभोः शवरभावधारणसमये शिखण्डस्य पिच्छावचूडस्य भावं शिखण्डत्वं भजति स्म प्राप्तवान् । शशिखण्डे शिखण्डतामापन्ने तस्माद्विसृष्टः शकारः शशिखण्डशब्दादिवृत्तित्वसंस्कारेण परशब्दस्यादिभागं गतः पवयोरभेदमुपजीव्य कुहनाकिरातभगवद्वाचकं पुंलिङ्गं शवरश-

---

१. 'विशेषकाङ्कौ' इति पाठः. २. 'विलासचूडौ' इति पाठः. ३. 'भूषानदीतटरुह' इति पाठः. ४. 'वरस्य' इति पाठः. ५. 'संनिधानम्' इति पाठः.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तदानीमेव रजतगिरिशिखरान्निर्गच्छन्तौ, किमेतदिति सांशयिकैरपि तदनुसरणोचितवेषरचनानुकूलैः प्रमथकुलैः परिवार्यमाणौ, समुच्चलितलाङ्गूलमितस्ततो धावद्भिर्दूरचारश्रमविदारितवदनलम्बमानरसनाग्रनिपातिनीभिः सृणिकाकणिकाभिर्वनपद्धतिं शुद्धतरीं कुर्वद्भिर्दृढतरश्वसितकम्पमानावयवैस्तेषु तेषु वनगुल्मेषु श्वापदानन्विष्यान्विष्य हुंकारमाचरद्भिर्विश्वनिगमविश्वकद्रुभिरविमुच्यमानपा-

ब्दमाविश्वकारेति समुदितमर्थान्तरम् । अत्र शशिखण्डस्य शिखण्डभावभजनेन हेतुना मायाशबरे शवर्णानुमानादनुमानालंकारः । वाच्यवाचकयोरभेदाध्यवसायमूलातिशयोक्त्यनुप्राणित इति तयोरङ्गाङ्गिभावेन संकरः । औपच्छन्दसिकम् ॥७०॥

तदानीमिति । तदानीं किरातवेषधारणक्षण एव रजतगिरेः कैलासस्य शिखरान्निर्गच्छन्तौ । एतत् भगवतोः कैरातरूपधारणं किं कुतो वा इति संशयापन्नमानसैः सांशयिकैरपीत्यपि निश्चित्यैव कार्याणां कर्तव्यत्वेऽपि । किं वा भवतु भगवदनुसरणमेव परमो लाभ इति भक्त्यतिशयं पारिषदानां ध्वनयतीति ध्येयम् । 'संशयमापन्नः' इति ठक् । 'ठस्येकः' इतीकादेशः । तयोः कपटशवरदंपत्योरनुसरणे उचितस्य वेषस्य कैरातस्य रचनया निर्माणेन अनुकूलैः । अन्यथा तैः सुज्ञेयतया भगवति प्रातिकूल्यमेवेति भावः । प्रमथानां कुलैः परिवार्यमाणौ । 'परिचर्यमाणौ' इति पाठान्तरे पूज्यमानावित्यर्थः । सम्यक् उच्चलितं उन्नमितं लाङ्गूलं यस्मिन् तद्यथा । इतस्ततः धावद्भिः दूरं चारेण यः श्रमस्तेन विदारितात् विवृतात् वदनात् वक्त्रात् लम्बमानायाः रसनायाः जिह्वायाः अग्रात् निपातिनीभिः निपतनशीलाभिः । ताच्छीलिको णिनिः । सृणिकायाः लालाजलस्य कणिकाभिः । 'सृणिका स्यन्दिनी लाला' इत्यमरः । वने पद्धतिं मार्गं शुद्धतरीं कुर्वद्भिः अतिपवित्रां कुर्वद्भिः । अभूततद्भावे च्विः । दृढतरैः अतिनिबिडैः श्वसितैः निश्वासैः कम्पमाना अवयवाः पार्श्वोदरादयः येषां तैः । तेषु तेषु वनगुल्मेषु कुञ्जेषु श्वापदान् मृगविशेषान् अन्विष्यान्विष्य । वीप्सायां द्विर्भावः । हुंकारमाचरद्भिः कुर्वद्भिः । विश्वैः समस्तैः । चतुर्भिरिति यावत् । निगमैः वेदैरेव विश्वकद्रुभिः शुनकैः मृगयाकुशलैः । 'श्वा विश्वकद्रुर्मृगयाकुशलः' इति शुनकपर्याये-ष्वमरः । अविमुच्यमानौ संगम्यमानौ पार्श्वभागौ ययोस्तौ । दीपकमृगः किरातादिभिः साजात्यप्रेम्णा मृगागमनाय वर्धितो मृगः तद्वदाचरन् दीपकमृगायमाणः । क्यजन्ताल्लटः शानच् । 'अलंकृतौ दीपकं क्लीबं मृगे ना मृगवञ्चके'

१. 'वेषविरचनाकुलैः' इति पाठः. २. 'पारिषद' इति पाठः. ३. 'लम्बायमान' इति पाठः. ४. 'पातिनीभिः' इति पाठः. ५. 'शुद्धतरीमिव' इति पाठः. ६. 'द्रुततर' इति पाठः. ७. 'वनगुल्मिषु' इति पाठः. ८. 'श्वापदानि' इति पाठः.

श्वभागौ दीपकमृगायमाणनिजहरिणशावकपार्ष्णिभागानुधावन्तौ, भाविनि पदे पदे वनदेवताभिरर्प्यमाणसुरतरुप्रसवास्तरणेन प्रशमिततुहिनजडिमोद्वेगेन हिमवतः कटकपथेन सविलासं संचरमाणौ, कावेतौ कदाचिदप्यदृष्टपूर्वौ वनमस्मदीयमाक्रमेते इति रोषकषायिततया निवारयितुकामैरपि तेजोविशेषेण प्रतिहतोत्साहैरन्यैः शबरयुवभिः केवलमवलोक्यमानौ, जटावल्लरीमूलपल्लवमुकुलीभवदञ्जलिभिस्तपस्विपुञ्जैर्नभसि विमानवेगं निरुध्य हर्षाश्रुभिर्मरुद्भिश्चाभिवर्ष्यमाणजयशब्दौ, तौ जगदादिमौ दंपती संनियममुपासीनस्य शुनासीरसुतस्य तपोवनसीमानं शनैः शनैरासीदताम् ।

---

इति हलायुधः । स चासौ निजहरिणशावकः करभूषणकुरङ्गशिशुः तस्य पार्ष्णिभागं पश्चात्खुरपृष्ठदेशं अनुसृत्य धावनं सत्वरगमनं ययोस्तौ । 'अनुधाव्यमानपार्ष्णिभागौ' इति पाठस्तु मृगयासंप्रदायविरुद्धत्वादुपेक्ष्यः । भाविनि भविष्यति पदे पदे प्रतिपादविन्यासस्थानं वनदेवताभिः अर्प्यमाणं न्यस्यमानं सुरतरुप्रसवैः कल्पवृक्षकुसुमैः आस्तरणं यस्मिन् तथोक्तेन अतएव प्रशमितः निरस्तः तुहिनजडिम्ना हिमशैत्येन उद्वेगः पीडा यस्मिंस्तेन हिमवतो गिरेः कटकपथेन नितम्बदेशमार्गेण सविलासं यथा तथा संचरमाणौ । पूर्वं कदाचिदप्यदृष्टौ अदृष्टपूर्वौ एतौ किरातदम्पती कौ कुत्रत्यौ । किं च अस्मदीयं वनं आक्रमेते आगच्छेते इति उक्तप्रकारेण रोषेण कषायिततया कलुषितत्वेन हेतुना निवारयितुं वनान्निःसारयितुं कामो येषां तथोक्तैरपि तेजोविशेषेण दुर्निरीक्ष्यप्रकाशेन प्रतिहतः भग्नः उत्साहः निवारणोद्योगः येषां तैः अन्यैः वास्तवैः शबरयुवभिः किरातदंपतीभिः केवलं भृशमवलोक्यमानौ । भयादाश्चर्याच्चिवारणाशक्तेश्चेति भावः । जटा एव वल्लर्यः लताः तासां मूले पल्लवमुकुलं किसलयद्वयसंपुटमिव संपद्यमानः मुकुलीभवन् अञ्जलिः येषां तैः । मस्तकन्यस्ताञ्जलिभिरित्यर्थः । 'तौ युतावञ्जलिः पुमान्' इत्यमरः । तपस्विनां मुनीनां पुञ्जैः । भुवि इति शेषः । नभसि विमानवेगं निरुध्य मरुद्भिर्देवैश्च उभयत्रोभयैर्हर्षाश्रुभिः समं आनन्दबाष्पैः सह अभिवर्ष्यमाणाः उदीर्यमाणाः पात्यमानाश्च जयस्य शब्दाः 'जय विजयी

---

१. 'शावकानुधाव्यमानपार्ष्णिभागौ प्रशमिततुहिनजडिमोद्वेगेन भाविनि पदे पदे वनदेवताभी रच्यमानतरुप्रसवास्तरणेन हिमवतः' इति पाठः. २. 'कदाचिदपि' इति नास्ति क्वचित्. ३. 'आक्रमतः' इति पाठः. ४. 'विशेषप्रति' इति पाठः. ५. 'आरण्यैरन्यैः' इति पाठः. ६. 'आलोक्यमानौ' इति पाठः. ७. 'पल्लव' इति नास्ति क्वचित्. ८. 'सममभिवृष्यमाण' इति पाठः. ९. 'सविनयम्' इति पाठः.

तत्र खलु

आपादलम्बिजटमातपमात्रभक्ष्य[1]-
मूर्ध्वीभवद्भुजमुदारतपःकृशाङ्गम् ।
दृष्ट्वानुगृह्य कुरुवीरमुनीन्द्रमेनं
त्रेधा वभूव सुतवत्सलता भवान्याः ॥ ७१ ॥

क्षोदयन्नथ महीं खुरपातैः कोऽपि कोपकुटिलो वनकोलः ।
घोरघूत्करणघोणमुपागात्कुक्षिमाश्रमभुवः कुरुसूनोः ॥ ७२ ॥

तं वीक्ष्य रौद्रवपुषं मृगशावकेषु
त्रासाद्विशत्सु कटिलम्बितवल्कभागान् ।
पर्याकुले कलकलैरपि पक्षिजाले
पार्थो निवृत्य नियमाज्जगृहे शरासम् ॥ ७३ ॥

---

भव जगदीश्वर' इत्यादयः ययोस्तौ । जगतः आदिमौ प्रथमौ दंपती माया-किरातौ सनियमं यथातथा उपासीनस्य उपविष्टस्य शुनासीरः इन्द्रः तत्सुतस्य अर्जुनस्य तपोवनसीमानं शनैः शनैः आसीदतां प्रापतुः ॥

**तत्रेति** । तत्रार्जुनतपोवने । खल्वित्युत्तरेण संवन्धः ॥

**आपादेति** । आपादं पादपर्यन्तं लम्बिन्यो जटा यस्य तम् । आतपमात्रं भक्षः आहारो यस्य तम् । ऊर्ध्वीभवन्तौ उपरिष्टात् प्रसृतौ भुजौ यस्य तम् । उदारेण महता तपसा कृशं अङ्गं शरीरं यस्य तम् । एनं कुरुवीरमुनीन्द्रं अर्जुन-मुनीन्द्रं दृष्ट्वा अनुगृह्य । सानुग्रहं दृष्ट्वेत्यर्थः । भवस्य शंभोः पत्न्याः भवान्याः पार्वत्याः । 'इन्द्रवरुण—' इत्यादिनानुक् । सुतवत्सलता पुत्रवात्सल्यं त्रेधा त्रिप्रकारं बभूव । 'कुमारगणनाथयोरिव अस्मिन्नपि पुत्रवात्सल्यं चकारेत्यर्थः ॥ ७१ ॥

**क्षोदयन्निति** । अथ कोपेन कुटिलः क्रूरः कोऽपि अनिर्देश्यः वने कोलः वराहः । 'वराहः सूकरो घृष्टिः कोलः' इत्यमरः । खुराणां शफानां पातैः न्यासैः महीं भुवं क्षोदयन् चूर्णयन् । 'क्षोभयन्' इति पाठेऽपि उक्त एवार्थः । घोरं भयंकरं घूत्करणं घुरघुरेति शब्दः यस्यां तादृशी घोणा प्रोथं नासिकाधो-भागः यस्मिंस्तत्तथा कुरुसूनोः अर्जुनस्य आश्रमभुवः । कुक्षिं आश्रममध्यभागं प्रति उपागात् आगतवान् । कुतोऽपीति शेषः । गमेः कर्तरि लुङ् ॥ ७२ ॥

**तमिति** । रौद्रं दारुणं वपुः यस्य तथोक्तं तं वनवराहं वीक्ष्य मृगशावकेषु वालमृगेषु त्रासात् भयात् कट्यां लम्बितान् वल्कस्य वल्कलस्य भागान् भङ्गीभूत-प्रदेशान् विशत्सु । तत्र निलीयमानेषु सत्सु इत्यर्थः । पक्षिणां जाले समूहेऽपि

---

१. 'भक्ष्य' इति पाठः.

मुनिरेष यदाभ्ययाद्वराहं मुखरज्यालतिको जवाज्जिघांसुः ।
शवरो ददृशे तदाभिधावन्धनुराकृष्य सहानुयायिवर्गैः ॥ ७४ ॥

मा मुञ्च बाणं मदनुद्रुतेऽस्मिन्नपेहि जाल्मेति किरातनेतुः ।
वचः स लक्ष्यं मनसो न कुर्वन्वराहमस्त्रस्य चकार लक्ष्यम् ॥७५॥

शिलीमुखाभ्यां शिवसव्यसाचिनोः
समुज्झिताभ्यां युगपत्किटेस्तनौ ।
समं विभज्यायुरभुज्यत क्षणा-
त्सहोदराभ्यामिव पैतृकं धनम् ॥ ७६ ॥

ततः कुपितोऽपि कुरुप्रवीरस्तपःशान्ततया नातिपरुषमेवमुवाच ।

---

कलकलैः शब्दैः परितः आकुले व्याकुले सति नियमात् निवृत्य समाधिं विरम्य । 'जुगुप्साविराम—' इत्यादिना पञ्चमी । शराः आसतेऽत्रेति शरासं चापं जगृहे गृहीतवान् । आर्तत्राणस्य तपसोऽप्युत्तमत्वादिति भावः ॥ ७३ ॥

मुनिरिति । एनं वराहं हन्तुमिच्छुः जिघांसुः अत एव मुखरा शब्दायमाना ज्या गुणो लतिकेव यस्य तथोक्तः एष मुनिः अर्जुनः यदा जवात् अभ्ययात् वराहाभिमुखमागतवान् । तदैव धनुः सशरमाकृष्य अनुयायिनां सहचराणां वर्गैः बृन्दैः सह अभिधावन् वराहमनुद्रवन् सन् शवरः कपटकिरातः ददृशे अलक्ष्यत । मुनिनेति शेषः । औपच्छन्दसिकवृत्तम् ॥ ७४ ॥

मा मुञ्चेति । हे जाल्म असमीक्ष्यकारिन्, मया अनुद्रुते अनुधाविते अस्मिन् वराहे बाणं मा मुञ्च । अपेहि अन्यतो गच्छ । इत्युक्तप्रकारं किरातनेतुः कपटशवरनायकस्य वचः मनसः लक्ष्यं विषयं न कुर्वन् अकुर्वाणः सन् । नञर्थस्य नशब्दस्य सुप्सुपेति समासः । सोऽर्जुनः वराहं अस्त्रस्य बाणस्य लक्ष्यं शरव्यं चकार ॥ ७५ ॥

शिलीमुखाभ्यामिति । युगपत् एकदा किटेः वराहस्य तनौ शरीरे । 'कोलः पोत्री किरिः किटिः' इत्यमरः । समुज्झिताभ्यां प्रयुक्ताभ्यां शिवसव्यसाचिनोः किरातार्जुनयोः शिलीमुखाभ्यां बाणाभ्यां आयुः सहोदराभ्यां भ्रातृभ्यां पैतृकं पित्र्यं धनमिव समं यथा तथा विभज्य विभागं कृत्वा क्षणात् अभुज्यत भुक्तम् । भुजेः कर्मणि लङ् । वंशस्थवृत्तम् ॥ ७६ ॥

तत इति । ततः वराहवधानन्तरं शिवेन बाणप्रयोगाद्धेतोः इति वा कुपितोऽपि कुरुप्रवीरः अर्जुनः तपसा शान्ततया शमप्रधानत्वेन हेतुना नातिपरुषं ईषत्क्रूरं यथा तथा एवं वक्ष्यमाणप्रकारेण उवाच ॥

---

१. 'अनुधावन्' इति पाठः. २. 'तदा' इति पाठः. ३. 'क्षणम्' इति पाठः. ४. 'एवम्' इति नास्ति क्वचित्.

अस्मिन्ममावसथमापतिते मया प्रा-
ग्लक्षीकृते शबर यत्प्रहृतं त्वया तत् ।
शापस्य वाथ धनुषोऽसि वशे[1] तथापि
सोढं ममाद्य तपसा च भुजोष्मणा च ॥ ७७ ॥

इति तस्य मुनेरन्तर्दर्परसपरीवाहवेणीमिव वाणीमाकर्ण्य क्षोणीधरधन्वापि सस्मितं प्रत्यभाणीत्

मृदुबुद्धिरङ्ग वचसैव लक्ष्यसे मृगहिंसनं विपिनसीमनीदृशम् ।
शतशः स्वधर्म इति पठ्यते बुधैः शबरस्य वा वद तपोधनस्य वा ॥७८॥

तत्स्वकुलाचारादप्रमाद्यते मह्यमयुक्तकारिणापि त्वया[2] कियद्दूरं प्रकाश्यते तपसीव[3] बाहावप्याहोपुरुषिका ।

---

अस्मिन्निति । हे शबर, मम आवसथं आश्रमं प्रति आपतिते आगते किं च मया प्राक्पूर्वमेव लक्षीकृते शरव्यीकृते अस्मिन् वराहे त्वया प्रहृतं ताडितं इति यत् तदपराधकरणं मम शापस्य वशे वर्तते अथवा धनुषो वशेऽपि वर्तते । अन्यतरेणैव वध्यं त्वां हन्तुं शक्नुयामित्यर्थः । किंतु तथापि मम तपसापि अद्य सोढं क्षान्तम् । लोपभयादिति भावः । भुजोष्मणा च बाहुबलेनापि सोढम् । बलिनां दुर्बलैर्युद्धस्य लज्जाकरत्वादिति भावः । यद्यस्मादिति तत्तस्मादिति वा योज्यम् ॥७७॥

इतीति । इति उक्तप्रकारां अन्तर्मनसि दर्परसस्य परीवाहः उपकुल्या । 'जलोच्छ्वासाः परीवाहाः' इत्यमरः । तस्य वेणीं प्रवाहमिव स्थितां तस्य मुनेः अर्जुनस्य वाणीं वाक्यं क्षोणीधरो मेरुः धनुश्चापो यस्य स शिवोऽपि सस्मितं यथा तथा प्रत्यभाणीत् प्रत्युक्तवान् । प्रतिपूर्वाद्भणतेः कर्तरि लुङ् ॥

मृदुबुद्धिरिति । अङ्ग हे अर्जुन । 'अङ्गेत्यामन्त्रणेऽव्ययम्' इत्यमरः । त्वं वचसैव मृद्वी शान्ता बुद्धिर्यस्य तथोक्तो लक्ष्यसे दृश्यसे । न तु शीलेनेत्यर्थः । यतः विपिनसीमनि ईदृशं एवंविधं मृगहिंसनं शबरस्य स्वधर्मः स्वीयो धर्मः कुलधर्म इति बुधैः विद्वद्भिः शतशः बहुविधं पठ्यते उत तपोधनस्य स्वधर्म इति पठ्यते वा । शतश इत्युभयत्र योज्यम् । वद ब्रूहीत्यत्र वाक्यार्थः कर्म । पठतेः कर्मणि लट् । मञ्जुभाषिणी वृत्तम् ॥ ७८ ॥

तदिति । तत् तस्मात् मृगहिंसनस्य शबरधर्मत्वाद्धेतोः स्वकुलस्य शबरकुलस्य आचारात् धर्मात् अप्रमाद्यते । तमत्यजत इत्यर्थः । 'जुगुप्साविराम–' इत्यादिना अपादानत्वम् । मह्यम् । मां प्रतीत्यर्थः । अयुक्तं कुलशीलानुचितं मृगहिंसनं करोतीति कारिणा त्वयापि तपसीव बाहावपि उभयत्र । आहोपुरुषिका

---

१. 'वशः' इति पाठः. २. 'त्वया' इति नास्ति क्वचित्. ३. 'इव' इति नास्ति क्वचित्.

संदृश्यते खलु तपस्तव शुद्धमेत-
द्यज्जन्तुहिंसनविधौ दृढबद्धकच्छम् ।
आस्तामिदं भुजबलं च मृगात्ययेऽस्मि-
न्साहाय्यकं यदुपजीवति मे शरस्य ॥ ७९ ॥

ईदृशीं[1] वचनरीतिमपास्यन्नेहि सान्त्वय कियानसि मे त्वम् ।
अक्ष्णि किंचिदरुणिम्नि जगत्यामन्तकोऽपि मदतीव बिभीयात् ॥८०॥

इति शंकरस्याहंकारवादेन[2] सातङ्का कुरुकुलशशाङ्कः[3] पुनरपि कामपि गिरमेवमङ्कुरयामास[4] ।

आत्मोत्कर्षाभिमानः । 'आहोपुरुषिका दर्पाद्या स्यात्संभावनात्मनि' इत्यमरः । कियद्दूरं प्रकाश्यत इति काकुः । किंचिदपि न प्रकाशनीयेत्यर्थः । परित्यक्तकुलधर्माणां किं नाम तपः को नाम वा बाहुप्रताप इति भावः ॥

तपःप्रतापयोर्निःसारत्वमेव विशदयति—**संदृश्यत इति** । हे मुने, यत्तव तपः जन्तूनां प्राणिनां हिंसनविधौ वधकर्मणि विषये दृढं यथातथा बद्धः कच्छः मध्यबन्धनपट्टः येन तथोक्तम् । धृतसंकल्पमित्यर्थः । तदेतत्तव तपः शुद्धं निर्दोषं सत् संदृश्यते खल्विति काकुः । न संदृश्यत एवेत्यर्थः । किंचेति चार्थः । यत्तव भुजयोर्बलमस्मिन् मृगस्य वराहस्य अत्यये हिंसायां विषये मे मम संबन्धिनः शरस्य साहाय्यकं तत्कृतसहायकत्वं उपजीवति । अपेक्षित इत्यर्थः । तदिदं तव भुजबलमपि आस्तां तिष्ठतु । धिगिति यावत् । मय्यमुञ्चति बाणं न हन्यादेव त्वद्बाणो वराहमित्यर्थः ॥ ७९ ॥

**ईदृशीमिति** । हे मुने, किं बहुना ईदृशीं 'शापस्य वा' इत्यादिप्रकारां वचनानां रीतिं अपास्यन् त्यजन् सन् । एहि समीपमागच्छ । सान्त्वय अपराधिनं त्रायस्व मामित्यनुनय । मां प्रतीत्यर्थः । त्वं कियानसि । तृणप्राय इत्यर्थः । यतः । अक्ष्णि मम लोचने किंचित् ईषत् अरुणिमा यस्य तथोक्ते । मनाक् शोणायमाने सतीत्यर्थः । कोपादिति भावः । जगत्यां लोके अन्तको मृत्युरपि मत् मत्तः अतीव भृशं बिभीयात् त्रस्येत् । किमुतान्य इत्यर्थः । अत्रान्तकस्यापि मल्लोचनशोणिम्नि भयोत्पत्तौ किमुत भवादृशां क्षीणसाराणां इत्यर्थान्तरस्य कैमुत्येन सिद्धेरर्थापत्तिः । एवं लोचनारुण्यमात्रेणान्तकत्रासरूपवाक्यार्थस्य सान्त्ववादकरणं प्रति हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गम् । द्वयोरेकवाचकानुप्रवेशसंकरः । स्वागतावृत्तम् ॥८०॥

**इतीति** । इति उक्तप्रकारेण शंकरस्य कपटशबरस्य संबन्धिना अहंकारवादेन तिरस्कारवाक्येन सातङ्कः किमयं जगद्विलक्षणो भवेदिति सवितर्कः ससंतापो वा । 'रुक्तापशङ्कास्वातङ्कः' इत्यमरः । कुरुकुलस्य शशाङ्कः चन्द्रः अर्जुनः ।

१. 'ईदृशम्' इति पाठः. २. 'न्यक्कार' इति पाठः. ३. 'कुल' इति नास्ति क्वचित्. ४. 'गिरं कामपि' इति पाठः.

यस्माद्वनेचरकुलाधम जल्पसि त्व-
मेवं मनः पुलकयन्स्वजनस्य दृप्तः ।
तस्मादसंशयमुपान्तजुषः किरात्या-
स्ताटङ्कमेव सहसे न कपोलमित्रम् ॥ ८१ ॥

तादृग्वचः श्रवणदाहि मुनेर्निशम्य
सर्वे गणा हृदि रुषा निजिघांसवोऽपि ।
देव्या विलोक्य वदनं स्मितगर्भगण्डं
तूणार्धकृष्टविशिखेन करेण तस्थुः ॥ ८२ ॥

---

पुनरपि कामपि अवाच्यां गिरं वाचं एवं वक्ष्यमाणप्रकारेण अङ्कुरयामास । उवाचेत्यर्थः ॥

**यस्मादिति** । हे वनेचरकुलाधम आरण्यकापसद, दृप्तस्त्वं स्वजनस्य किरात्यादेः मनः पुलकयन् हर्षयन् सन् यस्मात्कारणादेवं उक्तप्रकारं जल्पसि वदसि तस्मात् उपान्तजुषः समीपवर्तिन्याः किरात्याः त्वत्पत्न्याः ताटङ्कं कपोलस्य मित्रं सहचारिणं न सहसे । कपोलं ताटङ्कभूषितं न क्षमस एवेत्यर्थः । असंशयं ध्रुवम् । त्वन्मरणेन तद्वैधव्यं जनयसि, त्वामद्याहं निहन्मीति वा परमार्थः । वीररसानुगुण्येन प्रास्तुतिकोऽर्थोयम् । वास्तवार्थस्तु हे वनेचर, यस्मादेवं 'मृदुबुद्धिरङ्ग—' इत्यादिना कुलाधमेति जल्पसि । मृगहिंसनेन त्यक्तकुलधर्मतया कुलाधमत्वेन मां कथयस इत्यर्थः । तस्मात् किरात्याः ताटङ्कमेव एकं ताटङ्कमात्रं कपोलमित्रं तद्भूषणं न सहसे, किं तु त्वद्वीरवादमपीदृशं तद्भूषणं करोषीत्यर्थः । अथवा ताटङ्कं कपोलमित्रं न सहस एव । किंतु त्वद्वीरवादमेवेत्यर्थः । तदाकर्णनकौतुकिन्या कर्णावरणभयात्तत्त्याज्यस इति भावः । अत्र भगवतः परिहासेऽपि स नानुचितः । 'अपि कुशलिनी प्रेतावासस्थली सहवासिनः प्रमथपतयः कच्चिज्जीर्णः सुखी किमु शार्वरः ।.अपि च सुलभा भिक्षावृत्तिर्जगत्त्रयनाथ हे न खलु शिथिलप्रान्तः किं ते गजाजिनकम्बलः ॥' इत्यादौ बिह्लणादिभिः माहेश्वरस्तुतिषु तस्यापि प्रदर्शितत्वादिति ॥ ८१ ॥

**तादृगिति** । तादृक् उक्तविधं श्रवणे दहतीति तद्दाहि कर्णकठोरम् । ताच्छीलिको णिनिः । मुनेः अर्जुनस्य वचः निशम्य सर्वे गणाः प्रमथाः रुषा कोपेन हृदि मनसि निहन्तुमिच्छवः निजिघांसवोऽपि सन्तः स्मितं गर्भे मध्ये ययोस्तौ स्मेरौ गण्डौ कपोलौ यस्य तत् देव्याः पार्वत्याः वदनं विलोक्य तूणात् निषङ्गात् अर्धं कृष्टः विशिखः बाणः येन तेन करेण उपलक्षिताः तस्थुः । देव्या अपराधभयादिति भावः । अत्र पुत्रवत्सलदेवीस्मेराननावलोकनस्य विशेषणगत्या गणानां बाणमोचनौदासीन्यं प्रति हेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् ॥ ८२ ॥

अथ भिल्लमल्लकुरुवल्लभावुभौ परिफुल्लभल्लकुलशल्यपल्लवैः ।
स्थगितावलोकसरणिं दिवौकसां समरं भयंकरजवं वितेनतुः ॥८३॥

श्लथबन्धगरुद्भिरेष बाणैः श्रवणालम्बिजपाक्षसूत्रघर्षात् ।
प्रमथेशमवाकिरत्तदीयं प्रतिमालिङ्गमिव प्रसूनपुञ्जैः ॥ ८४ ॥

सरुषीव हरे विकृष्टचापे सशरं शैलसुतापि जातशङ्का ।
मघवत्सुतमङ्गलाय देवी मनसा यातइषुःश्रुतिं जजाप ॥ ८५ ॥

ससंभ्रमाकृष्टधनुर्गुणोऽपि शंभुः कृपाम्भोनिधिरिन्द्रसूनौ ।
संबद्धमात्रान्कतिचिच्च देहे चक्रेऽपराद्धान्कतिचिच्च बाणान् ॥८६॥

---

**अथेति** । भिल्लमल्लः किरातश्रेष्ठः, कुरुवल्लभः अर्जुनश्च उभौ परिफुल्लैः अतिप्रकाशैः भल्लानां बाणविशेषाणां कुलानां समूहानां शल्यानि अग्राणि पल्लवानीवेत्युपमा । एकत्र प्रेमाणं, अन्यत्र भावातिशयं च ध्वनयति । तैः स्थगिता च्छन्ना अवलोकसरणिः अवलोकनमार्गः याभ्यां तथोक्तौ सन्तौ । भयंकरः जवः शरादानादौ लाघवं यस्मिन् तथोक्तं समरं युद्धं वितेनतुः चक्रतुः । मञ्जुभाषिणी वृत्तम् ॥ ८३ ॥

**श्लथेति** । एषः अर्जुनः श्रवणे कर्णे आलम्बिना जपस्याक्षसूत्रेण जपमालिकया घर्षात् श्लथाः शिथिलाः बन्धाः बन्धनानि येषां तादृशाः गरुतः कङ्कादिपत्राणि येषां तैः बाणैः प्रमथेशं कपटशबरं तदीयं प्रमथेशसंबन्धि प्रतिमामयं लिङ्गं अर्चारूपं प्रसूनपुञ्जैरिव अवाकिरत् आच्छादितवान् । अत्राप्युपमया बाणानां पुष्पमार्दवापादको भगवतः प्रभावातिशय इति ध्वननादलंकारेण वस्तुध्वनिः ॥ ८४ ॥

**सरुषीति** । हरे शबरे सरुषीव । न वस्तुतः क्रुद्ध इत्यर्थः । सशरं यथा तथा विकृष्टचापे सति शैलस्य सुता पार्वत्यपि । शैलवच्छैलपुत्र्या धीरत्वं सूचयति । जाता शङ्का किं सत्यं प्रहरतीति वितर्कः यस्यास्तथोक्ता सती मघवत्सुतस्य अर्जुनस्य मङ्गलाय क्षेमार्थं 'यातइषुः' इति श्रुतिं मनसा जजाप दध्यौ । पुत्रवात्सल्यस्य तस्मिन् पूर्वमुक्तत्वादिति भावः । 'या त इषुः शिवतमा शिवं बभूव ते धनुः । शिवा शरव्या या तव तया नो रुद्र मृडय ॥' इति श्रुतिः । अर्थस्तु=रोदयति जगद्द्रोहिण इति रुद्र, ते तव या इषुः बाणः शिवतमा अतिशयशुभप्रदा बभूव, यत्ते धनुः शिवं बभूव या तव शरव्या लक्ष्यं शिवा बभूव, तया इष्वा तेन धनुषा तया शरव्यया नोऽस्मान् मृडय सुखय । न मारयेत्यर्थः ॥ ८५ ॥

**ससंभ्रमेति** । ससंभ्रमं यथा तथा आकृष्टधनुर्गुणोऽपि इन्द्रसूनौ अर्जुने विषये कृपाम्भोनिधिः शंभुः कतिचित् बाणान् देहे अर्जुनशरीरे संबन्धमात्रान्

---

१. 'संधि' इति पाठः. २. 'स दिव्यम्' इति पाठः. ३. 'सहसा' इति पाठः. ४. 'इषुः' इति पाठः. ५. 'सूनोः' इति पाठः.

विगाह्य शंभुं विजयस्य बाणाः पुनः पदत्वं पुपुषुर्न दृष्ट्योः ।
नरादुदारादभिगम्य लुब्धं न मार्गणा यान्ति खलु प्रकाशम् ॥८७॥

निःस्वे निषङ्गयुगले नितराममर्षी
चापेन मूर्ध्नि गिरिशं पर एव देव्याः ।
पार्ष्णिप्रमुक्तधरणिः प्रजहार वेगा-
त्कुर्वन्व्रणं स कुटिलं शशिखण्डमित्रम् ॥ ८८ ॥

धनुषाभिहतात्समुत्थितैर्धरकन्यारमणस्य मस्तकात् ।
विपुलैरिव रक्तशीकरैर्विनिपेते मणिभिः फणाभृताम् ॥ ८९॥

स्पृष्टमात्रान् कतिचित् बाणान् अपराद्धान् लक्ष्यच्युतान् चक्रे । 'अपराद्धपृष-त्कोऽसौ लक्ष्याद्यश्च्युतसायकः' इत्यमरः । अत्र दयासमुद्रत्वस्य विशेषणगत्या शराणां स्पर्शमात्रलक्ष्यच्युतिकरणद्वयं प्रति हेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् ॥८६॥

**विगाह्येति** । विजयस्य अर्जुनस्य बाणाः शंभुं विगाह्य प्रविश्य पुनः दृष्ट्योः पदत्वं नेत्रविषयत्वं न पुपुषुः न पुष्यन्ति स्म । अन्तर्हिता बभूवुरित्यर्थः । तथाहि—मार्गणाः याचकाः बाणाश्च उदारात् महतः दातुश्च नरात् मनुष्यात् अर्जुनाच्च । 'तं त्यक्त्वा' इति ल्यब्लोपे पञ्चमी । लुब्धं कृपणं किरातं च अभिगम्य प्राप्य प्रकाशं लोचनगोचरत्वं च न यान्ति खलु । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः श्लेषसंकीर्णः ॥ ८७ ॥

**निःस्व इति** । निषङ्गयोः तूणीरयोः युगले निःस्वे बाणधनशून्ये सति नितराममर्षी क्रुद्धः सोऽर्जुनः कुटिलं अतएव शशिखण्डस्य शिरःस्थस्य मित्रं सदृशं सहवर्ति च व्रणं कुर्वन् करिष्यन् सन्निति वर्तमानसामीप्ये वर्तमाननिर्देशः । वेगात् पार्ष्णिभ्यां गुल्फाधोभागाभ्यां प्रमुक्ता धरणिः भूः येन तथोक्तः । पादाग्रमात्रावस्थितः सन्नित्यर्थः । उन्नतत्वाच्छिवस्येति भावः । यत्तु 'रुद्रस्थितिदेशं प्रति धावन्नित्यर्थः' इति नृसिंहः, तन्न । पार्ष्णित्यागेन धावनलक्षणायामुक्तस्वारस्यायोगात् । प्रत्युत 'अर्धमन्तर्वेद्यर्धं बहिर्वेदि मिनोति' इति न्यायेन वेदिबहिर्भागयोर्मध्यभागस्येवोक्तार्थस्यैव लक्षणीयत्वात् । देव्याः पार्वत्याः पुरः समक्षमेवेति कारुण्योक्तिः । चापेन गाण्डीवेन । गिरौ कैलासे शेत इति गिरिशः शंभुं मूर्ध्नि शिरसि प्रजहार ताडितवान् । शूराणां यावज्जीवितं रणोत्साह इति भावः ॥८८॥

**धनुषेति** । धनुषा गाण्डीवेन अभिहतात् धरकन्यारमणस्य पार्वतीपतेः मस्तकात् शिरसः समुत्थितैः उद्गतैः फणाभृतां भूषासर्पाणां मणिभिः शिरोरत्नैः विपुलैः महद्भिः रक्तशीकरैः शोणितबिन्दुभिरिवेत्युत्प्रेक्षा । विनिपेते निपतितम् । पततेर्भावे लिट् । यत्तत्रार्जुनधनुःप्रहारेण रुद्रशिरसो रक्तानि तच्छिरःस्थसर्परूपभूषणमणयो न्यपतन्नितीवकारस्य समुच्चयबोधकत्वमाह नृसिंहः, भुवि

१. 'पुनः' इति पाठः. २. 'कुपितः' इति पाठः.

देवस्य तस्य जगतां जनकस्य चित्ते
पार्थप्रहारजनुषः प्रमदाम्बुराशेः ।
भूषाधुनीतटभुवि द्विपवक्त्रबाल्य-
वप्रक्रियाभिरुदितः प्रमदःकणोऽभूत् ॥ ९० ॥

स गाण्डीवदण्डोऽपि खाण्डवे तक्षकवधूवधसाधनतया चिरमयमस्मत्कुलविरोधीति क्रोधनैस्तस्य जटावनकुटुम्बिभिः कुण्डलिभिर्भक्षित इव तत्क्षणं नालक्ष्यत ।

ततोऽयं दैवविपर्ययः किमुतामुष्य माया किमिति चिन्तापर-

---

महतां रक्तपातस्य लोकमात्राश्रेयस्करत्वोक्तेरग्रेऽर्जुनस्य जगदीश्वरप्रसादरूपश्रेयोवर्णनासंगत्या तदीयशिवविद्वेषविलसितमेवैतदिति नास्माकं चोद्यावकाशः । वैतालीयवृत्तम् ॥ ८९ ॥

**देवस्येति** । जगतां सर्वलोकानां जनकस्य पितुः अतएव तस्य देवस्य शंभोः चित्ते मनसि भूषाधुन्याः शिरोभूषणभूतगङ्गायाः तटभुवि तीरदेशे शिरोरूपे द्विपवक्त्रस्य विनायकस्य बाल्ये या वप्रक्रियाः तटोत्खातक्रीडाः ताभिरुदितः जनितः प्रमदः संतोषः पार्थेन प्रहारात् गाण्डीवताडनात् जनुः जन्म यस्य तस्य प्रमद एवाम्बुराशेः समुद्रस्य संबन्धी कणः सूक्ष्मलेशः अभूत् । ततोऽप्यत्र पुत्रवात्सल्याधिक्यादतिवेलं देवस्तुष्टोऽभवदित्यर्थः । यत्तु 'भूषणरूपेण वर्तमानाया गङ्गायास्तटभूते स्वशिरस्येव विनायकस्य गजाननत्वात्तदीयवप्रक्रियायां किंचिदपि वेदना न जातेति तात्पर्यम्' इति नृसिंहः, तत्तदीयशिवविद्वेषिताविलसितमेव । यतः पार्थप्रहारवेदनायाः प्रसक्तिशून्यायाः विघ्नेशवप्रक्रियावेदनाधिक्यवर्णनाद्धास्यरसस्यरससंविधानसंरम्भिणः कवेस्तात्पर्यानुरोधित्वात्प्रमदशब्देन वेदनालक्षणायां मुख्यार्थबाधादिति हेतुत्रयाभावाच्चेति ॥ ९० ॥

**स इति** । सः प्रहारसाधनं गाण्डीवदण्डोऽपि खाण्डवे । तद्दाहकाल इत्यर्थः । तक्षकस्य वध्वाः वधे साधनतया चिरं बहुकालात् अयं अस्माकं कुलस्य विरोधी शत्रुः इति हेतोः क्रोधनैः क्रुद्धैः तस्य देवस्य शंभोः जटा एव वनं तस्मिन् कुटुम्बिभिः निवासिभिः कुण्डलिभिः सर्पैः भक्षित इवेत्युत्प्रेक्षा । तत्क्षणं प्रथमप्रहारक्षण एव नालक्ष्यत न दृष्टः । अर्जुनेनेति शेषः । भगवतः प्रभावात्सोऽप्यन्तर्हितोऽभूदित्यर्थः । कर्मणि लङ् ॥

**तत इति** । ततः गाण्डीवस्याप्यन्तर्धानाद्धेतोः अयं बाणचापतिरोधानं दैवविपर्ययः दैवप्रातिकूल्यं किम् । उत अमुष्य किरातस्य माया ऐन्द्रजालिकं किम् । उभयत्र किंशब्दो वितर्के । इत्युक्तप्रकारेण चिन्तायाः परतन्त्रेण परा-

---

१. 'नदी' इति पाठः. २. 'तत्र स' इति पाठः. ३. 'तस्यैव देवस्य' इति पाठः. ४. 'उत' इति नास्ति क्वचित्.

तत्रेणापि धैर्यदत्तहस्तोत्साहेन 'तिष्ठ तिष्ठ जडात्मन्, एवमर्जुनं निर्जित्य यशोऽर्जितुमिच्छसि' इति कृततर्जनेन सितवाहनेन वृषवाहनं प्रति नियोद्धुमारेभे ।

परुषे मुनिमुष्टिताडने पतिते लुब्धकवामवक्षसि ।
शिथिला जगलुः किरातिकायाः सितगुञ्जामणिहारयष्टयः॥९१॥
उपवासकृशे भृशं मुनेरुरसि स्वीकृतमुष्टिमार्दवः ।
प्रजहार हरोऽपि पीडनात्परिहर्तुं स्वमिवास्य हृद्गतम् ॥ ९२ ॥

इति परस्परमुष्टिप्रहारवृष्टिपरिमृष्टवनकुसुमपरागभस्माङ्गरागौ सरभसमेकेन बाहुना जटासु गृहीत्वापरेण बाहुना वलयितगलनालौ तौ शवरतपोधनौ यदा महत्यामधित्यकायामापततां तदा झटिति घटित-

---

धीनेन अपि धैर्येण सुखे दुःखे वा विकृतचित्तत्वात्मकेन दत्तहस्तः कृतावलम्बः उत्साहः रणोद्यमः यस्य तेन । हे दुरात्मन्, दुःखगम्यः आत्मा स्वरूपं यस्येति च । तिष्ठ तिष्ठ । एवम् । बाणचापतिरोधापनेनेत्यर्थः । अर्जुनं निर्जित्य यशः कीर्तिं अर्जितुं संपादयितुं इच्छसीति काकुः । त्वदिच्छा निष्फलैवेत्यर्थः । इत्युक्तप्रकारं कृतं तर्जनं भर्त्सनं येन तेन सितवाहनेन अर्जुनेन वृषवाहनं शिवं प्रति नियोद्धुम् । तेन सह बाहुयुद्धं कर्तुमित्यर्थः । आरेभे उपक्रान्तम् । रभतेर्भावे लिट् ॥

परुष इति । परुषे अतिकठिने मुनेः अर्जुनस्य मुष्टिताडने लुब्धकस्य किरातस्य वामवक्षसि वक्षोवामदेशे देव्याः संबन्धिनि पतिते लग्ने सति शिथिलाः श्लथाः किरातिकायाः पार्वत्याः संबन्धिन्यः सितगुञ्जामणिमय्यः हारयष्टयः सराः जगलुः गलन्ति स्म । अर्धनारीश्वरस्य देवस्य वक्षोवामदेशाद्देवीवक्षसोऽनतिरेकादिति भावः । औपच्छन्दसिकवृत्तम् ॥ ९१ ॥

उपवासेति । हरोऽपि उपवासेन अनशनव्रतेन कृशे मुनेः अर्जुनस्य उरसि अस्यार्जुनस्य हृद्गतं मनसि स्थितं स्वमात्मानं पीडनात् प्रहारव्यथातः परिहर्तुं मोचयितुमिवेत्युत्प्रेक्षा । भृशं स्वीकृतं मुष्टौ । तत्प्रहार इत्यर्थः । मार्दवं शैथिल्यं येन तथोक्तः सन् प्रजहार ताडितवान् ॥ ९२ ॥

इतीति । इति उक्तप्रकारेण परस्परमुष्टिप्रहारैरेव वृष्ट्या वर्षेण परिमृष्टौ क्षालितौ वनकुसुमपरागमयो भस्ममयश्च अङ्गरागः ययोस्तौ एकेन बाहुना जटासु सरभसं गृहीत्वा अपरेण बाहुना वलयितं वेष्टितं कण्ठनालं याभ्यां तौ । परस्परमित्यत्रापि योज्यम् । तौ शवरतपोधनौ किरातार्जुनौ महत्यां अधित्य-

---

१. 'तिष्ठ' इति नास्ति क्वचित्. २. 'वृषभवाहनम्' इति पाठः. ३. 'ताडनात्' इति पाठः. ४. 'बाहुना' इति नास्ति क्वचित्. ५. 'कण्ठनालौ' इति पाठः.

द्वारदरीगर्भनिरुद्धसिद्ध[1]मिथुननिबद्ध[2]हाहाकारस्तीरवन[3]दूरोत्सर्पिवीची[4]वेगोत्पाटिताक्रष्टमुनिजनपर्णशालासहस्रसुरस्रवन्तीपूरो दर्वीकरविभुकंधराखर्वीकरणपटु[5]भारोऽयमुर्वीधरपतिरासीत् ।

अवाङ्मुखत्वेन निपात्य शंभुना समुज्झितोऽयं ददृशे विमोहितः ।
तवाद्य जामातरि मे दशामिमां निवेदयेत्यद्रिमिव ब्रुवन्रहः ॥९३॥

पार्थस्य तस्य भुजयोः परमेश्वरोऽसौ
वीर्यं विलोक्य युधि विस्मयमानचेताः ।
चापव्रणे सुरनदीकणसेकशङ्का-
मप्युत्सृजन्मुहुरकम्पयदुत्तमाङ्गम् ॥ ९४ ॥

---

कायां हिमशैलोर्ध्वभूमौ यदा आपपतां पततः स्म । तदा तावदेव अयं उर्वीधरपतिः हिमवान् झटिति सत्वरं घटितं पिहितं द्वारं यासां तासाम् । तत्पतनक्षोभादिति भावः । सर्वत्र दरीणां कन्दराणां गर्भेषु मध्येषु निरुद्धैः सिद्धानां देवयोनिविशेषाणां मिथुनैः द्वन्द्वैः निबद्धाः उदीरिताः हाहाकारा यस्मिन् तथोक्तः । तीरयोर्वनेषु दूरमुत्सर्पिणीनां व्याप्नुवतीनां वीचीनां तरङ्गाणां वेगेन उत्पाटितानि उन्मूलितानि आकृष्टानि च मुनिजनानां पर्णशालासहस्राणि येन तादृशः सुरस्रवन्त्याः गङ्गायाः पूरः प्रवाहः यस्मिंस्तथोक्तः दर्वीकराणां सर्पाणां विभोः शेषस्य कंधराणां ग्रीवाणां खर्वीकरणे भुग्नीकृतौ पटुः समर्थः भारः यस्य तथोक्तश्चासीत् । यत्तूक्तं विधेयत्रयस्य उपसर्जनत्वेन नृसिंहप्रलपितम्, तदविमृष्टविधेयांशत्वदोषापत्तेरुपेक्ष्यम् ॥

**अवाङ्मुखेति** । शंभुना किरातवेषेण अवाङ्मुखत्वेन निपात्य । अधोमुखं यथातथा पातयित्वेत्यर्थः । समुज्झितः त्यक्तः । बाहुभ्यामिति भावः । अतएव विशेषेण मोहितः मूर्च्छां गमितः अयं अर्जुनः । हे अद्रे, तव जामातरि कन्याभर्तरि शंभौ विषये मे मम इमां दशां अवस्थां निवेदय विज्ञापय इत्युक्तप्रकारं अद्रिं हिमगिरिं प्रति रहः ब्रुवन् कथयन्निवेत्युत्प्रेक्षा । ददृशे दृष्टः । तत्रत्यैरिति शेषः ॥ ९३ ॥

**पार्थस्येति** । असौ परमेश्वरः शंभुः युधि युद्धे तस्य पार्थस्य भुजयोर्वीर्यं विलोक्य विस्मयमानं चेतः यस्य तथोक्तः सन् । अतएव चापेन गाण्डीवेन यद्व्रणं तस्मिन् सुरनदीकणैः गङ्गाजलबिन्दुभिः सेके उक्षणे विषये शङ्कां वितर्कमपि उत्सृजन् अगणयन् सन् । आर्द्रव्रणे शीतजलसेकस्यातिवेदनाकरत्वमप्यचिन्तयन्निति यावत् । उत्तमाङ्गं शिरः मुहुरकम्पयत् । श्लाघयामासेत्यर्थः ।

---

१. 'सिद्धमुनि' इति पाठः. २. 'निबद्ध' इति नास्ति क्वचित्. ३. 'वीरवण' इति पाठः. ४. 'वीचि' इति पाठः. ५. 'पटुतरभारो' इति पाठः.

तथाविध एवासौ चिरादाचरितचेतनास्वागताचारः शनैरुत्थाय पुरतो घण्टाघणघणात्कारसहचरेण कण्ठगर्जितेन कर्णयोः कॢप्तसुधारसमोक्षे महोक्षे निषेदिवांसम्, भुजमूलप्रसारितगिरिजापाणियुगलनखराङ्कुरधोरणीद्विगुणीकृतहारमणिरमणीयवक्षसम्, पारिषदगणाञ्जलिकमलवनमध्यराजहंसायमानम्, मार्दवभरितशार्दूलचर्मनिर्मितपल्ययनपर्यङ्कोपरिभागतिर्यगर्पितचरणपल्लवसंवाहनपरेण शिलादकुमारेण च दर्पदुर्ललननिवारणाय मुखबन्धनकनकशृङ्खलेन निरुध्य मुहुर्मुहुः करपुटास्फालितककुदशृङ्गेण भृङ्गिणा च लक्ष्यमाणोभयपक्षभागम्, गाण्डीवदण्डताडनपरिपीडितचूडाशशिनमाश्वा-

अथ युद्धे तादृग्भुजवीर्यविलोकनजनितविस्मयस्य विशेषणगत्या तथाविधशिरःकम्पनहेतुत्वात्काव्यलिङ्गभेदः ॥ ९४ ॥

**तथाविध इति ।** तथाविधः अवाङ्मुखं पतित एवासौ अर्जुनः चिरादाचरितः कृतः चेतनायाः संज्ञायाः स्वागताचारः सुखागमनक्रिया यस्मिंस्तथोक्तः सन् । शनैः उत्थाय पुरतः अग्रे घण्टानां ग्रैवेयाणां घणघणात्कारस्य सहचरेण मित्रेण । तन्मिश्रितेनेति यावत् । कण्ठस्य गर्जितेन हुंकाररवेण कर्णयोः कॢप्तः सुधारसस्य अमृतस्य मोक्षः वर्षं येन तस्मिन् महोक्षे वृषभराजे निषेदिवांसं आसीनम् । भुजयोर्मूलाभ्यां कक्षाभ्यां प्रसारितस्य गिरिजायाः पार्वत्याः पाणियुगलस्य नखराङ्कुराणां धोरण्या पङ्क्त्या द्विगुणीकृतैः हारमणिभिः मौक्तिकैः रमणीयं वक्षः यस्य तथोक्तम्, पारिषदानां गणस्य प्रमथसमूहस्य अञ्जलीनामेव कमलानां वनस्य मध्ये राजहंसवदाचरन्तं राजहंसायमानम् । क्यजन्ताल्लटः शानच् । मार्दवभरितेन अतिमृदुना शार्दूलचर्मणा निर्मितस्य पल्ययनस्य वाहनपृष्ठास्तरणस्यैव पर्यङ्कस्य शयनस्य उपरिभागे । 'पल्ययनपल्लव–' इति पाठे पल्ययनं पल्लवमिवेत्युपमितसमासः । तिर्यगर्पितस्य न्यस्तस्य चरणः पल्लव इव तस्य संवाहने मृदुमर्दने परेण व्यापृतेन शिलादकुमारेण नन्दिकेश्वरेण च । दर्पात् दुर्ललनस्य उत्प्लवनस्य निवारणाय मुखे वक्त्रे बध्नातीति बन्धनेन कनकमयेन शृङ्खलेन खलीनेन निरुध्य मुहुर्मुहुः करपुटेन पुटीकृतहस्तेन आस्फालितं आश्वासार्थं परामृष्टं ककुदस्य शृङ्गं उपरिभागः येन तेन भृङ्गिणा प्रमथविशेषेण च । द्वाभ्यां लक्ष्यमाणौ उभौ पक्षभागौ पार्श्वदेशौ यस्य तं लक्ष्यमाणोभयपक्षभागम् । गाण्डीवदण्डताडनेन परिपीडितं चूडायां शशिनं

१. 'चेतनाचरित'; 'आपतितचेतना' इति पाठः. २. 'शनैः शनैः' इति पाठः. ३. 'घण्टाभरणघणघणात्करण' इति पाठः. ४. 'परिकल्पित' इति पाठः. ५. 'युगनखरेखाङ्कुर' इति पाठः. ६. 'पल्ययनाङ्कोपरि' इति पाठः. ७. 'एकचरण' इति पाठः. ८. 'दर्पसमुल्ललन' इति पाठः. ९. 'मुखबद्धकनकशृङ्खले' इति पाठः. १०. 'भृङ्गिरिटिना' इति पाठः. ११. 'पीडितम्' इति पाठः.

सयितुमवतरद्भिरुडुनिकरैरिव सुरतरुकुसुमवर्षैरवकीर्यमाणम्, जटाभस्मकुशचीरधारिभिस्तैरेव चतुर्भिराम्नायपुरुषैः परिपठ्यमानशतरुद्रीयविरुदप्रबन्धम्, अम्बरे सविधमवलम्बमानैस्तुम्बुरुप्रभृतिभिः सुरवैणिकैरुपवीण्यमानभक्तजनरक्षणापदानप्रकरणम्, कर्णपूरीकृततमालमञ्जरीमधुमिषेण कटाक्षात्साक्षात्कृपामिव वर्षन्तम्, प्रज्वलद्भिः परिष्कारपन्नगफणारत्नैर्नूनैः शरत्रणैरिवानुरज्यमानावयवम्, अवतंसशशिकलापरिगलितकिरणधारापातशीतासहिष्णुतयेव दन्तपटगर्भवर्तिना स्मितेन सूचितहृदयप्रसादम्, भगवन्तं महादेवमुद्वीक्ष्य पक्ष्मतटरुहविटपिसमुत्पाटनपटुभिः प्रमोदाश्रुपूरैर्नदीमातृका-

---

शिखाचन्द्रं आश्वासयितुं अवतरद्भिः प्राप्नुवद्भिः उडूनां नक्षत्राणां निकरैरिव स्थितैः सुरतरुकुसुमानां वर्षैः अवकीर्यमाणं व्याप्यमानम्। जटाः भस्म कुशाः चीराणि च धरन्तीति तद्धरैः तैः कैरातेश्वररूपधारिभिरेव चतुर्भिः आम्नायपुरुषैः वेदपुरुषैः परितः पठ्यमानः कीर्त्यमानः शतरुद्रीयं रुद्राध्याय एव विरुदप्रबन्धः यस्य तथोक्तम्। सविधं समीपं यथातथा अम्बरे आकाशे अवलम्बमानैः अवतरद्भिः तुम्बुरुः प्रभृतिः आदिः येषां तैः सुराणां वैणिकैः वीणाशिल्पैः गन्धर्वैः उपवीण्यमानानि वीणाभिर्गीयमानानि भक्तानां जनानां मार्कण्डेयादीनां रक्षणात्मकं यत् अपदानं प्राक्तनचारित्रं तस्य प्रकरणानि 'नाटकं च प्रकरणम्' इत्यादिना प्रसिद्धां दशरूपकान्यतमानि यस्य तथोक्तम्। कर्णपूरीकृतायाः कर्णावतंसीकृतायाः तमालमञ्जर्याः तापिच्छगुच्छस्य मधुनः मकरन्दस्य मिषेण साक्षात् मूर्तिभूतामिव स्थितकृपां कटाक्षात् वर्षन्तम्। प्रज्वलद्भिः प्रकाशमानैः अत एव नूनैः शरत्रणैरिव स्थितैः परिष्कारपन्नगानां भूषणीभूतसर्पाणां फणासु रत्नैः अनुरज्यमानाः शोणायमानाः अवयवाः यस्य तम्। अवतंसशशिकलायाः शिरोभूषणचन्द्रखण्डात् परिगलितानां प्रसृतानां किरणानां धारायाः पङ्क्त्याः पातेन यच्छीतं तदसहिष्णुतया तत्सहनाशक्त्येवेत्युत्प्रेक्षा। दन्तानां पटः अधर एव तस्य गर्भे मध्ये वर्तत इति वर्तिना स्मितेन। तन्मिषेणेत्यर्थः। सूचितः ज्ञापितः हृदये मनसि प्रसादः अनुग्रह एव नैर्मल्यं यस्य तम्। भगवन्तं महादेवं उद्वीक्ष्य पक्ष्मणोरेव तटयोः रुहन्ति जायन्त इति तेषां निमेषाणामेव विटपिनां वृक्षाणां समुत्पाटने पटुभिः। निर्निमेषीकरणसमर्थैरित्यर्थः। प्रमोदाश्रुपूरैः आनन्दवाष्पप्रवाहैः नदीमातृकायमा-

---

१. 'निकरैः' इति पाठः. २. 'भसित' इति पाठः. ३. 'तुम्बरु' इति पाठः. ४. 'रक्षा' इति पाठः. ५. 'मधुञ्जरीमिषेण' इति पाठः. ६. 'अनुबध्यमानावयवमासन्नावतंसितशशि' इति पाठः. ७. 'गलित' इति पाठः. ८. 'सहिष्णुनेव' इति पाठः. ९. 'तटरुहनिमेषविटपि' इति पाठः.

यमाणपुलकाङ्कुरः सविनयमुपसृत्य पादारविन्दयोः सहस्रकृत्वः प्राणंसीत् ॥

स्वामिन्मया जडधिया त्वयि देवदेवे
वाचा शरेण धनुषा दृढमुष्टिना च ।
यत्ते चतुर्विधमकारि रणे तदागः
क्षन्तव्यमद्य भवता करुणार्णवेन ॥ ९५ ॥

इति विज्ञापयन्तमेनं पारिजातपल्लवतल्लजप्रतिमल्लस्य पाणितलस्य परामर्शनेन प्रमुषितव्रणवेदनाङ्गं प्लवंगकेतनमनङ्गशासनोऽप्येवमवादीत् ।

यथा तृतीयेन युधि प्रवीर तवापराधेन भवामि तुष्टः ।
तथा न भक्त्या तपसां विभूत्या तरुप्रसूनार्चनया च वह्वया ॥९६॥

इति सुधामाधुरीधुरीणं वचनमभिधाय ।

---

णाः नदीजलवर्धिता इवाचरन्तः पुलकाङ्कुरा यस्य तथोक्तः सन् । सविनयं यथा-तथा उपसृत्य पादारविन्दयोः महादेवपादपद्मयोः सहस्रकृत्वः सहस्रवारं प्राणंसीत् प्रणामानकरोत् । नमतेः कर्तरि लुङ् ॥ ९४ ॥

स्वामिन्निति । हे स्वामिन् महादेव, रणे युद्धे देवदेवे त्वयि विषये जडधिया मूढबुद्धिना मया ( कर्त्रा ) वाचा शरेण धनुषा दृढमुष्टिना ( करणेन ) चतुर्विधं यत् आगः अपराधः ते तव । त्वां प्रतीति यावत् । अकारि कृतम् । तत् चतुर्विधमागः करुणार्णवेन दयासमुद्रेण अतएव भवता अद्य क्षन्तव्यम् ॥ ९५ ॥

इतीति । इति उक्तप्रकारेण विज्ञापयन्तं क्षमापयन्तं पारिजातस्य पल्लवतल्लजस्य श्रेष्ठकिसलयस्य प्रतिमल्लस्य प्रतिवीरस्य । तत्सदृशस्येति यावत् । पाणितलस्य परामर्शनेन प्रमुषिता निरस्ता व्रणैः निजशरकृतैः वेदना येषां तादृशान्यङ्गानि यस्य तं प्लवंगः हनूमान् केतने यस्य तं अर्जुनं प्रति अनङ्गशासनः महादेवोऽपि एवं वक्ष्यमाणविधया अवादीत् उक्तवान् । वदतेः कर्तरि लुङ् ॥

यथेति । हे प्रवीर, तव संबन्धिना युधि तृतीयेन अपराधेन चापकृतेन यथा तुष्टो भवामि, तथा महत्या भक्त्या तपसां विभूत्या समृद्ध्या तरूणां प्रसूनैरर्चनया वा तुष्टो न भवामि शौर्यादन्यच्च शूराणामभ्यर्हिततममिति भावः । उपेन्द्रवज्रा ॥९६॥

इतीति । इति उक्तप्रकारं सुधायाः अमृतस्य माधुर्याः मधुरत्वस्य धुरीणं भारवहं वचनं अभिधाय उक्त्वा । इत्युत्तरेण संबध्यते ॥

---

१. 'पुलकप्ररोहः' इति पाठः. २. 'देवदेव' इति पाठः. ३. 'पाणिपल्लवस्य' इति पाठः. ४. 'रणवेदना' इति पाठः. ५. 'हृष्टः' इति पाठः. ६. 'अपि' इति पाठः. ७. 'सुधामधुरिमधुरीणं' इति पाठः.

तत्क्षणाद्धनुरिषूनपि तांस्तान्संनिधाप्य विभुरस्त्रमपि स्वम् ।
पाण्डवाय धनुराहतिरीतेः पारितोषिकमिव प्रदिदेश ॥ ९७ ॥

तस्याथ पाशुपतलाभदुरापदीप्ते-
रक्ष्णोः समक्षमपरिप्लुवपक्ष्मपङ्क्तेः ।
आश्चर्यवृत्तिरखिलैरनुगामिभिः स्वै-
रन्तर्दधे स भगवानमृतांशुमौलिः ॥ ९८ ॥

इत्यनन्तभट्टकविकृतौ चम्पूभारते चतुर्थः स्तवकः ।

---

तत्क्षणादिति । विभुः व्यापकः अनिर्वाच्यमहिमा शंभुः तदेव धनुः अन्तर्हितं गाण्डीवम् । न त्वन्यदित्यर्थः । तानेव इषून् बाणानपि पाण्डवाय । अर्जुनायेत्यर्थः । संनिधाप्य संनिधिं प्रापय्य । दत्त्वेति यावत् । धनुराहतेः गाण्डीवताडनस्य या रीतिः फक्किः (?) तस्याः पारितोषिकं परितोषदानमिव स्वं स्वकीयमपि अस्त्रम् । पाशुपतमित्यर्थः । क्षणात् प्रदिदेश दत्तवान् । दिशेः कर्तरि लिट् । उत्प्रेक्षालंकारः ॥ ९७ ॥

तस्येति । अथ पाशुपतदानानन्तरम् । आश्चर्या वृत्तिः चरित्रं यस्य तथोक्तः । तत्तादृगपकारिणि कारुण्यस्य कुत्राप्यदृष्टचरत्वादिति भावः । अमृतांशुमौलिः चन्द्रचूडः स भगवान् महादेवः पाशुपतस्य नामास्त्रस्य लाभेन दुरापा शत्रुदुर्निरीक्ष्या दीप्तिः प्रभा यस्य तथोक्तस्य अपरिप्लवाः निमेषोन्मेषराहित्यादचञ्चलाः पक्ष्मणां पङ्क्तयो यस्य तथोक्तस्य तस्य अर्जुनस्य अक्ष्णोः समक्षं पुर एव अखिलैः स्वैः स्वीयैः अनुगामिभिः भृत्यैः प्रमथैः सह अन्तर्दधे अन्तर्हितवान् ॥ ९८ ॥

इति श्रीसदाशिवपदारविन्दवन्दनानन्दसान्द्रस्य कुरविकुलचन्द्रस्य
रामकवीन्द्रस्य कृतौ चम्पूभारतव्याख्याने लास्याभिधाने
चतुर्थः स्तवकः ।

---

१. 'तत्क्षणम्' इति पाठः. २. 'संनिधाय' इति पाठः. ३. 'अक्ष्णः' इति पाठः.

## पञ्चमः स्तबकः ।

अथ सविधतपोधनैः कृताशीरमरपतेर्धृतशासनः स पार्थः ।
रयजितपवनं समातलिः सन्रथमधिरुह्य मुदा दिवं प्रतस्थे ॥ १ ॥

नाकमेत्य धनुरङ्कितदोष्णा नायको दिविषदामतिहृष्टः ।
नाम फाल्गुन इति ब्रुवता स्वं नन्दनेन जगृहे पदयुग्मे ॥ २ ॥

पाणिना परिमृशन्नमुमिन्द्रः पक्ष्मलीकृतजयन्तमहेर्ष्यः ।
आदरेण धुरि नाकिगणानामासनार्धमधिरोपयति स्म ॥ ३ ॥

सदसि वसति तस्मिन्सार्वभौमे कुरूणां
कपटशवरबाणैः कल्पितार्द्रव्रणेऽपि ।
निखिलसुरवधूनां नेत्रसंघाः समेता
निशितकुलिशकल्पा निर्दयं संनिपेतुः ॥ ४ ॥

---

**अथेति ।** अथ पाशुपतलाभानन्तरम् । सविधे समीपे ये तपोधनाः मुनयः तैः कृताशीः अमरपतेः इन्द्रस्य संबन्धि धृतं शासनं स्वर्गं प्रत्यागन्तव्यमित्यात्मकं येन तथोक्तः । इन्द्राज्ञापरतन्त्र इत्यर्थः । अत एव स पार्थः रयेण वेगेन जितः पवनः वायुः येन तं रथं ऐन्द्रं मातलिना इन्द्रसारथिना सहितः समातलिः सन् अधिरुह्य दिवं स्वर्गं प्रति मुदा प्रतस्थे । भगवदनुग्रहस्योत्तरोत्तरश्रेयस्करत्वादिति भावः । अत्रेन्द्राज्ञास्वर्गगमनयोर्हेतुहेतुमतोरुक्तेर्हेत्वलंकारः । पुष्पिताग्रावृत्तम् ॥१॥

**नाकमिति ।** नाकं स्वर्गं एत्य धनुषा अङ्कितः चिह्नितः दोः बाहुः यस्य तेन फाल्गुन इति स्वं नाम ब्रुवता कथयता नन्दनेन पुत्रेणार्जुनेन दिविषदां देवानां नायकः इन्द्रः अतिहृष्टः सन् पदयुग्मे जगृहे गृहीतः । अर्जुनोऽहमभिवादय इति वदन्निन्द्रं प्रणनामेत्यर्थः । स्वभावोक्तिः । स्वागतावृत्तम् ॥ २ ॥

**पाणिनेति ।** इन्द्रः अमुं प्रणतं अर्जुनं पाणिना परिमृशन् प्रत्यग्रशबरव्रणस्थानेषु संस्पृशन् अत एव पक्ष्मलीकृता प्रवृद्धा जयन्ते नाम्नि पुत्रे महती ईर्ष्या अशूरोऽयं किमेतेनेत्यात्मिका यस्य तथोक्तः सन् नाकिनां देवानां ये गणाः सङ्घाः तेषां धुरि अग्रे आदरेण प्रेम्णा आसनार्धं अर्धासनं अधिरोपयति स्म । तत्रोपवेशितवानित्यर्थः । अत्रार्जुनस्य अणि कर्तुर्णौ 'गतिबुद्धि–' इत्यादिना कर्मत्वम् । अनेकपदार्थहेतुकं काव्यलिङ्गम् ॥ ३ ॥

**सदसीति ।** तस्मिंश्चैन्द्रे सदसि सभायां वसति वर्तमाने कपटशबरस्य भगवतः बाणैः कल्पितानि आर्द्राणि नवानि च व्रणानि यस्य तथोक्तेऽपि कुरूणां सार्वभौमे अर्जुने निशितेन तीक्ष्णेन कुलिशेन वज्रेण कल्पाः तत्सदृशाः । ईषदसमाप्तौ कल्पप् । निखिलानां सुरवधूनां अप्सरसां नेत्रसंघाः कटाक्षबृन्दानि समेताः मिलिताः सन्तः निर्दयं यथा तथा संनिपेतुः न्यपतन् । सप्रेम सादरं च

आस्थानसीम्नि तनयाद्गिरिशेन युद्ध-
माकर्ण्य हर्षविकसन्मनसो मघोनः ।
अङ्गेऽखिले प्रसरतां पुलकाङ्कुराणा-
मक्ष्णां सहस्रतयमेव बभूव विघ्नः ॥ ५ ॥

आज्ञया पितुरमर्त्यसमाजादग्रतः स्वनितमङ्गलवाद्यम् ।
वारणेन्द्रमधिरोप्य जयन्तो वैजयन्तमनयद्विजयं तम् ॥ ६ ॥

आनतस्य पदयोरथ जिष्णोराशिषोऽनुपदमिन्द्रपुरंध्री ।
पारिजातकुसुमस्य परागैः फालसीमनि ललाम चकार ॥ ७ ॥

पुनः पुनस्तत्र पुलोमपुत्र्या जयन्तशङ्कां ददतः स्वकान्त्या ।
नरस्य मौर्वीकिण एव दोष्णोर्नामग्रहेषु स्खलनं न्यरौत्सीत् ॥ ८ ॥

---

पश्यन्ति स्मेत्यर्थः । स्वार्थमात्रपरायणानां कुतः परानुकूल्यचिन्तेति भावः । अतएव विरूपघटनात्मको विषमप्रभेदः । मालिनीवृत्तम् ॥ ४ ॥

**आस्थानेति** । आस्थानसीम्नि सभायां तनयात् अर्जुनात् गिरिशेन कपटकिरातेन सह युद्धं आकर्ण्य हर्षेण विकसत् पूर्यमाणं मनो यस्य तस्य मघोनः इन्द्रस्य अखिले अङ्गे अवयवे प्रसरतां प्ररोहतां पुलकानामेवाङ्कुराणां अक्ष्णां सहस्रतयं नेत्रसहस्रमेव । 'संख्याया अवयवे तयप्' । विघ्नः प्ररोहप्रतिबन्धकं बभूव । नेत्रेषु लोमाभावादिति भावः ॥ ५ ॥

**आज्ञयेति** । जयन्तः इन्द्रपुत्रः पितुः इन्द्रस्य आज्ञया अमर्त्यानां देवानां समाजात् संघात् तं विजयं अर्जुनं वारणेन्द्रं ऐरावतं अधिरोप्य वैजयन्तं इन्द्रप्रासादम् । 'स्यात्प्रासादो वैजयन्तः' इत्यैन्द्रोपकरणेष्वमरः । स्वनितानि संजातस्वनानि मङ्गलवाद्यानि वीणावेण्वादीनि यस्मिंस्तत्तथा । तारकादित्वादितच् । अनयत् प्रापितवान् । स्वागतावृत्तम् ॥ ६ ॥

**आनतस्येति** । अथ वैजयन्तप्राप्त्यनन्तरं इन्द्रस्य पुरंध्री कुटुम्बिनी शची पदयोरानतस्य प्रणतस्य जिष्णोः अर्जुनस्य आशिषः 'वत्स, चिरं जीव' इत्यादेः अनुपदं अनन्तरं पारिजातकुसुमस्येति जात्येकवचनम् । परागैः फालसीमनि ललाटदेशे ललाम रक्षातिलकं चकार । लोकोत्तरस्य पुत्रस्य दृष्टिदोषनिवारणाय रेणुभिर्मातरस्तिलकं ललाटे कुर्वन्तीति प्रसिद्धिः ॥ ७ ॥

**पुनः पुनरिति** । तत्र वैजयन्ते स्वस्य कान्त्या सौन्दर्येण हेतुना पुनः पुनः जयन्त इति शङ्कां वितर्कं ददतः कुर्वतः नरस्य अर्जुनस्य दोष्णोः बाह्वोरुभयोः मौर्व्या शिञ्जिन्या यः किणः व्रणग्रन्थिः स एव पुलोमपुत्र्याः शच्याः नाम्नोः जयन्तेत्यर्जुनेति चाख्ययोः ग्रहणेषु आमन्त्रणार्थं स्वीकारेषु विषये स्खलनं जयन्तं दृष्ट्वा अर्जुनेति अर्जुनं दृष्ट्वा जयन्तेति आकारसाम्यकृतवैपरीत्याह्वानं न्यरौत्सीत्

पितुरिवास्त्रकलां दिवि गायकात्पिककुलाहृतकण्ठरवोदयः ।
परिहृतामृतदिव्यजनावृतः परिशिशील स गीतकलामपि ॥ ९ ॥
तमुर्वशी तत्र कदाचिदेत्य स्वयं रहःकर्मणि भग्नकामा ।
अये पृथापत्य तवाभिधेव क्लीबत्वमेहीति शशाप कोपात् ॥ १० ॥
तद्बुद्ध्वा हरिरूचे तं शापोऽयं वत्स ते मुदे ।
चित्रसेनोक्तविद्यायाः सहकृत्वा भवेदिति ॥ ११ ॥

---

निवारितवान् । अत्रार्जुनस्य बाहुद्वये सव्यसाचित्वकृतकिणवत्त्वरूपविशेषदर्शनादर्जुने जयन्तसंदेहनिवृत्तेर्निश्चयान्तःसंदेहालंकारः । यत्तु 'न्यकार्षीत्' इत्यपपाठे 'भ्रमेण स्खलनं निषेधं न्यकार्षीत् व्यतानीत्' इति नृसिंहः, तन्न । स्खलनशब्दस्य निषेधार्थकत्वेन केनाप्यननुशासनादसमर्थत्वदोषस्य कथंचित्कोशसंपादने अप्रयुक्तत्वदोषस्य चापत्तेरिति । न्यरौत्सीत् इति निपूर्वाद्रुधेः कर्तरि लुङि सिचि वृद्धौ रूपम् ॥ ८ ॥

**पितुरिति ।** पिकानां कोकिलानां कुलेन आहृतः स्वीयरुतादप्यतिमधुरोऽयमिति प्रेम्णा श्रूयमाणः कण्ठरवस्य उदयः आविर्भावः यस्य सः । सुशारीर इत्यर्थः । अतएव परिहृतं त्यक्तं अमृतं येन तेन दिव्यजनेन सुरजनेन आवृतः सोऽर्जुनः दिवि स्वर्गे गायकात् चित्रसेनात् गीतकलां संगीतविद्यां पितुः इन्द्रात् अस्त्रकलामिव परिशिशील अधीतवान् । उभयस्मादुभयं जग्राहेत्यर्थः । अत्र प्रकृतयोरस्त्रगीतविद्ययोरर्जुनकर्तृकाध्ययनधर्मेणौपम्यस्य गम्यत्वात्तुल्ययोगिताभेदः । द्रुतविलम्बितवृत्तम् ॥ ९ ॥

**तमिति ।** तत्र स्वर्गे कदाचित् उर्वशी नाम सुराङ्गना तं अर्जुनं एत्य रहःकर्मणि सुरतविषये स्वयं भग्नः विफलितः कामः मनोरथः यस्यास्तथोक्ता सती कोपात् मनोरथविफलीकरणजन्यात् अये पृथापत्य हे अर्जुन, तव अभिधा त्वन्नामेव क्लीबत्वं नपुंसकत्वं एहि प्राप्नुहि । अपत्यशब्दस्य नपुंसकत्वादिति भावः । इति उक्तप्रकारेण शशाप । नपुंसक इव कामयमानायाः निषेधान्नपुंसको भवेति शापं ददावित्यर्थः ॥ १० ॥

**तदिति ।** अथ हरिः इन्द्रः तत् उर्वशीशपनं बुद्ध्वा श्रुत्वा 'हे वत्स, अयं शापः चित्रसेनेन गन्धर्वेण उक्ताया उपदिष्टायाः विद्यायाः गीतस्य सहकृत्वा विराटान्तःपुरे कन्यकायाः उपदेशयोग्यतासंपादनरूपसाह्यकरणेन ते तव मुदे संतोषायैव भवेत्' इति तमर्जुनं प्रत्यूचे उक्तवान् । अज्ञातवाससंवत्सरभोग्योऽयं नान्यदेत्यनुगृहीतवानित्यर्थः । ब्रूञः कर्तरि लिटि वच्यादेशे तस्य एजादेशः ॥ ११ ॥

अथ[1] कदाचिदस्त्रशिक्षासमाप्तौ[2] गुरु[3]समक्षं गुरुदक्षिणात्वेन विपक्षकुलक्षपणं भिक्षमाणेन सहस्राक्षेण स्वमस्तकादाक्षिप्य शिरसि निक्षिप्तकिरीटो वलक्षाश्वोऽयं मातलिपरिकलिपतरथ्येन नन्दनवनमन्दपवनसंदीयमानकेतनस्पन्दनेन स्यन्दनेन निर्गत्य विलङ्घितदूरवियत्पथः पाथोनिधौ रक्षः[4]कुलकोलाहलनीचीकृतवीचीर[5]वं रसातलकुहरमुखं निरुध्य रणप्रस्तावं वितस्तरे ॥

तावदनाकर्णितपूर्वगाण्डीवविस्फारश्रवणादहंपूर्विकया युगपदभि[6]षेणनयतो दिविषदवध्यभावादध्यातमरणान्निक्षिप्रं[7] क्षुरप्रैर्विश्राणितविवरादुरसः कृतप्रयाणैः प्राणैस्त्रिकोटिशो निवातकवचानपि प्रवात-

अथेति। अथ कदाचित् वलक्षाः श्वेताः अश्वाः रथ्या यस्य सः अयमर्जुनः अस्त्रशिक्षायाः अस्त्रविद्याव्यापनस्य समाप्तौ सत्यां गुरुसमक्षं सुराचार्यसमक्षं गुरोर्दक्षिणात्वेन दक्षिणारूपेण विपक्षकुलस्य निवातकवचकालकेयाख्यराक्षसबृन्दस्य क्षपणं वधं भिक्षमाणेन याचमानेन सहस्रं अक्षीणि यस्य तेन इन्द्रेण। 'बहुव्रीहौ सक्थ्यक्ष्णोः—' इति षच्। स्वस्य मस्तकात् शिरसः आक्षिप्य अवमुच्य। अत्रार्थात् किरीटस्यैव कर्मत्वम्। शिरसि निक्षिप्तं न्यस्तं किरीटं यस्य तथोक्तः सन्। मातलिना इन्द्रसारथिना परिकलिताः संयोजिता रथ्याः रथवाहाः यस्मिंस्तेन स्यन्दनेन इन्द्ररथेन निर्गत्य प्रस्थाय विलङ्घितः दूरश्च वियत्पथः आकाशमार्गः येन तथोक्तः सन् पाथसां जलानां निधौ समुद्रे रक्षःकुलानां राक्षसबृन्दानां कोलाहलैः कलकलध्वनिभिः नीचीकृतः स्वल्पीकृतः। अन्तर्धापित इति यावत्। वीचीनां सामुद्रीणां रवः यस्मिंस्तत् रसातलकुहरस्य पातालबिलस्य मुखं अग्रभागम्। द्वारमिति यावत्। निरुध्य रणस्य प्रस्तावं प्रसङ्गं धनुष्टङ्कारादिकं वितस्तरे विस्तारितवान्। स्तृणातेर्विपूर्वात्कर्तरि लिट्। अत्र विपक्षक्षपणे गुरुदक्षिणात्वेनारोपस्येन्द्रसुखोपयोगाद्धनरूपगुरुदक्षिणायास्तत्रानुपयोगाच्च परिणामालंकारः ॥

तावदिति। तावत् तदानीमेव अनाकर्णितपूर्वस्य पूर्वमश्रुतस्य गाण्डीवस्य संबन्धिनः विस्फारस्य टङ्कारस्य। 'विस्फारो धनुषां स्वानः' इत्यमरः। श्रवणात् अहंपूर्विकया अहंपूर्वमहंपूर्वमित्यहंकारेण युगपत् एकदा अभिषेणनयतः युद्धाय सेनया सहागच्छतः। 'यत्सेनयाभिगमनमरौ तदभिषेणनम्' इत्यमरः। अभिषेणनाशब्दात्करोत्यर्थे णिजन्ताल्लटः शतृप्रत्ययः। दिविषदां देवानां अवध्यभावात् हन्तुमशक्यत्वात् हेतोः अध्यातं अचिन्तितं मरणं यैस्तान् निर्गतो वातः वायुः

१. 'अथ' इति नास्ति क्वचित्. २. 'अस्त्रविद्याशिक्षापरिसमाप्तौ' इति पाठः. ३. 'सुर' इति पाठः: ४. 'गम्भीरनीरपूररक्षितरक्षः' इति पाठः. ५. 'रव' इति पाठः. ६. 'अभिषेणनवतः' इति पाठः. ७. 'नक्षिप्रैः' इति पाठः.

कवचानेव विरचय्य नभसि[1] प्रमादपतितेन[2] पतङ्गपरिवेषेणेव स्फटि-[3]कप्राकारेण परिगुप्तिमतो हिरण्यपुराद्विदितबन्धुजनवृत्तान्ततया[4] रोषादभिगम्य कलहायमानान्कालकेयानपि कालगेहातिथीन्पाशु-पतेन मन्त्रपूर्वं[5] निमन्त्रयांचक्रे।

अवायुनेयाः शरदभ्रपङ्क्तीरविद्यमानास्तमयाश्च ताराः।
दैतेयसंहारभवाः स जिष्णुर्दिवि प्रतिष्ठापयति स्म कीर्तीः॥१२॥

हतरिपुं विनिवृत्तमवेक्ष्य तं हरिहयस्य सुरैः सह तुष्यतः।
नयनवारिभिरङ्गमनाप्लुतं न ददृशे तिलमात्रमपि स्वकम्॥१३॥

---

संचारः यस्मिंस्तादृशं कवचं येषां तथोक्तानपि तन्नाम्नश्च त्रिकोटिशः त्रिकोटि-संख्यान् राक्षसान् क्षुरप्रैः बाणविशेषैः क्षिप्रं सत्वरं विश्राणितानि दत्तानि विव-राणि रन्ध्राणि यस्मिंस्तस्मादुरसः वक्षसः कृतं प्रयाणं निर्गमनं यैस्तैः प्राणैः वायुभिः प्रकृष्टो वातः यस्मिंस्तादृशं कवचं येषां तादृशान् विरचय्य कृत्वा। हत्वेति यावत्। नभसि आकाशे प्रमादात् पतितेन पतङ्गस्य सूर्यस्य परिवेषेणेव स्थितेन स्फटिकमयेन प्राकारेण परितो गुप्तिः रक्षणं अस्यास्तीति गुप्तिमतः हिर-ण्यपुरात् कालकेयनगरात् विदितः ज्ञातः बन्धुजनानां निवातकवचानां वृत्तान्तः वधरूपः यैस्तेषां भावः तत्ता तया हेतुना रोषादभिगम्य कलहायमानान् युद्धं कुर्वाणान्। 'शब्दवैर—' इत्यादिना क्यजन्तात्लटः शानच्। कालकेयानपि काल-केयसंज्ञांश्च राक्षसान् पाशुपतेन अस्त्रमन्त्रेण मन्त्रः वैदिकः तदुच्चारणं पूर्वं यस्मिन् तथा कालगेहस्य यमगृहस्य अतिथीन् निमन्त्रयांचक्रे। अतिथित्वेनाह्वानं कार-यति स्मेत्यर्थः। तानप्यवधीदिति यावत्॥

अवाय्विति। सः निवातकवचकालकेयहन्ता जिष्णुः अर्जुनः वायुना नेतुं चालयितुं अयोग्या अवायुनेयाः। अतिस्थिरा इत्यर्थः। शरदि ऋतौ अभ्रपङ्क्तीः मेघमालाः अविद्यमानः अस्तमयः यासां ताः। नित्यप्रकाशा इत्यर्थः। ताराः नक्षत्राणि च दैतेयानां पूर्वोक्तानां द्वयानां संहाराद्भवन्तीति तथोक्ताः कीर्तीः दिवि आकाशे प्रतिष्ठापयति स्म। व्यतिरेकसंसृष्टमालारूपकम्॥ १२॥

हतेति। हताः रिपवः दैत्या येन तं विनिवृत्तं पुनरागतवन्तं तमर्जुनमवेक्ष्य सुरैः सह तुष्यतः हरिहयस्य इन्द्रस्य स्वकं स्वीयं अङ्गं शरीरं नयनवारिभिः आन-न्दबाष्पैः अनाप्लुतं असिक्तं तिलमात्रमपि न ददृशे न दृष्टम्। स्वयमिति शेषः। 'स्वकम्' इत्यत्र 'स्वयम्' इति वा पाठो मनोज्ञः। इन्द्रस्य सर्वाङ्गीणलोचनत्वादिति

---

१. 'निवर्तमानोऽयं नभसः' इति पाठः. २. 'प्रमादादापतितेन' इति पाठः. ३. 'स्फाटिक' इति पाठः. ४. 'जननिधन' इति पाठः. ५. 'प्रथमं पाशुपतेन' इति पाठः.

पुरि वज्रिणः सुरनुतिप्रसरत्पुलकावमग्नभुजचापकिणः ।
मनसे स पञ्च शरदोऽप्सरसां वसति स्म पञ्चशरदो विजयः १४

तस्य वृत्तिमधिगम्य लोमशाद्धर्मजोऽपि मुदितः सहानुजैः ।
प्राप्ततीर्थमुनिसेवनः क्रमात्पावनं वदरिकावनं ययौ ॥ १५ ॥

तत्र ब्रह्मपरायणैर्मुनिगणैः संसेव्यमानान्तिकौ
सध्र्यञ्चौ यमिनौ निरीक्ष्य स नरं नारायणं चाख्यया ।
अङ्गेनानिशमन्तरेण महतीमेकां क्षमां संस्पृश-
न्बाह्यैरष्टभिरङ्गकैरपि परां पस्पर्श पार्थः क्षमाम् ॥ १६ ॥

---

भावः । अत्र हतरिपुप्रत्यागतार्जुनावलोकनहर्षस्य इन्द्राङ्गे तत्ताहगानन्दाश्रुसिक्त-हेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् । द्रुतविलम्बितवृत्तम् ॥ १३ ॥

**पुरीति ।** अप्सरसां मनसे पञ्चशरं मन्मथविकारं च ददातीति पञ्चशरदः स विजयः अर्जुनः सुराणां नुतिभिः स्तोत्रैः प्रसरत्सु अङ्कुरत्सु पुलकेषु अवमग्नाः लीनाः । तैरन्तर्हिता इति वा । भुजयोश्चापेन किणा यस्य तथोक्तः सन् । वज्रमायुधमस्यास्तीति वज्रिणः इन्द्रस्य पुरि स्वर्गे पञ्च शरदः संवत्सरान् वसति स्म । प्रमिताक्षरावृत्तम् ॥ १४ ॥

**तस्येति ।** धर्मजः युधिष्ठिरोऽपि अनुजैः भीमादिभिः सह लोमशान्नाम मुनेः ज्ञातार्जुनवृत्तान्तात् तस्य अर्जुनस्य वृत्तिं स्वर्गे निवासं अधिगम्य ज्ञात्वा मुदितः सन् क्रमात् प्राप्तं तीर्थानां गङ्गादीनां मुनीनां व्यासादीनां च सेवनं भजनं येन तथोक्तश्च सन् पावनं नरनारायणाश्रमत्वेन जगत्पवित्रं वदरिकावनं ययौ प्राप्तवान् । रथोद्धतावृत्तम् ॥ १५ ॥

**तत्रेति ।** तत्र वदरिकारण्ये ब्रह्म जगदधिष्ठानमात्माभिन्नमेव परं अयनं गतिः येषां तैर्मुनीनां गणैः सम्यक् सेव्यमानं अन्तिकं समीपदेशः ययोस्तौ । सहाञ्चत इति सध्र्यञ्चौ अविनाभाविनौ । 'यः सहाञ्चति सध्र्यङ् सः' इत्यमरः । आख्यया नाम्ना नरं नारायणं च । नरनारायणाख्यौ इत्यर्थः । यमिनौ मुनी निरीक्ष्य स पार्थः युधिष्ठिरः अन्तरेण अन्तर्गतेन अङ्गेन मनसा एकां महतीं क्षमां क्षान्तिं अनिशं सर्वदा संस्पृशन् सम्यग्वहन्नपि वहिर्भवैः बाह्यैः अष्टभिः अङ्गैरेवाङ्गकैः करचरणभुजवक्षोललाटैः परां अन्यां क्षमां भूमिं पस्पर्श स्पृष्टवान् । साष्टाङ्गं प्रणनामेत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ १६ ॥

---

१. 'वृत्तम्' इति पाठः. २. 'जनैः' इति पाठः ३. 'आन्तरेण' इति पाठः.

विलोकनैर्विश्रमशाखिभिस्तयोर्भवाध्वगानामवधूनितक्लमः ।
निवासमालम्ब्य तपोवने तदा विवासदुःखाद्विरराम पार्थिवः ॥१७॥

एकदा तत्र स्नुषावत्सलतयेव मारुतेन पुरतो नीतमटवीपर्यटन-खेदसंपदामसासहिमन्धंकरणमलिकुलचेतसामासेचनकमक्ष्णां कमपि कह्लारमुकुलमादाय 'क्व लभ्येत पुनरेतादृशम्' इति कुतुकहर्षाभ्यां सूचिततर्षया पार्षत्या रहसि याचितः पार्षदश्विः क्षणं विचिन्त्य तद्विचिचीषया दिशमुदीचीं प्रतस्थे ॥

---

विलोकनैरिति । तदा प्रणामसमये पार्थिवः धर्मराजः भवः संसार एव अध्वा मार्गः तस्मिन् गच्छन्तीति भवाध्वगानां देहिनां विश्रमशाखिभिः छाया-वृक्षैः । संसारदुःखहारिभिरिति यावत् । तयोः नरनारायणयोः विलोकनैः वीक्षणैः अवधूनितः निरस्तः क्लमः वनवासादिदुःखायासः यस्य तथोक्तः सन् । तपोवने बदरिकावने निवासं आलम्ब्य स्वीकृत्य विवासेन राज्यभ्रंशेन यद्दुःखं तस्मात् विरराम । तद्दुःखं तत्याजेत्यर्थः । 'जुगुप्साविराम–' इत्यादिनापादानत्वम् । हेतु-रलंकारः । वंशस्थवृत्तम् ॥ १७ ॥

एकदेति । तत्र बदरिकावने एकदा कदाचित् मारुतेन स्नुषायां पुत्रपत्न्यां वत्सलतया प्रेम्णेवेत्युत्प्रेक्षा । पुरतः अग्रदेशं प्रति नीतं प्रापितं अटव्यां पर्यट-नेन संचारेण याः खेदसंपदः श्रमसमृद्धयः तासां असासहिं असहमानम् । तन्ना-शकमिति यावत् । 'सासहिवावहि–' इत्यादिना यङ्लुगन्तात्किप्प्रत्ययः । अलि-कुलस्य चेतसां मनसां अन्धंकरणं अतिमोहनम् । 'आढ्यसुभग–' इत्यादिना ख्युनि खिलात् 'अरुर्द्विषत्–' इत्यादिना मुम् । अक्ष्णां नेत्राणां आसेचनकम् । 'तदासे-चनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात्' इत्यमरः । विगलितवेद्यान्तरत्वेन दर्शनी-यमित्यर्थः । कमपि सौरभ्यसौन्दर्याभ्यां अनिर्वाच्यमहिमानं कह्लारमुकुलं रक्ता-ब्जकोशं आदाय एतादृशं अन्यत् पुनः क्व कुत्र लभ्येत प्राप्येत इत्युक्तप्रकारेण हर्षेण सूचितः ज्ञापितः तर्षः कह्लारमुकुले अभिलाषः यस्यास्तया पार्षत्या द्रौपद्या रहसि याचितः एतादृशं पुनः अन्यदादाय दीयतामिति प्रार्थितः । पृषदश्वस्य वायोः अपत्यं पार्षदश्विः भीमः क्षणं विचिन्त्य कुत्रेमानि भवेयुरित्यालोच्य तेषां विचेतुं अन्वेष्टुं इच्छया विचिचीषया उदीचीं दिशं उत्तरां प्रति प्रतस्थे । सौरभा-नुसारेणेति भावः ॥

---

१. 'परिधूनितश्रमः' इति पाठः. २. 'नीतमसासहिमटवी' इति पाठः.
३. 'असासहिम्' इति नास्ति क्वचित्.

क्षिप्रं विलङ्घ्य गिरिशैवलिनीवनानि
गच्छन्नसौ पथि ददर्श कपिं महान्तम् ।
दृग्भ्यामवन्तमरिपट्टणदाहकाले
निद्रां भयादुपगतामिव कुम्भकर्णात् ॥ १८ ॥

कपिकुञ्जरं सुकृतपुञ्जमञ्जनापवमानयोरचलमानमध्वनि ।
विषयं दृशोरथ पुरो वृकोदरः स चकार साधु विहिताक्षिमीलनम् १९

अभीरसौ गभीरमभाणीच्च ॥

कस्त्वं निरुध्य पदवीमविनीतबुद्धे
निद्रास्यपेहि न सहे गमने विलम्बम् ।
क्रोधो भुजामिव ममाद्य हिडिम्बहन्तु-
रुद्यद्गदां तव तनूमपि मूढ कुर्यात् ॥ २० ॥

---

क्षिप्रमिति । असौ भीमः गिरीन् शैवलिनीः नदीः वनानि च क्षिप्रं विलङ्घ्य गच्छन् सन् अरेः रावणस्य पट्टणस्य लङ्कायाः दाहकाले कुम्भकर्णात् । तं त्यक्त्वा इति ल्यब्लोपे पञ्चमी । भयादुपगतां दाहो मे मा भूदिति शरणं प्राप्ता-मिव स्थितां निद्रां दृग्भ्यां नेत्राभ्यां अवन्तं रक्षन्तम् । निद्रायमाणमित्यर्थः । महान्तं शौर्यधैर्यादिभिः लोकोत्तरं कपिं आञ्जनेयं पथि मार्गे ददर्श ॥ १८ ॥

उक्तमेवार्थं भङ्ग्यन्तरेणाह—कपिकुञ्जरमिति । अथ दूरतो दर्शनानन्तरं स वृकोदरो भीमः अञ्जनापवमानयोः सुकृतपुञ्जं पुण्यराशिं साधु यथा तथा विहितं अक्ष्णोर्मीलनं येन तं केवलं प्रत्यग्दृष्ट्या । श्रीरामध्यानपरमिति यावत् । अत एव अचलमानं निश्चलम्, यद्वा अचलः मानः चित्तसमुन्नतिः यस्य तम्, अथवा अचलमानं पर्वतप्रमाणमिति वा । कपिकुञ्जरं हनुमन्तं अध्वनि मार्गे पुरः पुरःप्रदेशे दृशोः नेत्रयोः विषयं चकार । अपश्यदित्यर्थः ॥ १९ ॥

अभीरिति । किंचेति चार्थः । असौ भीमः अभीः अदृष्टचरसत्त्वदर्शनेऽपि गतभीः सन् गभीरं निष्ठुरं यथा तथा अभाणीत् वदति स्म ॥

उक्तप्रकारमेवाह—क इति । हे अविनीतबुद्धे आर्यैरशिक्षितबुद्धे । मध्येमार्गं शयनस्य गर्ह्यत्वादिति भावः । त्वं कः पदवीं मार्गं निरुध्य निद्रासि । अपेहि अन्यतो गच्छ । गमने विलम्बं न सहे । हिडिम्बं हन्तीति हिडिम्बहन्तुः मम क्रोधः मार्गनिरोधजन्यः भुजां मद्बाहुमिव । हे मूढ, तव तनूं शरीरमपि उद्यन्ती उन्न-मन्ती गदा आयुधं यस्यां तथोक्तां उत्पद्यमानरोगां च कुर्यात् । 'गदो भ्रातरि विष्णोः स्यादामये चायुधे गदा' इति विश्वः । अत्र हिडिम्बहन्तुरिति विशेष-

---

१. 'पत्तन' इति पाठः. २. 'उपनताम्' इति पाठः. ३. अयं श्लोकः क्वचिन्न दृश्यते.

क्रौर्यस्पृशा तदनु कौरवसार्वभौम-
वाग्रूपया[2] सपदि मारुतनन्दनस्य ।
दृग्द्वारपक्ष्मपुटयुग्मकवाट[3]कूट-
निद्रार्गलाहरणकुञ्चिकया बभूवे[4] ॥ २१ ॥

इत्थं गिरा किंचिदुदीक्ष्य तस्य लाङ्गूलमात्रे तरलः कपीन्द्रः ।
कोपारुणाक्षं कुरुसिंहमेनं स्वापारुणाक्षः स्वयमेवमूचे[5] ॥ २२ ॥

भद्र स्वस्त्यस्तु तुभ्यं चिरमिह जरया[6] निद्रयाप्यातुरोऽहं
प्रत्युत्थानादिकर्मण्यपटुरवयवैरस्मि तस्मात्त्वमेव ।
जात्यावस्थानरीत्यापि च विपिनपथे प्राप्ततिर्यक्त्वमेनं[7]
बालाग्रे मां विकृष्य द्रुतमभिलषितप्राप्तये साधयेति[8][9] ॥२३॥

---

णस्य तादृशस्य मम भवान् कियानित्यभिप्रायगर्भत्वात्परिकरालंकारः । स चोद्यद्गद-त्वेन उद्यदायुधत्वोद्यद्रोगत्वयोः श्लेषभित्तिकया भेदाध्यवसितेन भुजातन्वोरौप-म्यस्य गम्यत्वात्तुल्ययोगिताभेदस्योज्जीवक इति द्वयोरङ्गाङ्गिभावेन संकरः ॥२०॥

**क्रौर्यस्पृशेति** । तदनु क्रौर्यस्पृशा वक्रिमस्पृशा कौरवसार्वभौमस्य भीमस्य वाग्रूपया मारुतनन्दनस्य हनूमतः दृग्द्वारस्य नेत्रद्वारस्य पक्ष्मपुटयुग्ममेव कवाट-कूटं तस्य निद्रैव अर्गला तदाहरणकुञ्चिकया कवाटोद्घाटनशलाकिकया बभूवे भूतम् । भवतेर्भावे लिट् । भीमस्य गर्वोक्तिर्हनूमतो निद्रां निराकरोदिति भावः ॥ २१ ॥

**इत्थमिति** । इत्थं उक्तप्रकारया तस्य भीमस्य गिरा वाचा लाङ्गूलमात्रे पुच्छे एव । न तु देहे न वा मनसीत्यर्थः । तरलः चञ्चलः । प्रबोधसूचनायेति भावः । स्वयं स्वापेन समाधिनिद्रया । न तु कोपेनेत्यर्थः । अरुणे अक्षिणी यस्य तथोक्तः कपीन्द्रो हनूमान् कोपेन अरुणाक्षं एनं कुरुसिंहं किंचिदुदीक्ष्य दृष्ट्वा एवं वक्ष्य-माणप्रकारेण ऊचे उक्तवान् ॥ २२ ॥

**भद्रेति** । हे भद्र । शुभशीलेति हासोक्तिः । तुभ्यं स्वस्ति शुभमस्तु । चिरं बहुकालिकया जरया चरमवयसा निद्रयापि आतुरः रुग्णः अतएवाहं इह इदानीं अत्र वा प्रत्युत्थानादौ कर्मणि अर्हणे अवयवैः करचरणादिभिः अपटुः अशक्तो-ऽस्मि । यतः तस्मात् त्वमेव जात्या जन्मना अवस्थानरीत्या स्थितिविधयापि च

---

१. अयं श्लोकः क्वचिन्न दृश्यते. २. 'वाचा तया' इति पाठः. ३. 'कपाट' इति पाठः. ४. 'बभूव' इति पाठः. ५. एतदनन्तरम्—

'आ बालधेररिमहागृहदाहशौण्डादा चौपधाचलधृतिस्थपुटात्किरीटात् ।
अङ्गेष्वजातचलनोऽप्यखिलेषु भीममालोक्य मन्दमधरोष्ठपुटे चकम्पे ॥'

इति श्लोकः क्वचिद्दृश्यते. ६. 'जरसा' इति पाठः. ७. 'एवम्' इति पाठः. ८. 'अभि-लषितं प्रार्थये' इति पाठः. ९. एतदनन्तरम्—

इत्युक्त एष परिघं धरणौ निधाय
वल्कं दृढं च परिधाय भुजार्गलाभ्याम् ।
तं क्रष्टुमेव न शशाक स तु प्लवङ्गो
वालस्थया घनतयास्य मनश्चकर्ष ॥ २४ ॥

तदनु विस्मयव्रीलापारदृश्वना[1] मातरिश्वसूनुना 'त्वं वासवलोकवासिषु कोऽसि' इति पृष्टः कपिकुञ्जरः स्वमञ्जनायां प्रभञ्जनेन संजातं[2] जानकीजानेर्हृदयरञ्जकं लेखवाहकं[3] व्याजहार ॥

---

प्राप्तं तिर्यक्त्वं तिर्यग्योनित्वम् । वानरत्वमिति यावत् । साचित्वेन वर्तमानत्वं च येन तं एनं मां वालाग्रे विकृष्य । मद्वालाग्रमन्यतोऽपसार्येत्यर्थः । अभिलषितस्य वाञ्छितार्थस्य प्राप्तये द्रुतं साधय गच्छ इत्युक्तप्रकारेण ऊचे इति पूर्वेणान्वयः । हिडिम्बहन्तुरिति स्वबलप्रख्यापनात् तादृग्बलं यदि तव तर्हि बालाग्रं चालयसि चेज्जानीयां तदिति हासरसोऽत्रानुसंधेयः ॥ २३ ॥

इतीति । इति उक्तप्रकारं उक्तः । हनूमतेति शेषः । एष भीमः परिघं गदां धरणौ निधाय वल्कं वल्कलं च दृढं परिधाय संवेष्ट्य भुजे अर्गले इव ताभ्यां तं हनूमतो बालं क्रष्टुमेव न शशाक न शक्तवान् । किमुतापसारयितुमिति भावः । स प्लवङ्गः हनूमांस्तु बालस्थया घनतया माहात्म्येन अस्य भीमस्य मनश्चकर्ष । स्वस्य नागायुतबलस्यापि बालाग्रमात्रचालनाशक्त्या दुर्विज्ञेयमस्य माहात्म्यमिति विस्मितोऽभूदित्यर्थः ॥ २४ ॥

तदन्विति । विस्मयस्य लोकोत्तरानुभावदर्शनजन्यस्य व्रीलस्य अहंकारभङ्गजन्यलज्जायाश्च पारदृश्वना अन्तगामिना । तदुभयसान्द्रेणेति यावत् । मातरिश्वसूनुना भीमेन हे महानुभाव, त्वं वासवलोकवासिषु देवेषु । तन्मध्य इत्यर्थः । को देवोऽसीति पृष्टः कपीनां कुञ्जरः श्रेष्ठः हनूमान् स्वं आत्मानं प्रभञ्जनेन वायुना अञ्जनायां नाम वानर्यां संजातं जानकी जाया यस्य तस्य जानकीजानेः श्रीरामस्य हृदयरञ्जकं चित्ताह्लादकं लेखानां लिखितपत्राणां वाहकं नेतारं व्याजहार उक्तवान् ॥

---

'अरातिसंघातनिघातकर्मण्यबालहस्तो मम बालहस्तम् ।
उद्धृत्य याहि द्रुतमुत्तरत्रेत्युक्त्वैव स श्रान्तिमुपाजहार ॥'

इति श्लोकः क्वचिद्दृश्यते.

१. 'विनयविस्मयव्रीडा' इति पाठः. २. 'संजनितम्' इति पाठः. ३. 'लेखवाहम्' इति पाठः.

सबहुमानं तस्य वचनमाकर्ण्य ॥

प्रीतेन तेन पुनरप्यधिपः कपीना-
मूचे तथा यदि भवानधुनार्थयेऽहम् ।
कर्तुं तनुं नयनयोः पथि तावकीनां
तत्तादृशीमुदधिपल्वलतासवित्रीम् ॥ २५ ॥

इत्युक्तोऽयं प्रवृद्धोऽङ्गैर्हेलया रुरुधे निजैः ।
वैमात्रेयस्य तस्यैव मार्गं से द्युसदामपि ॥ २६ ॥

त्रस्तस्य तद्वपुरुदीक्ष्य सजातिशङ्कि-
मैनाकसंशयकुठारितपक्षलोपम् ।
मोहे यथा नयनयोर्मुकुलीबभूव
बोधे तथैव करयोरपि युग्ममस्य ॥ २७ ॥

---

**सबहुमिति** । तस्य हनूमतः वचनं पूर्वोक्तं सबहुमानं यथातथा आकर्ण्येत्युत्तरेण संबन्धः ॥

**प्रीतेनेति** । प्रीतेन अतिसंतुष्टेन तेन भीमेन 'हे कपिश्रेष्ठ, भवान् तथा यदि रामदूतश्चेत्तर्हि तत्तादृशीं अनुपमां उदधेः समुद्रस्य पल्वलतायाः पल्वलभावस्य सवित्रीं जननीम् । स्वस्यातिमहत्त्वेन तस्यात्यल्पत्वसंपादयित्रीमिति यावत् । तावकीनां तव संबन्धिनीम् । 'युष्मदस्मदोरन्यतरस्यां खञ्च' इति खञि 'तवकममकावेकवचने' इति तवकादेशः खस्येनादेशश्च । तनुं शरीरं पुनः अधुना नयनयोः पथि मार्गे कर्तुम् । द्रष्टुमिति यावत् । अहं अर्थये याचे । इति कपीनामधिपः ऊचे उक्तः । कर्मणि लिट् ॥ २५ ॥

**इतीति** । इत्युक्तः अयं हनूमान् हेलया विलासेनैव । न तु यत्नेनेत्यर्थः । निजैः आत्मीयैः अङ्गैः प्रवृद्धः सन् विरुद्धाया मातुरपत्यस्य वैमात्रेयस्य मातृसपत्नीपुत्रस्य तस्य भीमस्यैव मार्गं न रुरुधे न रुद्धवान् । किंतु द्युसदां स्वर्गवासिनामपि मार्गं रुरुधे । अत्र हनूमतोऽङ्गवृद्धेः भीमदिविषदुभयमार्गरोधहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम् । तथा द्वयोर्मार्गयोः प्रकृताप्रकृतयोः रोधरूपधर्मैक्याद्दीपकालंकारश्च । तयोरभिन्नपदबोध्यत्वादेकवाचकानुप्रवेशसंकरः ॥ २६ ॥

**त्रस्तस्येति** । समाना अभिन्ना जातिः धर्मः पक्षयुक् पर्वतत्वरूपः यस्य सः सजातिः स इति शङ्का वितर्कः अस्यास्तीति तच्छङ्किनः । मत्वर्थीय इनिः । मैनाकस्य गिरेः यः संशयः किमयं मादृक् कश्चित्पर्वतो वा न वेत्यात्मकः तस्य कुठार इवाचरितः कुठारितः । तन्निवर्तक इति यावत् । उपमानादाचारार्थकक्विबन्तात्कर्तरि क्तः । पक्षयोर्द्वयोरपि लोपः अदर्शनं यस्य तथोक्तं तस्य हनूमतो वपुः अत्यद्भुतं उदीक्ष्य दृष्ट्वा त्रस्तस्यास्य भीमस्य मोहे चित्तविभ्रमे सति नयनयोर्युग्मं यथा

---

१. 'तावकीं तां' इति पाठः. २. 'दिविषदामपि' इति पाठः.

प्रमोदात्परिपुष्यद्भिः प्रतिक्षणमथाङ्गकैः ।
भीमेनाप्युदपादीव भ्रातृवृद्धिविडम्बना ॥ २८ ॥

सविनयमेवं व्यजिज्ञपच्च ॥

प्रार्थ्यमानपददर्शनं चिरात्पश्यतः पथि भवन्तमग्रजम् ।
विस्मयाम्बुनिधिरेष मेऽधुना वीरवर्य भवतापि दुस्तरः ॥ २९ ॥

राघवस्य सहजादपि त्वयि प्रेमवृत्तिरधिकेति मे मतिः ।
यामिनीचरवधोत्सवे यतो लक्ष्मणादधिकमंशमग्रहीः ॥ ३० ॥

आर्य क्षमस्व मम वागपराधमुग्र-
मित्यानतं चरणयोश्चिबुके गृहीत्वा ।

---

मुकुलीबभूव मीलति स्म, तथा बोधे मोहक्षये सति करयोर्युग्ममपि मुकुलीबभूव । अञ्जलीबभूवेत्यर्थः । अत्रापि तत्तादृग्वपुर्दर्शनस्य नयनयुगकरयुगमुकुलनं प्रति हेतुत्वात्पदार्थहेतुकं काव्यलिङ्गं तस्य च नयनयुगकरयुगयोः श्लेषभित्तिकाभेदाध्यवसितमुकुलनेनौपम्यस्य गम्यत्वात् केवलप्रकृतास्पदस्य तुल्ययोगिताभेदस्य च द्वयोः पूर्ववत्संकरः ॥ २७ ॥

**प्रमोदादिति** । अथ भीमेनापि प्रमोदात् प्रतिक्षणं परिपुष्यद्भिः वर्धमानैः अङ्गैरेव अङ्गकैः भ्रातुः हनूमतः वृद्धेः विडम्बनां अनुकरणं उदपादि उत्पादितेवेत्युत्प्रेक्षा । आनन्दसान्द्रोऽभूदित्यर्थः । उत्पूर्वात्पद्यतेः कर्मणि लुङ् ॥ २८ ॥

**सविनयमिति** । इदमुत्तरेण संबध्यते ॥

**प्रार्थ्यमानेति** । चिरात् प्रार्थ्यमानं मया काम्यमानं पदयोः भवदीययोः दर्शनं यस्य तं अग्रजं ज्येष्ठं भवन्तं पथि पश्यतः मे मम एष विस्मय एवाम्बुनिधिः हे वीरवर्य, भवता समुद्रलङ्घनादप्यधुना दुस्तरः तरितुमशक्यः । आकस्मिकं भवद्दर्शनमत्याश्चर्यकरमित्यर्थः । एवं सविनयं यथा तथा व्यजिज्ञपत् विज्ञापितवान् । अत्राकस्मिककाङ्क्षितार्थसिद्धिवर्णनात् प्रहर्षणालंकारः—'उत्कण्ठितार्थसंसिद्धिर्विना यत्नं प्रहर्षणात्' । रथोद्धतावृत्तम् ॥ २९ ॥

**राघवस्येति** । यतः हे वीर, त्वं यामिनीचराणां राक्षसानां वधात्मके उत्सवे विषये लक्ष्मणात् सौमित्रेः अधिकं अंशं भागं अग्रहीः गृहीतवानसि । अतः कारणात् त्वयि विषये राघवस्य श्रीरामस्य प्रीतिः प्रेम सहजात् भ्रातुः भ्रातरं लक्ष्मणमपेक्ष्यापीति ल्यब्लोपे पञ्चमी । अधिका वर्तत इति मे मम मतिः निश्चयः । अत्रोत्तरवाक्यार्थस्य पूर्ववाक्यार्थं प्रति हेतुत्वात्काव्यलिङ्गभेदः । तेनास्य लक्ष्मणादप्यधिकबलवत्त्वप्रतीतेरलंकारेण वस्तुध्वनिः ॥ ३० ॥

**आर्येति** । हे आर्य, उग्रं परुषं मम मत्संबन्धि वाग्रूपं अपराधं क्षमस्व ।

---

१. 'उदघाटीव भ्रातुः' इति पाठः.

जिघ्रञ्शिरस्यवरजं मुमुचे हनूमा-
न्भीमोऽप्यमुष्य विरहासहनोऽश्रुबिन्दून् ॥ ३१ ॥

गच्छतोऽस्य पथि मारुतेः पुरो गन्धमादनमभूत्कुलाचलः ।
वानरेन्द्र इव गाढवीक्षिकावासनाभिरविमुक्तदृक्पथः ॥ ३२ ॥

अलकेशयोषिदलकेशयैः सुमैः
सुरभिं प्रमोदसुरभिं नभःसदाम् ।
शिखरे स तस्य महतीमुदग्दिशो
मणिदर्पणीमिव ददर्श वापिकाम् ॥ ३३ ॥

यक्षाधिपस्य यशसीव गृहीतदेहे
दृष्ट्वा भयादपगते सति हंसयूथे ।

---

इति । उक्त्वेति शेषः । चरणयोः आनतं प्रणतं अवरजं भीमं चिबुके ओष्ठाधोभागे गृहीत्वा हनूमान् शिरसि जिघ्रन् चुम्बन् सन् मुमुचे गमनाय अनुज्ञातवान् । अपिस्त्वर्थः । भीमस्तु अमुष्य हनूमतः विरहं वियोगं न सहत इत्यसहनः सन् अश्रुबिन्दून् मुमुचे ववर्ष । जिघ्रन् हनूमानश्रुबिन्दून् आनन्दबाष्पाणि मुमुचे इति योजना । तथा सति भीमोऽपीत्येककर्मकक्रियान्वयसमुच्चायकोऽपिशब्दः स्वरसतां भजत इति केचित् ॥ ३१ ॥

गच्छत इति । अथ गच्छतः अस्य मारुतेः पथि मार्गे गन्धमादनं नाम कुलाचलः गाढया अविच्छिन्नया वीक्षिकया दर्शनया याः वासनाः संस्काराः ताभिः अविमुक्तः दृशोः पन्थाः नयनविषयत्वं यस्य तथोक्तः वानरेन्द्रः हनूमानिवेत्युत्प्रेक्षा । पुरः अग्रे अभूत् । तं दृष्टवानित्यर्थः । 'गन्धमादमन्ये च' इत्यनुशासनात् गन्धमादनशब्दस्य क्लीवत्वम् । रथोद्धता वृत्तम् ॥ ३२ ॥

अलकेति । स भीमः तस्य गन्धमादनस्य शिखरे अलका नाम पुरी तदीशस्य कुबेरस्य योषितां अलके शेरत इति शयैः । 'शयवासवासिष्वकालात्' इति सप्तम्या अलुक् । सुमैः सौगन्धिकैः सुरभिं गन्धिलां नभःसदां देवानां प्रमोदस्य जलक्रीडादिजन्यस्य सुरभिं कामधेनुम् । अत्यानन्ददायिनीमित्यर्थः । उदीचः दिश उत्तरस्याः दिगङ्गनायाः मणिमयीं दर्पणीं मुकुरमिव स्थितां महतीं वापिकां ददर्श । आरुण्यनैर्मल्यगुणनिमित्ता मणिदर्पणत्वोत्प्रेक्षा । यत्तु "स्नानसमये कुबेराङ्गनालकगलितकुसुमैः सुरभिं मनोज्ञाम् । 'सुगन्धे च मनोज्ञे च वाच्यवत्सुरभिः स्मृतः' इति विश्वः" इति नृसिंहस्तन्न, स्वीयसौगन्धिकान्युपेक्ष्य कौबेराङ्गनालककुसुमैर्मनोज्ञत्वोक्तौ पतत्प्रकर्षाख्यदोषापत्तेरिति । मञ्जुभाषिणी वृत्तम् ॥ ३३ ॥

यक्षेति । अथ स भीमः । गृहीतदेहे मूर्तिमति यक्षाधिपस्य यशसि कीर्ताविव स्थित इत्युत्प्रेक्षा । हंसानां यूथे कुले । दृष्ट्वा आत्मानमिति शेषः । वीक्ष्य

कक्षानिवेशितगदः स विगाह्य तोयं
फुल्लानि हल्लककुलान्यखिलान्यलावीत् ॥ ३४ ॥

तदात्व एव तद्रक्षिणः 'कस्त्वं रे[1] जाल्म, आयुरग्रभूमिमारुरुक्षसि' इति समन्ततो निरुन्धानानन्वर्थतावलम्बकतया[2] लोहितायिता[3]नां लोचनानां प्रतिबिम्बैस्तां सरसीं पुनरपि सौगन्धिकान्तर्वत्नीमिव कुर्वतः क्रोधवशान्नाम यातुधानान्स भीमो रंहसा समुपबृंहितसिंहनादश्चिर[4]मुपोषितस्य परिघस्य पारणां परिकल्पयांचक्रे ॥

रक्षःसृता रक्तनदी महाद्रेर्विष्वक्पतन्ती वियति स्थितानाम् ।
क्षरत्तटीधातुझरीति बुद्धेः करावलम्बं कलयांचकार ॥ ३५ ॥

---

भयात् अपगते पलायिते सति । कक्षे बाहुमूले निवेशिता विन्यस्ता गदा येन तथोक्तः सन् । तोयं सौगन्धिकदीर्घिकाजलं विगाह्य प्रविश्य फुल्लानि विकसितानि अखिलानि निःशेषाणि हल्लकानां रक्ताब्जानां कुलानि पुञ्जान् अलावीत् अपचितवान् । लुनातेः कर्तरि लुङ् । अत्रोत्प्रेक्षया कुबेरस्य भाविपराभवस्य प्रतीतेरलंकारेण वस्तुध्वनिः ॥ ३४ ॥

तदात्व इति । 'तदात्वस्तु तदाकालः' इत्यमरः । तस्याः कह्लारसरस्याः रक्षिणः पालयितॄन् । अत एव रे जाल्म, त्वं कः आयुषः अग्रभूमिं आरुरुक्षसि आरोढुमिच्छसि इति । उक्त्वेति शेषः । समन्ततः स्वस्य परितो निरुन्धानान् निरोधं कुर्वाणान् अन्वर्थतायाः क्रोधवशेति नाम्नोऽवयवार्थत्वस्य । कोपपराधीनत्वस्येति यावत् । अवलम्बकतया स्वीकारेणेवेति गम्योत्प्रेक्षा । लोहितायितानां अरुणीभूतानां लोचनानां प्रतिबिम्बैः तामपचितहल्लकां सरसीं पुनरपि सौगन्धिकैः रक्ताब्जैः अन्तर्वत्नीं सगर्भां तत्पूर्णामिवेति यावदित्युत्प्रेक्षा । कुर्वतः क्रोधवशान्नाम यातुधानान् रक्षोविशेषान् स भीमः रंहसा वेगेन समुपबृंहितः वर्धितः सिंहनादः येन तथोक्तः सन् चिरमुपोषितस्य वधपारणारहितस्य परिघस्य गदायाः पारणं उपवासानन्तरभोजनं परिकल्पयांचक्रे । अवधीदित्यर्थः । गम्यवाच्योत्प्रेक्षयोरङ्गाङ्गिभावेन संकरः ॥

रक्ष इति । रक्षोभ्यः क्रोधवशेभ्यः सृता महाद्रेः गन्धमादनस्य विष्वक् परितः पतन्ती प्रवहन्ती रक्तनदी शोणितप्रवाहः वियति आकाशे स्थितानां देवादीनां क्षरन्तः स्यन्दमानाः तटीषु प्रपातेषु धातवः गैरिकादीनि यस्यां तथोक्ता झरी निर्झर इति बुद्धेः भ्रमात्मिकायाः करावलम्बं सुखग्राह्यत्वं कलयांचकार घटयति स्म । निर्झरभ्रमं जनयामासेत्यर्थः । अतएव भ्रान्तिमदलंकारः ॥ ३५ ॥

---

१. 'साहसिन्' इति पाठः. २. 'अवलम्बितया' इति पाठः. ३. 'लोहितानाम्' इति पाठः. ४ 'चिरतरम्' इति पाठः.

पर्वतस्याग्रवस्तुभ्यः प्रवस्तुं नेच्छतीं दृशम् ।
उत्खाय स महायत्नादुपासीदद्रुपत्यकाम् ॥ ३६ ॥

तदानीमितरेष्वपि भ्रातृषु कमलपालिकासूनोः स्कन्धभाग-शिविकामधिरुह्य तस्यैव कटकभुवमागतेषु सत्सु मारुतिरादरेण रहसि तां विकसितां कुसुमसंहतिं मूर्तानुरागभ्रमदां प्रमदां प्रत्यु-पदामकरोत् ॥

सरसीव कचेऽप्यस्या धार्तराष्ट्राकुलीकृते ।
ऊषे तया वरतनोरूर्मिमत्यलिभासुरे ॥ ३७ ॥

---

**पर्वतस्येति** । स भीमः पर्वतस्य गन्धमादनस्य अग्रे शिखरे वस्तुभ्यः मणिकुञ्जपुञ्जादीन् विहायेति ल्यब्लोपे पञ्चमी । प्रवस्तुं अन्यत्र गन्तुं नेच्छतीं अन-भिलषन्तीम् । नञर्थस्य नशब्दस्य सुप्सुपेति समासः । दृशं दृष्टिं यत्नात् अति-कष्टात् उत्खाय आहृत्य । उपत्यकां अद्रेरासन्नभूमिं उपासीदत् प्राप्तवान् । दृशमुत्खायेत्यनेन पर्वताग्रवस्तूनां लोकोत्तरप्रतीतेर्वस्तुना वस्तुध्वनिः ॥ ३६ ॥

**तदानीमिति** । तदानीं उपत्यकाप्राप्तिसमय एव । इतरेषु भ्रातृषु युधि-ष्ठिरादिष्वपि कमलपालिकायाः हिडिम्ब्याः सूनोः घटोत्कचस्य स्कन्धभागं भुजा-ग्रमेव शिबिकां प्रियया द्रौपद्या सह अधिरुह्य । तस्य गन्धमादनस्यैव कटकभुवं नितम्बप्रदेशं आगतेषु प्राप्तवत्सु सत्सु । मारुतिः भीमः मूर्तस्य शरीरधारिणः अनुरागस्य भ्रमं ददातीति तयोक्ताम् । आरुण्यादिति भावः । तां विकसितां कुसुम-संहतिं कह्लारवृन्दं रहसि प्रमदां प्रत्यादरेण उपदां उपायनं अकरोत् । क्व भीमोऽद्य इत्याध्यायन्तो युधिष्ठिरादयः चिन्तामात्रसंनिहितेन घटोत्कचेन गन्धमादनं नीता इति भारती कथात्रानुसंधेया ॥

**सरसीति** । धार्तराष्ट्रेण दुःशासनेन धार्तराष्ट्रैः नीलहंसैश्च आकुलीकृते ऊर्मिमति कौटिल्यवति तरङ्गवति च अलिवत् अलिभिश्च भासुरे । अस्या वरतनोः द्रौपद्याः केशेष्वपीति जात्येकवचनम् । सरसि कह्लारवापिकायामिव तया कुसुम-संहत्या ऊषे उषितम् । वसतेर्भावे लिट् । श्लिष्टविशेषणेयमुपमा । इमाम् 'सरूप-शब्दवाच्यत्वात्सा सरूपोपमा मता' इति लक्षयित्वा दण्डी सरूपोपमेति व्यव-जहार ॥ ३७ ॥

---

१. 'भुव' इति नास्ति क्वचित्. २. 'ताम्' इति नास्ति कचित्. ३. 'कुलीकृते' इति पाठः. ४. एतदनन्तरम् 'इति सौगन्धिकाहरणम्' इति कचित्.

अथ कदाचिदाखेटाय तटाटवीं पर्यटति तस्मिन्वकद्विषि जटो नाम दुर्जटः सुरारिरुटजमुपेत्य वेदिकया वैतानतनूनपात इव दयितया सह त्रीनपि तान्वीरान्स्कन्धमानीय जवात्केनचिदपदिशपथेन प्रतस्थे ॥

गतागते तत्र घटोत्कचेन जटेन च स्कन्धधृतस्य राज्ञः ।
पादार्पणालाभशुचा वनं तत्पतत्रिनादैरिव रोदिति स्म ॥ ३८ ॥
वनं यियासोः कठिने सभान्ते जटासु रोधो न बभूव यस्य ।
वने विजृम्भत्करुणे तु तस्य जटासुरोऽधोऽजनि धर्मसूनोः ॥३९॥

अथेति । अथानन्तरं कदाचित् तस्मिन् बकद्विषि भीमे आखेटाय मृगयां कर्तुमिति । 'क्रियार्थ–' इत्यादिना चतुर्थी । तटे गन्धमादनप्रपाते अटवीं पर्यटति परितः संचरति सति । दुर्जटः पारुष्यह्रस्वत्वादिना दुष्केशः । जटो नाम सुरारिः राक्षसः । उटजं युधिष्ठिरपर्णशालां एत्य दयितया द्रौपद्या सह त्रीनपि तान् वीरान् युधिष्ठिरनकुलसहदेवान् वेदिकया सह वैतानान् यज्ञीयान् तनूनपातः आहवनीयगार्हपत्यदक्षिणाग्नीनिव स्कन्धं भुजाग्रं आनीय प्रापय्य । केनचित् दुर्ज्ञेयेन अपदिशेन वैदेशिकेन पथा मार्गेण । 'ऋक्पूः–' इत्यादिना समासान्तोऽप्रत्ययः । प्रतस्थे । उपमालंकारः ॥

गतेति । तत्र गन्धमादनवने गतं निर्गमनं च आगमनं च गतागतमिति नपुंसकद्वन्द्वैकवद्भावः । तस्मिन् । गते आगते चेत्यर्थः । क्रमोऽत्र न विवक्षितः । ततश्च आगते घटोत्कचेन गते जटेन च स्कन्धे धृतस्य राज्ञः युधिष्ठिरस्य पादयोः अर्पणानां विन्यासानां अलाभेन अप्राप्त्या या शुक् दुःखं तया तद्वनं पतत्रिणां जटासुरगतिक्षुब्धपक्षिणां नादैः । कलकलव्याजेनेत्यर्थः । रोदिति स्म रुरोदेवेत्युत्प्रेक्षा । सापह्नवा च । महतां पादस्पर्शस्याभाग्यदुर्लभत्वादिति भावः ॥३८॥

वनमिति । कठिने निष्करुणे । खलभूयिष्ठ इति यावत् । सभान्ते दुर्योधनसभायां वनं यातुमिच्छोः यियासोः यस्य धर्मसूनोः युधिष्ठिरस्य । जटासु जटाधारणविषये रोधः नेमास्त्वदुचिता इति निषेधः न बभूव । किंतु विजृम्भती करुणा शोकरसः वृक्षविशेषश्च यस्मिंस्तस्मिन् वने गन्धमादने । 'करुणो ना वृक्षभेदे रसे च करुणा कृपा' इति रत्नमाला । तस्य धर्मसूनोः जटासु रोधः कण्टकिशाखाखाकर्षणं च अजनि बभूव । 'जटा सटायां शाखायाम्' इति विश्वः । अत्र वृक्षशोकयोः सटाशाखयोः निषेधाकर्षणयोश्च जटासु रोधकरणशब्दश्लेषमित्तिकाभेदाध्यवसायमूलातिशयोक्त्या अचेतनस्यापि वनस्य कारुण्याधायिनि धर्मराजजटाधारणे सचेतनस्यैव दुर्योधनादेः कारुण्यानुदयेन लोकैकविलक्षणं दौरात्म्यमिति प्रतीते-

१. 'अटति' इति पाठः. २. 'दुर्घटः' इति पाठः. ३. 'अपदिशा' इति पाठः.

नीत्वा किमद्य वनसीम्नि सुदूरमेता-
नत्रैव हन्मि सहसेति धियैव तिष्ठन् ।
आलक्ष्यतायममरारिरनुष्णजङ्घो
गन्तुं पदात्पदमपि क्षितिपानुभावात् ॥ ४० ॥

मध्येमार्गं वनान्तान्मदगजगमने मारुतौ संमुखेऽस्मि-
न्सार्धं तेनाथ योद्धुं घृतरभसमनास्तीव्रदर्पप्रसारः ।
दैत्यस्तान्राजपुत्रान्क्षितितलमनयद्बाहुना स्कन्धमध्या-
त्क्रोधान्धोऽरत्निसीम्ना स पुनरनिलभूर्दारुणं तस्य शीर्षम् ॥४१॥

निपेतुषस्तस्य निकृत्तमूर्ध्नो नितान्तभारेण वनान्तभूमिः ।
निम्नाभवद्दूरममुष्य सङ्गे निजैः प्रतीकैरिव संकुचन्ती ॥ ४२ ॥

---

रलंकारेण वस्तुध्वनिः । 'जटासुरोऽधो' इत्यावृत्त्या अधो वनगमनानन्तरं जटासुरः तस्य धर्मसूनोः जटासु विषये रुध्यतेऽनेनेति रोधः निषेधः कर्षकश्च अजनीति केचित् । अत्राप्यलंकारध्वनिः पूर्ववत् ॥ ३९ ॥

नीत्वेति । क्षितिपस्य धर्मराजस्य अनुभावात् माहात्म्यात् अतिभारात्मना परिणतात् । पदात्पदमेकं निक्षिप्येत्यर्थः । पदमपरं गन्तुं निक्षेप्तुं अनुष्णे मन्दीभूते जङ्घे यस्य सोऽयं अमरारिः जटासुरः अद्य वनसीम्नि एतान् सुदूरं बहुदूरं नीत्वा प्रापय्य किं कार्यम् । अत्रैव देशे सहसा निहन्मीति धिया आलोचनेन तिष्ठन्निव । अलक्ष्यत ददृशे । तत्रत्यैरिति शेषः । लक्षतेः कर्मणि लङ् । उत्प्रेक्षा ॥ ४० ॥

मध्य इति । अथ मध्येमार्गं मार्गमध्ये । वनान्तान्मदगजगमने अस्मिन् मारुतौ संमुखे अभिमुखम् । आगते सतीत्यर्थः । तेन सार्धं मारुतिना सह योद्धुं धृतः रभसः वेगः हर्षो वा येन तादृशं मनो यस्य सः तीव्रः तीक्ष्णः दर्पस्य अहंकारस्य प्रसारः स्फुरणं यस्य सः । दैत्यः जटासुरः । स्कन्धमध्यात् बाहुना तान् राजपुत्रीं च राजपुत्रांश्च राजपुत्रान् द्रौपदीयुधिष्ठिरादीन् । क्षितितलं भूमिं प्रति अनयत् प्रापयत् । सः अनिलभूः पुनः भीमस्तु क्रोधान्धः क्रोधेन कलुषः सन् । अरत्निसीम्ना निष्कनिष्ठमुष्टिघातेन दारुणं भयंकरं तस्य जटासुरस्य शीर्षं शिरः क्षितितलमनयत् । तच्छिरश्चिच्छेदेत्यर्थः । स्रग्धरा वृत्तम् ॥४१॥

निपेतुष इति । निकृत्तः च्छिन्नः मूर्धा शिरः यस्य तस्य निपेतुषः निपततः तस्य जटासुरस्य । तत्कायस्य संबन्धिनेति यावत् । नितान्तेन अतिमहता भारेण वनान्तभूमिः निजैः प्रतीकैः अवयवैः अमुष्य जटासुरस्य पापिनः सङ्गे स्पर्शे विषये संकुचन्ती जुगुप्समानेवेत्युत्प्रेक्षा । दूरं बहु निम्ना निमग्ना अभवत् ॥४२॥

---

१. 'सीमनि दूरम्' इति पाठः.

निष्कण्टकाभवत्सर्वा निहतेऽस्मिन्वनावनिः ।
उत्कण्टकाभवत्प्रीतेरुन्नत्या सा तु पार्षती ॥ ४३ ॥

ततस्ते श्वेताद्रिं चिरमधिवसन्तः कुरुवराः
सिताश्वस्य प्राप्त्या मुदमनुबभूवुर्निरवधिम् ।
कथाशेषीकारात्त्रिदशरिपुवर्गस्य बहुधा
धनुर्ब्रह्मोज्झत्वं शतमखभुजे स्थापितवतः ॥ ४४ ॥

तमनुक्रमभाषितेशयुद्धं स बहूकृत्य चलाचलेन मूर्ध्ना ।
अनुजैर्नृपतिः समं हिमाद्रेर्न्यवृतद्द्वैतवनं नितान्तहृष्टः ॥४५॥

नरेन्द्रपुत्राः सह याज्ञसेन्या न केवलं तत्र तपोधनानाम् ।
नेत्राणि जह्रुर्नियमैः कृशाङ्गा नेदीयसीनां वनवीरुधां च ॥ ४६ ॥

---

निष्कण्टकेति । सर्वा वनावनिः गन्धमादनारण्यभूमिः अस्मिन् जटासुरे निहते सति । भीमेनेति शेषः । निष्कण्टका कण्टकरहिता निःशत्रुका च अभवत् । सा पार्षती द्रौपदी तु प्रीतेः आनन्दस्य उन्नत्या अतिशयेन उत्कण्टका उत्थितशत्रुका उद्गतरोमाञ्चा च अभवत् । अत्र हतेऽपि शत्रौ सशत्रुकत्वविरोधस्य सरोमाञ्चत्वेन आभासीकरणाद्विरोधाभासः एकः, एवं निसर्गात्कण्टकिनोऽरण्यस्य कण्टकराहित्यविरोधस्य निःशत्रुकत्वेनाभासीकरणाद्विरोधाभासोऽपरः, इति द्वयोः सजातीययोः संसृष्टिः ॥ ४३ ॥

तत इति । ततः अनन्तरं गन्धमादनारण्याद्वा श्वेताद्रिं हिमगिरिं चिरमधिवसन्तः । तत्र बहुकालमुषितवन्त इत्यर्थः । 'उपान्वध्याङ्वसः' इत्याधारस्य कर्मत्वम् । ते कुरुवराः युधिष्ठिरादयः त्रिदशरिपूणां देवशत्रूणां निवातकवचादीनां वर्गस्य संघस्य कथाशेषीकारात् नाममात्रावशेषीकरणात् । निर्मूलनादिति यावत् । शतमखस्य इन्द्रस्य भुजे धनुष एव ब्रह्मणः वेदस्य उज्झत्वं त्यागं बहुधा अनेकधा स्थापितवतः । कुत्रापि युद्धप्रसक्त्यभावेन धनुषः प्रयोजनाभावादिति भावः । सिताश्वस्य अर्जुनस्य प्राप्त्या आगमनेन । स्वर्गादिति भावः । निरवधिं अनन्तां मुदं आनन्दं अनुबभूवुः अनुभूतवन्तः । शिखरिणी वृत्तम् ॥ ४४ ॥

तमिति । स नृपतिः धर्मराजः अनुक्रमं यथाक्रमं भाषितं कथितं ईशेन साम्बेन सह युद्धं येन तथोक्तं तमर्जुनं चलाचलेन कम्पितेन । 'चलं लोलं चलाचलम्' इत्यमरः । मूर्ध्ना शिरसा बहूकृत्य अभिनन्दयित्वा नितान्तं हृष्टः सन् अनुजैश्चतुर्भिः समं हिमाद्रेः द्वैतवनं प्रति न्यवृतदागतवान् । वर्ततेः कर्तरि लुङ् । औपच्छन्दसिकवृत्तम् ॥ ४५ ॥

नरेन्द्रेति । नरेन्द्रपुत्रा युधिष्ठिरादयः याज्ञसेन्या द्रौपद्या सह नियमैः व्रत-

---

१. 'त्रिदिव' इति पाठः. २. 'नृपतिः सहजैः समं महाद्रेः' इति पाठः.

तदनु स खलमानी सर्वसाम्राज्यलक्ष्मीं
प्रचिकटयिषुरेषां प्राप्तकार्श्योन्नतीनाम् ।
कुरुनृपतितनूजो घोषयात्रापदेशा-
दभजत बलसंघैरावृतस्तं वनान्तम् ॥ ४७ ॥

कर्णानिलैस्तत्र करिव्रजानां चलत्सु सर्वेषु चमूरजःसु ।
रजस्तु चित्ताश्रितमस्य राज्ञो बलादिवाचञ्चलमेव तस्थौ ॥४८॥

तत्र रज्जुनहनस्य भाविनः स्थानसूचनकृती इवाङ्गदे ।
धारयन्भुजयुगेन कौरवः सैनिकान्स विबभाज पङ्क्तिशः ॥४९॥

---

विशेषैः कृशाङ्गाः सन्तः तत्र द्वैतवने तपोधनानां नेत्राणि केवलं लोचनान्येव न जहुः । अतिसुकुमारा एते कथं वयमिव दुश्चरं तपश्चरन्तीत्याश्चर्येण मुहुर्मुहुरपश्यन्मुनय इत्यर्थः । किंतु नेदीयसीनां समीपस्थितानां वने वीरुधां लतानां नेत्राणि लोचनान्यपि मूलान्यपीति च जहुः । आहारार्थमिति भावः । 'नेत्रं नाड्यां तरोर्मूले लोचने वसनेऽपि च' इति विश्वः । अत्र लोचनमूलानां नेत्रशब्दश्लेषमित्तिकाभेदाध्यवसायमूलातिशयोक्त्या अचेतनानामप्याश्चर्याधायकत्वे किमुत सचेतनानामित्यर्थान्तरापतनप्रतीतेरलंकारेणालंकारध्वनिः ॥ ४६ ॥

**तदन्विति** । तदनु तदनन्तरम् । कदाचिदिति शेषः । खलः दुष्टः मानः चित्तसमुन्नतिः अस्यास्तीति खलमानी स प्रसिद्धः कुरुनृपतेः धृतराष्ट्रस्य तनूजो दुर्योधनः । सर्वां धनकनकमणिकरितुरगादिरूपां साम्राज्यस्य एकच्छत्राधिपत्यस्य लक्ष्मीं संपदं स्वीयां प्राप्ता कार्श्यस्य दारिद्र्यस्य उन्नतिः अतिशयः यैस्तेषां एषां धर्मराजादिभ्य इति संप्रदानस्य संबन्धत्वविवक्षया षष्ठी । प्रचिकटयिषुः प्रदर्शयितुमिच्छुः सन् । प्रकटयतेः सन्नन्तादुप्रत्ययः । घोषयात्रायाः निजगोकुलनिरीक्षणार्थप्रयाणस्य अपदेशात् व्याजात् । बलानां चतुरङ्गाणां संघैः आवृतश्च सन् । तं वनान्तं द्वैतवनं अभजत प्राप्तवान् । 'खलु मानी' इति पाठः खलुशब्दस्य नैरर्थक्यादुपेक्ष्यः । मालिनीवृत्तम् ॥ ४७ ॥

**कर्णेति** । तत्र द्वैतवने सर्वेषु चम्वाः सेनायाः संबन्धिषु रजःसु परागेषु करिव्रजानां गजसंघानां कर्णयोः अनिलैः वायुभिः चालनजन्यैः चलत्सु अपगच्छत्सु सत्स्वपि । अस्य राज्ञः दुर्योधनस्य चित्ताश्रितं रजस्तु परागस्तु राजसविकारश्च बलात् राजाश्रयबलादिवेत्युत्प्रेक्षा । अचञ्चलं सदेव तस्थौ । कर्णस्य राधेयस्य अनिलैः प्रेरणैः राज्ञः चित्ताश्रितमित्यपि योजयन्ति केचित् । अत्रोक्तोत्प्रेक्षायाः धूलीरजोगुणयोः रजःशब्दश्लेषमित्तिकाभेदाध्यवसायमूलातिशयोक्तिसापेक्षत्वाद्द्वयोरङ्गाङ्गिभावेन संकरः ॥ ४८ ॥

**तत्रेति** । तत्र द्वैतवने । स कौरवः दुर्योधनः भाविनः गन्धर्वैर्भविष्यतः

---

१. 'खलु मानी'; 'किल मानी' इति च पाठः.

अभ्रंलिहस्य वटभूमिरुहस्तलेऽसौ
स्थित्वाशृणोत्तदनु वैणिकगीतिरीतिम् ।
संगीतभङ्गिरसिकं सह बन्धुवर्गै-
राकारयन्निव सुराधिपगायकेन्द्रम् ॥ ५० ॥

तावत्तस्य धार्तराष्ट्रस्य चेष्टितरौक्ष्यं निरीक्ष्य नितरां क्रुधान्धः सुधान्धपतिनिदेशेन वनावनिदेशेऽवतीर्णस्तूर्णं विधृतकृपाणबाणचापकलापतनुत्रसेनश्चित्रसेनश्चिरक्षुधितस्तरक्षुश्चमूरुततिमिव चमूममूं निवार्य क्ष्वेलया लोलयांचक्रे ॥

रज्जुभिः पाशैः नद्धनस्य बन्धनस्य स्थानसूचनं प्रदेशनिर्देशं कुरुत इति कृती इव स्थिते इत्युत्प्रेक्षा। अङ्गदे केयूरे भुजयुगेन धारयन् सन् । सैनिकान् पङ्क्तिशः विबभाज । पङ्क्तिबन्धांश्चकारेत्यर्थः । सम्यगात्मानं पाण्डवाः पश्यन्त्वित्याशयादिति भावः। अत्राङ्गदधारणं कटकमुकुटादिधारणस्याप्युपलक्षणम्। रथोद्धता वृत्तम्॥४९॥

**अभ्रमिति** । तदनु तदनन्तरं असौ दुर्योधनः अभ्रंलिहस्य आकाशस्पर्शिनः । अत्युन्नतस्येति यावत् । वटभूमिरुहः वटवृक्षस्य । तले अधःप्रदेशे स्थित्वा । संगीतभङ्गिषु गानविशेषेषु रसिकं सुशिक्षितं सुराधिपस्य इन्द्रस्य गायकेन्द्रं चित्रसेनं बन्धुवर्गैः सह आकारयन् आह्वयन्निवेत्युत्प्रेक्षा । वीणाशिल्पिनां वैणिकानां गीतरीतिं संगीतभङ्गीं अश्रृणोत् श्रुतवान् । शृणोतेः कर्तरि लङ् ॥ ५० ॥

**तावदिति** । तावत् तदानीं तस्य धार्तराष्ट्रस्य दुर्योधनस्य चेष्टितस्य पाण्डवतिरस्काररूपस्य रौक्ष्यं पारुष्यं निरीक्ष्य नितरां क्रुधा कोपेन अन्धस्य सुधान्धसां देवानां पतेः इन्द्रस्य निदेशेन आज्ञया वनावनिदेशे द्वैतवनभूभागे अवतीर्णः प्रविष्टः तूर्णं सत्वरं यथातथा विधृतानि कृपाणाः खड्गाः बाणाः चापाः कलापाः तूण्यः तनुत्राणि कवचानि च यया तादृशी सेना यस्य तथोक्तः चित्रसेनो नाम गन्धर्वराजः अमूं दुर्योधनसंबन्धिनीं चमूं निवार्य चिरात् क्षुधितः बुभुक्षितः तरक्षुः मृगादनो नाम मृगविशेषः चमूरुततिं हरिणसमूहमिव क्ष्वेलया सिंहनादेन लोलयांचक्रे आकुलीकृतवान् । उपमालंकारः । यत्तु 'तरक्षुः सिंहः' इति नृसिंहः, तन्न । 'जठरज्वलनज्वलताप्यपगतशङ्कं समागतापि पुरः । करिणामरिणा हरिणा हरिणाली हन्यतां तु कथम् ॥' इत्यादिना सिंहस्य हरिणवधोद्यममात्रेऽपि लोकविद्योभयविरुद्धत्वात् । 'तरक्षुस्तु मृगादनः' इति व्याघ्रविशेषपर्यायत्वेन कोशदर्शनाच्चेति ॥

१. 'अस्य' इति पाठः. २. 'अवतीर्णम्' इति पाठः. ३. 'तूर्णम्' इति नास्ति क्वचित्. ४. 'च्चिरम्' इति पाठः. ५. 'क्ष्वेडया' इति पाठः.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



भटेषु धावत्सु भयेन कर्णः क्रुधा हसन्कुञ्जरमञ्जुचारः ।
करेण विस्फारितकालपृष्ठो जगाम शत्रुं जगदेकवीरः ॥ ५१ ॥

स्वसमाननाम्न्यवयवे नटद्गुणाद्धनुषश्च्युतैः [1]स युधि देवगायिनाम् ।
अतिरक्ततां गलतलैकवर्तिनीमखिले वपुष्यपि चकार सायकैः ॥५२॥

गगने शिरश्चलयतः श्रवोञ्चलाद्गलितापि दूरमवतंसमञ्जरी ।
पुनरुन्नमद्भिरिषुपक्षवायुभिः पुरतोऽभवत्कलह[2]भोजिनो मुनेः ॥५३॥

---

भटेष्विति । कुञ्जरस्य गजस्य इव मञ्जुः मनोज्ञः चारः गमनं यस्य सः । जगति एकः मुख्यः स चासौ वीरश्चेति वैवक्षिकविशेष्यभावात्समासः । कर्णः राधेयः भटेषु कौरवसैनिकेषु भयेन धावत्सु पलायमानेषु हसन् एतावदेव भवतां शौर्यं इति परिहसन् सन् । करेण विस्फारितं टङ्कारितं कालपृष्ठं नाम धनुर्येन तथोक्तश्च सन् क्रुधा शत्रुं चित्रसेनं प्रति जगाम प्रत्युद्ययौ ॥ ५१ ॥

स्वेति । स कर्णः स्वेन स्वीयेन नाम्ना समानं अभिन्नं नाम कर्ण इति संज्ञा यस्य तस्मिन् । अवयवे श्रोत्रे नटन् आकर्षणमोचनाभ्यां चलन् गुणः मौर्वी यस्य तस्मात् धनुषः चापात् च्युतैः प्रयुक्तैः सायकैः बाणैः युधि युद्धे देवगायिनां गन्धर्वाणां गलतले कण्ठप्रदेशे एकं केवलं यथातथा वर्तेत इति वर्तिनीम् । 'एके मुख्यान्यकेवलाः' इत्यमरः । अतिरक्ततां अत्यन्तं मुखार्यादि (?) रागमाधुर्यं अतिशोणितत्वं च अखिले वपुष्यपि चकार । सकलं शरीरं रुधिराप्लुतं चक्रे इत्यर्थः । अत्र गलमात्रवर्तिनोऽतिरक्तत्वस्याखिलवपुर्व्याप्तिवर्णनात्पर्यायालंकारः । 'पर्यायो यदि पर्यायेणैकस्यानेकसंश्रयः' इति लक्षणात् । स च गानमाधुर्यशोणितयोः रक्तशब्दश्लेषभित्तिकाभेदाध्यवसायमूलातिशयोक्त्यनुप्राणित इति तयोः संकरः 'रक्तः कण्ठविशेषे स्यादनुरागिणि रञ्जिते । वाच्यवन्नरुणे क्लीवः कुङ्कुमे रुधिरेऽपि च ॥' इति विश्वः । 'नटद्गुणां कर्णे विकसाञ्जनाम्' इति लिङ्गविभक्तिविपरिणामेन योजनीयमित्यपि प्राहुः । मञ्जुभाषिणी वृत्तम् ॥ ५२ ॥

गगन इति । किंच गगने शिरः चलयतः श्लाघाभिः कम्पयतः । अत एव कलहभोजिनो मुनेः नारदस्य श्रवोञ्चलात् श्रोत्राग्रात् दूरं गलितापि । अवतंसमञ्जरी भूषणगुच्छः उन्नमद्भिः ऊर्ध्वं प्रसरद्भिः इषूणां कर्णबाणानां ये पक्षाः कङ्कपत्राणि तेषां वायुभिः पुरः पुरतः नारदस्याग्रे अभवत् अवर्तत । अत्र कर्णावतंसमञ्जर्याः गलितायाः पुनर्नारदाग्रे भवनासंबन्धेऽपि संबन्धोक्तिरूपाया अतिशयोक्तेः लोकोत्तरं कर्णयुद्धमिति प्रतीतेरलंकारेण वस्तुध्वनिः ॥५३॥

---

१. 'सपदि' इति पाठः. २. 'जीविनो' इति पाठः.

हस्तैः प्रवीणैरखिलेऽपि कर्णे सुधां विमुञ्चन्सुरगायिवर्गः ।
अयुक्तमेतत्पुनरत्र कर्णे विपाठवर्षं विससर्ज घोरम् ॥ ५४ ॥

तदनु विश्वातिशायिनो विश्वावसुकुमारस्य शरगणेन सह जवकृते कृतपणबन्ध इव धावति राधेये क्रन्दत्सु कुरुवृन्देषु च सर्वेऽपि गर्वेण गन्धर्वभटाः सुयोधनमायोधनधरणीमध्यभाजं रश्मिभिरववध्य गर्जन्तो रभसवर्जं निर्जरपथमनैषुः ॥

नयत्स्वमुं वैरिषु नाकमार्गं विषादभाजां विपिने कुरूणाम् ।
तत्तादृशि व्रीलभरेऽपि तेषामुत्तानभावं न जहुर्मुखानि ॥ ५५ ॥

---

**हस्तैरिति** । सुरगायिवर्गः गन्धर्वसंघः प्रकृष्टा वीणा येषु तैः युद्धनिपुणैश्च हस्तैः अखिले सर्वस्मिन् कर्णे श्रोत्रे सुधां गानामृतं विमुञ्चन् वर्षन्नपि सन् । अत्र कर्णे अस्मिन्नेकस्मिन् श्रोत्रे राधेये च घोरं विपाठानां बाणविशेषाणां वर्षं विससर्ज । ववर्ष इति यत्, तदेव तत्पुनरयुक्तम् । अत्र सुधावर्षकाद्धस्तात् बाणवर्षवर्णनाद्विरुद्धकार्योत्पत्तिरूपो विषमप्रभेदो राधेयश्रोत्रयोः कर्णशब्दश्लेषभित्तिकाभेदाध्यवसायमूलातिशयोक्त्यनुप्राणित इति द्वयोरङ्गाङ्गिभावेन संकरः । उपजातिर्वृत्तम् ॥ ५४ ॥

**तदन्विति** । तदनु विश्वं धनुर्धरप्रपञ्चं अतिशेत इति विश्वातिशायिनः । विश्वावसुकुमारस्य चित्रसेनस्य शरगणेन सह । जवकृते वेगार्थं कृतः पणबन्धो येन तादृश इवेत्युत्प्रेक्षा । राधेये कर्णेऽपि धावति सति । कुरुवृन्देषु कौरवव्यूहेषु क्रन्दत्सु रुदत्सु सत्सु च । सर्वे गन्धर्वभटाः । अपिस्त्वर्थः । गर्वेण दुरहंकारेण आयोधनधरणीमध्यभाजं युद्धभूमध्यवर्तिनं सुयोधनं रश्मिभिः पाशैः अववध्य गर्जन्तः निर्जरपथं आकाशं प्रति रभसवर्जं मन्दं अनैषुः प्रापयामासुः । युधिष्ठिरादयोऽपि सुयोधनादीनां बन्धनं दृष्ट्वा हर्षमापुयुरिति मन्दमनैषुरिति भावः । रभसवर्जं हर्षशून्यमिति दुर्योधनविशेषणमिति केचित् ॥

**नयत्स्विति** । वैरिषु शत्रुषु गन्धर्वेषु अमुं दुर्योधनं नाकमार्गं आकाशमार्गं प्रति नयत्सु सत्सु । विपिने अरण्ये विषादं दुःखं भजन्तीति तद्भाजां तेषां कुरूणां कौरवाणां मुखानि ( कर्तॄणि ) तत्तादृशि असदृशे व्रीलभरे लज्जातिशये सत्यपि । उत्तानभावं ऊर्ध्वतयावस्थानं न जहुः न मुमुचुः । दुःखेन मुखान्युन्नम्य मुहुर्मुहुरपश्यन् दुर्योधनमित्यर्थः । अत्र नमनकारणस्य लज्जाभरस्य सत्त्वेऽपि तदनुदयवर्णनाद्विशेषोक्तिरलंकारः ॥ ५५ ॥

---

१. 'विपाक्तवर्गम्'; 'विपाक्तवर्षम्' इति च पाठः. २. 'च' इति नास्ति क्वचित्. ३. 'धरणि' इति पाठः. ४. 'रज्जुभिः' इति पाठः. ५. 'मार्गाम्' इति पाठः. ६. 'तादृशे व्रीडभरे' इति पाठः.

तस्यान्तःपुरसुभ्रुवो विगलितैर्बाष्पाम्बुभिः पङ्किले
मार्गे मन्दितवेगपादगतयो वक्षःस्खलत्पाणयः।
आजग्मुस्तमजातशत्रुमजहत्कारुण्यमङ्घ्रिद्वये
कुर्वन्त्यो नमितं ह्रियैव पुरतो दत्तार्धसाह्यं शिरः ॥ ५६ ॥

सगद्गदमेवमभिदधुश्च ॥

संद्रष्टुं तव पादमूलमधुना सर्वैः समं बन्धुभि-
र्देव भ्रातरमागतं वनतले लेशेन हेतोर्विना।
पापः कश्चन गायको दिविषदां हा हन्त बद्ध्वा दृढं
निःशङ्कैरुपवीणितो निजभटैरभ्रं नयत्युच्चकैः ॥ ५७ ॥

तदद्य नः कण्ठभुवि स्नुषाणां तवैव पादं शरणं गतानाम्।
वास्तव्यतां[1] मङ्गलसूत्रिकायाः प्रसीद दातुं प्रथमानकीर्ते ॥ ५८ ॥

---

**तस्येति** । विशेषेण गलितैः वाष्पाम्बुभिः पङ्किले कर्दमवति मार्गे आरण्यके मन्दितः वेगः यस्यास्तादृशी पादयोर्गतिः गमनं यासां ताः । वक्षसि स्खलन्तौ प्रहरन्तौ पाणी यासां ताः । उभयत्र दुःखातिरेकादिति भावः । तस्य दुर्योधनस्य अन्तःपुरे सुभ्रुवः स्त्रियः तं आत्मीयभर्तृकृतराज्यभ्रंशं अथापि अजहत् अविच्छिद्यमानं कारुण्यं दीनार्तिहरणरूपं यस्य तं अजातशत्रुं धर्मराजं प्रतीति प्रस्तुतोचितनिर्देशोऽयम् । पुरतः प्रणामात्पूर्वमेव ह्रिया लज्जया भङ्गजन्यया नैसर्गिकया च दत्तमर्धं साह्यं सहायकृत्यं यस्य तथोक्तं शिरः । अङ्घ्रिद्वये तत्पादयुग्मे नमितं कुर्वन्त्यः प्रणमन्त्यः सत्यः आजग्मुः प्रापुः । शरणं गता इत्यर्थः । अत्राजहत्कारुण्यस्य कौरवीणां धर्मराजप्राप्तिहेतुत्वात् काव्यलिङ्गभेदः । शार्दूलविक्रीडितवृत्तम् ॥ ५६ ॥

**सगद्गदमिति** । किंच सगद्गदं सदुःखस्खलद्वाक्यं यथातथा एवं वक्ष्यमाणप्रकारेण । अभिदधुः विज्ञापयामासुः । ता इति शेषः ॥

विज्ञप्तिप्रकारमेवाह द्वाभ्याम्—**संद्रष्टुमिति** । अधुना अस्मिन्नहनि । हे देव स्वामिन्, तव पादमूलं सम्यक् द्रष्टुं सर्वैः बन्धुभिः अस्मदादिभिः समं आगतं भ्रातरं युष्मदनुजं दुर्योधनं वनतले पापः दुरात्मा कश्चन दिविषदां गायकः गन्धर्वः हेतोर्लेशेन विना अपराधरूपकारणलेशं विनापि । हा हन्तेत्यपि खेदे । दृढं बद्ध्वा निःशङ्कैः अकुतोभयैः निजभटैः गन्धर्वैः उच्चकैः गम्भीरं यथा तथा उपवीणितः वीणागानेन सह स्तुतः सन् । अभ्रं आकाशं प्रति नयति । 'ओदनं पक्त्वा भुङ्क्ते' इत्यादिवद्दुर्योधनस्यैव नयनकर्मत्वम् । शार्दूलविक्रीडितवृत्तम् ॥५७॥

**तदिति** । तत् तस्मात् कारणात् हे प्रथमानकीर्ते वर्धमानयशः, तवैव ।

---

१. 'वास्तव्यता' इति पाठः.

इति ताभिर्दीनभावं पुरोधाय निवेदितस्य राज्ञो निदेशेन निर्गत्य सत्वरमनुधावतां भ्रूदण्डमिव कोदण्डमपि कोपेन कुटिलीकुर्वतां भीमप्रभृतीनां क्ष्वेलितविस्फारिताभ्यां तत्क्षणं वियदखिलं विकस्वरनिजगुणमासीत् ॥

अर्जुनस्त्वेवमुवाच ॥

क्व गायका यूयमुपात्तवीणाः क्व चापधुर्याः कुरुवंशभूपाः ।
अहो रणे चापलमीदृशं वः स्वमूलकं वा परमूलकं वा ॥ ५९॥
वृषाङ्कमौलेर्व्रणचिह्नदायी वने जनोऽस्मिन्वसतीति वार्ता ।
पपात कर्णे भवतां न किंचिद्यदीदृशं साहसमातनुध्वे ॥ ६० ॥

---

त्वत्तुल्यस्य करुणाकरस्यान्यस्य लोके दुर्लभत्वादिति भावः । पादं शरणं रक्षितारं गतानां प्राप्तानां स्नुषाणां भ्रातृवधूनां नः अस्माकं कण्ठस्य भुवि देशे । मङ्गलसूत्रिकायाः माङ्गल्यसूत्रस्य वास्तव्यतां नैरन्तर्येण स्थितिं दातुं प्रसीद अनुग्रहं कुरु ॥ ५८ ॥

इतीति । इत्युक्तप्रकारं दीनानां भावो दैन्यं पुरोधाय अग्रे कृत्वा । सदैन्यमिति यावत् । ताभिः दुर्योधनान्तःपुरिकाभिः निवेदितस्य विज्ञापितस्य राज्ञः धर्मराजस्य निदेशेन आज्ञया निर्गत्य पर्णशालातो बहिरागत्य सत्वरं अनुसृत्य धावतां कोपेन भ्रूः दण्ड इव तमिव कोदण्डं चापमपि । तं च तं चेत्यर्थः । कुटिलीकुर्वतां वक्रं कुर्वताम् । एकत्र भ्रुकुटीरचनेन, अन्यत्र गुणाकर्षणेन चेति भावः । भीमः प्रभृतिः आदिः येषां तेषां भीमार्जुननकुलसहदेवानां क्ष्वेलितविस्फाराभ्यां सिंहनादचापनादाभ्यां तस्मिन्नेव क्षणे तत्क्षणम् । धर्मराजाज्ञाक्षण एवेत्यर्थः । अत्यन्तसंयोगे द्वितीया । अखिलं वियत् आकाशं विकस्वरः प्रवृद्धः निजः स्वीयश्च गुणः शब्दः यस्मिन् तादृशं आसीत् । 'निजमात्मीयनित्ययोः' इति विश्वः । 'शब्दगुणकमाकाशम्' इति तार्किकाः ॥

'अर्जुनस्त्वेवमुवाच' इति क्वचित्पुस्तकेषु पाठः । एवं वक्ष्यमाणप्रकारेण ॥

क्वेति । उपात्ता हस्ते धृता वीणा यैस्ते । अनाघ्रातचापगन्धा इत्यर्थः । हे गायकाः, यूयं क्व । चापधुर्याः धनुर्धुरिणाः कुरुवंशभूपाः वयं क्व । अतः रणे युद्धे ईदृशं वः युष्माकं चापलं तृष्णा स्वं स्वीयालोचनमेव मूलं यस्य तथोक्तं तत्कं वा उत परंपरालोचनं मूलं यस्य तथोक्तं वा । अहो इत्याश्चर्ये । अविवेककृतत्वादाश्चर्यम् । नेदं वीणाभिर्गानम्, किंतु शरैः शरीरतक्षकं युद्धमित्यर्थः । उपेन्द्रवज्रा वृत्तम् ॥ ५९ ॥

वृषेति । वृषाङ्कस्य शंभोरपि मौलौ व्रणेन चिह्नं ददातीति दायी । जनः

---

१. 'विकस्वरम्' इति पाठः. २. 'अर्जुनस्त्वेवमुवाच' इति नास्ति क्वचित्. ३. 'अर्जुनः' इति पाठः.

भ्राताधुनासौ न विसृज्यते चेत्तथात्र संनह्यतु गाण्डिवो मे ।
यथा महेन्द्रः परिगृह्य वीणां स्वबाहुकीर्तिं स्वयमेव गायेत् ॥६१॥

इति विजयस्य वीरवादेन पुनरपि निवर्तमानैर्वीणामंसेषु निबध्य बाणासनमेव करे कूजयद्भिस्तैर्नभश्चरैः सममेषां सकलवैमानिकपरिषदङ्गरुहवितीर्णनिद्राभङ्गो महान्संगरोऽभूत् ॥

गम्भीरगाण्डिवगुणाद्गलितैः पृषत्कै-
र्गण्डस्थले हृदि भुजे गमितव्रणास्ते ।
गर्वं विहाय चकिता गगनान्तराले
गन्धर्वभावसदृशं गमनं वितेनुः ॥ ६२ ॥

---

अर्जुनः अस्मिन्वने वसतीत्युक्तप्रकारा वार्ता वृत्तान्तः । हे गायकाः, भवतां कर्णे किंचित् स्वल्पमपि न पपात न प्रविष्टवती । भवद्भिर्न श्रुतेत्यर्थः । यत् यस्मात् ईदृशं बद्ध्वा भ्रातुर्नयनरूपं साहसं अविचारितकृत्यं आतनुध्वे कुरुध्वे । तस्मान्न पपातेति योज्यम् । अत्रोत्तरवाक्यार्थस्य पूर्ववाक्यार्थं प्रति हेतुत्वात् काव्यलिङ्गभेदः ॥ ६० ॥

**भ्रातेति** । किंच असौ नीयमानः मे भ्राता दुर्योधनः अधुना न विसृज्यते चेत् न त्यज्यते यदि । युष्माभिरिति शेषः । तर्ह्यत्र इदानीं मे मम गाण्डिवः चापः तथा संनह्यतु उद्युक्तो भवतु, यथा महेन्द्रः देवेन्द्रः स्वयोः स्वीययोः बाह्वोः कीर्तिं दानक्षात्रजन्यां स्वयमेव वीणां परिगृह्य गायेत् स्तुवीत । मद्गाण्डिवो युष्मान्निःशेषीकरोतीत्यर्थः । अत्र इन्द्रकर्तृकवीणागानरूपाप्रस्तुतकार्यवर्णनेन गन्धर्ववधस्य प्रस्तुतस्य प्रतीतेः कार्यनिबन्धनाऽप्रस्तुतप्रशंसाभेदः । उपजातिर्वृत्तम् ॥ ६१ ॥

**इतीति** । इत्युक्तप्रकारेण विजयस्य अर्जुनस्य वीरवादेन पुनरपि निवर्तमानैः प्रत्यागच्छद्भिः अंसेषु भुजशिखरेषु वीणाम् । इति जात्येकवचनम् । निबध्य बाणासनं चापमेव । नतु वीणामित्यर्थः । करे कूजयद्भिः गुणाकर्षणेन टङ्कारयद्भिः तैर्नभश्चरैः समं गन्धर्वैः सह एषां भीमादीनां सकलानां वैमानिकानां देवसाध्यादीनां परिषदः समाजस्य अङ्गरुहेभ्यः लोमभ्यः वितीर्णः दत्तः निद्राया भङ्गः उद्बोधः येन तथोक्तः । अत्याश्चर्योत्कृतरोमाञ्च इत्यर्थः । महान् संगरः युद्धं अभूत् ॥

**गम्भीरेति** । गम्भीरस्य महतः गाण्डिवस्य धनुषः गुणात् मौर्व्याः गलितैः प्रयुक्तैः पृषत्कैः बाणैः गण्डस्थले हृदि वक्षसि भुजे च गमितानि प्रापितानि व्रणानि येषां तथोक्ताः ते गन्धर्वाः गर्वं युद्धाहंकारं विहाय चकिताः भीताः सन्तः गगनान्तराले आकाशमध्ये गन्धर्वभावस्य अश्वत्वस्य सदृशं अनुरूपं गमनम् । पला-

---

१. 'करे' इति नास्ति क्वचित्.

वीणाः समस्ता विजयेन कृत्ता गन्धर्वसैन्याद्गलिता निपेतुः ।
आयुष्मती केवलमाललोके हस्ताग्रवीणा दिवि नारदस्य ॥ ६३ ॥

एतावतीति युधि मार्गणचारशक्तिः
स्पष्टीबभूव सुरगायकपाण्डवानाम् ।
तेषां ययुः शरकुलानि हि लक्ष्यमात्रं
लक्ष्यं विभिद्य पुनराययुरन्तमेषाम् ॥ ६४ ॥

तत्र शक्रसुतस्य तादृशं विक्रममभिनन्द्य कृतसंधानेन गन्धर्वराजेन समर्पितं पौरुषहीनमिदं न पुरस्करणीयमिति बन्धनमिषेण पश्चादुपनीतबाहुयुगुलं सुयोधनमादाय ते भीमादयो वसुधाधिपस्य संनिधिं प्रत्यनयन् ॥

---

यनमिति यावत् । वितेनुः चक्रुः । 'वाजिवाहार्वगन्धर्व–' इत्यश्वपर्यायेष्वमरः । अत्र गकारस्य बहूनामादित्वेन ग्रहणाच्छेकानुप्रासः ॥ ६२ ॥

**वीणा इति ।** विजयेन अर्जुनेन कृत्ताः छिन्नाः अतएव गन्धर्वसैन्यात गलिताः समस्ता वीणाः गान्धर्व्यः निपेतुः पतन्ति स्म । भुवीति शेषः । परंतु नारदस्य मुनेः हस्ताग्रे वीणा केवलं महल्लेवैका दिवि आकाशे आयुष्मती अच्छिन्ना सती आललोके दृष्टा । लोकैरिति शेषः । अतिशयोक्तिः ॥ ६३ ॥

**एतावतीति ।** सुरगायकानां गन्धर्वाणां पाण्डवानां च उभयेषां संबन्धिनी मार्गणानां चारे संचारणे शक्तिः सामर्थ्यं एतावती इयतीति युधि युद्धे स्पष्टीबभूव स्पष्टाभूत् । हि यतः तेषां गन्धर्वाणां शरकुलानि बाणवृन्दानि लक्ष्यमात्रं ययुः शरव्यं प्रापुरेव । न तु तद्भीत्या तदन्तिकमाययुरित्यर्थः । एषां पाण्डवानां शरकुलानि तु लक्ष्यं विभिद्य अन्तं एतत्समीपं प्रति पुनराययुः आगतानि । ततः स्पष्टीबभूवेति योज्यम् । अत्र लक्ष्यप्राप्तिमात्रेण लक्ष्यभेदनपुनरन्तिकागमनाभ्यां च गन्धर्वपाण्डवबाणसंचारणशक्त्योः स्वल्पत्वमहत्त्वानुमानादनुमानद्वयसजातीयत्वेन संसृष्टम् । उत्पतिता बाणाः अधः पुनः पतन्ति, अधःपतिताश्च पुनर्नोत्पतन्तीति तत्तत्त्वम् ॥ ६४ ॥

**तत्रेति ।** तत्र तस्मिन् युधि तादृशं असदृशं शक्रसुतस्य अर्जुनस्य विक्रमं पराक्रमं अभिनन्द्य श्लाघित्वा कृतं संधानं संधिः येन तेन गन्धर्वराजेन चित्रसेनेन समर्पितं प्रत्यर्पितं पौरुषेण शौर्येण हीनं शून्यं इदं भुजयुगुलं न पुरस्करणीयं नाग्रे स्थापनीयमिति हेतोः बन्धनस्य गन्धर्वकृतस्य मिषेण व्याजेन पश्चात् पृष्ठतः उपनीतं प्रापितं बाह्वोर्युगुलं येन तथोक्तमिव स्थितमिति गम्यसापह्नवो-

---

१. 'बभूवुः' इति पाठः. २. 'आस लोके' इति पाठः. ३. 'परिहीनम्' इति पाठः. ४. 'बन्धमिषेण' इति पाठः. ५. 'अधिरोपयामासुः' इति पाठः.

तं वीक्ष्य तत्र तरुमावरणं भजन्ती
सा पार्षती सविधवल्लिपरम्परासु ।
हासैः कराङ्गुलिविलादसकृद्गलद्भि-
राकालिकीं कुसुमपङ्क्तिमिव व्यतानीत् ॥ ६५ ॥

वीरव्रातैस्त्रिभुवनतले विश्रुते नः कुलेऽस्मि-
न्नुत्पद्य त्वं बहुभिरनुजैरास्थितोऽप्याधिपत्यम् ।
एवं भङ्गं किमिह भजसे वत्स नीचैः प्रणीतं
राजन्यानां परपरिभवो राजयक्ष्मा हि कीर्तेः ॥ ६६ ॥

इत्थं निगद्य सरलेन युधिष्ठिरेण
बन्धाद्विमुच्य बकविद्विषता विसृष्टः ।
मानं च्युतं मृगयमाण इवातिनम्रो
वाचंयमेन स ययौ महता बलेन ॥ ६७ ॥

---

त्प्रेक्षा । सुयोधनं आदाय ते भीमादयो भीमार्जुननकुलसहदेवाः वसुधाधिपस्य राज्ञो युधिष्ठिरस्य संनिधिं समीपं प्रत्यनयन् प्रापयन्ति स्म ॥

**तमिति ।** सा तथा तैरपकृतत्वेन प्रसिद्धा पार्षती द्रौपदी तरुं वृक्षं आवरणं भजन्ती कुर्वती सती तत्र राज्ञः समीपे तं दुर्योधनं वीक्ष्य करस्य वक्त्रे निहितस्य अङ्गुलीनां विलात् मध्यात् असकृत् बहुवारं गलद्भिः प्रसरद्भिः हासैः सविधवल्लीनां समीपलतानां परम्परासु पङ्क्तिषु । अकाले अपर्तुभवां आकालिकीं कुसुमपङ्क्तिं व्यतानीत् जनयामासेवेत्युत्प्रेक्षा । भृशं जहासेत्यर्थः । महतामवमन्तारो दैवादवमानं भजन्ति मरणादप्यधिकमिति हासप्रकारः ॥ ६५ ॥

**वीरेति ।** हे वत्स, त्वं वीराणां लोकैकशूराणां कुरुपूरुप्रभृतीनां व्रातैः वृन्दैः त्रिभुवनतलेऽपि विश्रुते प्रसिद्धे नः अस्माकं संबन्धिनि अस्मिन् वंशे चान्द्रे बहुभिः नवोत्तरवत्या अनुजैः सह उत्पद्य संभूय, किंच आधिपत्यं प्रभुत्वमपि आस्थितः । चतुरङ्गबलसमेतोऽपि सन्नित्यर्थः । नीचैः हीनैः गन्धर्वैः प्रणीतं प्रापितं एवं परिदृश्यमानप्रकारं भङ्गं पराभवं इह इदानीम् । किमिति जुगुप्सायाम् । भजसे वहसे इति काकुः । अनुचितमित्यर्थः । कुतः । हि यस्मात्कारणात् । राजन्यानां राज्ञां परैः परिभवः तिरस्कारः कीर्तेः राजयक्ष्मा क्षयरोगः । कीर्तिनाशक इत्यर्थः । मन्दाक्रान्ता वृत्तम् ॥ ६६ ॥

**इत्थमिति ।** सरलेन उदारेण युधिष्ठिरेण इत्थं उक्तप्रकारं निगद्य उक्त्वा

---

१. 'भवैः' इति पाठः. २. 'संस्तुते' इति पाठः. ३. 'उद्भूय त्वम्' इति पाठः. ४. 'विमोच्य' इति पाठः.

यं प्रायं बहुमिच्छन्ति जना जीवितुमुत्सुकाः ।
उपाविक्षत्तमेवासौ पथि प्राणान्समुज्झितुम् ॥ ६८ ॥

तस्मिन्व्रते स्वपनलब्धसुरारिसाह्य-
स्त्यागे तनोस्तदनु बन्धुतया निषिद्धः ।
तस्माद्वनात्पुनरपि प्रतिपद्य धैर्यं
घुष्यद्बलो निववृते कुरुराजधानीम् ॥ ६९ ॥

तत्र खलु ।

कदापि मा बन्धय गायकैर्मामितीव हव्यैरमृतायमानैः ।
संप्रीणयन्निन्द्रमथाभिमानी स पौण्डरीकं क्रतुमाजहार ॥ ७० ॥

---

बकविद्विषता भीमेन बन्धात् गन्धर्वकृतात् विमुच्य मोचयित्वा विसृष्टः अनुज्ञातः स दुर्योधनः । च्युतं मानं मृगयमाणः । विचिन्वन्निवेत्युत्प्रेक्षा । अतिनम्रः सन् । वाचंयमेन लज्जया परिहृतक्ष्वेलितवाद्यरवेण महता बलेन सह ययौ गतवान् ॥ ६७ ॥

यमिति । जीवितुमुत्सुकाः चिरजीवनेच्छवः जनाः यं प्रायं वयः बहुं अनेकवार्षिकं इच्छन्ति । तमेव प्रायं निरशनव्रतं च । प्राणान् समुज्झितुं त्यक्तुं असौ दुर्योधनः पथि मार्गे उपाविक्षत् प्रविष्टवान् प्रायोपवेशं चक्रे । विशेः कर्तरि लुङ् । 'प्रायो वयसि बाहुल्ये तुल्यानशनमृत्युषु' इति वैजयन्ती । अत्र प्रायशब्दश्लेषभित्तिकालब्धवयोनिरशनव्रतद्वयाभेदातिशयोक्त्या दीर्घजीवनहेतोरेव सद्यो जीवननाशत्वरूपस्य व्याघातालंकारस्योज्जीवनात् द्वयोरङ्गाङ्गिभावेन संकरः । 'स्याद्व्याघातोऽन्यथाकारि तथाकारि क्रियेत चेत्' इति लक्षणात् ॥ ६८ ॥

तस्मिन्निति । तदनु दुर्योधनः तस्मिन् व्रते प्रायोपवेशे स्वपने स्वप्ने लब्धं सुरारीणां अलम्बुसादीनां साह्यं युद्धे साहाय्यं येन तथोक्तः सन् । बन्धुतया बन्धुसमूहेन तनोस्त्यागे विषये निषिद्धः निवारितश्च सन् । धैर्यं प्रतिपद्य तस्माद्वनात् द्वैताख्यात् । पुनरपि घुष्यद्बलः शब्दायमानचतुरङ्गबलः सन् । कुरुराजधानीं हास्तिनपुरं प्रति निववृते प्रत्यागतवान् ॥ ६९ ॥

तत्र कुरुराजधान्याम् । खल्विति उत्तरेण संबध्यते । इतीदं क्वाचित्कं गद्यमुत्तरत्र अथशब्देन संदर्भविरुद्धमपि व्याख्यातम् ॥

कदेति । अथ कुरुपत्तनप्राप्त्यनन्तरं अभिमानी मानधनः अतएव स दुर्योधनः हे इन्द्र, इतः परं कदापि गायकैः गन्धर्वैः मां मा बन्धय इति अमृतवन्मधुरायमाणैः अमृतायमानैः हव्यैः आज्यपुरोडाशादिभिः इन्द्रं संप्रीणयन् संतोषयन्निवेत्युत्प्रेक्षा । पौण्डरीकं नाम क्रतुं यागं आजहार कृतवान् ॥ ७० ॥

---

१. बहु, मन्यते' इति पाठः.

भूपोऽपि तां वनभुवं प्रविहाय भेजे
भूयः स काम्यकतपोवनमण्डलानि ।
किर्मीरनाशमुदिताखिलतापसौघ-
स्वाध्यायघोषमुखरीकृतदिङ्मुखानि ॥ ७१ ॥

मृदुभिर्वनवल्लिकन्दमूलैर्विहितातिथ्यविधिः स तत्र पार्थः ।
स्थितिमाचरति स्म हृष्टचेतास्तृणबिन्दोर्वचने तपोवने च ॥ ७२ ॥

प्रासूत या सदसि पट्टपटीरसंख्याः
सैषा समागतवतीति सकौतुकाक्ष्यः ।
वेणीधरामुटजसीमनि याज्ञसेनीं
विस्मित्य वल्कलवसं ददृशुर्गृहिण्यः ॥ ७३ ॥

---

**भूप इति** । सः तादृगपकारिण्यपि करुणाकरत्वेन प्रसिद्धः भूपः धर्मराजोऽपि तां वनभुवं द्वैतवनप्रदेशं प्रविहाय । किर्मीरस्य रक्षसः नाशेन भीमकृतेन मुदितस्य तुष्टस्य । अकुतोभयस्येति यावत् । अखिलतापसानां ओघस्य मुनिसङ्घस्य स्वाध्यायघोषैः वेदाध्ययनकोलाहलैः मुखरीकृतानि शब्दायमानानि दिशां मुखानि अग्रभागाः येषां तानि काम्यके नाम वने तपोवनानां आश्रमाणां मण्डलानि समूहान् भूयः भेजे पुनः प्राप्तवान् ॥ ७१ ॥

**मृदुभिरिति** । तत्र काम्यकतपोवनेषु स पार्थः धर्मराजः मृदुभिः कोमलैः संप्रति पूर्वं दत्तैर्वा वनवल्लीनां कन्दैः मूलग्रन्थिभिः मूलैश्च विहितः कृतः आतिथ्यविधिः अतिथिपूजा यस्य तथोक्तः सन् । तत्रत्यैर्मुनिभिरिति शेषः । तृणबिन्दोर्नाम मुनेः वचने अत्र स्थेयमित्याज्ञारूपे तपोवने तदाश्रमे च स्थितिं आज्ञानतिलङ्घनं वासं च आचरति स्म कृतवान् । औपच्छन्दसिकवृत्तम् ॥ ७२ ॥

**प्रासूतेति** । या द्रौपदी सदसि द्यूतसभायां असंख्याः पट्टपटीः कौशेयानि प्रासूत अजनयत् सैषा द्रौपदी समागतवतीत्युक्तप्रकारेण सकौतुकानि द्रष्टुमुत्सुकानि अक्षीणि यासां ताः सकौतुकाक्ष्यः गृहिण्यः मुनिपत्न्यः । उटजसीमनि पर्णशालायां वेणीधरां दुःशासनवधपर्यन्तं धृतवेणीं वल्कलं वस्ते परिधत्ते नियमायेति वल्कलवसं अतएव याज्ञसेनीं द्रौपदीं विस्मित्य आश्चर्यं कृत्वा । ददृशुः । असंख्येयकौशेयजनन्या अप्यहो नियमाय वल्कलधारणमित्याश्चर्येणापश्यन्नित्यर्थः । अत्र पट्टपटीजनन्या वल्कलधारणस्य विशेषणगत्या साश्चर्यदर्शनं प्रति हेतुत्वात्काव्यलिङ्गभेदः ॥ ७३ ॥

तत्तादृक्षे करेऽस्या विविधवनभवं कन्दमूलोपहारं
दातुं लज्जापयोधेस्तलमभिममृशुर्धर्मदारा मुनीनाम् ।
यस्य स्पर्शानुभावादविरतमुदितैः पायसैरेव दिव्यैः
किंचिद्भाण्डं वनान्ते तनुमतिथिजनस्यातनोदन्यथार्थाम् ॥ ७४ ॥

[२]दिशि दिशि मृगयायै तेषु यातेषु जातु
स्वयमुटजमवाप्तः सोम[३]केन्द्रात्मजायाः ।
लपनशशिमहिम्ना लङ्घयामास वेलां
तरलितमकराङ्कस्तत्क्षणं सिन्धुराजः ॥ ७५ ॥

---

तदिति । तं तमिव पश्यतीति तादृक्षः । कञ्प्रकरणे 'क्सोऽपि वाच्यः' इति क्से 'व्रश्च–' इत्यादिना षत्वे 'षढोः कः सि' इति कत्वे 'आदेशप्रत्यययोः' इति षत्वम् । 'आ सर्वनाम्नः' इति दीर्घश्च । तस्मिन् वक्ष्यमाणप्रभावेणासदृशे अस्या द्रौपद्याः करे विविधं वनेभवं चेति वैवक्षिकविशेषणविशेष्यभावात् समासः । कन्दमूलमेव उपहारं अशनं दातुं मुनीनां धर्मदाराः धर्मपत्न्यः । लज्जैव पयोधिः तस्य तलं अधोभागं अभिममृशुः स्पृशन्ति स्म । अतिलज्जिता बभूवुरित्यर्थः । यस्य द्रौपदीकरस्य स्पर्शेन योऽनुभावः माहात्म्यं तस्मात् अविरतं अक्षयं यथा तथा उदितैः आविर्भूतैः दिव्यैः अमानुषैः पायसैः परमान्नैरेव नतु शाकपाकादिभिरित्यर्थः । किंचित् अतिस्वल्पमपि भाण्डं अर्कदत्तं पात्रं वनान्ते अतिथिजनस्य तनुं शरीरं अन्यथा किंचित्त्वविरुद्धः अर्थः महत्त्वात्मकः यस्यास्तथोक्तां अतनोत् चक्रे । तत्तादृक्ष इति संबन्धः । अत्रोत्तरवाक्यार्थस्य लज्जापयोधिमज्जनहेतुत्वात्काव्यलिङ्गभेदः । अस्य चार्थौदार्यवर्णनात्मकोदात्तालंकारेण सहैकवाचकानुप्रवेशसंकरः । स्पर्शानुभावाविरतान्नोदययोर्हेतुहेतुमतोरुक्त्यात्मकेन हेत्वलंकारेण चाप्युक्त एव संकर इति च प्राहुः ॥ ७४ ॥

दिशीति । जातु कदाचित् तेषु युधिष्ठिरादिषु सर्वेषु मृगयायै मृगयां कर्तुं इति । 'क्रियार्थ–' इत्यादिना चतुर्थी । दिशि दिशि प्रतिदिशं यातेषु गतेषु सत्सु । उटजं पर्णशालां अवाप्तः प्राप्तः सिन्धुराजः सैन्धवः समुद्रश्च । 'देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्' इत्यमरः । एकत्र सिन्धुर्देशोऽपरत्र सरिदिति विवेकः । सोमकेन्द्रात्मजायाः द्रौपद्याः लपनं मुखमेव शशी चन्द्रः तस्य महिम्ना प्रभया तत्क्षणं सद्यः तरलितः मकराङ्कः मन्मथः यस्य तथोक्तः सन् । आकुलिता ग्राहचिह्नश्च वेलां मर्यादां कूलं च लङ्घयामास अतिक्रान्तवान् । तां बलाद्गृहीतवानित्यर्थः । अत्र चन्द्रचन्द्रिकया आकुलितग्राहं समुद्रस्य कूललङ्घनरूपमर्थान्तरं ध्वनिरेव न श्लेषः । 'सर्वत्राद्यद्वये नान्त्ये' इति तन्निषेधात् । मालिनी वृत्तम् ॥ ७५ ॥

---

१. 'स्यादिविध' इति पाठः. २. एतत्पूर्वम् 'तत्रान्तरे' इति क्वचित्. ३. 'सोमकेन्द्रस्य पुत्र्याः' इति पाठः.

ततः क्रन्दन्तीं[1] कुररीमिव निन्दन्तीमेनां पुरस्तादधिरोप्य सूतकरतोत्रदण्डाध्यापितवेगतन्त्रपारीणरथ्येन घनतरजघन[2]पयोधरभाराक्रमणविनम्रीकृत[3]पूर्वभागतया पार्थदर्शनशङ्कया निकुञ्जीभूयेव धावता शताङ्गेन निमिषचूषितपरिणाहवनीपथं जयद्रथं पुनरप्याश्रमपदमाश्रित्य निशमितप्रमदावार्तेन पार्थेन[4] दावार्तेनेव पूर्वजेन नियुक्तौ जटारिकिरीटिनौ रोषविद्रुमलताकिसलयैरिव लोचनैः शरासनं विकीर्य[5] मृगयानिवृत्तमात्रेण[6] चरणेन द्रुतमन्वद्रवताम्[7] ॥

ततः क्षणादेव कर्णपूरवन[8]कुसुमसौरभजिघ्रत्सिञ्जिनीकेन धनंजयेन

---

**तत इति** । ततः ग्रहणानन्तरं कुररीं उत्क्रोशपक्षिणीमिव क्रन्दन्तीं निन्दन्तीं 'किमनुचितमेवं करोषि कुलाधम धिक्, त्वाम्' इति कुत्समानां एनां द्रौपदीं पुरस्तात् रथस्य पूर्वभागे अधिरोप्य उपवेश्य सूतस्य सारथेः करे तोत्रदण्डेन कशया अध्यापितस्य शिक्षितस्य वेगस्यैव तन्त्रस्य शास्त्रस्य पारीणाः पारंगताः । अतिवेगवन्त इति यावत् । रथस्य वोढारः रथ्याः अश्वाः यस्य तेन घनतरस्य अतिमहतः जघनपयोधरस्य कटिपुरोभागस्य कुचयोश्च भारस्य आक्रमणेन व्याप्त्या विशेषेण नम्रीकृतः भुग्नीकृतः पूर्वभागः अग्रदेशः यस्य तस्य भावः तत्ता तया हेतुना पार्थानां मृगयायाः प्रतिनिवर्तमानानां दर्शनस्य शङ्कया वितर्केण भयेन वा निकुञ्जीभूय ह्रस्वीभूय धावता पलायमानेनेव स्थितेनेत्युत्प्रेक्षा । शताङ्गेन रथेन निमिषेण पक्ष्मपातमात्रकालेन चूषितः अतिक्रान्तः परिणाहो विशालः वनीपथः अरण्यमार्गः येन तं जयद्रथं सैन्धवम् । उद्दिश्येत्यर्थः । आश्रमपदं प्रति पुनरप्याश्रित्य प्राप्य । निशमिता श्रुता प्रमदायाः द्रौपद्याः वार्ता सैन्धवेनापहरणरूपा येन तेन । अतएव दावेन वनाग्निना आर्तेन पीडितेनेव स्थितेनेत्युत्प्रेक्षा । पूर्वजेन ज्येष्ठेन युधिष्ठिरेण । पूर्वमागतेनेति भावः । नियुक्तौ प्रेरितौ जटारिः भीमः किरीटी अर्जुनश्च उभौ । रोष एव विद्रुमलता तस्याः किसलयैः पल्लवैरिव स्थितैरित्युत्प्रेक्षा । लोचनैः शरासनं चापं विकीर्य । सैन्धववधाय क्रोधारुणं दृष्ट्वेत्यर्थः । मृगयायाः निवृत्तमात्रेण आगतेनैव । न तु क्षणं विश्रान्तेनेत्यर्थः । चरणेन द्रुतं शीघ्रं अन्वद्रवतां अन्वधावताम् । उत्प्रेक्षात्रयस्य सजातीयस्य संसृष्टिः ॥

**तत इति** । ततः अनुधावनानन्तरं क्षणादेव कर्णपूरस्य कर्णावतंसस्य वनकुसुमस्य सौरभं परिमलं जिघ्रती सिञ्जिनी मौर्वी यस्य तेन । आकर्णाकृष्टधनुर्गुणेनेत्यर्थः । धनंजयेन अर्जुनेन सपत्राकृतः पुङ्खपर्यन्तमन्तर्मग्नबाणीकृतः । अत

---

१. 'रुदतीम्' इति पाठः. २. 'तज्जघन' इति पाठः. ३. 'भूत' इति पाठः. ४. 'पार्थेन' इति नास्ति क्वचित्. ५. 'अवकीर्य' इति पाठः. ६. 'मृगयाविहारनिवृत्त' इति पाठः. ७. 'अन्वदुद्रुवताम्' इति पाठः. ८. 'वन' इति नास्ति क्वचित्.

सपत्राकृतो धृतत्रासतया विनयविपर्ययो विद्यामिव कृष्णां विमुच्य कृतपलायनः स दुर्मेधाः पुरःप्रधावितेन मागधविरोधिना रुरुधे ॥

कचे गृहीत्वा भुवि पातितस्य कठोरचारित्रपरस्य शत्रोः ।
संताडने मारुतिरात्मपाणेः सच्छात्रयामास पदं च वामम् ॥ ७६ ॥

सौवीरभर्तुरथ मूर्धनि पञ्चचूडाः
क्लृप्ताः क्षुरेण पवनात्मभुवा विरेजुः ।
इङ्गालधूमकलिका इव शाम्यतोऽन्त-
स्त्रासाम्बुभिः स्मरशरानलपञ्चकस्य ॥ ७७ ॥

विमतमनुजनीतं वीक्ष्य भूपः स्मितास्यः
कृतनतिशिरसं तं केशभारे हृतेऽपि ।

एव दुर्मेधाः दुष्टबुद्धिः स सैन्धवः धृतः त्रासः भयं येन तस्य भावस्तत्ता तया हेतुना कृष्णां द्रौपदीं विनयविपर्ययः विनयराहित्यं विद्यामिव विमुच्य त्यक्त्वा कृतपलायनः सन् पुरः स्वतोऽप्यग्रे प्रधावितेन मागधस्य जरासंधस्य विरोधिना भीमेन रुरुधे निरुद्धः । रुधेः कर्मणि लिट् । यत्तु 'सापत्रपीकृतः' इत्यपपाठं कल्पयित्वा 'लज्जान्विततया कारितः' इति 'विनयविपर्ययः विनयरहितः पुरुषः' इति च नृसिंहः प्रललाप, तदबोधात् कर्णपूरेत्याद्यर्जुनविशेषणवैयर्थ्यापत्तेर्विपर्ययशब्देन व्युत्पत्त्यन्तरं विना तद्वतो बोधायोगात् । व्युत्पत्त्यन्तरे च क्लिष्टत्वदोषापत्तेश्चेति विद्वच्छिखामणिभिराकलनीयम् । 'सपत्रनिष्पत्रादतिव्यथने' इत्यनेन करोतियोगे डाज्विधानात्सपत्राकृत इति रूपम् ॥

कच इति । मारुतिः भीमः कठोरे अतिनिन्द्ये चारित्रे कर्मणि परस्य सक्तस्य अतएव कचे केशे । जात्येकवचनम् । शिखायामिति वा गृहीत्वा भुवि पातितस्य शत्रोः सैन्धवस्य सम्यक् ताडने विषये । आत्मनः पाणेः वामं पदं च सच्छात्रयामास सहाध्यायिनं चक्रे । पाणिना पादेन च ताडितवानित्यर्थः ॥७६॥

सौवीरेति । अथ ताडनानन्तरं सौवीरो देशविशेषः तस्य भर्तुः राज्ञः सैन्धवस्य मूर्धनि पवनात्मभुवा पवमानभुवा भीमेन (कर्त्रा) क्षुरेण बाणविशेषेण करणेन क्लृप्ताः निर्मिताः पञ्चचूडाः शिखाः त्रास एव अम्बूनि जलानि तैः अन्तः मनसि शाम्यतः निर्वाणं गच्छतः स्मरशराणां ये अनलाः अग्नयः तत्पञ्चकस्य इङ्गालेभ्यः सिक्ताङ्गारेभ्यो ये धूमकलिकाः कुड्मलाकृतिधूमाः त इवेत्युत्प्रेक्षा । विरेजुः ॥ ७७ ॥

विमतमिति । भूपः धर्मराजः अनुजाभ्यां भीमार्जुनाभ्यां नीतं निकटं प्रापितं केशैः यो भारः केशसंचयश्च तस्मिन् हृते सत्यपि कृता नतिः नम्रत्वं

१. 'विद्यामिव विनयविपर्ययः' इति पाठः.

त्वदसुहरणमार्गे दुःशलैवार्गला नः
क्वचिदपि कुरु मैवं कुत्सितेत्युत्ससर्ज ॥ ७८ ॥

दीनधीः स तपसा हिमशैले दृक्पथं पुरहराद्गृहयालोः ।
आददे वरमथो विजयौ द्वावन्तरेण युधि पाण्डवरोधम् ॥ ७९ ॥

पार्थाश्च कृच्छ्रादुत्तीर्णां पार्षतीं प्राप्य रेमिरे ।
हेमन्तात्पद्मिनीं मुक्तां हेलेरिव कराङ्कुराः ॥ ८० ॥

तत्रान्तरे[1] ज्वलितवर्णवपुः कदाचि-
दङ्गेषु शब्द इव कर्णमवाप्य रात्रौ ।
भासांपतिः[2] कृतनमस्करणाय तस्मै
प्रेम्णाशिषः प्रणिजगाद यवीयसीं गाम् ॥ ८१ ॥

---

नमस्कारश्च येन तादृशं शिरः यस्य तथोक्तम् । लज्जाभयाभ्यामिति भावः । विमतं शत्रुं तं सैन्धवं वीक्ष्य स्मितं मन्दहासः आस्ये मुखे यस्य तथोक्तः सन् । हे कुत्सित निन्द्य, नः अस्माकं तव असूनां प्राणानां हरणमेव मार्गः तस्मिन् । तत्प्रवृत्तावित्यर्थः । दुःशला त्वत्पत्नी अस्मद्भगिनी च या सा अर्गला प्रतिबन्धकैव । तद्वैधव्यभयान्न त्वां निहन्म इत्यर्थः । क्वचित् इतः परं कुत्राप्येवं कुत्सितं परदारहरणादि मा कुरु । तत्र दुःशलायाः प्रतिबन्धकत्वासंभवे सद्यो हन्युरेवेति भावः । इत्युक्त्वेति शेषः । उत्ससर्ज विसृष्टवान् । अत्र विनापि नमनकारणं केशभारं तदुत्पत्तिवर्णनाद्विभावनालंकारः । मालिनी वृत्तम् ॥ ७८ ॥

**दीनेति ।** अथो अनन्तरं दीना खिन्ना धीः मनः यस्य तथोक्तः स सैन्धवः हिमशैले तपसा हेतुना दृक्पथं चक्षुर्विषयत्वं गृहयालोः ग्रहीतुः । 'स्पृहिगृहि–' इत्यादिना आलुच् । पुरहरात् शंभोः द्वौ विजयौ जयं अर्जुनं च अन्तरेण विना युधि युद्धे पाण्डवानां शिष्टानां चतुर्णां रोधं निरोधमात्रमेव वरं लेभे प्राप्तवान् । अर्जुनस्य देवैरप्यजेयत्वात्तत्सहितानां रोधमात्रमप्यशक्यमेवेति भावः । स्वागता वृत्तम् ॥ ७९ ॥

**पार्था इति ।** पार्थाश्च धर्मराजादयोऽपि कृच्छ्रात् कष्टात् सैन्धवकृतात् । उत्तीर्णां निर्मुक्तां पार्षतीं द्रौपदीं हेलेः सूर्यस्य कराः अङ्कुरा इव अङ्कुरतुल्यकिरणाः । 'हेलिरालिङ्गने सूर्ये' इति विश्वः । हेमन्तात् ऋतोः मुक्ताम् । गतहिमबाधामित्यर्थः । पद्मिनीमिव प्राप्य रेमिरे चिक्रीडुः । उपमालंकारः ॥ ८० ॥

**तत्रेति ।** तत्रान्तरे तस्मिन्नेव समये कदाचित् रात्रौ ज्वलितवर्णं उज्ज्वलकान्ति वपुः यस्य सः उज्ज्वलाक्षरशरीरश्च भासांपतिः सूर्यः । शब्दः घटादिपदमिव अङ्गेषु जनपदविशेषेषु करचरणादिषु च कर्णं राधेयं श्रोत्रं च अवाप्य । कृतं

---

१. 'अत्रान्तरे' इति पाठः. २. 'भासांनिधिः' इति पाठः.

अहमहरधिनाथोऽनुग्रहान्मे पृथाया-
मयि जननमगास्त्वं वत्स कोशो गुणानाम् ।
तदिदमिह रहस्यं शासनं गृह्यतां मे
तनयकुशलयोगे तातपादा यतन्ते ॥ ८२ ॥

मुखसंधानविश्लेषमुक्ते कवचकुण्डले ।
तवैते भूषणे शोभां तन्वाते परदुर्लभाम् ॥ ८३ ॥

एतानि याचकमिह द्विजवेषगूढं
मा लब्धकाममपराधिपतिं कृथास्त्वम् ।
आज्ञापथात्स्खलसि चेदणुमात्रमस्मा-
द्वध्यो भविष्यसि सुखेन रणे रिपूणाम् ॥ ८४ ॥

---

नमस्करणं नमस्कारः येन तथोक्ताय तस्मै कर्णाय आशिषः चिरं जीवेत्यादेराशीर्वादस्य यवीयसीं कनिष्ठाम् तदनन्तरामिति यावत् गां वाचं वक्ष्यमाणां प्रेम्णा पुत्रवात्सल्येन प्रणिजगाद उक्तवान् । श्लिष्टविशेषणेयमुपमा ॥ ८१ ॥

उक्तप्रकारं त्रिभिराह—अहमिति । अयि वत्स हे पुत्र, अहं अह्नः दिवसस्य अधिनाथः सूर्यः गुणानां शौर्यौदार्यादीनां कोशः राशिः त्वं मे मम अनुग्रहात् पृथायां कुन्त्यां जननं उत्पत्तिं अगाः प्राप्तवानसि । जातोऽसीत्यर्थः । तत् तस्मात् मत्पुत्रत्वाद्धेतोः रहसि एकान्ते भवं रहस्यं इदं वक्ष्यमाणं मे शासनं आज्ञा इह इदानीं गृह्यताम् । त्वयेति शेषः । नन्वपृष्टोऽपि किमिति वक्ष्यसीत्यत आह—तनयेति । तनयानां कुशलस्य क्षेमस्य योगे संघटने विषये तातपादाः पूज्याः पितरः यतन्ते उद्योगं कुर्वन्ति । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ८२ ॥

मुखेति । अयि वत्स, मुखेत्युपलक्षणमन्तस्यापि । तथा च आद्यन्ताभ्यां संधानविश्लेषाभ्यां धारणमोचनाभ्यां च मुक्ते रहिते । सहजत्वाद्दुर्ज्ञेयाद्यन्ते । वर्जितसंयोजनवियोजने चेत्यर्थः । कवचं कुण्डलं च उभे एते भूषणे परैर्दुर्लभां तव शोभां तन्वाते कुरुतः । अत्र मुखसंधानेत्यादिपदार्थस्य विशेषणगत्या अनन्यसामान्यशोभाकरणहेतुत्वात्काव्यलिङ्गभेदः ॥ ८३ ॥

एतानीति । अयि वत्स, एतानि सहजकवचकुण्डलानि याचकं याचिष्यमाणम् 'अकेनोर्भविष्यदाधमर्ण्ययोः' इति कृद्योगे षष्ठीप्रतिषेधः । अत्र 'याचकं सन्तम्' इति नृसिंहप्रलपितं च्युतसंस्कारदोषादुपेक्ष्यम् । द्विजवेषेण ब्राह्मणरूपेण गूढं प्रच्छन्नम् । निजयाच्ञानर्हत्वादिति भावः । अमराधिपतिं इन्द्रं त्वं इह कवचकुण्डलयाच्ञा-

---

१. 'याचितुम्' इति पाठः.

इत्थं निशम्य तां वाचं राधेयो रचितस्मितः ।
हर्षादञ्जलिना साकमाददे प्रतिभाषितम् ॥ ८५ ॥

तवार्यमेति प्रथितेऽपि शब्दे ममार्य मेत्यर्थिजनेषु दानम् ।
निषेधरूपे निदधाति मार्गे पदं कथं वा भवदीयजिह्वा ॥ ८६ ॥

सततं सदर्थिसदसे बहु दातुं
सकुतूहलस्य पुरुषस्य जगत्याम् ।
उदकोर्मिका करधृता हि विभूषा
कनकोर्मिका तु परमङ्गुलिभारः ॥ ८७ ॥

दिवसेश यः खलु शयः प्रतिकर्तुं
धृतलालसो भवति नार्थिषु दैन्यम् ।

---

विषये लब्धकामं मा कृथाः मा कुरु । वैपरीत्ये का हानिरत आह—आज्ञेति । अस्मात् आज्ञापथात् मच्छासनमार्गात् अणुमात्रं अत्यल्पमपि स्खलसि चेत् लङ्घयसि यदि तदा रणे रिपूणां सुखेन अनायासेन वध्यः हन्तुं शक्यः भविष्यसि ॥ ८४ ॥

**इत्थमिति** । इत्थं उक्तप्रकारां तां वाचं कवचकुण्डलानीन्द्राय मा देहीत्यात्मिकां निशम्य श्रुत्वा राधेयः कर्णः हर्षात् रचितस्मितः कृतदरहासः सन् प्रतिभाषितं प्रत्युक्तं अञ्जलिना साकं नमस्कारेण सह आददे जग्राह । सनमस्कारं प्रत्युक्तवानित्यर्थः ॥ ८५ ॥

**तवेति** । हे आर्य, तव अर्यमा इत्यात्मके शब्दे दातृपुत्रकस्य दातुश्च वाचके प्रथिते सत्यपि अर्थिजनेषु याचकेषु विषये मम दानं मास्त्विति निषेधरूपे दाननिवृत्त्यात्मके मार्गे वाक्यरूपे भवदीयजिह्वा पदं पादं उच्चारणात्मकं कथं वेत्याश्चर्ये निदधाति निक्षिपति । दानं मा कुर्विति कथं वदतीत्यर्थः । दातृपुत्रकस्य स्वयं दातुः निषेधवाक्यस्य च विरूपयोर्घटनात्मको विषमप्रभेदः । 'यः कामयेत दानकामा मे प्रजाः स्युरित्यसौ वा आदित्योऽर्यमा । यः खलु वै ददाति सोऽर्यमा' इति श्रुतिः ॥ ८६ ॥

**सततमिति** । किंच हे आर्य, जगत्यां लोके सतां साधूनां अर्थिनां याचकानां च सदसे सभायै बहु अपरिमितं अर्थं दातुं कुतूहलेन सहितस्य सकुतूहलस्य पुरुषस्य करे धृता उत्सर्गार्थं निहिता उदकस्य ऊर्मिका हि धारैव विशेषेण भूषा भूषणं, कनकमयी ऊर्मिका अङ्गुलीयकं तु परमत्यन्तं अङ्गुलीनां भारः भारहेतुर्हि । अत्र दानस्तुत्या तन्निषेधनिन्दाप्रतीतेर्व्याजस्तुत्यलंकारः । 'ऊर्मिका त्वङ्गुलीये स्याद्वाद्मी भङ्गितरङ्गयोः' इति वैजयन्ती । सुमङ्गलीवृत्तम् । 'सजसाः सगौ यदि सुमङ्गलिकेयम्' इति लक्षणात् ॥ ८७ ॥

**दिवसेति** । हे दिवसेश सूर्य, यः शयः पाणिः । 'पञ्चशाखः शयः पाणिः'

प्रतिपादयेत्स तु कथं पुरुषस्य
प्रतिकूलवर्णनिजनामपदार्थम् ॥ ८८ ॥

यश एव जन्मफलमात्मवतामिदमेषितव्यमतियत्नभरात् ।
अपि भूषितं गुणगणैरपरैरयशस्विनं न जगदाद्रियते ॥ ८९ ॥

व्यापृता वितरणोपनिषत्सु व्याहरन्ति हि विपश्चिदधीशाः ।
स्पर्शनेन रहिताविति हेतोर्लुब्धकं च कुणपं च समानौ ॥ ९० ॥

दृष्टे वनीपकजने वदनं स्मितेन
दानाम्बुना करतलं यशसा दिशश्च ।

---

इत्यमरः। अर्थिषु याचकेषु दैन्यं दारिद्र्यं प्रतिकर्तुं निराकर्तुं धृतः लालसः महाभिलाषः येन तथोक्तः न भवति । खलु इति वाक्यालंकारे । स शयस्तु प्रतिकूलौ वैपरीत्यं गतौ वर्णौ शकारयकारौ यस्मिंस्तस्य निजनाम्नः पदस्य यशःशब्दस्य अर्थं कीर्तिं पुरुषस्य कथं केन प्रकारेण प्रतिपादयेत् आर्जयेत् । न केनापि प्रकारेणेत्यर्थः । 'संग्रहैकपरः प्रायः समुद्रोऽपि रसातले' इत्यभियुक्तोक्तेरदातुः कदापि न भवेत् कीर्तिरिति भावः । पूर्वोक्तं वृत्तम् ॥ ८८ ॥

तर्हि कीर्तिरेव मास्त्वित्यत आह—यश इति । आत्मवतां देहभृतां यशः कीर्तिरेव जन्मनः फलं इति हेतोः । इदं यशः यत्नस्य भरात् अतिशयात् एषितव्यं काङ्क्षणीयम् । यतः जगत् लोकः अपरैः यशोभिन्नैः गुणानां धैर्यशौर्यगाम्भीर्यादीनां गणैः भूषितमपि अयशस्विनं कीर्तिशून्यं पुरुषं नाद्रियते नापेक्षते । 'प्रियः प्रजानां दातैव न पुनर्द्रविणेश्वरः' इत्युक्तत्वादिति भावः । अत्रोत्तरवाक्यार्थस्य कीर्त्या अनावश्यकत्वहेतुत्वात् काव्यलिङ्गभेदः । प्रमिताक्षरा वृत्तम् ॥ ८९ ॥

व्यापृता इति । किंच वितरणोपनिषत्सु दानवेदान्तेषु व्यापृताः परिशीलकाः । दानमाहात्म्यसारसर्वस्वविद इति यावत् । विपश्चिदधीशाः पण्डितश्रेष्ठाः लुब्ध एव लुब्धकः तं कुणपं कृपणं शवं च द्वावपि स्पर्शनेन दानेन स्पर्शेन च रहितौ शून्यौ इत्युक्तप्रकाराद्धेतोः समानौ मिथस्तुल्यौ व्याहरन्ति कथयन्ति । हि प्रसिद्धौ । 'स्पर्शो ना मारुते स्पर्शदानयोः स्पर्शनं तथा' इति वैजयन्ती । लुब्धोऽकीर्तिर्जीवन्नपि मृतकल्प एवेत्यर्थः । अत्र स्पर्शनस्य श्लेषभित्तिकाभेदाध्यवसितस्य साम्यकथनहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गमुपमैकवाचकानुप्रवेशसंकीर्णम् ॥ ९० ॥

दृष्ट इति । दाता वनीपकजने दृष्टे सति । 'वनीपको याचनको मार्गणो याचकार्थिनौ' इत्यमरः । स्वयं प्रकृत्यैव । न तु कारणान्तरेणेत्यर्थः । विवशः परवशः सन् स्मितेन वदनं दानाम्बुना करतलं यशसा दिशश्च शुभ्रीकरोति तादृशं प्रकृ-

---

१. 'प्रतिलोम' इति पाठः.

शुभ्रीकरोति विवशः स्वयमेव दाता
कस्तादृशं प्रतिनिवर्तयितुं क्षमेत ॥ ९१ ॥

वाञ्छामनाप्तेन वनीपकेन सहासवो दातृजनस्य यान्ति ।
तदद्य शक्रार्चनया धृतासोर्भावी वधो मे परमो हि लाभः ॥ ९२ ॥

यद्गोष्ठीप्रतिहारभूतलशिला[1] चिन्तामणिः कल्पका
यस्यारामवृतिद्रुमाश्च[2] सुरभिः सा होमधेनुः पुनः ।
तादृग्याचति चेदुपेत्य मघवा संपूर्य तत्कामनां
त्रैलोक्यस्थवदान्यसंसदुपरि स्यामेष मे निश्चयः ॥ ९३ ॥

---

स्या दातारं प्रतिनिवर्तयितुं दानाद्वारयितुं कः क्षमेत शक्नुयात् । न कोऽपीत्यर्थः । अत्र वाक्यार्थत्रयेण दातुर्दाननिवारणाशक्यत्वसमर्थनात्काव्यलिङ्गभेदः । केवलप्रकृतानां वदनकरतलदिशां धवलीकरणेनौपम्यगम्यकतुल्ययोगिताभेदश्चैकवाचकानुप्रवेशसंकीर्णो ॥ ९१ ॥

वाञ्छामिति । किंच दातृजनस्य असवः प्राणाः वाञ्छां मनोरथं अनाप्तेन अप्राप्तेन वनीपकेन सह यान्ति निर्गच्छन्ति । मरणादप्यधिका जायतेऽपकीर्तिरित्यर्थः । 'संभावितस्य चाकीर्तिर्मरणादतिरिच्यते' इत्युक्तत्वादिति भावः । तत् तस्मात् अद्य इदानीं शक्रस्य इन्द्रस्य अर्चनया कामितपूरणात्मिकया पूजया हेतुना धृतासोः आगतप्राणस्य मे भावी कवचकुण्डलत्यागेन कालान्तरे शत्रुभिः करिष्यमाणः वधः परमः अतिकाम्यः लाभः । हिरवधारणे । अशुभस्य कालहरणं कर्तव्यमिति प्रसिद्धेरिति भावः ॥ ९२ ॥

यदिति । किंच चिन्तामणिर्नाम कामधेन्वादिवत्कामितार्थदं रत्नं सः यस्य इन्द्रस्य गोष्ठ्याः आस्थानमण्डपस्य प्रतिहारभूतले द्वाराग्रदेशे शिला बद्धपाषाणः । कल्पकाः कल्पवृक्षाः यस्य इन्द्रस्य संबन्धिनः आरामस्य नन्दनस्य वृतिद्रुमाः आवरणवृक्षाः । सा प्रसिद्धा सुरभिः कामधेनुः होमस्य पयसाग्निहोत्रस्य धेनुः गौरिति तादर्थ्ये षष्ठीसमासः । भवतीति यथायोगं योज्यम् । तादृक् चिन्तामणिकल्पवृक्षकामधेनुमान् मघवा इन्द्रः उपेत्य मां प्रत्यागत्य याचति चेत् भिक्षते यदि । तस्य इन्द्रस्य कामनां मनोरथं संपूर्य त्रैलोक्यस्थानां भुवनत्रये वर्तमानानां वदान्यानां दातॄणां या संसत् सभा तस्याः उपरि अग्रभागे स्यां वर्तेयम् । एष उक्तप्रकारः मे मम निश्चयः निष्कर्षः । अत्र चिन्तामण्यादिमतोऽपीन्द्रस्य याञ्चाप्रसङ्गेन तैरप्यपूरणीयस्तन्मनोरथ इति तत्पूरणस्य त्रैलोक्यस्थवदान्योपरितनहेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गम् । शार्दूलविक्रीडितम् ॥ ९३ ॥

---

१. 'यद्गेह' इति पाठः. २. 'महीरुहश्च' इति पाठः.

२०

वीक्ष्य वन्ध्यवचनोऽपि गुणज्ञो विस्मयाम्बुनिधिवीचिषु मग्नः ।
पद्मबन्धुरिति वादिनमेनं पाटलस्मितरुचिर्गिरमूचे ॥ ९४ ॥

अये[1] वत्स, भवतो[2] भाषितं क्षममेव स्थूललक्षाणाममूदृशं तु[3] तव मतं पुनरपि मम रसनां निदेशावशेषपथपान्थां[4] निर्मिमीते ॥

अथवा[5] त्वं शुनासीरस्य मनीषितस्य पूरणात्पूर्वमेव[6] पूर्वदेवगर्वनिर्वापणधूर्वहतया कुलिशमपि चिरारूढकलङ्काङ्कुर[7]जर्जरितधाराशतमातन्वतीं तदीयां शक्तिमादत्स्वेति ॥

---

वीक्ष्येति । अथ इत्युक्तप्रकारेण वादिनं वदन्तं एनं कर्णं वीक्ष्य वन्ध्यं निष्फलं वचनम् 'मा पूरय मनोरथमिन्द्रस्य' इत्यात्मकं यस्य तथोक्तोऽपि गुणज्ञः । नतु गुणमेव दोषत्वेन ज्ञातेत्यर्थः । अतएव विस्मयस्य आश्चर्यस्येव अम्बुनिधेः वीचिषु तरंगेषु मग्नः । अतिविस्मित इत्यर्थः । पद्मानां बन्धुः सूर्यः । पाटला श्वेतरक्ता अधरव्यापनादीषदरुणा । स्वतः श्वेतेति यावत् । स्मितस्य रुचिः यस्य तथोक्तः सन् । गिरं वाचं वक्ष्यमाणां ऊचे उक्तवान् । ब्रूञः कर्तरि लिटि वच्यादेशः । अत्र गुणज्ञत्वस्य अतिविस्मयहेतुत्वात् पदार्थहेतुकेन काव्यलिङ्गेन अङ्गेन विस्मयाम्बुनिधीति रूपकं संकीर्णम् । तस्य च वचनस्य नैष्फल्यरूपप्रतिबन्धकसत्त्वेऽपि तदुत्पत्तिवर्णनात्मिकया विभावनया संसृष्टिः । स्वागतावृत्तम् ॥ ९४ ॥

अये इति । अये वत्स हे पुत्र, भवतः तव संबन्धि भाषितं वचनं अप्यात्मवधमङ्गीकृत्येन्द्रस्य वाञ्छां पूरयिष्यामीत्यात्मकं स्थूललक्षाणां बहुप्रदानां क्षमं उपपन्नमेव । भवादृशानामिति शेषः । हे पुत्र, अमूदृशं उक्तविधम् । 'अदसोर्दशोर्योगे' इत्याद्यत्वदीर्घयोः 'अदसोऽसेर्दादुदो मः'इति दस्य च मत्वम्, अस्य चोत्वं च । तव मतं प्राणात्ययेऽप्यनुज्ञनीयम् । दानव्रतं तु मम मे रसनां जिह्वां पुनरपि । उक्तप्रकारादन्यथेत्यर्थः । निदेशावशेषः आज्ञावाक्यशेष एव पन्थाः तत्पथः तस्मिन् पान्थां गच्छन्तीम् । 'पन्थो ण नित्यम्' इति णप्रत्ययः पन्थादेशश्च । ततष्टाप् । 'पान्थीम्' इति पाठः प्रामादिकः । निर्मिमीते करोति । निदेशशेषं किंचिद्वच्मीत्यर्थः ॥

अथवेति । अथवा । उक्तार्थः असंमतश्चेदित्यर्थः । इतीदं क्वाचित्कं पाठम् । त्वमिति । हे वत्स, त्वं शुनासीरस्य इन्द्रस्य । 'वृद्धश्रवाः शुनासीरः' इतीन्द्रपर्यायेष्वमरः । मनीषितस्य कामितस्य पूरणात् पूर्वमेव स्वयं पूर्वदेवानां सुरद्विषां गर्वस्य निर्वापणे शमने धूर्वहतया भारवाहित्वेन हेतुना कुलिशं वज्रायुधमपि चिरादारूढेन लग्नेन कलङ्काङ्कुरेण जर्जरितं तुच्छितं धाराणां कोटीनां शतं यस्य

---

१. 'अयि' इति पाठः. २. 'भवता' इति पाठः. ३. 'स्थूललक्ष्याणामीदृशं तव' इति पाठः. ४. 'पान्थिनीम्' इति पाठः. ५. 'अथवा' इति क्वचिन्न. ६. 'प्रागेव' इति पाठः. ७. 'कलङ्काकुल' इति पाठः.

ततस्तथेति परमङ्गीकृत्य पश्यतस्तनूजस्य समक्षमचिरेण स मरीचिमाली चरमाचलशिखरपरिशील्यमानविहारमिहापि समाचचार ॥

कतिपयदिने काले याते ततो मरुतां पतिः
सदसि तनयं भानोरेत्यार्थिचाटुशताकुले ।
कवचमतुलं वाचायाचत्सकुण्डलमादरा-
दयमपि तथेत्युक्त्वा शक्तिं ततो जगृहेऽद्भुताम् ॥ ९५ ॥

नकारमेते वहतो रिपू[1] ममेत्यमर्षभारादिव शस्त्रधारया ।
सुतो रवेर्दंशन[2]कर्णवेष्टने स्वयं समुत्कृत्य ददौ बिडौजसे ॥ ९६ ॥

---

तथोक्तं आतन्वतीं कुर्वतीं तस्य इन्द्रस्य इमां तदीयां शक्तिं नाम आयुधं आदत्स्व गृहाण । प्रत्युपकारद्वारेति भावः । इति निदेशावशेषपथपान्थां निर्मिमीत इति पूर्वेणान्वयः ॥

**तत इति ।** ततः तथा इन्द्राच्छक्तिं गृह्णीयामिति परं भृशं अङ्गीकृत्य पश्यतस्तनूजस्य कर्णस्य समक्षं प्रत्यक्ष एव सः मरीचिमाली सूर्यः चरमाचलस्य अस्तगिरेः शिखरे परिशील्यमानं क्रियमाणं विहारं क्रीडाम् । अस्तमयमिति यावत् । इह कर्णपुरोभागेऽपि अचिरेण सत्वरं समाचचार कृतवान् अन्तर्हितवान् ॥

**कतीति ।** ततः अनन्तरं कतिपयानि कानिचिद्दिनानि यस्मिन् तस्मिन् काले याते गते सति मरुतां देवानां पतिः इन्द्रः अर्थिनां याचकानां चाटुशतैः प्रियवाक्यशतैः आकुले सान्द्रे सदसि सभायाम् । 'स्त्रीनपुंसकयोः सदः' इत्यनुशासनात् नपुंसकत्वम् । भानोः सूर्यस्य तनयं कर्णं एत्य प्राप्य अतुलं सहजत्वादसदृशं कुण्डलाभ्यां सहितं सकुण्डलं कवचं वाचा देहीत्यात्मिकया अयाचत् भिक्षितवान् । याचतेः कर्तरि लङ् । अयं कर्णोऽप्यादरात् तथा दास्यामीति उक्त्वा ततः याचमानकवचकुण्डलात् इन्द्रात् अद्भुतां लोकोत्तरां शक्तिं आयुधविशेषं जगृहे गृहीतवान् । हरिणप्लुतावृत्तम्—'रसयुगहयैर्छिन्ना न्सौम्रौ स्लगा हरिणप्लुता' इति लक्षणात् ॥ ९५ ॥

**नकारमिति ।** एते दंशनकर्णवेष्टने नकारं नाक्षरं निषेधार्थकं वहतः बिभृतः । स्वनाम्नीति शेषः । अतः कारणात् मम दातुः रिपू शत्रू इत्युक्तप्रकारात् अमर्षभारात् कोपातिशयादिवेत्युत्प्रेक्षा । रवेः सुतः कर्णः शस्त्रस्य असेः धारया अञ्चलेन समुत्कृत्य उत्पाट्य दंशनकर्णवेष्टने कवचकुण्डले बिडौजसे इन्द्राय स्वयं ददौ दत्तवान् । 'तनुत्रं वर्म दंशनम्', 'कुण्डलं कर्णवेष्टनम्', 'बिडौजाः पाकशासनः' इति सर्वत्रामरः ॥ ९६ ॥

---

१. 'रिपुं' इति पाठः. २. 'दर्शन' इति पाठः.

निशम्य तत्कल्पतरोर्ह्रिया च्युतैश्चिरार्जितैस्त्यागयशोभरैरिव ।
सुपर्वमुक्तैः कुसुमैर्न केवलं तदङ्गमङ्गाश्च सुगन्धयोऽभवन् ॥ ९७ ॥

जाग्रत्सु सर्वावयवेषु तस्य कर्णस्य कर्णः पुनरर्थिने स्वाम् ।
हिरण्मयीं यद्वितताार भूषां तन्नामसाम्यं ध्रुवमत्र हेतुः ॥ ९८ ॥

आपृच्छ्य तं तदनु नाकपतिः सुधर्मा-
मासाद्य सिद्धमरुदप्सरसां समाजे ।
प्राशंसदस्य चरितं सविधे सुरभ्या
रोमन्थमप्यविगणय्य निशम्यमानम् ॥ ९९ ॥

---

**निशम्येति** । तत् कर्णस्य सहजकवचकुण्डलदानं निशम्य श्रुत्वा ह्रिया लज्जया च्युतैः गलितैः । तादृग्दानस्य तत्राप्यसंभवादिति भावः । चिरादर्जितैः त्यागेन वितरणेन ये यशोभराः कीर्त्यतिशयाः कल्पवृक्षीयाः तैरिव स्थितैः सुपर्वभिः देवैः मुक्तैः विसृष्टैः कुसुमैः पुष्पैः तस्य कर्णस्य अङ्गं केवलं शरीरमेकमेव सुगन्धि नाभवत्, किंतु अङ्गाश्च अङ्गाख्याश्च जनपदा अपि कर्णपाल्याः सुगन्धयः मनोहरगन्धाः अभवन् । अतिमहती पुष्पवृष्टिरासीदित्यर्थः । 'अङ्गं गात्रान्तिकोपायप्रतीकेष्वप्रधानके । अङ्गो देशविशेषे स्यात्' इति विश्वः । असंबन्धे संबन्धरूपातिशयोक्तिः । वंशस्थवृत्तम् ॥ ९७ ॥

**जाग्रत्स्विति** । तस्य कर्णस्य सर्वेषु अवयवेषु करचरणादिषु जाग्रत्सु विद्यमानेषु सत्स्वपि कर्णः पुनः श्रोत्रमेव स्वां स्वीयां हिरण्मयीं काञ्चनीम् । 'दाण्डिनायन–' इत्यादिना निपातः । भूषां कुण्डलं अर्थिने इन्द्राय वितताार दत्तवान् । इति यत् । अत्र कुण्डलदाने तेन कर्णेन सह नाम्ना कर्णेतिसंज्ञया यत्साम्यं तुल्यत्वं तत् । तस्येति शेषः । श्रोत्रस्येत्यर्थः । हेतुः ध्रुवमित्युत्प्रेक्षा । यद्यपि करचरणादिभिरपि कवचदानं कृतं तदस्यापि तुल्यम्, इदं त्वधिकमित्युत्प्रेक्षितमिति ध्येयम् । अत्रोक्तोत्प्रेक्षया तन्नामासाम्यमात्रस्यापि तथा दानहेतुत्वे किमु वक्तव्यं तद्दाननैसर्गिकत्वम् इत्यर्थापत्तिप्रतीतेरलंकारेणालंकारध्वनिः ॥ ९८ ॥

**आपृच्छ्येति** । तदनु कवचकुण्डलदानानन्तरं नाकस्य स्वर्गस्य पतिः इन्द्रः तं कर्णं आपृच्छ्य गच्छामीत्युक्त्वा सुधर्मां देवसभां आसाद्य प्राप्य सिद्धानां नारदादीनां देवयोनिविशेषाणां वा मरुतां देवतानां अप्सरसां च समाजे संघे अस्य कर्णस्य चरितं तथाविधं दानचारित्रं सविधे समीपे सुरभ्या कामधेन्वा रोमन्थं चर्वितचर्वणमपि अविगणय्य दूरीकृत्य निशम्यमानं श्रूयमाणं यथा स्यात् तथा प्राशंसत् प्रकर्षेण स्तुतवान् । शरीरमुत्कृत्त्य दानस्य तस्या अप्यसंभवादिति भावः ॥ ९९ ॥

---

१. 'तद्वितताार' इति पाठः.

तावत्पार्थास्तेऽपि पुनः काम्यकसीमां
हित्वा संघैर्भूविबुधानामनुयाताः ।
तीर्थव्रातान्विस्मृतपूर्वानवगाढुं
वध्वा साकं द्वैतवनारण्यमवापुः ॥ १०० ॥

तत्र कदाचिदाश्रमद्वारि 'हा हा[२] महाभागाः, मम होमसाधनमर[३]-रणिमपहृत्य हरिणोऽयमितो[४] धावति' इति बाष्पायमाणस्य कस्य-चिदग्रजन्मनः[५] शोकनिवारणाय चक्रीकृत्य चापमनुधावतस्तान्पार्था[६]-न्पार्श्वलताताडतानुषक्तनवकिसलयजालमुत्प्लवनवेगपवनवर्हिर्ज्वल[७]-द्वह्निशिखाकन्दलमिवारणिं[८] विषाणया[९] बिभ्राणः कतिषुचित्पदेषु सुग्रह इव कतिषुचिद्दुरासद इव विचित्रगतिः[१०] कोऽपि कृष्णसारो दूर-माकृष्य[११] स्वयमन्तरधात् ॥

---

तावदिति । तावत् तदानीं ते पार्था अपि काम्यकस्य वनस्य सीमां हित्वा भूविबुधानां ब्राह्मणानां संघैः अनुयाताः सन्तः पूर्वं विस्मृतान् मार्गवशादिना असेवितान् तीर्थानां पुण्यसरसां व्रातान् समूहान् अवगाढुम् । तत्र स्नातु-मित्यर्थः । पुनरपि द्वैतवनं नाम अरण्यं वध्वा साकं द्रौपद्या सह अवापुः प्राप्तवन्तः । मत्तमयूरीवृत्तम्—'वेदै रन्ध्रैर्म्तौयसगा मत्तमयूरी' इति लक्षणात् ॥ १०० ॥

तत्रेति । तत्र द्वैतवने कदाचित् हे महाभागाः महानुभावाः पाण्डवाः, मम होमस्य साधनं अग्निमथनद्वारा कारणं अरणिं अपहृत्य अयं हरिणः कुरंगः इतः मार्गात् धावति । हा हेत्यतिखेदे । इति उक्तप्रकारं आश्रमस्य द्वारि अग्रदेशे बाष्पायमाणस्य रुदतः कस्यचित् अग्रजन्मनः ब्राह्मणस्य शोकस्य निवारणाय चापं चक्रीकृत्य गुणाकर्षणेन कुण्डलीकृत्य अनुधावतः द्रुतमनुगच्छतः तान् पार्थान् पार्श्वयोरुभयोर्या लताः तासां ताडनेन संघर्षणेन अनुषक्तं लग्नं नवानां किसलयानां जालं वृन्दं यस्मिंस्तम् । अतएव उत्प्लवनेषु ऊर्ध्वलङ्घनेषु यो वेगः तेन यः पवनः वायुः तेन बहिर्ज्वलन्तः वह्निशिखानां अग्निज्वालानां कन्दलाः अङ्कुराः यस्मिन् तथोक्तमिव स्थितमित्युत्प्रेक्षा । अरणिं अग्निमन्थनदारु विषाण-या शृङ्गेण बिभ्राणः कतिषुचित्पदेषु पादन्यासेषु सुग्रहः अनायासेन ग्रहीतुं शक्य इव कतिषुचित्पदेषु दुरासदः दुर्ग्रह इव विचित्राः आश्चर्याः गतयः यस्य

---

१. 'सार्धम्' इति पाठः. २. 'हा' इति नास्ति क्वचित्. ३. 'अरणिम्' इति नास्ति क्वचित्. ४. 'इतस्ततः' इति पाठः. ५. 'गृहमेधिनः' इति पाठः. ६. 'पार्थम्' इति नास्ति क्वचित्. ७. 'उत्प्लुत्य धावनवेग' इति पाठः. ८. 'ज्वलितगर्भवह्नि' इति पाठः. ९. 'विषाणयोः' इति पाठः. १०. 'चित्रगतिः' इति पाठः. ११. 'अपाकृष्य' इति पाठः.

तदनु[1] ललाटंतपनखंपचहेलिधूलिभ्यां द्यावापृथिवीभ्यामुदन्यावदान्यमहिम्नि[2] दिनयौवने प्रादुर्भवति[3] सति प्रकृतमर्थमिव पानीयमपि इतस्ततो विचिन्वद्भिरनुजैः सह कस्यचिद्विशालस्य वनशालस्य मूलभुवं तच्छायामण्डलमिव[4] पाण्डवः शनैः शनैरुपससर्प ॥

तत्रानिलैः कमलगन्धिभिरुच्यमाना-
माशां गतेषु सलिलाय चिरायितेषु ।
भीमादिषु क्षितिभुजा परितप्य भेजे
तेषां पदानुसरणादथ कापि वापी ॥ १०१ ॥

---

सः कोऽपि दुर्ज्ञेयः कृष्णसारः कुरंगः दूरं दूरदेशं आकृष्य लाभाशया नीत्वा स्वयं अन्तरधात् अन्तर्हितवान् ॥

तदन्विति । तदनु कृष्णसारान्तर्धानानन्तरं ललाटं तपतीति ललाटंतपः । नखान् पचतीति नखंपचः । शिरःपाददाहिनावित्यर्थः । हेलिः सूर्यः धूलिः रजः ययोस्ताभ्यां द्यावापृथिवीभ्यां आकाशभूमिभ्यां उदन्यायाः पिपासायाः वदान्यः दाता महिमा प्रभावः यस्मिन् तस्मिन् । अतितृष्णाजनक इत्यर्थः । 'उदन्या तु पिपासा तृट्' इत्यमरः । दिनस्य अह्नः यौवने मध्यभागे । मध्याह्नकाल इति यावत् । प्रकृतमर्थं अरणिमिव हरिणमिव वा । पानीयं जलमपि इतस्ततः विचिन्वद्भिः अन्विषद्भिः अनुजैः भीमादिभिः सह पाण्डवः धर्मराजः विशालस्य विस्तीर्णस्य कस्यचित् वने शालस्य वृक्षस्य मूलभुवं मूलदेशं प्रति तस्य वनशालस्य च्छायामण्डलः अनातपविम्ब इव शनैः शनैर्गत्यातपश्रमात् मन्दं मन्दं उपससर्प समीपं गतवान् । अत्र च्छायामण्डलपाण्डवयोः शनैःशनैर्मूलोपसर्पणेनौपम्यस्य गम्यत्वात् तुल्ययोगिताभेदः । अस्य च अरणिजलयोरन्वेषणेनौपम्यगमकतुल्ययोगिताभेदेन संसृष्टिः ॥

तत्रेति । तत्र वृक्षमूले कमलगन्धिभिः पद्मसौरभवाहिभिः अनिलैः वायुभिः उच्यमानाम् । अत्रास्ते पद्मिनीति सूच्यमानामित्यनुमानालंकारः । आशां दिशं प्रति सलिलाय उदकमानेतुम् । इति 'क्रियार्थ—'इत्यादिना चतुर्थी । गतेषु भीमादिषु चतुर्षु चिरायितेषु चिरादप्यनागतेषु सत्सु । अथ क्षितिभुजा धर्मराजेन परितप्य किमेपामत्याहितं यतोऽद्यापि नागच्छन्तीत्यनुतप्य तेषां भीमादीनां संबन्धिनां पदानां पादनिक्षेपस्थानानां अनुसरणात् अनुसृत्य गमनात् । 'तत्कृत्य—' इति ल्यब्लोपे पञ्चमी वा । कापि इयं एतादृशीति दुर्ज्ञेया वापी दीर्घिका भेजे प्राप्ता । भजतेः कर्मणि लिट् ॥ १०१ ॥

---

१. 'तदनन्तरम्' इति पाठः. २. 'महिमनि' इति पाठः. ३. 'प्रादुर्भवति सति' इति नास्ति क्वचित्. ४. 'तच्छाय' इति पाठः.

तस्यास्तटे कमलिनीदलपात्रपाणीं-
स्तान्पङ्क्तिशो निपतितानवलोक्य वीरान् ।
वाष्पाम्बुभिः प्रथमदर्शितमार्गयेव[1]
तन्वा नृपस्य धरणौ सहसा निपेते ॥ १०२ ॥

स नृपतिर्ददृशेऽधिकवत्सलः सपदि मूर्च्छितधीर्निभृताङ्गकः ।
स्वयमपि प्रविभज्य तदा दशामनुभवन्निव तामनुजाश्रिताम् ॥१०३॥

नासाविलोभनपटून्नवपद्म[2]गन्धा-
नादाय तत्र मधुपैरनुसेव्यमानाः ।
वर्धिष्णुचेतनममुं[3] वनवापिकायाः
कल्लोलमल्लपवनाः कलयांबभूवुः ॥ १०४ ॥

---

**तस्या इति** । तस्या वाप्याः तटे तीरे कमलिनीदलानि पद्मपत्राण्येव पात्राणि जलभाजनानि पाण्योर्येषां तान् पङ्क्तिशः निपतितान् । मृत्वेति शेषः । तान् भीमादीन् वीरान् अवलोक्य वाष्पाम्बुभिः प्रथमं पूर्वं दर्शितः मार्गः निपतनरूपः यस्यास्तथोक्तयेव स्थितयेत्युत्प्रेक्षा । नृपस्य धर्मराजस्य तन्वा शरीरेण धरणौ भुवि सहसा दुःखवेगात् सत्वरं निपेते पतितम् । पततेर्भावे लिट् ॥ १०२ ॥

**स इति** । अधिकं वत्सलः भ्रातृशोकान्वितः सपदि पतनक्षण एव मूर्च्छिता धीः चेतना यस्य सः । अतएव निभृतानि निश्चलानि अङ्गानि यस्य सः तत्कः । शैषिकः कप्प्रत्ययः । स नृपतिः अनुजैः भीमादिभिः आश्रितां दशां मरणावस्थां प्रविभज्य समांशं विभागं कृत्वा स्वयमप्यनुभवन्निवेत्युत्प्रेक्षा । ददृशे दृष्टः । तत्रत्यैरिति शेषः । भ्रातॄणां सामुदायके वस्तुनि समांशहारित्वस्मरणादिति भावः । दृशेः कर्मणि लिट् । द्रुतविलम्बितवृत्तम् ॥ १०३ ॥

**नासेति** । तत्र तदानीं नासायाः घ्राणस्य विलोभने तृष्णाजनने पटून् समर्थान् नवान् पद्मानां गन्धान् आदाय मधुपैः अलिभिः अनुसेव्यमानाः इति मान्द्योक्तिः । वने वापिकायाः पूर्वोक्तायाः कल्लोलमल्लानां श्रेष्ठतरङ्गाणां संबन्धिनः पवनाः वायवः अमुं मूर्च्छितं धर्मराजं वर्धिष्णुः पुनः प्राप्तिशीला चेतना संज्ञा यस्य तथोक्तं कलयांबभूवुः चक्रुः । अत्र वायूनां गुणसमृद्धेः विशेषणगत्या नृपचेतनासंघटनहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् । 'आघ्राय' इति पाठस्त्वसंगतार्थत्वात् कथंचिदुक्तार्थलक्षणया योज्यः ॥ १०४ ॥

---

१. 'मार्ग एव' इति पाठः. २. 'पुष्प' इति पाठः. ३. 'इमं नववापिकायाः' इति पाठः.

ततः क्षणादेव किंचिदुद्भ्रम्य[1] परितः शून्यशून्या दिशो दशापि[2] विलोकयमानः शनैः शनैरुपसृत्य शोकचञ्चलेन कराञ्चलेन[3] तान्पर्यायवृत्त्या परामृश्य[4] वनविहगमृगपानसौकर्याय सुतरां[5] दुरवतरां तां सरसीमिव[6] वाष्पधारामभिवर्षन्धर्मसूनुरेवं विलपितुमारभत ॥

वीरा भवद्विपदि देवपरम्परापि
दूरेतरां[7] प्रति परान्न गिरां प्रवृत्तिः ।
हा हा दशेयमिह वोऽद्य कुतोऽवतीर्णा
मामन्तरेण भवतां किमिदं[8] प्रयाणम् ॥ १०५ ॥

---

तत इति । ततः चेतनाप्राप्त्यनन्तरम् । धर्मसूनुः धर्मराजः किंचित् उद्भ्रम्य उत्थाय । क्षणात् । उत्थानक्षण एवेत्यर्थः । दिशः दशापि परितः शून्यशून्या विलोकयमानः आत्मप्रियभ्रातृरहितत्वे अत्यन्तं सर्वार्थशून्यत्वेन पश्यन् सन् शनैः शनैः उपसृत्य समीपं प्राप्य शोकेन चञ्चलेन सकम्पेन कराञ्चलेन अग्रहस्तेन तान् भ्रातॄन् भीमादीन् पर्यायवृत्त्या क्रमशः परामृश्य संस्पृश्य दुरवतरां अवतरितुमशक्यां तां सरसीं वापीं वने अरण्ये विहगानां पक्षिणां मृगाणां च पानस्य सौकर्याय सौलभ्याय सुतरां सुखेनावतरितुं शक्यामिवेत्युत्प्रेक्षा । 'परिपूरयितुमिव' इति पाठान्तरम् । वाष्पधारां अभितो ववर्ष । एवं वक्ष्यमाणप्रकारेण विलपितुं परिदेवितुं आरभत उपक्रान्तवान् ॥

वीरा इति । हे वीराः भीमादयः, भवतां युष्माकं विपदि मरणे विषये देवानां परम्परा समूहोऽपि दूरेतरां अत्यन्तदूरे भवति । 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' इत्येदन्तादव्ययात्तरप्याम् । परान् देवपरम्परातः अन्यान् मनुष्यादीन् प्रति गिरां प्रवृत्तिः किमवधिष्ठेति वाक्प्रसरणं नास्त्येव । देवानामेव तथात्वे तदितरेषां का वार्तेत्यर्थः । तथापि इह अत्र अद्य इदानीं वः युष्माकं इयं दशा मरणावस्था कुतः कस्माज्जनात् अवतीर्णा प्राप्ता । हा हेत्याश्चर्ये खेदे वा । किंच मामन्तरेण मया विना भवतामिदं प्रयाणं परलोकयात्रा । किमिति कुत्सायाम् । अनुचितमेवेत्यर्थः । समसुखदुःखभागिनः सर्वदैव त्यागानर्हत्वादिति भावः । अत्र देवानामापत्करणाशक्तत्वे किमुत मनुष्याणामिति कैमुत्येन अर्थान्तरसिद्ध्यात्मकेन अर्थापत्त्यलंकारेण मरणहेतोः प्रसक्त्यभावेऽपि तद्वर्णनात्मकविभावनात् द्वयोरङ्गाङ्गिभावेन संकरः । यत्तु 'भवतामापदि विषये दूरेतर—' इत्यपपाठं परिकल्प्य 'रक्षितुमशक्त—' इति व्याख्याय च अतएव 'परान् नरान् प्रति गिरां प्रवृत्तिः

---

१. 'उत्थाय' इति पाठः. २. 'दशापि' इति नास्ति क्वचित्. ३. 'पाणिना तान्भ्रातॄन्' इति पाठः ४. 'परिमृश्य' इति पाठः. ५. 'सुतरां' इति नास्ति क्वचित्. ६. 'सरसीं परिपूरयितुमिव' इति पाठः. ७. 'दूरापरान्प्रति नरान्न गिरां' इति पाठः. ८. 'किमिदं भवतां' इति पाठः.

दैवं कठोरचरितं दयया विहीनं
माद्रीसुतावहह मातृमुखानभिज्ञौ।
कन्दाङ्कुराणि च फलानि च भक्षयित्वा
कान्तारसीमनि मयाचरितुं न सेहे॥ १०६॥

स्वयमव्रण एव यो भवान्व्रणमाधत्त हरस्य मस्तके।
व्रणमायुषि पार्थ तस्य ते विदधाति स्म मृधं[1] विनैव कः॥१०७॥

वत्स द्वेषिनियुद्धजीवनभुज प्रख्यानिधे मारुते
कर्णाकर्णिकया निशम्य भवता प्राप्तामवस्थामिमाम्।

---

न नास्त्येव' इति विलिख्य देवानामप्यशक्यं मनुष्या रक्षन्तीति वक्तुमवकाश एव नास्तीति भावार्थमाह नृसिंहः, तत् हा हा दर्शयमिति तृतीयवाक्यार्थेन वीरा इति भीमादिनिर्देशेन च संगतमसंगतं वेति रसिका एवाकलयन्तु। पठन्तु स्वयं द्राविडेनापि हाहेत्यस्य कटकटेत्यान्ध्रभाषया विवरणं स्वस्य साहित्यपारीणतां प्रथयतीति॥ १०५॥

**दैवमिति**। दयया विहीनं कृपया शून्यं अतएव दैवं विधिः कठोरचरितं दारुणकर्म यतः यद्दैवं मातुः मुखस्य अनभिज्ञौ अद्रष्टारौ। तयोः बाल्य एव तस्याः भर्त्रानुमृतत्वादिति भावः। माद्र्याः सुतौ नकुलसहदेवौ कान्तारसीमनि अरण्यदेशे कन्दाङ्कुराणि च फलानि च भक्षयित्वा भुक्त्वा मया सह चरितुमपि न सेहे। अहहेति खेदे। एतावन्मात्रमपि तत्तादृशमहाभोगिनोः न क्षमत इत्यर्थः। परेषामादेह-पातं न शाम्यति मत्सरः क्रूराणामिति भावः। तद्दैवमिति योज्यम्। अत्रोत्तरवा-क्यार्थेन दैवस्य दारुणकर्मत्वसमर्थनात्काव्यलिङ्गभेदः। अत्रादौ नकुलसहदेवावव-धीकृत्य राज्ञो विलापः वयस्तारतम्यकृतप्रेमतारतम्यप्रयुक्त इति ध्येयम्॥ १०६॥

**स्वयमिति**। हे पार्थ, यः भवान् मृधे स्वयमव्रणः व्रणरहितः सन्नेव हरस्य शंभोः मस्तके शिरसि व्रणं आधत्त अकरोत्। भवच्छब्दयोगात् 'शेषे प्रथमः' इति प्रथमपुरुषः। तस्य तादृक्प्रभावस्य ते तव आयुषि व्रणं आयुषोऽन्तमित्यर्थः। मृधं युद्धं विनैव कः विदधाति स्म। अचिन्त्यमहिमा हि स पुमानित्यर्थः। अत्र 'स्वयमव्रण एव यो भवान्' इत्येव पाठः। 'यो रणम्' इति पाठे मृधमित्यनेन पर्यायभङ्गाख्यदोषः। पार्थ इति निर्देशानुसारेण त्वमित्यनुषञ्जनीयत्वे आधत्तेति प्रथमपुरुषानुपपत्तिश्चेति। वैतालीयं वृत्तम्॥ १०७॥

**वत्सेति**। द्वेषिभिः हिडिम्बादिभिः सह नियुद्धं बाहुयुद्धमेव जीवनं वृत्तिः ययोस्तादृशौ भुजौ यस्य तस्य संबुद्धिः हे तादृशभुज। हे प्रख्यानिधे कीर्त्यावास, हे मारुते वत्स भीम, भवता प्राप्तां इमामवस्थां कर्णात्कर्णान्तरप्राप्तिः कर्णाकर्णि-

---

१. 'रणे' इति पाठः.

शोकेनानिशमेकचक्रनगरीभाजां च बाष्पायितुं
स्वस्त्रीयैः सह सौबलस्य च मुदा[1] कोऽप्येष कालो ह्यभूत्[2] ॥१०८॥

मय्यप्यसूनिह विमुञ्चति याज्ञसेनी
सा श्वापदामिषमबुद्धगतिर्भवेन्नः ।
हा माद्रि कुन्ति युवयोर्वनभूमिरेव
पुत्रप्रसूतिविपदोः पदतां प्रपेदे ॥ १०९ ॥

कूटस्थशीतकरकुक्षिगतं कुरंगं
कुर्वन्स्वजातिकृतकोपरसातिरेकम् ।
कोदण्डमप्यगणयन्कुलिशास्त्रसूनोः
क्वासौ स्थितो बत मृगः[3] कुलहानये नः ॥ ११० ॥

---

का तया तत्तज्जनाकर्णनपारम्पर्यतया निशम्य श्रुत्वा एकचक्रनगरीं भजन्तीति तद्वासिनां अनिशं शोकेन च सौबलस्य शकुनेः स्वस्त्रीयैः भागिनेयैः दुर्योधनादिभिः सह मुदा हर्षेण च बाष्पाणि नेत्रजलानि कारयितुं बाष्पायितुम् । तान् रोदयितुमेतान् मोदयितुं चेत्यर्थः । एष कालः कोऽपि विपरीतः अभूत् आसीत् । अत्र शोकः स्वान्तकबकान्तकनाशजन्यः मोदः स्ववैरमूलजन्य इति विवेकः । अत्र भीमावस्थाकर्णनस्य विशेषणगत्या बाष्पोदयहेतुत्वात्काव्यलिङ्गभेदः ॥ १०८ ॥

**मयीति** । किंच मय्यपि इह असून् प्राणान् विमुञ्चति सति सा पतिव्रतातिलकत्वेन प्रसिद्धा याज्ञसेनी द्रौपदी नः अस्माकं अबुद्धा गतिः यया सा तथोक्ता । अज्ञातास्मद्वृत्तान्ता सतीत्यर्थः । सापेक्षत्वेऽपि गमकत्वात्समासः । नः अस्माभिः अबुद्धा अज्ञायमाना गतिः यस्यास्तथोक्ता सतीति वा । 'क्तस्य च वर्तमाने' इति षष्ठी । अतएव श्वापदानां मांसादमृगविशेषाणां आमिषं मांसं भक्ष्यं वा भवेत् । तैर्भक्ष्या भवेदित्यर्थः । हेति खेदे । हे कुन्ति, हे माद्रि मातरो युवयोः द्वयोः वनभूमिरेव पुत्राणां अस्माकं प्रसूतेः जननस्य विपदः मरणस्य च द्वयोः पदतां स्थानत्वं प्रपेदे । हेत्यत्रापि योज्यम् ॥ १०९ ॥

**कूटेति** । कूटस्थं मृगवंशस्य आदिमं शीतकरस्य चन्द्रस्य कुक्षिगतं मध्ये वर्तमानं कुरंगं स्वया स्वीयया जात्या कुरङ्गत्वेन कृतः कोपरसस्य अतिरेकः येन तथोक्तं मामप्यविगणय्य अयं मदाश्रयवंशोच्छेदं किमिति करोतीति कोपोद्रिक्तं कुर्वन् सन् कुलिशास्त्रस्य वज्रिणः सूनोः अर्जुनस्य कोदण्डं गाण्डीवमपि अगणयन् अनाद्रियमाणश्च सन् कुलिशास्त्रेतीन्द्रनिर्देशात्पुत्रवत्सलस्येन्द्रस्य वज्रायुधमप्यगणयन्नित्यपि बोध्यम् । असौ अरणिहर्ता मृगः नः अस्माकं कुलहानये वंशच्छेदं कर्तुम् । इति 'क्रियार्थ–' इत्यदिना चतुर्थी । बतेति खेदे । 'वनमृगः' इति

---

१. 'मुदे' इति पाठः. २. 'अभवत्' इति पाठः. ३. 'वनमृगः' इति पाठः.

इत्थं विलप्य नृपतौ स्वयमप्यमीषा-
मन्तस्य हेतुरिदमित्युदकं सरस्याः ।
पातुं प्रवृत्तवति कोऽपि पुमानदृश्यो
गम्भीरमाह गगनस्थित एव वाचम् ॥ १११ ॥

राजन्मदुक्तिसरणेः प्रतिवाक्यदानं
दैवोऽप्युपेक्ष्य जलमत्र न पातुमीष्टे ।
एते मदीयमवमत्य वचोऽवलेपा-
त्पीताम्भसः सपदि बिभ्रति दीर्घनिद्राम् ॥ ११२ ॥

तत्प्रत्युदीर्य जलमत्र पिबेति वक्तुः
प्रश्नानसौ दिविचरस्य पटूत्तरैः स्वैः ।
प्रत्युद्ययौ बहुमतैर्वनदेवताना-
मिन्दोः करानिव तरङ्गकुलैः पयोधिः ॥ ११३ ॥

---

पाठ उक्तार्थालाभादुपेक्ष्यः । क्व कुत्र स्थितः । न जान इति योज्यम् । खेदमोदयोः प्रस्तावे न्यूनपदत्वे निर्दोषत्वाभिमानात् । अत्र वैलापपट्टव्याख्यानयोः नृसिंहास्मदीययोः करुणारसपरिपोषतारतम्यं सम्यक् स्वयमेवाकलयन्तु रसिका इति नोद्घाटितं ग्रन्थगौरवभियेति ॥ ११० ॥

**इत्थमिति** । इत्थं उक्तप्रकारेण नृपतौ धर्मराजे विलप्य इदं एतत् सरस्युदकं अमीषां भीमादीनां भ्रातॄणां अन्तस्य मरणस्य हेतुरिति । निश्चित्येति शेषः । स्वयमपि सरस्याः वाप्याः उदकं पातुम् । पीत्वा मर्तुमित्यर्थः । प्रवृत्तवति उद्युक्ते सति अदृश्यः अतएव कोऽपि अचिन्त्यमहिमा पुमान् गगने स्थितः सन्नेव वाचं गम्भीरं यथातथा आह ॥ १११ ॥

तदुक्तिप्रकारमेवाह—**राजन्निति** । हे राजन्, मम संबन्धिन्याः उक्तीनां प्रश्नानां सरणेः पङ्क्त्याः प्रतिवाक्यानां दानं संघटनं उपेक्ष्य । उत्तराण्यनुक्त्वेत्यर्थः । देवो ब्रह्मापि अत्र सरसि जलं पातुं नेष्टे न शक्नोति । अतः एते त्वदनुजाः अवलेपात् गर्वात् मदीयं वचः अवमत्य अनादृत्य पीतं अम्बु जलं यैस्तथोक्ताः सन्तः सपदि जलपानक्षण एव दीर्घनिद्रां मरणं बिभ्रति । मृता इत्यर्थः ॥ ११२ ॥

**तदिति** । तत् तस्मात् कारणात् प्रत्युदीर्य उत्तराण्युक्त्वा । मदुक्तिसरणेरिति शेषः । अत्र सरस्या जलं पिब इत्युक्तप्रकारेण वक्तुः भाषमाणस्य दिविचरस्य यक्षस्य प्रश्नान् । 'को मोदते' इत्यादीन् प्रति । असौ युधिष्ठिरः स्वैः स्वीयैः वनदेवतानां बहुमतैः ताभिर्बहुमन्यमानैः पूर्ववन्निष्ठाषष्ठ्यौ । पटुभिः उत्तरैः

---

१. 'सलिलं तु' इति पाठः.

तदनन्तरम् ।

कटिलम्बितवल्कलो जटालः कमनीयस्मितधौतयज्ञसूत्रः ।
कुशबर्हवतंसितः स देवः कुरुराजस्य पुरोऽवतीर्य तस्थौ ॥ ११४ ॥

स तु तत्र लोकातीतेन राकाशतमिवाकारयता निजेन तेजसा कुड्मलीकृतकरकमलयुग्मं तमात्मसंभवं प्रेममेदुरमेवमवादीत् ॥

अये वत्स, मां धर्ममवेहि ॥

विमतजनवितीर्णं विविधं विपिनक्लेशमनुभवतो भवतो भावं बुभुत्सुरेवमाचरिषम् ॥

---

प्रतिवाक्यैः 'पञ्चमेऽहनि षष्ठे वा शाकं पचति स्वे गृहे । अनृणो ह्यप्रवासी च स वारिचर मोदते ॥' इत्यादिभिः । पयोधिः समुद्रः स्वैः तरङ्गाणां कुलैः वृन्दैः इन्दोः चन्द्रस्य करान् किरणान् प्रतीव प्रत्युदयौ प्रत्युज्जगाम। उत्तराण्युवाचेत्यर्थः। उपमालंकारः। अत्र 'तत्प्रत्युदीर्य जलमत्र पिब' इत्येव पाठः। 'तत्प्रत्युदीर्य सलिलं न पिब' इति पाठे प्रत्युदीर्य सलिलं पिब अन्यथा न पिबेति व्याख्यानत्वेऽपि क्लिष्टत्वन्यूनपदत्वाख्यमधिकं दोषद्वयमिति ॥ ११३ ॥

तदनन्तरम्। इत्युत्तरेणान्वयः ॥

कटीति। कटौ ऊरूपरिभागे लम्बितं धृतं वल्कलं येन सः जटालः जटावान् कमनीयं मनोज्ञं स्मितं यस्य स चासौ धौतयज्ञसूत्र इति वैवक्षिकविशेषणविशेष्यभावात् बहुव्रीहिगर्भः कर्मधारयः । कुशबर्हैः दर्भपत्रैः वतंसितः शिरसि भूषितः सः उक्तप्रभावेन प्रसिद्धः देवः यक्षाकृतिः यमः कुरुराजस्य धर्मराजस्य पुरः अवतीर्य। गगनादिति शेषः। तस्थौ स्थितवान् ॥ ११४ ॥

स इति। स देवः यमस्तु लोकान् सर्वान् अतीतेन अतिक्रान्तेन। सर्वातिशायिनेत्यर्थः। राकाणां पूर्णिमारात्रीणां शतं आकारयता आह्वयतेव। अतिधवलेनेत्यर्थः। निजेन तेजसेवेत्युत्प्रेक्षा। कुड्मलीकृतं मुकुलीकृतं करौ कमले इव तयोः युग्मं युगलं यस्य तथोक्तम् । साञ्जलिबन्धमित्यर्थः। आत्मसंभवं पुत्रं धर्मराजं प्रति प्रेम्णा अनुरागेण मेदुरं पूर्णं यथातथा एवं वक्ष्यमाणप्रकारेण अवादीत् उक्तवान्। वदतेः कर्तरि लुङ् ॥

उक्तिप्रकारमाह—अये इति । अये वत्स हे पुत्र, त्वं मां धर्मं यमं त्वत्पितरं अवेहि जानीहि ॥

विमतेति। किंच विमतजनेन शत्रुजनेन दुर्योधनादिना वितीर्णं दत्तम्। प्रापितमिति यावत्। विविधं बहुविधं विपिनक्लेशं वनवासदुःखं अनुभवतः भवतः तव भावं स्वभावं बोद्धुं धर्मं लङ्घते वा न वेति परीक्षितुमिच्छुः बुभुत्सुः। बुध्यतेः सन्नन्तादुप्रत्ययः। एवं भवदनुजविपत्तिकरणेन प्रकारेण आचरिषं आचरितवानस्मि ॥

---

१. एतत्पूर्वम् 'संप्रति' इति क्वचित्.

तद्बहुधा परीक्षितेन भवतः शीलेन समञ्जसेन प्रश्नोत्तरेण च प्रसेदिवानस्मि । तस्मान्ममानुग्रहेण[1] स्वप्नान्निवृत्तैरिव भूयोऽप्युत्थितैरनुजन्मभिः सह त्रयोदशीं शरदं वेषान्तरवन्तं[2] भवन्तं कोऽपि न जानीयादिति[3] वरमरणिं[4] च विस्मयविस्मारितनयनपरिस्पन्दनाय निजनन्दनाय प्रतिपाद्य स पुमानन्तर्दधे ॥

तत्तादृशो भगवतो वचसा निकाम-
मासाद्य मोदभरमाश्रममागतानाम् ।
प्राप्तारणेर्द्विजवरस्य शुचेव साक-
मन्तं जगाम[5] समयोऽपि महानमीषाम् ॥ ११५ ॥

इत्यनन्तभट्टकविकृतौ चम्पूभारते पञ्चमः स्तवकः ।

---

तदिति । तत् तस्मात् बहुधा अनेकप्रकारं परीक्षितेन भवतः शीलेन स्वभावेन च समञ्जसेन समुचितेन भवतः संबन्धिना प्रश्नानां मदीयानां उत्तरेण प्रतिवाक्येन च द्वाभ्यां प्रसेदिवान् प्रसन्नोऽस्मि । तस्मात् प्रसन्नत्वाद्धेतोः मम अनुग्रहेण प्रसादेन स्वप्नात् निद्रातः निवृत्तैः प्रत्यागतैः । प्रबुद्धैरिति यावत् । भूयोऽपि पुनः उत्थितैः । लब्धजीवितैरित्यर्थः । अनुजन्मभिः भ्रातृभिः सह त्रयोदशीं शरदं संवत्सरं सर्वमपि । अत्यन्तसंयोगे द्वितीया । वेषान्तराणि अन्यवेषाः संन्यासादयः तद्वन्तं भवन्तं कोऽपि अतिनिपुणोऽपि न जानीयात् मा बुध्यतु । इत्युक्तप्रकारं वरं च तं मृगवेषेणात्मनापहृतं अरणिं च ब्राह्मणस्येति शेषः । विस्मयेन आश्चर्येण विस्मारितं विस्मृतत्वेन कारितं नयनयोः परिस्पन्दनं निमेषोन्मेषव्यापारः यस्य तस्मै । आश्चर्येण निश्चलाक्षायेत्यर्थः । निजाय नन्दनाय पुत्राय धर्मराजाय प्रतिपाद्य दत्त्वा स पुमान् दिव्यपुरुषः अन्तर्दधे अन्तर्हितवान् । अत्र वाञ्छिताभ्यां भ्रातृजीवनारणिलाभाभ्यां अधिकस्य अज्ञातवाससंवत्सरे परदुर्ज्ञेयवेषान्तरलाभवरस्य वर्णनात्प्रहर्षणभेदः । 'वाञ्छितादधिकार्थस्य सिद्धिं चाहुः प्रहर्षणम्' इति लक्षणात् ॥

तदिति । तत् तादृशः । अनुपमस्वभावादिति भावः । भगवतः यमस्य वचसा वरदानवाक्येन निकामं अत्यन्तं मोदभरं संतोषातिशयं आसाद्य प्राप्य आश्रमं निजं प्रति आगतानां प्राप्तानां अमीषां पाण्डवानां संबन्धि महान् द्वादशवार्षिकत्वेन विस्तीर्णः समयः वनवासशपथोऽपि प्राप्तः तेभ्यः लब्धः

---

१. 'मदनुग्रहेण' इति पाठः. २. 'रूपान्तर' इति पाठः. ३. 'विजानीयात्' इति पाठः. ४. 'वरं च तमरणिं' इति पाठः. ५. 'अन्तर्जगाम' इति पाठः.

## षष्ठः स्तवकः ।

तदनु ते भरता व्यवधाश्रयाच्चरमहायनलङ्घनकाङ्क्षिणः ।
अतिचिरं रविभाण्डविवर्धितानतुचरानिव तामटवीं जहुः ॥ १ ॥

तदन्वमी[1] तदनुचितवचनसाहसाधिगतवाहसाधिपवपुषं नहुषमौदरदमूनसः[2] शमनाय चतुरर्णववारिकाङ्क्षिणः पारिकाङ्क्षिणः अग-[3]

---

अरणिः येन तस्य द्विजवरस्य ब्राह्मणश्रेष्ठस्य शुचा साकं दुःखेन सहैव अन्तं समाप्तिं जगाम । निस्तीर्णप्रतिज्ञा बभूवुः पाण्डवाः, निस्तीर्णदुःखश्च बभूव ब्राह्मण इत्यर्थः । अत्र पाण्डववनवासशपथब्राह्मणदुःखयोः समाप्तिप्राप्त्या सहभावस्य सहृदयरञ्जकस्य वर्णनात् सहोक्तिरलंकारः । 'सहोक्तिः सहभावश्चेद्भासते जनरञ्जनः' इति लक्षणात् । एवं तयोः प्रकृतयोः समाप्तिगमनेनौपम्यस्य गम्यत्वात्तुल्ययोगितामेदश्च । द्वयोरनयोरभिन्नपदबोध्यत्वादेकवाचकानुप्रवेशसंकरः ॥ ११५ ॥

इति श्रीसदाशिवपादारविन्दवन्दनकन्दलितानन्दसान्द्रस्य कुरविकुलचन्द्रस्य रामकवीन्द्रस्य कृतौ चम्पूभारतव्याख्याने लास्याख्याने पञ्चमः स्तवकः ॥

---

### षष्ठः स्तवकः ।

अस्मिन्स्तवके अज्ञातवार्षिकवृत्तान्तं वर्णयति—**तदन्विति** । तदनु वनवाससमयनिस्तरणानन्तरं व्यवधायाः आच्छादनस्य । वेषान्तरस्येति यावत् । आश्रयात् स्वीकारात् । 'अन्तर्धा व्यवधापुंसि' इत्याच्छादनपर्यायेष्वमरः । चरमस्य अन्तिमस्य हायनस्य अज्ञातवाससंवत्सरस्य लङ्घनं यापनं काङ्क्षन्त इति काङ्क्षिणः । अत एव ते भरताः धर्मराजादयः अतिचिरं आ द्वादशसंवत्सरं रवेः सूर्यस्य संबन्धिना भाण्डेन अक्षय्यान्नपात्रेण विवर्धितान् पोषितान् अनुचरान् परिचरानिव तां अटवीं द्वैतवनम् । तांश्च तां चेत्यर्थः । जहुः तत्यजुः । अत्राज्ञातवासकाङ्क्षायाः विशेषणगत्या अनुचराटवीत्यागहेतुत्वात्पदार्थहेतुककाव्यलिङ्गस्य परिजनाटव्योः प्रकृतयोः त्यागेनौपम्यगमकस्य तुल्ययोगितामेदस्य च द्वयोरङ्गाङ्गिभावेन संकरः । द्रुतविलम्बितं वृत्तम् ॥ १ ॥

**तदन्विति** । तदनु तदुभयत्यागानन्तरं अमी पाण्डवाः तस्य अगस्त्यस्य अनुचितेन । तं प्रति वक्तुमनर्हेणेत्यर्थः । वचनसाहसेन वाक्पारुष्येण हेतुना अधिगतं प्राप्तं वाहसा अजगरा नाम सर्पविशेषाः तदधिपस्य श्रेष्ठाजगरस्येव वपुः यस्य तम् । अगस्त्यशापप्राप्ताजगरभावमित्यर्थः । नहुषं नाम राजानम् । उदरे भवस्य औदरस्य दमूनसः अग्नेः । जठरानलस्येति यावत् । शमनाय निवारणार्थं चतुर्णां अर्णवानां समुद्राणां वारि काङ्क्षन्त इति काङ्क्षिणः । चतुःसमुद्रजलपायिन

---

१. 'अमी' इति नास्ति क्वचित्. २. 'दमुन' इति पाठः. ३. 'अगस्त्यस्य' इति नास्ति क्वचित्.

स्त्यस्य कोपोदिताच्छापोदधेरुत्तरैरुत्तार्य तस्मादेव विस्मारितनिज-विधिदुर्विलसितया तया वरारोहया सह दुःसहनिजधामपिधान-वैदग्ध्यमभ्यसितुकामा इव ते[2] मात्स्यनगरस्य नातिसमीपपितृवन-गामिनीं शमीमभजन् ॥

क्रमेण मत्स्येन्द्रपुरोपकण्ठे करालमापुः पितृकाननं ते ।
वधूद्रुहां भाविनि सूतजानां वधप्रदेशस्य दिदृक्षयेव ॥ २ ॥
शमीतरौ तत्र निधाय शस्त्रममी तदन्तर्ज्वलदग्निकल्पम् ।
जगाहिरे वेषमिवान्यमुच्चैर्ध्वजं विराटस्य पुरं प्रवीराः ॥ ३ ॥

---

इत्यर्थः । परिकाङ्क्षिणः मुनेः अगस्त्यस्य कोपेन उदितात् उत्पन्नात् शापात् अजगरत्वप्रापकादेव उदधेः समुद्रात् उत्तरैः तत्प्रश्नप्रतिवाक्यैरेव प्लवैरिति श्लिष्टरूपकम् । उत्तार्य तारयित्वा । शापान्मोचयित्वेत्यर्थः । तस्मात् विधिदुर्विल-सितप्राप्ताजगरभावान्नहुषादेव विस्मारितं अशोचनीयत्वेन कारितं निजं च विधेः दैवस्य दुर्विलसितं वनवासदुःखजननं यया तथोक्तया । महतामपि दुर्ल-ङ्घ्या दैवी गतिः, अतो मयापि न शोचनीयमेतदिति धैर्यावलम्बिन्नेत्यर्थः । तया वरारोहया द्रौपद्या सह दुःसहस्य आच्छादयितुमशक्यस्य निजस्य धाम्नः तेजसः पिधाने आच्छादने विषये वैदग्ध्यं कौशलं अभ्यसितुं कामो येषां तथोक्ता इवेत्युत्प्रेक्षा । मात्स्यनगरस्य विराटपुरस्य नातिसमीपे ईषद्दूरदेशे विद्यमानं-पितृवनं श्मशानं गच्छतीति तद्गामिनीम् । तत्र वर्तमानामित्यर्थः । 'श्मशानं स्यात्पि-तृवनम्' इत्यमरः । शमीं नाम वृक्षं अभजन् प्रापुः । अत्र च 'वृषाकपिः शमीगर्भो हव्यवाहो द्रुमाशनः' इति धनंजयकोशादौ लोके, 'शमीगर्भादग्निं मथ्नन्ति' इति वेदे च, अग्नेः शमीगर्भत्वेन प्रसिद्ध्या तद्गर्भवद्भजने तेजस्तिरोधानाभ्यसनहेतुत्वमु-त्प्रेक्षितम् । 'अजगरे शयुर्वाहस इत्युभौ', 'सप्तार्चिर्दमुनाश्चित्रः', 'तपस्वी तापसः पारिकाङ्क्षी वाचंयमो मुनिः', 'वरारोहा मत्तकाशिनी' इति क्रमेण तत्तद्विशेष-पर्यायेष्वमरः ॥

क्रमेणेति । ते पाण्डवाः क्रमेण गमनपर्यायेण पादचारेण वा उपलक्षिताः वध्वे द्रौपद्यै द्रुह्यन्तीति तद्द्रुहाम् उत्तरत्रेति शेषः । सूतजानां कीचकानां संब-न्धिनि भाविनि भविष्यति वधप्रदेशस्य । वधस्थानस्येत्यर्थः । द्रष्टुमिच्छा दिदृक्षा तयेवेत्युत्प्रेक्षा । मत्स्येन्द्रपुरस्य विराटनगरस्य उपकण्ठे समीपे करालं भयंकरं पितृकाननं श्मशानं आपुः प्राप्तवन्तः । उपेन्द्रवज्रावृत्तम् ॥ २ ॥

शमीति । अमी प्रवीराः पाण्डवाः तत्र श्मशाने शमीतरौ तस्य शमीवृक्षस्य

---

१. 'दुर्विलासादासादितवराः वरारोहया तया सह' इति पाठः. २. 'ते' इति नास्ति क्वचित्. ३. 'अनतिसमीपगामिनीं पितृवनशमीम्' इति पाठः.

समत्वमुत्कर्षनिकर्षयोः स्वं संदर्शयिष्यन्निव धर्मसूनुः ।
क्रमेण हंसः परमो हि[1] भूत्वा कङ्कत्वमापद्यत सद्य एव ॥४॥
पुरार्जुनस्येव यतित्वमेतदस्यापि काममप्यपरां सपत्नीम् ।
संपादयेत्किं नु ममेति कृष्णा तथाविधं वीक्ष्य नृपं शशङ्के ॥५॥
त्रिदण्डकाषायकमण्डलूज्ज्वलो जपस्फुरद्दन्तपटो युधिष्ठिरः ।
उपानहं दारुमयीं पदा स्पृशन्नुपासदत्संसदि मेदिनीश्वरम् ॥६॥

---

अन्तः मध्ये ज्वलतः अग्नेः कल्पं तत्तुल्यं शस्त्रम् । आयुधानीति जात्येकवचनम् । निधाय विन्यस्य अन्यं स्वाभाविकादितरं वेषं संन्यासादिकमिव उच्चैः उन्नता ध्वजा यस्मिन् तत् विराटस्य पुरं जगाहिरे विविशुः । अत्र वेषान्तरविराटपुरयोः श्लेषमित्तिकया स्वीकारप्रवेशयोः अभेदाध्यवसितेन गाहमानेनौपम्यस्य गम्यत्वात्केवलप्रकृतास्पदतुल्ययोगितामेदः ॥ ३ ॥

समत्वमिति । धर्मसूनुः युधिष्ठिरः उत्कर्षे निकर्षे अपकर्षे च द्वयोरपि स्वं स्वीयं समत्वं अविकृतचित्तत्वं संदर्शयिष्यन् प्रदर्शयितुमिच्छन्निवेत्युत्प्रेक्षा । क्रमेण संन्यासविशेषेण परमः हंसः परमहंसाश्रमी । पर्यायेण श्रेष्ठहंस इति च । भूत्वापि सद्यः तत्क्षणमेव कङ्कत्वं कङ्क इति संज्ञां गृध्रभावं च आपद्यत प्राप्तवान् । उत्प्रेक्षाश्लेषद्वयोज्जीवितो विरोधाभासः । 'हंसो विहङ्गकर्मेन्दिवृक्षमेदेषु भास्करे' इति विश्वः । उपजातिर्वृत्तम् ॥ ४ ॥

पुरेति । कृष्णा द्रौपदी तथाविधं संन्यासवेषं नृपं धर्मराजं वीक्ष्य पुरा सुभद्राहरणसमये अर्जुनस्य यतित्वमिव अस्य नृपस्य एतत् यतित्वमपि अपरां सुभद्रायाः कामपि कांचित् सपत्नीं मम संपादयेत्किंन्विति शशङ्के संभावयामास । उपमोज्जीवित उत्प्रेक्षालंकारः ॥ ५ ॥

त्रिदण्डेति । ततः त्रिभिः दण्डैः बद्धदण्डः काषायं वस्त्रं कमण्डलुश्च त्रिभिरुज्ज्वलः । तत्सहित इत्यर्थः । जपेन प्रणवजपेन स्फुरन्तौ चलन्तौ दन्तपटौ ओष्ठौ यस्य सः युधिष्ठिरः संन्यासाकृतिः दारुमयीं उपानहं पादुकां पदा पादेन स्पृशन् आरूढः सन् संसदि सभायां वर्तमानं मेदिनीश्वरं विराटभूपं उपासदत् प्राप्तवान् । अत्र अत्याश्रमिणः पुनर्गार्हस्थ्ययोग्यत्वाय त्रिदण्डसंन्यासस्वीकारः । एकदण्डसंन्यासप्रच्यवने महाप्रत्यवायस्मरणात् । अत एव रावणार्जुनादीनां तद्धारणं तत्प्रच्यवनं चाविगीतत्वेन तत्र तत्रोपन्यस्तमिति ध्येयम् । इदं पद्यद्वयं मूलक्रमे संदर्भविरोधात् व्यत्ययेन व्याख्यातम् ॥ ६ ॥

---

१. 'अपि' इति पाठः. २. 'अस्यातिकामस्यपरां' इति पाठः.

दृष्ट्वा समुत्थितो मात्स्यो धृतप्रश्रयविस्मयः ।
तत्पादपांसुं फालान्ते चक्रे तं पुनरासने ॥ ७ ॥
दुर्वीरगर्वासहनोऽथ भीमो दर्वीकरादर्शितसूदभावः ।
शोणाधरालोलुपसूतसूनोः प्राणानिलान्पारयितुं किलासीत् ॥ ८ ॥
पितुः सखायं परिपूज्यमेधैर्दिने दिने तृप्तिमिवोपनेतुम् ।
सूदाकृतिः सोऽपि ययौ विराटं वृकोदरो वृत्तशरावपाणिः ॥ ९ ॥
कुलशैलशृङ्ग इव जंगमे तदा कुरुकुञ्जरे चलति कम्पनं मुहुः ।
वसुधैव तस्य न पुरस्य केवलं वहति स्म कीचकभुजाप्यदक्षिणा ॥ १० ॥

---

दृष्ट्वेति । तं सभागतं युधिष्ठिरसंन्यासिनं दृष्ट्वा धृतौ प्रश्रयविस्मयौ विनयाश्चर्ये येन तथोक्तः अतएव समुत्थितः प्रत्युत्थितः मात्स्यः विराटः तस्य संन्यासिनः पादयोः पांसुं रजः फालान्ते शिरसि चक्रे । शिरसा नमस्कृतवानिति भावः । तं पुनः संन्यासिनं तु आसने सिंहासने चक्रे । उपवेशितवानित्यर्थः । अत्र नमस्कृत्युपवेशनक्रिययोर्यौगपद्यात्समुच्चयालंकारः ॥ ७ ॥

दुर्वीरेति । अथ युधिष्ठिरप्राप्त्यनन्तरम् । दुष्टाः वीराः बकहिडिम्बादयः तेषां गर्वं न सहत इत्यसहनः भीमः शोणाधरायां द्रौपद्यां लोलुपस्य आसक्तस्य सूतसूनोः कीचकस्य प्राणरूपान् अनिलान् पारयितुं पारणं कर्तुम् । किलेत्युत्प्रेक्षा । दर्व्या खजया युक्तः कर एव दर्वीकरः सर्पः तेन आदर्शितः सूचितः सूदस्य भावः पाचकत्वमेव सूदयति मारयतीति सूदस्य भावः मारकत्वं येन तथोक्तः सन्निति श्लिष्टपरम्परितरूपकम् । उक्तोत्प्रेक्षासापेक्षमिति द्वयोरङ्गाङ्गिभावेन संकरः । इन्द्रवज्रावृत्तम् ॥ ८ ॥

पितुरिति । परिपूज्यं सम्यक्पूजनीयं पितुः वायोः सखायं सुहृदं अग्निमिति प्रस्तुतोचितनिर्देशः । पितृसखस्य पितृकल्पत्वात्परिपूज्यत्वोक्तिः । अत्र पितुः सखायमित्यस्य व्यावर्तकविशेषणत्वेन परिपूज्यं इत्यनेनाग्नेर्बोधः सुलभः, ततः पितुः सखायं अतएव परिपूज्यमित्येव योजना । परंतु बालानुजिघृक्षया तथोक्तमिति ध्येयम् । दिने दिने प्रतिदिनं एधैः शुष्केन्धनैः तृप्तिं उपनेतुमिवेत्युत्प्रेक्षा । सूदस्येवाकृतिर्यस्य सः सः प्रसिद्धः वृकोदरः भीमोऽपि वृत्तं वर्तुलं शरावं विस्तृतास्यं पात्रं पाणौ यस्य तथोक्तः सन् विराटं नृपं ययौ प्राप । उपजातिवृत्तम् ॥ ९ ॥

कुलशैलेति । जंगमे चरे कुलशैलस्य शृङ्गे शिखर इव स्थित इत्युत्प्रेक्षा । कुरुकुञ्जरे कौरवश्रेष्ठे भीमे सूदाकृतौ चलति आगच्छति सति तदा आगमनसमये तस्य विराटस्य पुरस्य संबन्धिनी वसुधा भूमिरेव केवलं भृशं कम्पनं मुहुः न व-

---

१. 'दर्वीकरो' इति पाठः. २. 'पायचितुम्' इति पाठः.

महानसेऽवतरतो जनस्य स पतिः कृतः ।
महानसेवत रतो मात्स्यं स्वादुषु कर्मसु ॥ ११ ॥

स्त्रीत्वेन योगः खलु वीरगर्ह्यः पुंस्त्वेन चान्तःपुरवासविघ्नः ।
इतीव षण्ढत्वमवश्यभाव्यमादाय पार्थोऽपि जगाम मात्स्यम् ॥१२॥

कृतवसतिरसौ नृपस्य कन्या-
गृहभुवि नर्तयति स्म तालपाणिः ।
मधुकरमुखरो लता वनान्ते
मलयगिरेरिव मारुतप्ररोहः ॥ १३ ॥

मम ध्वजाङ्कस्य बिभर्ति संज्ञामसाविति प्रेमभराडुपेतः ।
प्रसूनधन्वेव सुतोऽपि माद्र्या मत्स्येन्द्रमागत्य ननाम मूर्ध्ना ॥१४॥

---

इति स्म नाबिभ्रत् । किंतु अदक्षिणा वामा कीचकस्य भुजा बाहुरपि कम्पनं वहति स्म । तस्य भाविमरणसूचकत्वेनेति भावः । अत्र विराटनगरभूकीचकभुजयोश्चलनेनौपम्यस्य गम्यत्वात्केवलप्रकृतासदः तुल्ययोगितामेदः । मञ्जुभाषिणीवृत्तम् ॥ १० ॥

महानस इति । सः महान् भीमः महानसे पाकस्थाने अवतरतः वर्तमानस्य जनस्य पाचकस्य पतिः कृतः प्रभूकृतः सन् । मात्स्येनेत्यर्थाल्लभ्यते । अत एव रतः तस्मिन्ननुरक्तः सन् । स्वादुषु रुच्येषु कर्मसु पाकेषु मात्स्यं विराटं असेवत सेवितवान् । रुच्यैः पाकैः तर्पयामासेत्यर्थः । आदिपादावृत्तिर्यमकमेदः ॥ ११ ॥

स्त्रीत्वेनेति । स्त्रीत्वेन योगः संबन्धः । स्त्रीरूपधारणमिति यावत् । वीराणां अस्मादृशां गर्ह्यः निन्द्यः । पुंस्त्वेन योगः पुंरूपधारणं च अन्तःपुरे वासस्य विघ्नः प्रतिबन्धः । खल्वित्युभयत्रावधारणे । इति हेतोरिवेत्युत्प्रेक्षा । अवश्यं प्रकृतप्रयोगित्वेन उर्वशीशापेन च अनिवार्यं यथातथा भवितुं योग्यं भाव्यं षण्ढत्वम् । स्त्रीत्वपुंस्त्वाभ्यामन्यत् नपुंसकत्वम् । आदाय स्वीकृत्य । पार्थः अर्जुनोऽपि मात्स्यं जगाम विराटं प्राप्तवान् ॥ १२ ॥

कृतेति । तालं कांस्यनिर्मितवाद्यविशेषः नर्तकत्वसूचकः पाणौ यस्य सः असौ बृहन्नलाख्यः षण्ढत्वधारी अर्जुनः नृपस्य विराटस्य गृहभुवि कृता वसतिः स्थितिः येन सः तथोक्तः सन् । कन्याः उत्तराप्रभृतीः । मधुकरैः अलिभिः मुखरः शब्दायमानः वनान्ते मलयगिरेः संबन्धी मारुतप्ररोहः वाताङ्कुरः लताः मल्लिकादीरिव । नर्तयति स्म नाट्यमकारयत् । तच्छिक्षितवानित्यर्थः । उपमालंकारः । पुष्पिताग्रावृत्तम् ॥ १३ ॥

ममेति । असौ विराटः मम ध्वजे अङ्कस्य मीनस्य संज्ञां मत्स्येन्द्र इति नाम बिभर्ति इत्युक्तप्रकारात् प्रेम्णः भरात् अतिशयात् उपेतः आगतः प्रसूनधन्वा मन्मथ इव स्थित इत्युत्प्रेक्षा । माद्र्याः सुतः नकुलोऽपि मत्स्येन्द्रं विराटं प्रति

तं पश्यन्नकुलं राजा तन्द्रालुर्दृङ्निमेषणे ।
निजां मत्स्येश्वराभिख्यां निनाय प्रकटार्थताम् ॥ १५ ॥
कशां करे स विभ्राणं शशाङ्ककुलभूषणम् ।
मन्दुरापतिमातेने तं दुरापपराक्रमम् ॥ १६ ॥
अस्मत्तिरोधिवसतेर्भविताऽन्तहेतु-
रेतद्दिनैः कतिपयैरिति जानतेव ।
पाण्डोः सुतेन चरमेण च तस्य राज्ञो
वृन्दं गवां प्रजुगुपे पृथुकौतुकेन ॥ १७ ॥

---

आगत्य मूर्ध्ना ननाम नमस्कृतवान् । अत्र मत्स्यानामिन्द्र इति व्युत्पत्तेरुभयत्र तुल्यत्वेऽपि एकत्र श्रेष्ठमत्स्यः, अन्यत्र तन्नामकदेशाधिपः, इत्यर्थभेदो ग्राह्यः । 'देशभेदे झषे मत्स्यः' इति कोशात् ॥ १४ ॥

**तमिति** । तं नकुलं पश्यन् अतएव दृशोः नेत्रयोः निमेषणे मीलने विषये तन्द्रालुः प्रमादशीलः । निमेषरहितः सन्निति यावत् । निजां मत्स्येश्वरः मीनश्रेष्ठ इत्यात्मिका अभिख्या संज्ञाशब्दः तां प्रकटः स्फुटः अर्थः 'सुरमत्स्याव-निमिषौ' इति कोशप्रसिद्धानिमिषत्वरूपः यस्यास्तस्या भावः तत्ता ताम् । अन्वर्थनामत्वमिति यावत् । 'त्वतलोर्गुणवचनस्य' इति पुंवद्भावः । निनाय प्रापयामासेवेत्युत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या । अथवा नकुलावलोकनप्राप्तनिमेष-राहित्यस्य तादृगन्वर्थताप्राकट्यप्रापणहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गमित्येकत्र कविसंरम्भनिर्णायकाभावात् द्वयोः संदेहसंकरः ॥ १५ ॥

**कशामिति** । स विराटः शशाङ्कस्य चन्द्रस्य यत्कुलं वंशः तस्य भूषणं दुरापः शत्रुभिः प्राप्तुमशक्यः पराक्रमः यस्य तं कशां अश्वताडनीं करे बिभ्राणम् । प्राकृतिकस्वीयाश्वशिक्षणनैपुण्यद्योतनायेदं विशेषणम् । अतएव परिकरालंकारः । एवं सर्वत्र बोध्यम् । तं नकुलं मन्दुरायाः वाजिशालायाः पतिं आतेने चक्रे । अत्र शशाङ्केति दुरापेति द्विकत्रिकयोरावृत्त्या लाटानुप्रासस्योक्तपरिकरस्य च द्वयोः शब्दार्थालंकारयोः काव्यप्रकाशिकोक्तदिशा एकवाचकानुप्रवेशसंकरः ॥ १६ ॥

**अस्मादिति** । एतत् गोवृन्दं कतिपयैर्दिनैः अस्माकं तिरोधिवसतेः अज्ञात-वासस्य अन्तस्य समाप्तेः हेतुः भविता भविष्यति इत्युक्तप्रकारं जानतेव स्थिते-नेत्युत्प्रेक्षा । पृथुकौतुकेन चरमेण सर्वेषां कनिष्ठेन पाण्डोः सुतेन सहदेवेन । चकारः अप्यर्थः । तस्य राज्ञः विराटस्य संबन्धि गवां वृन्दं प्रकर्षेण जुगुपे रक्षितम् । गोपायतेः कर्मणि लिट् । सहदेवो गोपवेषः विराटनिदेशेन तद्गोकुलं ररक्षेत्यर्थः ॥ १७ ॥

---

१. 'विरोधिविरतेः' इति पाठः. २. 'अत्र हेतुः' इति पाठः.

आगता नगरवासवाञ्छया देवतेव विपिनस्य पार्षती ।
केलिपुष्पमिव दन्तकङ्कतं विभ्रती नृपवधूमुपागमत् ॥ १८ ॥

सैरन्ध्रीरूपभाजोऽस्या जातिनैच्यान्नतं शिरः ।
सुदेष्णायास्तु[1] तां दृष्ट्वा सुन्दरीं व्रीलगौरवात्[2] ॥ १९ ॥

वनभुव इव माधवोदयश्री-
र्मनुजपतेरवरोधयोषितोऽसौ ।
अनुदिनमखिलालिलालनीयै-
रलमकरोत्तिलकैरतीव दृश्यैः ॥ २० ॥

अनन्तरं स्ववशा[3] पाञ्चालसुता भृशमादृतकङ्कतमतिरसोत्पादन-

---

आगतेति । नगरवासे पट्टणनिवासे वाञ्छयता आगता विपिनस्य देवतेव स्थितेत्युत्प्रेक्षा । पार्षती द्रौपदी केल्याः क्रीडार्थं पुष्पमिव स्थितमित्युत्प्रेक्षा । पूर्वसापेक्षेति संकरः । दन्तमयं कङ्कतं केशसंस्कारकयन्त्रविशेषं विभ्रती सती । 'प्रसाधनी कङ्कतिका' इत्यमरः । सैरन्ध्रीत्वसूचकमिदं विशेषणम् । नृपस्य विराटस्य वधूं सुदेष्णां प्रति उपागमत् आगतवती । उक्तसंकरपरिकरयोः संसृष्टिः । रथोद्धतावृत्तम् ॥ १८ ॥

सैरन्ध्रीति । सैरन्ध्र्याः शिल्पकारिकायाः रूपं आकारं भजतीति भाजः । अस्याः द्रौपद्याः शिरः जातेः सैरन्ध्रीकुलस्य नैच्यात् अपकर्षाद्धेतोः नतं नम्रं अभूत् । सुदेष्णायाः विराटपत्न्याः शिरस्तु तां सुन्दरीमिति प्रस्तुतोचितनिर्देशः । द्रौपदीं दृष्ट्वा व्रीलगौरवात् लज्जातिशयाद्धेतोः नतमभूत् । 'सैरन्ध्री परवेश्मस्था स्ववशा शिल्पकारिका' इत्यमरः । अत्रोभयोः शिरसोः नमनेनौपम्यस्य गम्यत्वात्तुल्ययोगितामेदस्य नमनहेतुनमनयोः उक्तिरूपहेत्वलंकारस्य च द्वयोरेकवाचकानुप्रवेशसंकरः ॥ १९ ॥

वनेति । असौ सैरन्ध्रीरूपधारिणी द्रौपदी मनुजपतेः विराटस्य अवरोधयोषितः अन्तःपुराङ्गनाः माधवोदयश्रीः वसन्ताभ्युदयलक्ष्मीः वनभुवः वनसीमा इव अखिलाभिः आलीभिः सखीभिः अखिलैरलिभिश्च लालनीयैः अतएव अतीव दृश्यैः भृशं प्रेक्षणीयैः तिलकैः चित्रकैः वृक्षविशेषैश्च दिने दिने अनुदिनं अलमकरोत् अलंचकार । श्लिष्टसाधर्म्येयमुपमा । पुष्पिताग्रावृत्तम् ॥ २० ॥

अनन्तरमिति । अनन्तरं सर्वेषां विराटपुरवासानन्तरम् । स्ववशा स्वाय-

---

१. 'वीक्ष्यैनाम्' इति पाठः. २. 'व्रीडपीडनात्' इति पाठः. ३. 'स्ववशा भ्रमादिव' इति पाठः.

चणमधिकशोभनाटनपाटवमाश्रितगन्धर्वकुलमाकलितगोत्रान्तरं पञ्चधा रूपमुदञ्चयन्ती पञ्चापि पतीननुयातवती ॥

विमतानपि तैर्जित्वा विवासमिव दायकः ।
अक्षेष्वकुरुतावृत्तिमवनीन्द्रेण धर्मभूः ॥ २१ ॥

एवं तैस्तैः स्वकृत्यैः संपादितशिरःकम्पं वयःकृतमिव संततमनुभवता तेन महीपतिना बहुमानिताः पृथासुताः यथा विवासनखेदं तथा तदीयमपि स्वरूपमितरे जनास्तत्र नाज्ञासिषुः ॥

ता । ननु परतन्त्रेत्यर्थः । शिल्पकारिकापीति च अतएव पाञ्चालसुता द्रौपदी आदृता स्वीकृता कङ्कस्य भावः कङ्कता युधिष्ठिरत्वम्, आदृतं कङ्कतं प्रसाधनी च यस्मिन् तथोक्तम् । 'प्रसाधनी कङ्कतिका' इति कोशे कङ्कतशब्दात्स्वार्थे कप्रत्यये टापि च 'प्रत्ययस्थात्–' इत्यादिना कात्पूर्वस्यात इत्वे च कङ्कतिकेति ग्राह्यम् । अतएव 'शिरसीव कङ्कतमवोढ मूर्धजे' इति माघप्रयोगः । अत्यन्तं रसानां मधुरादीनां षण्णां शृङ्गारस्य च उत्पादनेन प्रसिद्धं तच्चणम् । एकत्रालंकरणनैपुण्यात्, अन्यत्र पाकनैपुण्याच्चेति भावः । 'तेन वित्तश्चुञ्चुप्चणपौ' इति प्रसिद्धार्थे चणप् । अधिकशोभया नाटने नाट्यशिक्षणे पाटवं सामर्थ्यं यस्मिंस्तथोक्तम्, के शिरसि अधिकं शोभायाः भूषणमाल्याद्यलंकरणजन्यायाः नाटने संयोजने पाटवं यस्मिंस्तथोक्तमिति च । आश्रितं गन्धर्वाणां अश्वानां स्वपतीनां च कुलं वृन्दं यस्मिंस्तथोक्तम् । आकलितं आश्रितं गोत्रायाः गोवृन्दस्य अन्तरं मध्यदेशः यस्मिंस्तथोक्तम्, आकलितं आश्रितं गोत्रान्तरं मालिनीत्यन्यन्नाम यस्मिंस्तथोक्तमिति च । 'गोत्रा गोनिचये भूम्यां नाद्रौ श्रीकुलसंज्ञयोः' इति मेदिनी । अतएव पञ्चधा पञ्चप्रकारं रूपं सैरन्ध्रीवेषं उदञ्चयन्ती प्रकटयन्ती सती । पञ्चापि पतीन् रूपान्तरमापन्नान् युधिष्ठिरादीन् अनुयातवती विडम्बयति स्म । 'आर्तार्ते मुदिते हृष्टा' इत्यादिना पतिव्रतानां पतिसमानधर्मसरणादिति भावः । अत्र स्ववशेति विशेषणस्य श्लेषभित्तिकाभेदाध्यवसितपञ्चविधरूपोदञ्चनसामर्थ्याभिप्रायगर्भत्वात्परिकरस्य श्लेषभित्तिकाभेदाध्यवसायमूलातिशयोक्तेश्च अङ्गाङ्गिभावेन संकरः ॥

**विमतानिति** । धर्मभूः युधिष्ठिरः तैरपि अक्षैरपि विमतान् दुर्योधनादीन् जित्वा विवासं तेषां राज्यभ्रंशं दायकः वितरिष्यमाण इवेत्युत्प्रेक्षा । अवनीन्द्रेण सह विराटेन सह अक्षेषु पाशकेषु । अक्षक्रीडायामिति यावत् । आवृत्तिं पौनःपुन्येन खेलनं अकुरुत चक्रे । विवासं दायक इत्यत्र 'अकेनोर्भविष्यदाधमर्ण्ययोः' इति कृद्योगे षष्ठीप्रतिषेधः ॥ २१ ॥

**एवमिति** । एवं उक्तप्रकारं स्वैः स्वीयैः तैस्तैः कृत्यैः अक्षक्रीडापाकनाट-

१. 'अधिगत' इति पाठः. २. 'गोत्रापलपं' इति पाठः. ३. 'पञ्चानामपि' इति पाठः. ४. 'पाञ्चालनृपतिसुता पञ्चापि' इति पाठः. ५. 'कृतैः' इति पाठः. ६. 'संपादितम्' इति पाठः. ७. 'अनेन' इति पाठः.

अथैकदा तत्र सुदेष्णायाः प्रेषणेन मदनोत्सवासवाय वासवायतनसदृशं वासगृहमागतां कौरवाधमकरपरिक्लेशादिव विवर्णेन वाससावगुण्ठिताङ्गीं नखशशिपरम्परासेवनलालसतयेव प्रपदसंमुखीनलोचननीलोत्पलां राजीवशङ्कयानुव्रजता राजहंसेनेव राजतभाजनेन राजितकराञ्चलां पाञ्चालसुतां विलोक्य पञ्चेषुवाणवञ्चितविवेको मञ्चादुपसृत्य किंचिदाकुञ्चितमौलिः कीचको वाँचमुवाच ॥

---

नाश्वगोपालनैः संपादितं श्लाघासु घटितं शिरसः कम्पं वयसा चरमेण कृतं शिरःकम्पमिव संततं अनुभवता तेन महीपतिना विराटेन बहुमानिताः सन्तः पृथासुताः युधिष्ठिरादयः विवासेन राज्यभ्रंशेन यः खेदः तं यथा नाज्ञासिषुः विसस्मरुः तथा तेषामिदं तदीयं पृथासुतसंबन्धि स्वरूपं युधिष्ठिरत्वादिकमपि इतरे जनाः पौरजानपदाश्च नाज्ञासिषुः न जानन्ति स्म । जानातेः कर्तरि लुङ् । अत्र पाण्डवानां तदितरेषां च तत्तदज्ञानेनौपम्यस्य गम्यत्वात्तुल्ययोगितामेदः ॥

अथेति । अथ अनन्तरं एकदा कदाचित् तत्र विराटनगरे मदनोत्सवस्य सुरतार्थं आसवाय मद्यमाहर्तुमिति 'क्रियार्थ—' इत्यादिना चतुर्थी । सुदेष्णायाः विराटपत्न्याः प्रेषणेन हेतुना वासवस्य इन्द्रस्य आयतनेन गृहेण सदृशं वासगृहं केलीगृहं प्रति आगतां कौरवाधमस्य दुःशासनस्य करेण यः परिक्लेशः आकर्षजनितदुःखं तस्मादिवेत्युत्प्रेक्षा । विवर्णेन गतशोभेन । मलिनेनेति यावत् । वाससा वस्त्रेण अवगुण्ठितं आच्छादितं अङ्गं यस्यास्ताम् । नखानामेव शशिनां चन्द्राणां परम्परायाः पङ्क्तेः सेवने लालसतया अनुरागेणेवेत्युत्प्रेक्षा । प्रपदस्य पादाग्रस्य संमुखीने अभिमुखे लोचने एव नीलोत्पले यस्यास्ताम् । पातिव्रत्येन पादाग्रनिहितदृष्टिमित्यर्थः । राजीवशङ्कया पद्मभ्रमेण अनुव्रजता अनुसरता राजहंसेनेव, स्थितेनेति भ्रान्तिमदुज्जीवितोत्प्रेक्षा । राजतेन रजतविकारेण भाजनेन पात्रेण राजितं दीप्तं कराञ्चलं अग्रहस्तः यस्यास्ताम् । पाञ्चालसुतां द्रौपदीं विलोक्य पञ्च इषवः बाणाः पुष्पमयाः यस्य तेन मन्मथेन वञ्चितः अपहृतः विवेकः कृत्याकृत्यविचारः यस्य सः अत एव कीचकः सुदेष्णाभ्राता मञ्चात् शयनात् उपसृत्य समीपमागत्य किंचित् आकुञ्चितः अवनमितः मौलिः शिरः येन तथोक्तः । गृहीतविनयः सन्नित्यर्थः । वाचं वक्ष्यमाणां उवाच । अत्र केवलोत्प्रेक्षाया रूपकोत्प्रेक्षासंकररूपकाङ्गाङ्गिभावसंकरस्य भ्रान्तिमदुत्प्रेक्षासंकरस्य च त्रयाणां संसृष्टिः ॥

---

१. 'गेहम्' इति पाठः. २. 'परिक्लेशदुःखादिव' इति पाठः. ३. 'अवकुण्ठिताङ्गीम्' इति पाठः. ४. 'नीचां वाचम्' इति पाठः.

इदमेव हि सद्म भद्रभद्रं यदिदानीं तव मार्दवज्ञमङ्घ्रेः ।
अयमप्यहमस्मि धन्यधन्यो हरिणाक्षि त्वदपाङ्गगोचरो यः ॥ २२ ॥

नतगात्रि यदागमेन मां नयसे मोदगिरेरधित्यकाम् ।
चिरपुण्यफ[1]लोदयश्रियां दिवसो वैजननस्तदेष मे ॥ २३ ॥

अन्वर्थता मालिनि तेऽभिधायाः
कुतो न जागर्त्यधुना कचेषु ।
[2]तस्याः प्रतीपोदितवर्णपङ्क्ते-
रर्थोऽथ वालंकरणं ह्यमीषु ॥ २४ ॥

---

इदमिति । हरिणस्य कुरङ्गस्येव अक्षिणी यस्यास्तस्याः संबुद्धिः हे हरिणाक्षि द्रौपदि, इदं सद्म एतद्गृहमेव मद्गृहेष्विति शेषः । भद्रभद्रं अत्यन्तशुभसंपन्नम् । नान्यदित्यर्थः । हिरवधारणे । यतः मद्गृहमिदानीं तव अङ्घ्रेः मार्दवं सौकुमार्यं जानातीति तज्ज्ञम् । भवच्चरणन्यासधन्यमित्यर्थः । किंच अयं अहमपि धन्यधन्यः अत्यन्तभाग्यवानस्मि । उभयत्र वीप्सायां द्विर्भावः । यतः योऽहं तव अपाङ्गस्य नेत्रान्तभागस्य गोचरः विषयोऽस्मि । त्वत्कटाक्षवीक्षितोऽस्मीत्यर्थः । अत्र द्वितीयचतुर्थवाक्यार्थाभ्यां भद्रत्वधन्यत्वातिशययोः समर्थनाद्वाक्यार्थहेतुककाव्यलिङ्गद्वयसंसृष्टिः । औपच्छन्दसिकवृत्तम् ॥ २२ ॥

नतेति । किंच हे नतगात्रि घनस्तनभारनम्राङ्गि, त्वं यत् यस्मात् कारणात् आगमेन स्वयमेवात्रागमनेन मां मोदस्य संतोषस्यैव गिरेः अद्रेः अधित्यकां ऊर्ध्वदेशं नयसे प्रापयसे । सान्द्रानन्दतुन्दिलं करोषीत्यर्थः । तत् तस्मात् एषः ईदृशसंतोषदायकः दिवसः वासरः मे मदीयानां चिरपुण्यानां अनेकजन्मसुकृतानां यः फलस्य उदयः उत्पत्तिः तस्य श्रियां समृद्धीनां वैजननः प्रसूतिदिवसः भवति । 'घटो नीलघटः' इत्यादिवद्विधेयकोटावधिकावगाहनान्न बोधानुपपत्तिः । 'सूतिमासो वैजननः' इति कोशे मासशब्दः पक्षदिवसादेरप्युपलक्षक इति ध्येयम् । 'फलाङ्कुर–'इतिपाठेऽप्युक्त एवार्थः । अत्राप्युत्तरवाक्यार्थहेतुकं काव्यलिङ्गम् ॥२३॥

अन्वर्थतेति । मालिनीति द्रौपद्याः सैरन्ध्रीरूपायाः नाम । किंच हे मालिनि, ते त्वदीयायाः अभिधायाः मालिनीति संज्ञाशब्दस्य अन्वर्थता माला अस्या अस्तीति व्युत्पत्तिसिद्धः मालारूपोऽवयवार्थः । कचेषु केशेषु । त इत्यत्राप्यनुषज्यते । अधुना कुतो हेतोः न जागर्ति न स्फुरति । अथवा मालाधारणे विचारो न कार्य एवेत्यर्थः । हि यस्मात् कारणात् तस्याः त्वदीयायाः संबन्धिन्याः प्रतीपं विलोमं यथातथा 'नीलिमा' इत्येवमुदितानामुच्चरितानां वर्णानां उक्तानां अक्षराणां पङ्क्तेः नीलिमेत्यात्मिकायाः अर्थः नैल्यमेव अमीषु कचेषु अलंकरणं भूषणं भवति । तत् तस्मादिति योज्यम् ।

---

१. 'फलाङ्कुर' इति पाठः. २. 'अस्याः' इति पाठः.

वाह्वोरनङ्गदत्वस्य वाले ते कारणे उभे ।
एकं तयोस्तु लावण्यमितरन्नावगम्यते ॥ २५ ॥

अरम्यभावं भजते जगत्या-
मङ्गेषु किंचिद्विकलोऽपि लोकः ।

---

निसर्गसुन्दराणां भारायैव भूषणानीति भावः । अत्र माल्यं कुतो न धृतमिति स्वोक्तस्यैव नैल्यसत्ताविचारणेनाक्षिप्तत्वादाक्षेपालंकारः । 'आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणात्' इति लक्षणात् ॥ २४ ॥

वाह्वोरिति । किंच हे वाले, ते तव वाह्वोः अङ्गं मन्मथविकारं दत्तः कुरुतः इत्यनङ्गदौ अङ्गदाभ्यां केयूराभ्यां रहितौ अनङ्गदौ च । तयोर्भावः अनङ्गदत्वं । द्विविधस्य तस्य कारणे अपि उमे द्वे भवतः । के इत्यत आह—एकमिति । तयोः कारणयोः द्वयोः मध्ये एकं कारणं तु लावण्यं शोभानैगनिग्यम् । 'मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥' इति निरुक्त्या अवगम्यते दृश्यते । मयेति शेषः । तथा च लावण्यरूपकारणसत्त्वादुचितमेवैकविधमनङ्गदत्वमनयोरिति भावः । इतरत् द्वितीयं कारणं गर्भधारणं तु नावगम्यते इति परिहासोक्तिः । अत्र 'दर्शने दौहृदार्तौ च द्वयोरासीदनङ्गदा' इति तृतीयस्तबके ग्रन्थकृतैव लावण्यगर्भधारणयोः श्लेषमित्तिकाभेदाध्यवसितेऽनङ्गदत्वे कारणत्वेनोपन्यस्तत्वात् इतरत् गर्भधारणमिति व्याख्याने नास्मासु चोद्यावकाशः । अत्र यद्यप्यङ्गदराहित्येऽपि लावण्यस्य कारणत्वं वक्तुं शक्यम् , तथापि 'न कान्तमपि निर्भूषं विभाति वनिताननम्' इति रसिकसमाजप्रसिद्ध्या उद्दीपनविभावविधया शृङ्गारे भूषणधारणस्यात्यावश्यकत्वादुक्तस्यैव गर्भधारणस्य तत्र कारणत्वं ग्रन्थकृदभिप्रेतमिति ध्येयम् । अत्र लावण्यानङ्गदानयोः हेतुहेतुमतोरुक्त्या हेत्वलंकारस्य विनापि कारणं गर्भधारणं अङ्गदराहित्यरूपकार्यस्य वर्णनाद्विभावनायाश्च अङ्गदराहित्यानङ्गदानयोः श्लेषभित्तिकाभेदाध्यवसायमूलातिशयोक्तेश्च तिसृणां संसृष्टिः । यत्तु 'मन्मथप्रदान एव कारणद्वयम्' इति, 'मन्मथप्रदानाङ्गदराहित्ययोः क्रमेण कारणद्वयम्' इति च द्विधा व्याख्याय प्रथमे मन्मथप्रदस्य लावण्यस्यानङ्गदानकार्योपक्षीणत्वेन एकस्य कारणस्य कार्यद्वयोत्पादनासमर्थत्वेन च त्वद्बाह्वोर्मन्मथप्रदत्वं निष्कारणमेवेत्यर्थः । तथा च तव बाहुरलंकारं विनापि मन्मथोद्रेककर इति, द्वितीयो लोके भर्तृराहित्यं अङ्गदादिधारणाभावे कारणं, मयि भर्तरि सति किमर्थमङ्गदधारणं न कृतमिति च पृष्टवानिति च भावार्थावाह नृसिंहः, तत् किं केन संगतमिति सहृदया एवाकलयन्तु, परं त्वीदृशस्याप्यतिदुरूहस्य चम्पूभारतस्य व्याख्याने प्रवृत्त्या सर्वतो बलवतीं मन्यामहे स्वात्मसंभावनामिति ॥ २५ ॥

अरम्येति । किंच हे बाले, जगत्यां लोके लोकः जनः अङ्गेषु करचरणादिषु । कस्मिंश्चिदिति शेषः । किंचित् ईषन्मात्रेणापि विकलः न्यूनः सन् अरम्यस्य असु-

संदृश्यसे त्वं निखिलेन वाले
मध्येन हीनापि मनोज्ञमूर्तिः ॥ २६ ॥

न पल्लवस्तन्वि न विद्रुमश्च
ताम्रोऽधरोऽयं तव विम्वमेव ।
चन्द्रो यदि स्यात्तव वक्त्रमेत-
च्चन्द्रस्य विम्वं सहजं हि लोके ॥ २७ ॥

कान्ते तवाननमिदं कमलावलीषु
स्रष्टुं पुरा सरसि विस्मृतमेव धात्रा ।
पश्चाद्विचिन्तितवता तदुपान्तभागे
संदृश्यते विरचितः खलु हंसपादः ॥ २८ ॥

---

न्दरस्य भावं अरम्यत्वं विरूपत्वं भजते प्राप्नोति । त्वं तु निखिलेन यावता मध्येनाङ्गेन हीना शून्यापि सती मनोज्ञा रम्या मूर्तिः शरीरं यस्यास्तथोक्ता संदृश्यसे । 'निरीक्ष्यसे' इति वा पाठः । उभयत्रैक एवार्थः । मयेति शेषश्च । अत्रारम्यत्वकारिणः यावन्मध्यवैकल्यस्य तद्विरुद्धरम्यत्वसाधकत्वेन वर्णनाद्व्याघातालंकारः । यावन्मध्यवैकल्यासंवन्धेऽपि तत्संवन्धरूपातिशयोक्त्युज्जीवित इति द्वयोरङ्गाङ्गिभावेन संकरः । तेन लोकैकविलक्षणं भवदीयलावण्यमिति प्रतीतेरलंकारेण वस्तुध्वनिः ॥ २६ ॥

नेति । किंच हे तन्वि, ताम्रः अरुणः तव अयं अधरः न पल्लवः न विद्रुमश्च किंतु विम्वं विम्वफलमेव मण्डलमेवेति च । कथमेतदत आह—चन्द्र इति । तवैतद्वक्त्रं मुखं चन्द्रः स्याद्यदि । हिरवधारणे । तर्हि चन्द्रस्यैव विम्वं मण्डलं विम्वफलं च सहजम् । नान्यस्येत्यर्थः । अत्र मुखचन्द्रयोर्भेदेऽप्यभेदातिशयोक्तिरेका । अस्मिन्नेव वाक्यार्थे मुखस्य विम्ववत्तासाहजिकत्वसिद्धये मुखं चन्द्रः यदि स्यादित्यूहात्मकः संभावनालंकारः । द्वयोश्चैकवाचकानुप्रवेशसंकरः । तेन च युक्त्युपन्यासरूपेणाधरे विद्रुमत्वपल्लवत्वे निषिध्य विम्बत्वारोपरूपायाः हेत्वपह्नुतेरुज्जीवनादनयोरङ्गाङ्गिभावेन संकरः । इदं तु रहस्यं मण्डलविम्वफलयोः श्लेषमित्तिकाभेदाध्यवसायमूलायां अतिशयोक्तौ सत्यामेव हेत्वपह्नुतेः प्रचारेणैतयोरङ्गाङ्गिभावेन संकरस्यैवोक्तसंकरोज्जीवितत्वात्संकरयोरेव द्वयोरङ्गाङ्गिभावेन संकर इति । यत्तु 'विम्वशब्दस्य श्लिष्टार्थत्वादुत्तरार्धेनार्थान्तरन्यासरूपेण तस्य मण्डलार्थकत्वसमर्पणमेव करोति' इति उत्तरार्धावतरणिकां नृसिंहो विलिलेख, तत्तस्य 'नालंकारोऽत्र लिख्यते' इत्यत्र व्यञ्जनागम्यमलंकारमौढ्यं विशदयतीति ॥ २७ ॥

कान्ते इति । किंच हे कान्ते, तवेदमाननं मुखं सरसि पद्माकरे कमलानां

---

१. 'निरीक्ष्यसे त्वं तु विचित्रमेतन्मध्येन' इति पाठः. २. 'विचिन्तनवता' इति पाठः. ३. 'संलक्ष्यते' इति पाठः.

कूपस्य तीरे निवसन्नपायं को वा न धत्ते वद कोमलाङ्गि ।
त्वन्नाभिकूपस्य वसन्हि तीरे न दृश्यते संप्रति मध्यभागः ॥ २९ ॥

अक्षीणवक्त्रशशिसेवनलाभतोषा-
दालिङ्गितामिव मिथो रजनेस्त्रियामीम् ।
त्रेधा विभज्य रचितां वहसेऽद्य वेणीं
कं सिंहसंहननमूहयितुं वियुक्तम् ॥ ३० ॥

---

आवलीषु पङ्क्तिषु । तन्मध्य इत्यर्थः । स्रष्टुं निर्मातुं पुरा सृष्टिकाले धात्रा ब्रह्मणा विस्मृतमेव । पश्चात् कमलसृष्ट्यनन्तरं विचिन्तितवता अस्रष्ट्वैवाहो मालिनीमुखं किमित्येतान्येव सृष्टानीत्यालोचितवता अतएव धात्रा विरचितः निर्मितः हंसपादः विस्मृतमन्यत्र निर्माय अत्रैतद्विस्मृतमिति सूचको लिपिविशेषः हंसानां पादन्यासश्च तासां कमलावलीनां उपान्तभागे समीपदेशे संदृश्यते । लोकैरिति शेषः। तदुपान्तभागे विरचित इति वा योजना । खल्वित्यवधारणे। अत्र विस्मृतिसूचकलिपिविशेषस्य हंसचरणन्यासस्य च द्वयोः श्लेषमित्तिकाभेदाध्यवसायमूलातिशयोक्त्यनुप्राणितः कमलावल्यः धातृविस्मृतमालिनीमुखरहिताः हंसपादवत्त्वादित्यनुमानालंकार इति द्वयोः संकरः ॥ २८ ॥

कूपस्येति । किंच हे कोमलाङ्गि, कूपस्य तीरे निवसन् निवासं कुर्वाणः को वा जनः अपायं उपद्रवं उत्पतनं न धत्ते न प्राप्नोति । सर्वोऽपि धत्त एवेत्यर्थः । वद त्वं ब्रूहि । वाक्यार्थः कर्म । सामान्येनोक्तमर्थं विशेषेण समर्थयति—त्वदिति । हि यस्मात्तव नाभेरेव कूपस्य तीरे वसन् मध्यभागः संप्रति न दृश्यते । मयेति शेषः। अत्रार्थान्तरन्यासेन नाभेरतिगाम्भीर्यप्रतीतेरलंकारेण वस्तुध्वनिः । अत एवात्र नाभिवर्णनमात्रे तात्पर्यान्नारम्यभावमित्यनेन पौनरुक्त्यम् । 'त्वन्नाभिकूपस्य वसन्हि तीरे' इत्येव पाठः । 'तटेनिवासी' इति पाठे तीरपदार्थस्य तटपदेन परामर्शो पर्यायभङ्गाख्यदोष इति ॥ २९ ॥

अक्षीणेति । किंच हे मालिनि, त्रेधा त्रिविधं विभज्य भङ्गीकृत्य रचितां अतएव अक्षीणस्य सर्वदा पूर्णस्य वक्त्रस्यैव शशिनः सेवनं भजनं तल्लाभेन यस्तोषः संतोषः तस्मात् मिथः अन्योन्यं आलिङ्गितां आश्लिष्टां रजनेः रात्रेः संबन्धिनीं त्रयाणां यामानां समाहारं त्रियामीमिव स्थितां वेणीं केशपाशं सिंहसंहननं वराङ्गरूपसंपन्नं कं धन्यं अद्य वियुक्तम् । त्वयेति शेषः । ऊहयितुं अनुमातुम् । लोकैरिति भावः । वहसे । प्रोषिते भर्तरि वेणीधारणस्मरणादत्रेयं केनचिदन्येन वियुक्ता वेणीधारणादित्यनुमानालंकारः । त्रियामत्वोत्प्रेक्षया संसृष्टः प्रथमचतुर्थयामयोः पूर्वार्धपश्चार्धद्वयस्याहन्येव परिगणनाद्रात्र्यास्त्रियामत्वमिति क्षीरस्वामी॥३०॥

---

१. 'तटेनिवासी' इति पाठः. २. 'त्रिवेणीम्' इति पाठः.

सुदति बहुपरागधूसरापि त्वमपहरस्यधुना मनो मदीयम् ।
रतिरिव हरकोपदह्यमानस्मरतनुधूमलवावृताखिलाङ्गी ॥ ३१ ॥
त्वामुल्लसद्बिम्बफलाधरां मे मामप्यनङ्गाशुगमर्दितं ते ।
विशङ्कमस्मिन्विजने प्रदेशे पद्मानने पातुमयं हि कालः ॥ ३२ ॥

इति तस्य तादृशं वचनमाकर्ण्यापि[3] चित्तचम्पकमञ्जरीचञ्चरीकायमाणपञ्चशरविकारा पाञ्चाली गिरमिमां स्मररागतिमिरकौमुदीमुदीरयामास ॥

---

सुदतीति । शोभना दन्ता यस्याः संबुद्धिः हे सुदति, बहुना सान्द्रेण परागेण रजसा धूसरा मलिनापि त्वं हरस्य शंभोः कोपेन । तत्प्रसारितफालनयनानलेनेत्यर्थः । दह्यमानायाः स्मरतनोः मन्मथशरीरस्य संबन्धिनः धूमस्य लवैः लेशैः आवृतं अङ्गं यस्यास्तथोक्ता रतिः मन्मथपत्नीव अधुना मदीयं मनः अपहरसि । अत्र द्रौपद्यास्तथाविधरत्युपमया कीचकस्य हरकोपदह्यमानमदनोपमायाः तया च तस्यैवास्यापि संनिहितायुरवसानस्य च प्रतीतेरलंकारेणालंकारवस्तुद्वयध्वनिः । 'अर्थाः प्रोक्ताः पुरा तेषामर्थव्यञ्जकतोच्यते' इति काव्यप्रकाशे त्रिविधस्याप्यर्थस्य व्यञ्जकत्वप्रतिपादनाद्व्यङ्ग्यस्यालंकारस्य वस्तुव्यञ्जकत्वं नानुपपन्नम् । पुष्पिताग्रा वृत्तम् ॥ ३१ ॥

विवक्षितं चार्थमावेदयति—त्वामिति । किंच हे पद्मानने, मे मम उल्लसन् बिम्बफलमिव अधरो यस्यास्तां त्वां पातुम् । त्वदधरमास्वादयितुमित्यर्थः । ते तव अनङ्गाशुगैः मन्मथबाणैः मर्दितं पीडितं मामपि अस्मिन्विजने प्रदेशे एकान्ते विशङ्कं निःशङ्कं यथातथेति पदद्वयं पूर्वत्रापि योज्यम् । पातुं रक्षितुं अयमेव कालः । हिरेवकारार्थः । अहो देशकालावप्युक्तार्थेऽनुकूलावित्यावयोर्भाग्यमनन्यादृशमिति भावः । अत्र बिम्बाधरत्वानङ्गबाणमर्दनैकान्तैः तत्काले पानावसरलसमर्थनादनेकपदार्थहेतुकस्य काव्यलिङ्गस्य बिम्बाधरेत्युपमायाः श्लेषमित्तिकालब्धपानरक्षणाभेदाध्यवसायमूलातिशयोक्तेः उक्तक्रियाद्वययौगपद्यात्मकसमुच्चयस्य च चतुर्णामेकवाचकानुप्रवेशसंकरः ॥ ३२ ॥

इतीति । इति उक्तप्रकारेण तादृशं स्मरविकारकृतं तस्य कीचकस्य वचनं आकर्ण्यापीत्यपिना किमुतानाकर्णने इति ध्वन्यते । चित्तस्यैव चम्पकमञ्जर्याः चम्पकगुच्छस्य चञ्चरीकः भृङ्ग इवाचरतीति चञ्चरीकायमाणः । दूरीभूत इति यावत् । पञ्चशरस्य मन्मथस्य संबन्धी विकारः यस्यास्तथोक्ता पाञ्चाली द्रौपदी स्मररागस्य मन्मथविकारस्यैव तिमिरस्य कौमुदीं चन्द्रिकाम् । तन्निरसनीं इति परम्परितरूपकम् । इमां वक्ष्यमाणां गिरं वाचं उदीरयामास उक्तवती । अत्र तादृग्वचनाकर्णनरूप-

---

१. 'लवाविलाखिलाङ्गी' इति पाठः. २. 'विजन' इति पाठः. ३. 'अपि' इति नास्ति क्वचित्. ४. 'विकारिका' इति पाठः.

अन्तःपुरेषु विहरन्नयि कीचक त्वं
सैरन्ध्रये स्पृहयसीति विगर्ह्यमेतत् ।
रम्येषु कल्पकुसुमेषु चरन्द्विरेफो
रज्येत किं पितृवनद्रुमगुच्छिकायाम् ॥ ३३ ॥

प्रत्याय्यते चपलता पतिपत्नीषु या हठात् ।
इष्टार्थसिद्धेः प्रागेव दिष्टान्तं दोग्धि सा नृणाम् ॥ ३४ ॥

गन्धर्वाः सन्ति मे कान्ता बाधते यान्स्मरोऽनिशम् ।
स्वाभिख्यां स्वास्त्रसंख्यां च वहन्तीतीर्ष्यया किल ॥ ३५ ॥

---

सामग्रीसत्त्वेऽपि स्मरविकारानुदयवर्णनविकारात्मकविशेषोक्त्या स्मरविकारस्य कारितवाक्कथनसमर्थनात्मकपदार्थहेतुककाव्यलिङ्गोज्जीवनात्तयोरङ्गाङ्गिभावेन संकरः रूपकेण संसृष्टः । तेन च लोकोत्तरमस्याः पातिव्रत्यमिति प्रतीतेरलंकारेण वस्तुध्वनिः ॥

अन्तरिति । अयि कीचक, अन्तःपुरेषु विहरन् अन्तःपुरस्त्रीभिः सह क्रीडन् त्वं सैरन्ध्रये दास्यै स्पृहयसि तां कामयसीत्येतत् सैरन्ध्रीस्पृहणं विशेषेण गर्ह्यं निन्द्यम् । तत्र दृष्टान्तयति—रम्येष्विति । रम्येषु लोकोत्तरमकरन्दसौरभादिना मनोज्ञेषु कल्पस्य वृक्षस्य कुसुमेषु चरन् रसान् अनुभवन् द्विरेफः भ्रमरः पितृवनद्रुमस्य श्मशानवृक्षस्य गुच्छिकायां पुष्पगुच्छे रज्येत अनुरक्तो भवेत किम् । न रज्येतैवेत्यर्थः । अत्र सैरन्ध्रीश्मशानतरुमञ्जर्योः लोकनिन्द्यत्वेन बिम्बप्रतिबिम्बभावात् दृष्टान्तालंकारः—'चेद्बिम्बप्रतिबिम्बत्वं दृष्टान्तस्तदलंकृतिः' इति लक्षणात् ॥ ३३ ॥

प्रत्याय्यत इति । किंच हे कीचक, या चपलता पराङ्गनानुरक्तिः पतिपत्नीषु पतिव्रतास्वपि विषये हठात् बलात् प्रत्याय्यते संक्राम्यते । नृभिरित्यर्थाल्लभ्यते । सा पतिव्रताविषयकतृष्णा इष्टस्य कामितस्य अर्थस्य सिद्धेः प्राक् पूर्वमेव दिष्टान्तं मरणं दोग्धि जनयति । अनुचितकर्मारम्भस्य मृत्युद्वारेषु परिगणनादिति भावः । अत्रेष्टार्थसमुद्यमादनिष्टावाप्तिवर्णनात् तृतीयविषमप्रभेदः । 'पतिपत्नी पतिव्रता' इति स्त्रीभेदेषु, 'दिष्टान्तः प्रलयोऽत्ययः' इति चामरः ॥ ३४ ॥

ननु पतिपत्नीषु लोलत्वं मृतिदायकमस्तु सैरन्ध्र्यां त्वयि साधारणायां लोलत्वान्न कापि मम हानिरत आह—गन्धर्वा इति । किंच हे कीचक, मे मम गन्धर्वाः गन्धर्वसंज्ञाः कान्ताः पतयः सन्ति । यान् मत्कान्तान् स्वस्य अभिख्यां शोभां स्वस्य अस्त्राणां बाणानां संख्यां पञ्चत्वं च एते वहन्ति । इत्युक्तप्रकारया

---

१. 'अपि' इति पाठः. २. 'प्रतायते' इति पाठः. ३. 'पतिवत्नीषु' इति पाठः.

दोष्मतामवतंसास्ते स्वरूपं नैव केवलम् ।
गोपायन्त्यप्रमादेन परेभ्यो मां च मानिनः ॥ ३६ ॥
तदद्य पथि वामेऽस्मिन्संप्रतिष्ठास्यसे यदि ।
ते तु त्वां चारयिष्यन्ति दक्षिणे विधृतक्रुधः[1] ॥ ३७ ॥
इत्यूचुषी सा महिषी कुरूणां शेमुषीमती ।
सद्यो निववृते तस्माच्चित्तवृत्तिरिवात्मनः ॥ ३८ ॥
यथा यथास्या धावन्त्या रिङ्खणेन पदोर्युगम् ।
तथा तथा रुषारुण्यं तस्याधत्त दृशोरपि ॥ ३९ ॥

---

ईर्ष्यया । किलेति संभावनायाम् । अक्षमयेवेत्युत्प्रेक्षा । स्मरः मन्मथः अनिशं सर्वदा वाधते, तथा चाहमपि पतिपत्नीति मयि लोललमुक्तफलं जनयत्येवेति भावः ॥ ३५ ॥

ननु 'विशङ्कमस्मिन्विजने प्रदेशे' इत्युक्तत्वादिहाद्य का तच्चिन्तेत्यत आह—**दोष्मतामिति** । किंच हे कीचक, दोष्मतां बाहुवलशालिनां अवतंसाः शिरोमणयः । लोकोत्तरबाहुवीर्या इति यावत् । ते मत्पतयः गन्धर्वाः परेभ्यः स्वेषां रूपं आकारमेव केवलं मुख्यं यथा तथा न गोपायन्ति न रक्षन्ति । परैर्दृश्या न भवन्तीत्यर्थः । अज्ञातवाससमयादिति भावः । किंतु मानिनः प्रशस्तमानवन्तः । प्रशंसायामिनिः । अतएव ते अप्रमादेन परेभ्यः दुःशीलेभ्यः भवादृशेभ्यः मां च मामपि गोपायन्ति । मत्पतयोऽदृश्या अत्रैव वर्तमाना इत्यर्थः ॥ ३६ ॥

ननु सिंहवलं मां वराकास्ते किं कुर्वन्तीत्यत आह—**तदिति** । किंच हे कीचक, तत् तस्मात् । तेषामत्रैव वर्तमानत्वाद्धेतोरित्यर्थः । अस्मिन् उक्तविधे अतएव वामे अनुचिते सव्ये च पथि मार्गे परदारामिमर्शनरूपे । अद्य त्वं संप्रतिष्ठास्यसे यदि संचरिष्यसि चेत् । संप्रतिपूर्वात्तिष्ठतेः कर्तरि लृट् तङ् मध्यमः । तर्हि ते मत्पतयः गन्धर्वास्तु विधृता क्रुत् क्रोधः यैस्तथोक्ताः सन्तः त्वां दक्षिणे यमपुरानुसारिणि मार्गे चारयिष्यन्ति गमयिष्यन्ति । मारयिष्यन्तीत्यर्थः ॥ ३७ ॥

**इतीति** । इति उक्तप्रकारेण ऊचुषी भाषमाणा अतएव शेमुषीमती सदसद्विवेचकत्वेन प्रशस्तबुद्धिमती । प्रशंसायां मतुप् । 'धीः प्रज्ञा शेमुषी मतिः' इति बुद्धिपर्यायेष्वमरः । सा कुरूणां महिषी कृताभिषेकपत्नी द्रौपदी । 'कृताभिषेका महिषी' इत्यमरः । आत्मनः स्वस्य चित्तवृत्तिरिव तस्मात् कीचकात् तं विहायेति ल्यब्लोपे पञ्चमी । सद्यो निववृते प्रतिनिवृत्तवती । वर्ततेः कर्तरि लिट् । अत्र द्रौपदीचित्तवृत्त्योः कीचकान्निवृत्त्या सादृश्यस्य गम्यत्वात्तुल्ययोगितामेदः ॥ ३८ ॥

**यथेति** । धावन्त्याः कीचकभयाद्द्रुतं गच्छन्त्याः अस्या द्रौपद्याः पदोः पादयोः युगं द्वन्द्वं रिङ्खणेन स्खलनेन द्रुतगमनेन । दृढविक्षेपेणेति यावत् । आरुण्यं यथा यथा

---

१. 'अपि धृतक्रुधः' इति पाठः. २. 'ऊचिषी' इति पाठः.

कृष्णा ततस्तेन कृतान्तभासा केशे गृहीता[1] भुवि पातिता सा ।
पर्यायबद्धोद्यमविश्रमाभ्यां पद्भ्यां कराभ्यामपि पर्यभावि ॥ ४० ॥
प्रहारभीत्येव तदा मृगाक्ष्या नाड्यां क्वचिद्यान्तरधत्त संज्ञा ।
उद्भ्रम्य सा दूरगते प्रहर्तर्युद्घाटयामास दृशौ चिराय ॥ ४१ ॥

तदनु शनैःशनैरुत्तस्थुषी धरातलपरागधूसरिमतिरोहितदीधितितया वासरापलपितमहौषधिलतेव[2] विलुलितचूर्णकुन्तलतया चक्रवाताकुलीकृतवालपूलिकाचमरीमृगीव[3] सूतान्ववायजनपदस्य प्रथमामीतिबाधामिव बाष्पधारामुत्सृजन्ती क्वचिदपि शरणमलभमाना सा याज्ञसेनी मन्दं मन्दं तदेव भवनमभिजगाम[4] ॥

आधत्त अबिभ्रत् तथा तथा तस्य कीचकस्य दृशोर्युगं नेत्रद्वन्द्वमपि रुषा कोपेन मामप्यवधीरयतीयं वराकीत्यात्मकेन आरुण्यं आधत्त । अत्रापि पादयुगनेत्रयुगयोः आरुण्यधारणेनौपम्यस्य गम्यत्वात्केवलप्रकृतासदस्तुल्ययोगितामेदः ॥ ३९ ॥

कृष्णेति । ततः कोपोदयानन्तरं कृतान्तस्य यमस्येव भाः रूपं यस्य तेन कीचकेन । केशे इति जात्येकवचनम् । गृहीता भुवि पातिता सा कृष्णा द्रौपदी पर्यायेण क्रमेण बद्धौ स्वीकृतौ उद्यमः ताडनोद्योगः विश्रमः विश्रान्तिश्च तावुभौ याभ्यां ताभ्यां पद्भ्यां पादाभ्यां कराभ्यामपि हस्ताभ्यामपि पर्यभावि तिरस्कृता । प्रथमं पद्भ्यां पश्चात् कराभ्यामेवं क्रमेण ताड्यते स्मेत्यर्थः । क्रुद्धाः किं किं न कुर्वन्तीति भावः ॥ ४० ॥

प्रहारेति । मृगाक्ष्याः द्रौपद्याः या संज्ञा चेतना तदा प्रहाराद्भीत्येवेत्युत्प्रेक्षा । क्वचित् दुर्ज्ञेयायां नाड्यां जीवधातौ अन्तरधत्त अन्तर्हिता अभूत्, सा संज्ञा प्रहर्तरि ताडके कीचके दूरं गते सति चिराय उद्भ्रम्य नाड्या बहिरागत्य दृशौ द्रौपद्या नेत्रे उद्घाटयामास उन्मीलयामास । कीचकप्रहारमूर्च्छिता चिरात् संज्ञामुपलभ्य द्रौपदी लोचने उन्मीलितवतीत्यर्थः ॥ ४१ ॥

तदन्विति । तदनु नेत्रोन्मीलनानन्तरं शनैःशनैरुत्तस्थुषी उत्थिता धरातलस्य भूमिप्रदेशस्य परागेण यः धूसरिमा मालिन्यं तेन तिरोहिता आच्छादिता दीधितिः कान्तिः यस्यास्तस्या भावः तत्ता तया वासरेण अह्ना अपलपितं तिरोहितं महः तेजः यस्याः सा महौषधिलता ज्योतिर्लतेव स्थिता: विलुलिताः स्रस्ताः चूर्णकुन्तला अलकाः यस्यास्तस्या भावः तत्ता तया चक्रवातैः आवर्तवायुभिः आकुलीकृता वालपूलिका लोमसंचयः यस्याः सा चमरी नाम मृगीव स्थिता । सूतस्य कीचकस्य अन्ववायः वंश एव जनपदः देशः तस्य प्रथमां ईतिबाधां

१. 'गृहीत्वा' इति पाठः. २. 'अपलापितमहामहौषधि' इति पाठः. ३. 'चमर' इति पाठः. ४. 'भूपतिभवनम्' इति पाठः.

दृष्ट्वा तां ज्ञातवृत्तान्तो देव्या गेहे चरञ्जनः ।
नयनाम्भो विमुमुचे न तु किंचन भाषितम् ॥ ४२ ॥

सायं महानसशयं शनकैर्ययौ सा
भीमं रहः पृथुशरावकृतोपधानम् ।
धूमाधिरोहमलिनं वसनं वसानं
नीलाम्बुवाहपरिवीतमिवाचलेन्द्रम् ॥ ४३ ॥

निश्वस्य दीर्घमियमन्तिकमावसन्ती
स्पृष्टेन बाष्पमुकुलैः कुचयोः स्खलद्भिः ।
बुद्धेन तेन किमिदं व्यसनं तवेति
पृष्टा सगद्गदमुवाच विषण्णचेताः ॥ ४४ ॥

---

अतिवृष्टिमिव स्थितां बाष्पधारां उत्सृजन्ती वर्षन्ती क्वचित् कुत्रापि शरणं रक्षितारं अलभमाना अप्राप्नुवन्ती सा कीचकताडिता याज्ञसेनी द्रौपदी तदेव भवनं सुदेष्णान्तःपुरं प्रति मन्दं मन्दं अभिजगाम प्राप्तवती । उत्प्रेक्षात्रयस्य संसृष्टिः । 'अतिवृष्टिरनावृष्टिः शलभा मूषिकाः शुकाः । अत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः ॥' इति ॥

दृष्ट्वेति । तां तथाविधां द्रौपदीं दृष्ट्वा ज्ञातः वृत्तान्तः कीचकताडनरूपः येन तथोक्तः देव्याः सुदेष्णायाः गेहे अन्तःपुरे चरन् जनः परिजनः नयनाम्भः बाष्पं विमुमुचे ववर्ष । किंचन एकमपि भाषितं वचनं तु न मुमुचे । नोवाचेत्यर्थः । सुदेष्णाभयादिति भावः ॥ ४२ ॥

सायमिति । अथ सा द्रौपदी सायम् । रात्राविल्यर्थः । पृथुना शरावेण पात्रविशेषेण कृतं उपधानं शयनशिरोदेश्यतूलादिनिर्मितयन्त्रविशेषो यस्मिन्कर्मणि तत्तथा महानसे पाकस्थाने शेते इति शयम् । निद्राळुमित्यर्थः । धूमस्य अधिरोहेण व्यापनेन मलिनं वसनं वस्त्रं वसानं दधतं अतएव नीलेन अम्बुवाहेन मेघेन परिवीतं वेष्टितं अचलेन्द्रं शैलराजमिव स्थितमित्युत्प्रेक्षा । भीमं प्रति रहः एकान्ते शनकैः मन्दं ययौ । अन्यथा परैर्विज्ञेयतापत्तेरिति भावः ॥ ४३ ॥

निश्वस्येति । विषण्णं दुःखितं चेतः यस्याः सा अतएव दीर्घं यथा तथा निश्वस्य अन्तिकं आवसन्ती समीपे वर्तमाना । 'उपान्वध्याङ्वसः' इत्याङ्पूर्वाद्वसतेराधारस्य कर्मत्वम् । इयं द्रौपदी कुचयोः स्खलद्भिः बाष्पाणि मुकुलानीव तैः स्पृष्टेन सिक्तेन अतएव बुद्धेन जागृतवता तेन भीमेन अयि तन्वि, तवेदं व्यसनं किम् । कुत इत्यर्थः । इति उक्तप्रकारेण पृष्टा सती सगद्गदं दुःखस्खलिताक्षरं यथा तथा उवाच ॥ ४४ ॥

---

१. 'बाष्पसलिलैः' इति पाठः.

किमद्य मे दुःखमपत्रपा का को वीरपत्नीत्वपदेऽभिमानः ।
सर्वं गतं कीचकनीचपिङ्गाद्धृत्वा[1] कचं ताडनमाप्तवत्याः ॥ ४५ ॥

मयि दुःखेन घुष्यन्त्यां मत्स्याधिपसभान्तरे ।
तथ्यस्येव यतेरासीद्धर्मसूनोरुपेक्षणम् ॥ ४६ ॥

बुभुक्षते न जीवन्तीं मारितामेव मां नृपः ।
कल्याणं खलु तत्तस्य कङ्कभावभृतोऽधुना ॥ ४७ ॥

तस्यैवाज्ञापथेऽजस्रं चरता[2] स्खलनं विना ।
भवता खलु निःशङ्कं परामर्श्या[3] कचेऽपरैः ॥ ४८ ॥

किमिति । हे वीर, कीचक इति नीचः पिङ्गः विटाधमः तस्मात् कचं हत्वा तत्करे समर्प्य ताडनमाप्तवत्याः । केशेषु गृहीत्वा तेन ताडितायाः इत्यर्थः । मे मम दुःखं नाम किम्, अपत्रपा लज्जा नाम का, वीराणां पत्नीत्वपदे भार्यात्वस्थाने अभिमानो नाम कः । सर्वत्र किंशब्दो निन्दायाम् । 'किं वितर्के परिप्रश्ने क्षेपे निन्दापवादयोः' इति विश्वः । सर्वं उक्तत्रयमन्यत् कुलशीलादिकं च गतमेव । अत्र कीचकताडनेन सर्वलोपसमर्थनात्काव्यलिङ्गभेदः ॥ ४५ ॥

मयीति । किंच हे वीर, मयि दुःखेन घुष्यन्त्यां कीचको मां तताड त्रायध्व-मित्युच्चैः क्रन्दन्त्यां सत्यां मत्स्याधिपस्य विराटस्य सभान्तरे आस्थानमण्डप-मध्ये धर्मसूनोः धर्मराजस्य तथ्यस्य अकृत्रिमस्य यतेः संन्यासिन इव उपेक्षणं औदासीन्यं आसीत् । तथ्ययतेर्दारिकसुखदुःखोपेक्षात्स्मरणादिति भावः ॥ ४६ ॥

बुभुक्षत इति । किंच हे वीर, नृपः धर्मराजः जीवन्तीं मां न बुभुक्षते न भोक्तुमिच्छति न पालयितुमिच्छतीति च । पुनः किंतु मारितां केनचिन्निह-तामेव मां बुभुक्षते इति यत् तत् तथा काङ्क्षणं द्विविधमपि अधुना अद्य कङ्कस्य भावं कङ्कत्वं गृध्रत्वं कङ्कसंज्ञकं संन्यासविशेषं च बिभर्तीति तद्भृतः तस्य नृपस्य कल्याणं शुभं खलु । गृध्रस्य शवलाभात् यतेर्दारोपेक्षास्मरणाच्चेत्युभयत्र भावः । अधुना अज्ञातवाससमये कङ्कभावभृतः तस्य तत् कल्याणं खलु । अन्यथा अज्ञा-तवासप्रतिज्ञाभङ्गापत्तेरिति भाव इत्यपि प्राहुः । पालनभोजनार्थकाद्भुजेः सन्न-न्ताल्लटि बुभुक्षत इति रूपम् । अत्र कङ्कत्वमारणकाङ्क्षयोः संन्यासदारोपेक्षयोश्चा-नुरूपयोः घटनवर्णनात्समालंकारद्वयम् । तत्र प्रथमः गृध्रयत्योः श्लेषभित्तिकामे-दाध्यवसायमूलातिशयोक्त्यनुप्राणित इति तयोरङ्गाङ्गिभावेन संकरः । अस्य च द्वितीयस्य च एकवाचकानुप्रवेशसंकर इति सूक्ष्मदृशाकलनीयम् ॥ ४७ ॥

तस्येति । किंच हे वीर, तस्य घुष्यन्तीं मामुपेक्षितवतः धर्मराजस्यैव आज्ञै-व पन्थाः मार्गः तस्मिन् स्खलनं प्रमादं विना अजस्रं सततं चरता । तदाज्ञामी-

१. 'धृत्वा कचे' इति पाठः. २. 'चलता' इति पाठः. ३. 'परामृश्ये' इति पाठः.

दुःशासनादप्यधिकापराधः सूतात्मजोऽयं न निहन्यते चेत् ।
आद्ये कचग्राहिणि नाशितेऽपि समायुषौ वेणिमवेहि मां च ॥ ४९ ॥
अयं बलीयानिति ते मतिश्चेदन्यत्र मां क्वापि नयस्व भीरुम् ।
अज्ञातवासेऽप्यनुभूयमाने रक्ष्यं हि शीलं कुलपालिकानाम् ॥ ५० ॥

---

षदप्यनुल्लङ्घ्य वर्तमानेनेति समुदायार्थः । भवता प्रयोजककर्त्रा अतएव उदासितव्येनेति शेषात् । अपरैः दुःशासनकीचकादिभिः अहं कचे केशेषु निःशङ्कं निःसंशयं यथा तथा परामर्श्या ग्राहयितव्या खलु इति काकुः । त्वयापि तादृशेनाज्ञातवासभङ्गभीत्या कृच्छ्रेऽतिवर्तमानाहमुपेक्षणीयैव किलेति साक्रोशोक्तिः । अत्रापि ज्येष्ठानुसारितायाः तदुपेक्षितद्रौपदीकेशपरामर्शोपेक्षायाश्च कारणस्य कार्यस्य चानुरूपवर्णनाद्वितीयसमप्रभेदः । यत्तु 'निःशङ्का परामृश्ये' इत्यपपाठे भ्रमेण निःशङ्का स्ववशा कचेऽपरैः परामृश्ये सतीत्युत्तरेणैकवाक्यतया व्याख्यातवान्नृसिंहः तत्तस्यैवासंबद्धप्रलापिनो हृद्यम् । परं तूक्तपाठेऽपि मृशतौ णिजर्थमन्तर्भाव्य निःशङ्कं गाहयिष्य इति कर्मणि लृट् संगमनीयः (?) ॥ ४८ ॥

किं बहुनेति विवक्षितार्थमाह—दुःशासनादिति । हे वीर, दुःशासनात् दुर्योधनानुजादपि अधिकः सपादकरताडनेन गुरुः अपराधः केशग्रहरूपः यस्य तथोक्तः अयं सूतात्मजः कीचकः न निहन्यते चेत् न हिंस्यते यदि । त्वयेति शेषः । आद्ये प्रथमे कचग्राहिणि दुःशासने नाशिते मारिते सत्यपि वेणीं दुःशासनवधावधिपूर्वं बद्धां मां च उभे अपि समं आयुर्ययोस्तथोक्ते अवेहि जानीहि । दुःशासने हतेऽपि तद्वधाय बद्धां वेणीं अकृते तु कीचकवधे नैव मोक्ष्यामीत्यर्थः ॥ ४९ ॥

अयमिति । किंच हे वीर, अयं कीचकः बलीयान् मत्तः बलिष्ठः इत्युक्तप्रकारा ते तव मतिश्चेत् निश्चयोऽस्ति यदि तर्हि भीरुं व्रतभङ्गभयशीलां मां अन्यत्र इतोऽन्यस्मिन् क्वापि कुत्रचित् कीचकदुर्ज्ञेयदेशे नयस्व । तं देशं प्रापयेत्यर्थः । नन्वङ्गीकृत्यापि व्रतभङ्गं अज्ञातवासभङ्गभयेनात्रैव स्थास्यतामित्यत आह—हि यस्मात् कारणात् अज्ञातवासे अनुभूयमाने अनुष्ठीयमाने सत्यपि कुलपालिकानां कुलस्त्रीणाम् । ताभिरित्यर्थः । शीलं सदाचारः रक्ष्यं तत इति योज्यम् । 'रमणीजनानाम्' इति पाठेऽनुप्राससत्त्वेऽपि विशेषपरताश्रयणेन लक्षणादोषः । 'निष्प्रयोजनलक्षणायां नेयार्थत्वदोषः' इत्यालंकारिकाः । अत्र शीलसंरक्षणावश्यकत्ववाक्यार्थेन द्रौपद्या अन्यत्र नयनसमर्थनात् काव्यलिङ्गभेदः ॥ ५० ॥

---

१. 'अधिकोऽपराधे' इति पाठः. २. 'गृहिणीजनानाम्' इति पाठः.

श्रुत्वा वधूगिरमिति स्वपनोपनीतं
शोणत्वमक्ष्णि पुनरुक्तयतो रुषापि ।
तस्याधरोष्ठमुदवेपत निर्गमिष्य-
त्क्रूराक्षरावलिविमर्दनशङ्कयेव ॥ ५१ ॥

हिडिम्बकिर्मीरबृहद्रथात्मभूबकादिहत्यास्तरतस्त्रपाम्बुधौ ।
निमज्जनायैवं भुजस्य मेऽधुना सृजस्यमुं कीचकसूदनोद्यमम् ॥५२॥

गदापि सा तिष्ठतु मे गभीरा नियुद्धमात्रं मयि निर्मिमाणे ।
क्व मेघवाहः क्व मरालवाहः क्व तार्क्ष्यवाहः क्व महोक्षवाहः ॥५३॥

---

श्रुत्वेति । इत्युक्तप्रकारां वध्वाः द्रौपद्याः गिरं वाचं श्रुत्वा स्वपनेन निद्रया उपनीतं प्रापितं अक्ष्णि नेत्रे शोणत्वं आरुण्यं रुषा कोपेन पुनरुक्तयतः द्विगुणीकुर्वतः तस्य भीमस्य अधरोष्ठमपि निर्गमिष्यतां बहिरागामिनां क्रूराक्षराणां परुषवचनानां आवल्या पङ्क्त्या विमर्दनात् संघट्टनात् या शङ्का भयं तयेवेत्युत्प्रेक्षा । उदवेपत चकम्पे । रुषैवेति भावः । अत्रौष्ठशब्दस्य नपुंसकत्वं मृग्यमिति 'तस्याधरः समुदवेपत' इति पाठः समञ्जसः । वेपतेः कर्तरि लङ् ॥ ५१ ॥

इतः परं श्लोकद्वयं संदर्भशुद्ध्यै व्यत्ययेन व्याख्यायते—हिडिम्बेति । हे तन्वि, हिडिम्बकिर्मीरौ असुरौ, बृहद्रथात्मभूः जरासंधः, बकोऽसुरः, ते आदिर्येषां तेषां दुरात्मनां हत्याः वधात् तरतः तीर्णवतः । तत्कर्तुरिति यावत् । मे मम संबन्धिनः भुजस्य त्रपा क्षुद्रवधजन्या लज्जैवाम्बुधिः समुद्रः तस्मिन् निमज्जनाय । मज्जयितुमेवेत्यर्थः । 'तुमर्थाच्च' इत्यादिना चतुर्थी । अधुना अमुं कीचकस्य क्षुद्रस्य सूदने मारणे विषये उद्यमं उद्योगं सृजसि जनयसि । तत्तादृगबलिनः हन्तुः मामतिलज्जाकरं नीचस्य कीचकस्य हननमित्यर्थः । अत्र कीचकहननलज्जाब्धिमज्जनयोः हेतुहेतुमतोरुक्तिरूपो हेत्वलंकारः । तरणेन हत्यानां महासमुद्रत्वरूपणात्मकैकदेशरूपकेण संसृष्टः त्रपाम्बुधाविति शुद्धरूपकेणोज्जीवितश्चेति रहस्यम् । यत्त्वत्र 'हत्या तरतः' इत्यविसर्गपाठभ्रमेण हत्या हननेन तरतः तीर्णवतः त्रपाम्बुधिमिति विभक्तिविपरिणामेनानुपज्यते इति नृसिंहप्रलपितम्, तत्तस्य न चित्रम् । यतः तथानुषञ्जने भीमस्य त्रपाम्बुधेः क्षुद्रवदजन्यस्य पूर्वं सत्त्वेन प्रतीत्या पतत्प्रकर्षदोषापत्तेरिति । वंशस्थवृत्तम् ॥ ५२ ॥

तदेव कीचकवधतुच्छत्वं व्यञ्जनया स्फुटयति—गदेति । गभीरा महासारा अतएव सा प्रसिद्धा गदापि तिष्ठतु आस्तामित्यनादरोक्तिः । हे तन्वि, नियुद्धमात्रं बाहुभ्यामेव युद्धं मयि निर्मिमाणे कुर्वति सति मेघवाहः इन्द्रः क्व कुत्र । भवेदिति सर्वत्र योज्यम् । मरालवाहः ब्रह्मा क्व । तार्क्ष्यवाहः विष्णुः क्व । महोक्षवाहः महेश्वरः क्व । सर्वेऽपि भीताः पलायन्त एवेत्यर्थः । अत्र

---

१. 'इमाम्' इति पाठः. २. 'हत्या तरतः' इति पाठः. ३. 'इव' इति पाठः.

तथाप्यौदास्यमेतस्मिन्नेनौपयिकमेव मे ।
क्षोदीयानपि वध्यो हि कुलस्त्रीध्रुङ् महीयसाम् ॥ ५४ ॥

अये तन्वि, किं बहुना ।

तस्यासृजा यावकिताङ्घ्रिमस्थ्नां चूर्णेन कर्पूरमयाङ्गरागाम् ।
अकीर्तिमष्याप्यभिलिप्तनेत्रीमलंकरिष्ये मम वीरलक्ष्मीम् ॥ ५५ ॥
वीरश्रियः शिल्पमिदं मयोक्तं यथार्थभावादनुभूय सद्यः ।
सैरन्ध्रिकाचारविनोदनेऽपि तवानुसारेच्छुमवेहि मां त्वम् ॥ ५६ ॥

---

विनैव गदां बाहुयुद्धमात्रेण इन्द्रादीनां पलायनवस्तुना का गणना कीचकस्येत्यर्थान्तरापत्त्यात्मकार्यापत्त्यलंकारप्रतीतेः वस्तुनालंकारध्वनिः । उपेन्द्रवज्रावृत्तम् ॥ ५३ ॥

ननु तर्हि 'सिंहो जम्बुकमङ्कमागतमपि त्यक्त्वा निहन्ति द्विपं सर्वः कृच्छ्रगतोऽपि वाञ्छति जनः सत्त्वानुरूपं फलम्' इति न्यायमेवाङ्गीकरोषि । नेत्याह—तथापीति । तथापि । कीचकवधस्य लज्जाकरत्वेऽपीत्यर्थः । एतस्मिन् कीचकसूदने विषये औदास्यं उपेक्षा मे मम अनौपयिकं अयुक्तमेव । हि यस्मात्कारणात् क्षोदीयान् अतिक्षुद्रोऽपि कुलस्त्रीभ्यो द्रुह्यतीति कुलस्त्रीध्रुक् महीयसां महात्मनाम् । बलशालिनामिति यावत् । वध्यः हन्तव्यः दारापहर्तुराततायित्वेन तद्वधस्य करणीयत्वेन च स्मरणादिति भावः । तस्मादौदास्यमनौपयिकमेवेति संबन्धः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । यत्तु 'तथापि यद्यपीत्यर्थः । एतस्मिन् कीचके, मे अतिबलशालिनः अनपायिकं अपायप्रदं न भवत्येव, तथापि वध्य एवेत्यर्थान्तरन्यासेनाह—तथाहि । महीयसां अभिमानित्वेन श्रेष्ठानां क्षोदीयान् वरिष्ठोऽपि बलवानपीत्यर्थः । 'क्षोपिष्ठक्षोदिष्ठप्रेष्ठगरिष्ठ—' इत्यमरः ।' इति नृसिंहस्य विवरणम्, तत्तस्यापपाठात् संदर्भप्रलापशीलस्य न चोद्यम् । परंतु कोशमप्यपार्थयांचक्र इत्याग्रह्णीमः । यतः 'क्षेपिष्ठक्षोदिष्ठप्रेष्ठवरिष्ठस्थविष्ठबंहिष्ठाः । क्षिप्रक्षुद्राभीप्सितपृथुपीवरबहुप्रकर्षार्थाः' इति क्रमेण क्षेपिष्ठक्षोदिष्ठादीनां शब्दानां प्रकृष्टक्षिप्रप्रकृष्टक्षुद्राद्यर्थकत्वेन क्रमेण गृहीतानां पर्यायतास्फोरणादिति क्षुद्रशब्दात्प्रकर्षार्थके ईयसुनि रेफलोपपूर्वगुणयोः निष्पन्नस्य क्षोदीयःशब्दस्य प्रकृष्टक्षुद्रार्थकत्वमव्याजसिद्धम् ॥ ५४ ॥

अये इति । अये तन्वि हे द्रौपदि, बहुनोक्तेन किं कार्यमित्युत्तरेण योज्यम् ।

तस्येति । मम संबन्धिनीं वीरलक्ष्मीं तस्य कीचकस्य असृजा शोणितेन यावकितौ संजातलाक्षौ अङ्घ्री पादौ यस्यास्तथोक्तां किंच तस्य अस्थ्नां कीकसानां चूर्णेन कर्पूरमयः अङ्गरागः विलेपनं यस्यास्तथोक्ताम् । अपि च तस्य अकीर्त्या अपकीर्त्यैव मष्या अञ्जनेन अभिलिप्ते अभ्यक्ते नेत्रे यस्यास्तथोक्तां च अलंकरिष्ये ॥ ५५ ॥

वीरेति । अये तन्वि, इदं उक्तविधं मया उक्तं कथितं वीरश्रियः शौर्य-

---

१. 'अनौपायिकम्' इति पाठः. २. 'मज्ज्ञाम्' इति पाठः. ३. 'अकीर्तिमष्याथ विलिप्तनेत्राम्' इति पाठः.

त्वया पुनश्च स्मितपूर्ववाचा प्रत्युत्पतन्त्येव कटाक्षखेलैः[1] ।
क्रीडां विधातुं क्रियताममुष्य संकेतभूस्ताण्डवमण्डपोऽयम् ॥ ५७ ॥

इत्याश्वासितवतः पत्युरनुमत्या पुनरागत्य[2] नैपथ्यभवनमधिशयालोस्तस्याश्चेतसः[3] पलायमानस्य भयभरस्य सापि विभावरी सहचरी बभूव ॥

अन्येद्युरेत्य चपलः पुनरब्रवीत्तां
सुभ्रु प्रसीद मयि तुल्यनिकारपात्रे ।
केलीषु हार्दकलहेषु च केशकृष्टिं
पादाहतिं च दधती कुरु वैरशुद्धिम् ॥ ५८ ॥

---

लक्ष्म्याः संबन्धि शिल्पं अलंकारं यथार्थभावात् सत्यं यथा तथा अनुभूय सम्यक् दृष्ट्वा त्वं सद्यः तत्क्षणं सैरन्ध्रिकायाः शिल्पकारिकायाः संबन्धिना आचारेण अङ्गनालंकरणरूपेण विनोदने क्रीडायामपि मां तव अनुसारेच्छुं अनुसरणकामम् । 'विंदुरिच्छुः' इति साधुः । अवेहि जानीहि । स्वानुरूपचेष्टायां प्रेमौत्कट्यादिति भावः ॥ ५६ ॥

त्वयेति । किंचेति चार्थः । त्वया पुनस्त्वर्थः । प्रत्युत्पतन्त्या स्वयमेवानुरागेणागच्छन्त्येव कटाक्षाणां खेलैः प्रसारैः सह स्मितं पूर्वं यस्यास्तया वाचा वाक्येन क्रीडां संभोगं वधं च विधातुं कर्तुं अयं ताण्डवमण्डपः नर्तनशाला अमुष्य कीचकस्य संकेतभूः क्रियताम् । अमुष्य क्रीडामिति वा योजना । तत्रागतं हनिष्यामीति भावः ॥ ५७ ॥

इतीति । इत्युक्तप्रकारेण आश्वासितवतः दुःखापनोदनं कृतवतः पत्युः भीमस्य अनुमत्या निदेशेन पुनः आगत्य नैपथ्यभवनं अलंकारशालां अधिशयालोः तत्र निद्रायमाणायाः तस्याः द्रौपद्याः चेतसः चित्तात् पलायमानस्य भयभरस्य सा विभावरी रात्रिरपि सहचरी अनुयात्री बभूव । द्वयमप्यगच्छदित्यर्थः । अत एव तुल्ययोगिताभेदः ॥

अन्येद्युरिति । अन्येद्युः परस्मिन् दिने चपलः कामाकुलचित्तः स कीचकः पुनः एत्य द्रौपदीसमीपमागत्य तां द्रौपदीं प्रति अब्रवीत् वक्ष्यमाणप्रकारेण उवाच । हे सुभ्रु हे सुन्दरभ्रूलते, तुल्यस्य निकारस्य अवमानस्य पात्रे मयि विषये प्रसीद । तुल्यं निकारं कथयति—केलीष्विति । केलीषु सुरतबन्धविशेषेषु हार्देन प्रेम्णा कलहेषु च क्रमेण केशानां कृष्टिं आकर्षणं पादाभ्यां आहतिं ताडनं च दधती कुर्वती सती वैरस्य पूर्वस्मिन् दिने केशग्रहादिजन्यस्य शुद्धिं निर्यातनं कुरु ॥५८॥

---

१. 'जालैः' इति पाठः. २. 'आपत्य' इति पाठः. ३. 'अस्याः' इति पाठः. ४. 'आश्वसत्तान्' इति पाठः.

पञ्च सन्तु धवास्तेभ्यो मुञ्च भीतिं मयि स्थिते ।
पञ्चवक्त्रे वने दृष्टे किं चरेयुः परे मृगाः ॥ ५९ ॥

मस्तकेऽञ्जलिपद्मस्य मम संप्रति मानिनि ।
प्रसादशंसिनं पादं प्रयच्छ सहचारिणम् ॥ ६० ॥

इत्थमतिवेलं प्रलपन्तमेनं प्रत्यरुचिमुखसाचीकरणे त्रपाहेतुकतामभिनयन्ती सा कुन्तीस्नुषा तृषाभिभूतेव वचनमिदं किंचिदुदञ्चयांचकार ॥

अयि भद्र, जगदिदमारुद्रं क्षुद्रयितुमनिद्राणाय शम्बरद्रुहः शासनमुद्रणाय द्रुह्यति को वा जनः ॥

---

नन्वुक्तमेव 'पञ्च मे पतयः सन्ति ते च न क्षमन्ते' इत्यत आह—पञ्चेति । अयि तन्वि, ते तव पञ्च धवाः पतयः सन्तु तिष्ठन्तु नाम । मयि सिंहबले स्थिते सति तेभ्यः पतिभ्यः भीतिं भयं मुञ्च त्यज । तत्र दृष्टान्तयति—पञ्चेति । वने पञ्चवक्त्रे सिंहे दृष्टे सति परे मृगाः व्याघ्रादयः चरेयुः किम् । न चरेयुरेवेत्यर्थः । तथा च मां दृष्ट्वा ते पलायेयुरेवेति भावः ॥ ५९ ॥

मस्तक इति । हे मानिनि, संप्रति मम मस्तके शिरसि अञ्जलिपद्मस्य त्वत्प्रसादार्थं बद्धस्य प्रसादस्य शंसिनं सूचकं पादं त्वच्चरणपद्मं सहचारिणं प्रयच्छ शिरसि निधेहि ॥ ६० ॥

इत्थमिति । इत्थं उक्तप्रकारेण अतिवेलं निर्मर्यादं यथा तथा प्रलपन्तं अनर्थकं भाषमाणम् । 'प्रलापोऽनर्थकं वचः' इत्यमरः । एनं कीचकं प्रति अरुच्या जुगुप्सया यन्मुखस्य साचीकरणं तिर्यक्करणं तस्मिन् त्रपा लज्जैव हेतुर्यस्य तत्तस्य भावः तत्ता तां अभिनयन्ती प्रकाशयन्ती सा कुन्तीस्नुषा द्रौपदी तृषा कामेन अभिभूता व्याप्तेव । न वस्तुतो व्याप्तेत्यर्थः । किंचित् अत्यल्पं इदं वक्ष्यमाणं वचनं उदञ्चयांचकार । उवाचेत्यर्थः ॥

अयीति । अयि भद्र हे शुभशील, आरुद्रं शिवमभिव्याप्य इदं जगत् लोकं क्षुद्रयितुं स्वीयविकारेण तुच्छं कर्तुं अनिद्राणाय जाग्रते शम्बरद्रुहः मन्मथस्य संबन्धिने शासनमुद्रणाय आज्ञाविधाय को वा जनः द्रुह्यति तत् को वा लङ्घयति । न कोऽपीत्यर्थः । 'क्रुधद्रुह—' इत्यादिना संप्रदानत्वम् ॥

---

१. 'भामिनी'; 'मालिनी' इति च पाठः. २. 'इति' इति पाठः. ३. 'प्रतिजुगुप्सया' इति पाठः. ४. 'तृष्णा' इति पाठः. ५. 'चक्रे' इति पाठः. ६. 'अनिद्राणस्य' इति पाठः.

किं तु इयानेव प्रस्तुते वस्तुनि विशेषः ॥
स्त्रीपुंसयोर्भावनटौ मिथो यौ पूर्वस्तयोर्व्रीडतिरःपटेन ।
चिरायते स्पष्टयितुं स्वरूपं परस्तु तन्नोत्सहतेऽनुमन्तुम् ॥ ६१ ॥

किं बहुना ।

गीर्भिस्तवाद्य चतुराभिरुदस्यते मे
गन्धर्वदण्डनभयं त्वदवाप्तिविघ्नः ।
तस्माद्भजस्व रतिसौख्यभराय रात्रौ
भीमे स्थिते तमसि नर्तनगेहमध्यम् ॥ ६२ ॥

तथैव लीलां तनवानि तत्र तल्पान्तसीमानमुपेयुषस्ते ।
भूयो यथान्तःपुरिकाजनानां वक्त्रं न पश्येरतिसुन्दराणाम् ॥ ६३ ॥

---

ननु तर्हि किमिति मां निराकरोषि इत्यत आह—किं त्विति । किं तु तच्छासनस्य अनुल्लङ्घ्यत्वेऽपि प्रस्तुते वस्तुनि मान्मथे विकारे विषये विशेषः तारतम्यं इयान् एतावानेव ॥

विशेषं प्रपञ्चयति—स्त्रीति । स्त्रियाः पुंसश्च स्त्रीपुंसयोः मिथः अन्योन्यं भावौ अभिप्रायावेव नटौ नाट्यपात्रे यौ भवतः, तयोर्द्वयोर्मध्ये पूर्वः प्रथमः स्त्रीभावनटः स्वरूपं आकारं स्पष्टयितुं व्रीडा लज्जैव तिरःपटः यवनिका तेन चिरायते विलम्बयति । परः पुंभावनटस्तु स्वरूपं स्पष्टयितुं तत् व्रीडतिरःपटेन बिलम्बनं अनुमन्तुं अङ्गीकर्तुं नोत्सहते न क्षमते । तुल्येऽप्यनुरागे परः पुमान् लङ्घते वेलाम्, स्त्रीत्वनिच्छुरिव सर्वमनुभवन्ती न स्पन्दते मनागपि, इत्येतावानेव विशेष इति पूर्वेण योज्यम् ॥ ६१ ॥

किमिति । किं बहुना इत्युत्तरेणान्वयः ॥

गीर्भिरिति । अयि भद्र, बहुनोक्तेन किं कार्यम् । चतुराभिः निपुणाभिः तव गीर्भिः वाक्यैः 'पञ्च सन्तु धवाः—' इत्यादिभिः त्वदवाप्तेः भवत्सांगत्यस्य विघ्नः प्रतिबन्धकं मे मदीयं गन्धर्वैः मत्पतिभिः दण्डनाद्भयं अद्य उदस्यते निराक्रियते । तस्मात् भयनिराकरणाद्धेतोः रात्रौ भीमे अतिसान्द्रे तमसि अन्धकारे स्थिते सति रतिसौख्यस्य भराय अतिशयार्थं नर्तनगेहस्य मध्यं भजस्व आप्नुहि । तदावयोः संकेतस्थानमित्यर्थः । त्वदवाप्तिविघ्नः मे मदीयेन गन्धर्वेण दण्डनभयं अद्य चतुराभिः । न तु भीमसंनिधानसमय इत्यर्थः । गीर्भिः उदस्यते । नं चलेनेत्यर्थः । तस्मात् वृथात्मकत्थनाद्धेतोः तमसि भीमे भीमसेने मद्भूमिकामापन्ने स्थिते सति । शेषमुभयत्र सममित्यपि प्राहुः ॥ ६२ ॥

तथेति । किंच तत्र नर्तनगेहे तल्पस्य शय्यायाः अन्तसीमानं चरमप्रदेशं

---

१. 'वस्तुनि' इति नास्ति क्वचित्. २. 'वक्त्रं न पश्येर्न पुनः स्तुषेश्च' इति पाठः.

एवं मृगाक्ष्या वचनमाक्षिकस्य क्षौद्रपटलीभूतकर्णपुटः प्रमोदार्णवजलमानुषायमाणहृदयः सदनमासाद्य समालम्भनपूर्वेण सलिलावगाहेन विरजीकृताङ्गोऽयमन्तरिव बहिरप्यवलिप्तः, ततः परं भगवति निजतनयप्रजावतीमनोरथसिद्धिं संपादयितुमिव कमलबन्धौ चरमसिन्धौ निमग्ने ध्वान्ते निरुध्यमानदिविषद्ध्वान्ते ध्वान्तकदम्बे संभृतसंभोगसंविधानः कीचको निर्वर्तितराजभोजनपरिवेषणकृत्येन पवमानसूनुना प्रविष्टपूर्वं तदेव नर्तनमण्डपमगाहत ॥

---

तल्पस्य दारसौख्यस्य अन्तसीमानं अवसानं च । 'तल्पं शय्याट्टदारेषु' इत्यमरः । उपेयुषः प्राप्तवतः ते तव लीलां क्रीडां तथैव तनवानि करवाणि । कारकाणीत्यन्तर्भावितणिजर्थश्च ग्राह्यः । यथा भूयः अतिसुन्दराणामपि अन्तःपुरिकाजनानां वक्त्रं न पश्येः नालोकयेः । तथैवेति योज्यम् । सर्वातिशायिसौख्यलाभात् मरणाच्चेति भावः ॥ ६३ ॥

**एवमिति ।** एवं उक्तप्रकारस्य मृगाक्ष्याः द्रौपद्याः संबन्धिनः वचनस्यैव माक्षिकस्य मधुनः क्षौद्रपटलीभूतौ मधुच्छत्रीकृतौ कर्णपुटौ यस्य सः । 'मधुगोलो मधुच्छत्रं मधुपात्रं क्षौद्रपटलं च' इति हलायुधः । अतिमधुरं तद्वचनमाकर्णयन्नित्यर्थः । अतएव प्रमोद एव अर्णवे समुद्रे जलमानुषायमाणं नीरमनुष्यवदाचरितं हृदयं मनः यस्य तथोक्तः । आनन्दसान्द्रहृदय इत्यर्थः । सदनं गृहं आसाद्य प्राप्य पूर्वं समालम्भनः गन्धरजोभिरङ्गानामुद्वर्तनं नाम संस्कारः यस्य तेन समालम्भनपूर्वेण सलिलावगाहेन स्नानेन विरजीकृतं निर्मलितं अङ्गं यस्य तथोक्तः अन्तः मनसीव बहिः बाह्येऽङ्गेऽपि अवलिप्तः चन्दनेनानुलिप्तः गर्वितश्च अयं कीचकः ततः परं स्नानानुलेपनानन्तरं भगवति कमलबन्धौ सूर्ये निजतनयस्य कर्णस्य प्रजावत्याः भ्रातृजायायाः द्रौपद्याः मनोरथस्य कीचकवधरूपस्य सिद्धिं संपादयितुमिवेत्युत्प्रेक्षा । चरमसिन्धौ पश्चिमसमुद्रे निमग्ने । अस्तं गते सतीत्यर्थः । ध्वान्ते अन्धकारे निरुध्यमानः तिरस्क्रियमाणः दिविषदां देवानां अध्वान्तः आकाशप्रदेशः येन तथोक्ते सति । 'ध्वान्तकदम्बे' इति पाठः सिन्धौ बन्धाविति पूर्वानुप्रासवैरूप्यादुपेक्ष्यः । संभृतानि सम्यग्गृहीतानि संभोगस्य संविधानानि उपकरणानि स्रक्चन्दनताम्बूलादीनि येन तथोक्तः सन् । निर्वर्तितं कृतं राज्ञः विराटस्य भोजने परिवेषणकृत्यं भुक्तिपात्रे शाकाद्यादिसमर्पणं येन तेन पवमानसूनुना भीमेन पूर्वं प्रविष्टं प्रविष्टपूर्वं तत् । द्रौपद्या संकेतत्वेन निवेदितं यत्तदेवेत्यर्थः । नर्तनमण्डपं नर्तनगेहं अगाहत प्रविष्टवान् । अत्राङ्गाङ्गिभावेन संकीर्णस्य श्लिष्ट-

---

१. 'समारम्भण' इति पाठः. २. 'तनुज' इति पाठः. ३. 'निमज्जमाने', 'निरुध्यमाने' इति पाठौ. ४. 'ध्वान्तकदम्बे' इति नास्ति क्वचित्. ५. 'अनिवर्तित' इति पाठः. ६. 'पवन' इति पाठः. ७. 'गेहम्' इति पाठः.

क सालभञ्जिकेवासि मालिनि[1] स्तम्भपार्श्वगा ।
इत्यसौ भीमतल्पान्तमाससाद शनैः शनैः ॥ ६४ ॥

ततस्तं वल्लोऽपि[2] स्त्रैणसमुचितेन कण्ठस्वरेण मृदुलमेवं जगाद ॥

वधूशतमनादृत्य मामपेक्ष्य यदागतः[3] ।
तत्त्वां बहिर्गतप्राणं मन्यते मे मनोऽधुना ॥ ६५ ॥

एवमुक्तवते वृकोदराय कीचकः पुनरपि वाचं मृदुपदामुपदां[4] विदधे[5] ॥

गन्धर्वानपि दयितांस्तृणाय मत्वा
मामेवं रतिविषये प्रतीक्षसे यत् ।
देवत्वादपि सुतनु त्वयाधुना मे
मर्त्यत्वं जगति महत्तरं हि क्लृप्तम्[6] ॥ ६६ ॥

---

परम्परितरूपकद्वयस्य श्लेषमित्तिकामेदाध्यवसितावलेपेनान्तर्वाह्ययोः औपम्यगमकस्य तुल्ययोगितामेदस्य मनोरथसंपादनोत्प्रेक्षायाः सिन्धौवन्धावित्येकव्यञ्जनावृत्तिरूपवृत्त्यनुप्रासस्य ध्वान्तेऽध्वान्ते इति व्यञ्जनयुग्मावृत्तिरूपच्छेकानुप्रासस्य च अर्थालंकारशब्दालंकाराणां सजातीयविजातीयानां संसृष्टिः ॥

केति । असौ कीचकः हे मालिनि, त्वं सालभञ्जिका स्तम्भे कृत्रिमपुत्रिकेव । 'स्यात्सालभञ्जिका स्तम्भे' इत्यमरः । स्तम्भस्य पार्श्वगा पार्श्वे वर्तमाना सती कासि कुत्र वर्तसे इति । उक्तप्रकारं वदन् सन्निति शेषः । भीमस्य तल्पान्तं शय्यायाः समीपं प्रति शनैः शनैः आससाद प्राप्तवान् । उत्प्रेक्षालंकारः ॥ ६४ ॥

तत इति । ततः शय्यायाः समीपप्राप्त्यनन्तरं वल्लः अज्ञातवासे वल्लनामा भीमोऽपि स्त्रैणस्य स्त्रीभावस्य समुचितेन कण्ठस्वरेण उपलक्षितः तं कीचकं प्रति मृदुलं सुकुमारं यथा एवं वक्ष्यमाणप्रकारेण जगाद उवाच ॥

वध्विति । हे कीचक, त्वं मामपेक्ष्य कामयित्वा वधूशतं भार्याशतं अनादृत्य उपेक्ष्य यत् यस्मात् आगतोऽसि, तत् तस्मात् मे मदीयं मनः त्वां अधुना बहिर्गताः मय्येव सक्ताः प्राणा यस्य तथोक्तं निष्क्रान्तप्रायप्राणं च मन्यते तर्कयति । अत्र वधूशतत्यागपूर्वकं आगमनेन बहिर्गतप्राणत्वानुमानादनुमानालंकारः ॥ ६५ ॥

एवमिति । एवं उक्तवते वृकोदराय भीमाय पुनरपि मृदूनि अकुटिलानि पदानि शब्दाः यस्यास्तां वाचं कीचकः उपदां उपायनं विदधे चकार ॥

गन्धर्वानिति । हे सुतनु शुभगात्रि, त्वं दयितान् प्राणप्रियान् गन्धर्वानपि

---

१. 'मानिनि' इति पाठः. २. 'वल्लवोऽपि' इति पाठः. ३. 'यदागमः' इति पाठः. ४. 'उपायनम्' इति पाठः. ५. 'आददे' इति पाठः. ६. 'प्रक्लृप्तम्' इति पाठः.

सुराधिकत्वेऽपि पदे वितीर्णे मह्यं तवास्त्येव हि कृत्यशेषः ।
कुरुष्व मेरोरधिके कुचे मां सुधाधिकं पायय चाधरोष्ठम् ॥ ६७ ॥

इत्थं स सान्त्ववचनोदयमर्धमञ्च-
मारोढुमानमितपूर्वतनोः स भीमः ।
मुष्ट्याहतिं निटिलसीम्नि चकार शत्रो-
रायुर्लिपिं शिथिलयन्निव धातृदत्ताम् ॥ ६८ ॥

गम्भीरचेताः स तु कीचकोऽपि
गन्धर्वबुद्ध्या प्रतिहन्तुमेनम् ।
सद्यो भवित्र्याः शवतादशायाः
साधारणीमेव बबन्ध मुष्टिम् ॥ ६९ ॥

---

तृणाय मत्वा तृणमिव अनादृत्य । 'मन्यकर्मण्यनादरे' इति चतुर्थी । मर्त्यं मां एवं रतिविषये संभोगार्थं यत् यस्मात् प्रतीक्षसे निरीक्षसे, तत् तस्मात् मे मदीयं मर्त्यत्वं मनुष्यभावः देवत्वादपि महत्तरं अतिश्लाघ्यं त्वया अधुना कृतं कृतम् । हिरवधारणे । वाक्यार्थहेतुकं काव्यलिङ्गमलंकारः ॥ ६६ ॥

**सुरेति** । किंच हे सुतनु, त्वया सुरेभ्यः अधिकत्वं यस्मिन् तस्मिन् पदे स्थाने मह्यं वितीर्णे दत्ते सत्यपि तव कृत्यस्य कार्यस्य शेषः अस्त्येव । हिरवधारणे । स क इत्यतस्तमाह—कुरुष्वेति । मेरोः सुराद्रेः अधिके कुचे मां कुरुष्व । आलिङ्गस्वेत्यर्थः । सुधायाः अमृतात् अधिकम् । माधुर्येणेति भावः । अधरोष्ठं पायय । पिवतेर्ण्यन्तात्कर्तरि लोट् । देवेभ्योऽधिकस्य तदधिकावासाहाराधिक्यावश्यकत्वादिति भावः । अत्रालिङ्गनाधरपानप्रार्थनावाक्यार्थाभ्यां कृत्यशेषास्तित्वसमर्थनादनेकवाक्यार्थहेतुकं काव्यलिङ्गमलंकारः ॥ ६७ ॥

**इत्थमिति** । इत्थमुक्तप्रकारेण सान्त्ववचनानां प्रियवाक्यानां उदयेन उच्चारणेन सहितं यस्मिन् तत्तथा अर्धमञ्चं शयनार्धभागं आरोढुं आनमिता ईषदावर्जिता पूर्वतनुः ऊर्ध्वकायः येन तस्य शत्रोः कीचकस्य धात्रा दत्तां लिखितां आयुषो लिपिं शिथिलयन् मार्जयन्निवेत्युत्प्रेक्षा । स भीमः निटिलसीम्नि शत्रोः फालदेशे मुष्ट्याहतिं ताडनं चकार ॥ ६८ ॥

**गम्भीरेति** । अथ गम्भीरं सुखदुःखयोरविकृतं चेतः यस्य सः अतएव स कीचकोऽपि । तुशब्दो वाक्यालंकारे । गन्धर्वः ताडितवानेष मालिनीपतिर्गन्धर्व इति बुद्ध्या निश्चयेन एनं गन्धर्वं भीमं सद्यः प्रतिहन्तुं प्रतिहर्तुं भवित्र्याः भाविन्याः शवतादशायाः शवत्वावस्थायाः । अपीत्येवकारोऽप्यर्थः । साधारणीं समानाम् । न त्विदानीमेकां तदानीमन्यामित्यर्थः । मुष्टिं बबन्ध बद्धवान् । मुष्टिं बद्ध्वा म्रियन्ते मर्त्या इति प्रसिद्धम् ॥ ६९ ॥

---

१. 'च' इति पाठः.

जवं भजन्तौ जयतर्षवन्तौ रुषं वहन्तौ रुधिरं किरन्तौ ।
परस्परं तौ पटुशब्दवन्तौ नियुद्धवन्तौ नितरामतान्तौ ॥७०॥

अक्ष्वेलितारावमवीरवादमवीक्षकश्लाघनचाटुगुम्फम् ।
अनुच्चनिश्वाससमहुंक्रियाकमभूतपूर्वं तदभून्नियुद्धम् ॥ ७१ ॥

शिलीमुखैश्चित्तजचापजुष्टै-
र्दत्तानि रन्ध्राणि दधन्निजाङ्गे ।
समीरजातेन विधूनितोऽपि
स कीचको नैव चुकूज किंचित् ॥ ७२ ॥

---

जवमिति । तौ भीमकीचकौ जवं बलवेगं भजन्तौ जये तर्षवन्तौ कामिनौ रुषं क्रोधं वहन्तौ रुधिरं किरन्तौ क्षतेभ्यः प्रसारयन्तौ परस्परं पटवः परुषाः शब्दाः दारयामि मारयामीत्यादयोऽनयोः सन्तीति तद्वन्तौ अतान्तौ अश्रान्तौ च सन्तौ नितरां नियुद्धवन्तौ । बाहुयुद्धशालिनौ बभूवतुरिति शेषः । 'नियुद्धकेलिं निशि निर्मिमाते' इति पाठोऽनुप्रासस्यैकपादभङ्गाख्यदोषापत्तेः वर्तमानार्थकलडन्तवाधाच्चोपेक्ष्यः । एवं 'पटुशौर्यवन्तौ' इत्येव पाठः । अन्यथा 'अक्ष्वेलितारावम्' इत्युत्तरश्लोकेन संदर्भविरोधापत्तेः ॥ ७० ॥

अक्ष्वेलितेति । न विद्यन्ते क्ष्वेलितारावाः सिंहनादा यस्मिन् तथोक्तम्, अवीरवादं विगतात्मकत्थनम्, वीक्षकाणां प्रेक्षकाणां श्लाघनानि चाटुगुम्फाः प्रियवाक्यसंदर्भाश्च न विद्यन्ते यस्मिन् तथोक्तम् । तदानीं तद्देशस्य विजनत्वादिति भावः । अनुच्चाः अनुद्धताः निश्वासाः यस्मिंस्तथोक्तम्, न विद्यन्ते हुंक्रियाः हुंकाराः यस्मिंस्तत्कम् । शैषिकः कप् । अतएव तत् भीमकीचकसंबन्धि नियुद्धं बाहुयुद्धं पूर्वं न भूतं कदापि न जातं अभूतपूर्वं जगद्विलक्षणं सत् अभूत् । अत्राक्ष्वेलितारावमित्याद्यनेकपदार्थेन तन्नियुद्धस्य जगद्वैलक्षण्यसमर्थनादनेकपदार्थहेतुकं काव्यलिङ्गमलंकारः ॥ ७१ ॥

शिलीमुखैरिति । चित्तजस्य मन्मथस्य चापे धनुषि पुष्पे च जुष्टैः संहितैः प्रीतैश्च शिलीमुखैः बाणैः अलिभिश्च । 'अलिबाणौ शिलीमुखौ' इत्यमरः । दत्तानि कृतानि रन्ध्राणि निजाङ्गे दधन्नपि समीरजातेन भीमेन वायुसमूहेन च विधूनितः कम्पितोऽपि स कीचकः वेणुविशेषश्च । 'वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः' इत्यमरः । किंचिदपि न चुकूज न दध्वानैव । ममारेत्यर्थः । अत्र शिलीमुखकृतरन्ध्रवायुजातधूननरूपसामग्रीसत्त्वे कूजनानुदयवर्णनात्मिकाया वि-

---

१. 'पटुशौर्यवन्तौ नियुद्धकेलिं निशि निर्मिमाते' इति पाठः. २. 'सुधूनितोऽपि' इति पाठः.

तस्मिन्हते निपतिते बकवैरिमुष्ट्या
रङ्गेण तेन समकम्पि चलत्पताकम् ।
पार्थाच्चिरेण परिशीलितमुत्तराद्यैः
कन्याजनैरभिविडम्बयतेव नाट्यम् ॥ ७३ ॥

तदनु तत्र मण्डपे पिण्डतया कृतं तस्य दस्योस्तरसं तरसा विलोक्य प्रहर्षवत्या पार्षत्या श्लाघापूर्वमाघ्रातभुजः कुरुव्याघ्रो निर्गत्य यथापुरमविकृतमानसो महानसोदरं प्रविश्य सुखेनाधिशिश्ये ॥

निपात्य मालिन्यपि तत्र शत्रुं
चक्रन्द भीत्येव चलाग्रपाणिः ।
निशम्य तत्किं किमिति ब्रुवाणाः
सर्वेऽपि तस्यावरजाः समेयुः ॥ ७४ ॥

---

शेषोक्तेश्चित्तजचापादिशब्दश्लेषभित्तिकाभेदाध्यवसायमूलातिशयोक्त्यनुप्राणितत्वात् तयोरङ्गाङ्गिभावेन संकरः ॥ ७२ ॥

तस्मिन्निति । बकवैरिणः भीमस्य मुष्ट्या । तत्प्रहारेणेत्यर्थः । हते अतएव तस्मिन् निपतिते सति तेन प्रसिद्धेन रङ्गेण नर्तनमण्डपेन उत्तरा विराटपुत्री आद्या येषां तैः कन्याजनैः पार्थात् अर्जुनात् चिरेण परिशीलितं अभ्यस्तं नाट्यं अभिविडम्बयता सर्वतः अनुकुर्वतेवेत्युत्प्रेक्षा । चलन्ती पताका यस्मिन् तथा समकम्पि कम्पितम् । कम्पतेर्भावे लुङ् ॥ ७३ ॥

तदन्विति । तदनु तत्र मण्डपे नर्तनशालायाः पिण्डतया पिण्डाकारेण कृतं भीमेन घटितं दस्योः शत्रोः तस्य कीचकस्य तरसं मांसं विलोक्य प्रहर्षवत्या संतोषवत्या पार्षत्या द्रौपद्या तरसा वेगेन श्लाघापूर्वं यथा तथा आघ्रातौ चुम्बितौ भुजौ यस्य सः । तयोरेव तदभीष्टदायकत्वादिति भावः । कुरुव्याघ्रः कौरवश्रेष्ठः भीमः निर्गत्य नर्तनमण्डपाद्बहिरागत्य पुरेव यथापुरं कीचकवधात्पूर्वमिव अविकृतं हर्षादनुद्रिक्तं मानसं यस्य तथोक्तः सन् । कीचकवधस्याकिंचित्करत्वादिति भावः । महानसस्य पाकगृहस्य उदरं मध्यं प्रविश्य सुखेन अधिशिश्ये शयितवान् । शीङः कर्तरि लिट् ॥

निपात्येति । मालिनी द्रौपद्यपि तत्र रङ्गे शत्रुं कीचकं निपात्य पातयित्वा । भीमेनेति शेषः । भीत्येव । न वस्तुतो भयेनेत्यर्थः । चलः अग्रपाणिः हस्ताग्रं यस्यास्तथोक्ता सती चक्रन्द रुरोद । क्रन्देः कर्तरि लिट् । तत् द्रौपदीरोदनं

---

१. 'तदनु' इति नास्ति क्वचित्. २. 'समीयुः' इति पाठः.

विलोक्य तं भ्रातरमात्तशोका मृत्युद्विपस्येव पिधानपिण्डम् ।
ज्यायानिवामी विदधुः स्थलीं तामस्रेण गुल्फद्वयसीं निजेन ॥ ७५ ॥

ततस्ते सोदरविपत्तिनिमित्तमियमेवेति रोषरूषितचेतसो निवेशितशवपिण्डभारस्य मूर्तैर्भीमस्य मुष्टिभिरिव नारिकेलफलैरुपरुध्यमानपार्श्वस्य चरमविमानस्य स्तम्भदारुणि संदानितां कौन्तेयसीमन्तिनीं तिमिरमुदिरसौदामिनीभिः करदीपिकाभिर्दीयमानचङ्क्रमावकाशेन पथा पितृवनमुपनीय स्वकीयविवेकसंपत्त्या सह महत्यां चित्यामत्याक्षुः ॥

---

निशम्य किमत्याहितं किमत्याहितमिति ब्रुवाणाः सन्तः तस्य सर्वेऽप्यवरजाः अनुजाः समेयुः समागतवन्तः ॥ ७४ ॥

विलोक्येति । अमी कीचकानुजाः मृत्योरेव द्विपस्य गजस्य पिधानपिण्डं तृणच्छन्नकवलमिव स्थितमिति रूपकोज्जीवितोत्प्रेक्षा । तं भ्रातरं कीचकं विलोक्य आत्तशोकाः सन्तः ज्यायान् ज्येष्ठः कीचक इव तां स्थलीं रङ्गप्रदेशं निजेन अस्रेण बाष्पेण शोणितेन च गुल्फद्वयसीं गुल्फप्रमाणां विदधुः । तत्प्रमाणबाष्पजलां चक्रुरित्यर्थः । 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' इति द्वयसच्चि 'टिड्ढाणञ्–' इत्यादिना ङीप् । अत्र कीचकस्य तदनुजानां च रङ्गे गुल्फप्रमाणास्रसंपादनेनौपम्यस्य गम्यत्वात्तुल्ययोगिताभेदः । बाष्पशोणितयोरस्रशब्दश्लेषभित्तिकाभेदाध्यवसायमूलातिशयोक्त्युज्जीवित इति द्वयोरङ्गाङ्गिभावेन संकरः ॥ ७५ ॥

तत इति । ततः ते कीचकानुजाः सोदरस्य कीचकस्य विपत्तेः मरणस्य निमित्तं कारणं इयं द्रौपद्येव इत्युक्तप्रकारेण रोषेण रूषितं कलुषीकृतं चेतः येषां तथोक्ताः सन्तः निवेशितः निक्षिप्तः शवपिण्डः कीचकमांसग्रन्थिरेव भारः यस्मिंस्तस्य मूर्तैः देहधारिभिः भीमस्य मुष्टिभिः तत्प्रहारैरिव स्थितैः नारिकेलफलैः उपरुध्यमानाः संगताः पार्श्वाश्चत्वारः यस्य तस्य चरमविमानस्य शवरथस्य स्तम्भदारुणि संदानितां बद्धां कौन्तेयसीमन्तिनीं द्रौपदीं तिमिरस्यैव मुदिरस्य मेघस्य संबन्धिनीभिः सौदामिनीभिः तडिद्भिः करदीपिकाभिः दीयमानः चङ्क्रमस्य गमनस्य अवकाशः यस्मिन् तेन पथा मार्गेण पितृवनं श्मशानम् । 'श्मशानं स्यात्पितृवनम्' इत्यमरः । उपनीय प्रापय्य स्वकीयया विवेकसंपत्त्या सह महत्यां चित्यां चितायां अत्याक्षुः पातयामासुः । 'घनजीमूतमुदिरजलमुग्धूमयोनयः', 'तडित्सौदामिनी विद्युत्' इति च मेघविद्युत्पर्यायेष्वमरः । अत्र द्रौपदीविवेकसंपदोः त्यागक्रियायां साहित्यवर्णनात्सहोक्तिरलंकारः ॥

---

१. 'भरस्य' इति पाठः. २. 'भीममुष्टिभिः' इति पाठः. ३. 'उपबध्यमानस्य' इति पाठः. ४. 'महत्यां' इति नास्ति क्वचित्.

तावदेषा चकितचकिता 'हा नाथ हा नाथ, जगत्प्राणभूत, विपत्समयबन्धो, संप्रति कान्तां रसवतीं परिगृह्य मुग्धामिमां कथं न गणयसि' इत्युच्चैररोदीत् ॥[1]

तत्रास्या रुदितस्वनैरथ जवादाकारितो मारुतिः
[2]सक्थ्योर्वायुबलादलातमहसामीषल्लभैर्मीलनैः ।
ध्वान्ते गारुडभित्तिभङ्गिपिशुनेऽप्योघं द्विषां धावितुं
ज्येष्ठस्याध्वनि दिव्यदृष्टिमकरोद्दोर्दर्पसिद्धाञ्जनैः ॥ ७६ ॥

---

तावदिति । तावत् सद्य एव चकितचकिता अतिभीता एषा द्रौपदी । हा हेत्यतिखेदे । हे नाथ लोकरक्षक, जगतः प्राणभूत जीवितरूप, विपत्समये बन्धो, क्रमेण हे प्रिय, जगत्प्राणाद्वायोः भवतीति वायुपुत्र । 'जगत्प्राणसमीरणाः' इति वायुपर्यायेष्वमरः । विपदः जरसैन्धवकृतायाः समये बन्धो इति च । त्वं संप्रति रसवतीं अनुरागिणीं कान्तां प्रियां भाषारमागौरीरूपाम् । अन्यत्र कान्तां रुच्यां रसवतीं मधुरादिषड्रसधारिणीं पाकक्रियामिति च परिगृह्य परिरभ्य स्वीकृत्य च मुग्धां नवोढां मूर्च्छितां च इमां मां कथं न गणयसि नाद्रियसे इत्युक्तप्रकारं उच्चैः तारं अरोदीत् रुरोद । रुदेः कर्तरि लुङ् । अत्र प्रस्तुतजगदीश्वरप्रार्थनया प्रस्तुतभीमप्रार्थनाद्योतनात्प्रस्तुताङ्कुरालंकारः । 'प्रस्तुतेन प्रस्तुतस्य द्योतने प्रस्तुताङ्कुरः' इति लक्षणात् ॥

तत्रेति । अथ तत्र चितायां अस्या द्रौपद्याः रुदितस्वनैः रोदनध्वनिभिः जवात् आकारितः आहूतः मारुतिः भीमः सक्थ्योः (सक्थ्नोः?) ऊर्वोः संबन्धिनः वायोः गतिवेगजनितस्य बलात् ईषल्लभैः अत्यल्पं प्राप्यैः । दुर्लभैरिति यावत् । अलातस्य हस्तधृताङ्गारकाष्ठस्य महसां तेजसां मीलनैः शान्तिभिः उपलक्षितः । ऊरुवेगजनितवायुबलजाज्वल्यमानालाततेजोविशिष्टः सन्निति यावत् । द्विषां उपकीचकानां ओघं गणं गरुडभित्तेः मरकतकुड्यस्य भङ्गिः रीतिः तस्याः पिशुने सूचके । तद्वदतिनिबिडे श्यामे चेत्यर्थः । ध्वान्ते अन्धकारेऽपि ज्येष्ठस्य कीचकस्य अध्वनि मरणरूपे धावितुं वेगाद्गन्तुं दोर्दर्पैः बाहुबलैरेव सिद्धाञ्जनैः दिव्ये अप्रतिहते दृष्टी लोचने यस्याः तथोक्तं अकरोत् । कीचकमिव सर्वांस्तदनुजानपि अवधीदित्यर्थः । रूपकोपमासंसृष्टिः । अत्र 'सक्थ्योर्वायुबलादलातमहसा संधुक्षतानुक्षणम्' इति पाठः वायुबलात् अनुक्षणं प्रतिक्षणं संधुक्षता प्रज्वलता अलातमहसा उपलक्षित इति पूर्वस्मादनतिरिक्तार्थकः सुगमः । यथाश्रुतपाठस्तु बहुषु मूलपुस्तकेषु दृष्टत्वात् क्लिष्टत्वदोषदुष्टत्वेऽपि व्याख्यात इति ध्येयम् । शार्दूलविक्रीडितं वृत्तम् ॥ ७६ ॥

---

१. 'उच्चकैः' इति पाठः. २. 'सक्थ्नोर्वातबलादलातमहसामीषल्लभोन्मीलनैः' इति पाठः.

निपातितान्स्वेन निरीक्ष्य तत्र
सूतान्स वीरः सुमनायते स्म ।
उत्पातमुद्रां [1]ब्रुवता स्वपित्रा
[2]तालानिवारण्यतले विरुग्णान् ॥ ७७ ॥

गन्धर्वभीरुषु जनेष्वितरेषु तत्र
विष्वक्पलायनपरेषु विमुक्तबन्धा ।
कृष्णा च कीचकरिपुश्च कृतप्रशंसा-
वन्योन्यमभ्यगमतां नगरं पुनस्तौ ॥ ७८ ॥

ततः क्षणादेव संध्यारुणिमकरम्बितेनाम्बरमणिबिम्बेन परिचु-म्ब्यमाने शम्पायुधहरिदङ्गणे परितो रुधिर[3]वीचीमुचा पिशितपिण्डेन कृतानुषङ्गं रङ्गं विडम्बयति स[4]ति शुचा निरस्तमौलिभिर्नि[5]र्गलितवाग्भिर्निष्पन्दतनुभिर्निखिलैरपि पौरैर्नृपतिनिलयद्वारं [6]निविडितमभूत् ।

---

निपातितानिति । स वीरः भीमः स्वेन आत्मना तत्र श्मशाने निपातितान् अतएव उत्पातस्य दुर्निमित्तस्य मुद्रां चिह्नं ब्रुवता सूचयता स्वपित्रा वायुना अरण्यतले विरुग्णान् उत्पाट्य पातितान् तालान् तालवृक्षानिव स्थितान् सूतान् उपकीचकान् निरीक्ष्य सुमनायते स्म । संतुष्टचित्तोऽभूदित्यर्थः । शत्रुशेषनिःशेषीकरणादिति भावः । अत्र निपातितोपकीचकावलोकनस्य विशेषणगत्या संतुष्टचित्तत्वहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गं तालानिवेत्युत्प्रेक्षया संसृष्टम् ॥ ७७ ॥

गन्धर्वेति । तत्र श्मशाने गन्धर्वात् भीमात् भीरुषु अत एव इतरेषु जनेषु विष्वक् अभितः पलायनपरेषु सत्सु विमुक्तः भीमेन मोचितः बन्धः उपकीचककृतः यस्याः सा कृष्णा द्रौपदी कीचकरिपुः भीमश्च तौ द्वावन्योन्यं कृता प्रशंसा स्तुतिः भवानेव वीरः भवत्येव वीरपत्नीत्यादिः याभ्यां तथोक्तौ सन्तौ पुनः नगरं विराटपुरं प्रति अभ्यगमतां आगतवन्तौ । गमेरभिपूर्वात्कर्तरि लुङ् । अत्र गन्धर्वभयस्य विशेषणगत्या जनानां पलायनहेतुत्वात् काव्यलिङ्गभेदः ॥ ७८ ॥

तत इति । ततः द्रौपदीभीमयोः पुरप्रवेशानन्तरं क्षणादेव संध्यायाः प्रातःकालिकायाः संबन्धिना अरुणिम्ना अरुणकान्त्या करम्बितेन व्याप्तेन अम्बरमणेः सूर्यस्य बिम्बेन परिचुम्ब्यमाने संयुज्यमाने अतएव शम्पायुधस्य इन्द्रस्य हरिदङ्गणे दिक्प्रदेशे परितो रुधिरस्य वीचीर्मुञ्चतीति तन्मुचा पिशितपिण्डेन कीचकमांससमुद्रेन कृतः अनुषङ्गः संबन्धः यस्मिंस्तथोक्तं रङ्गं नर्तन-

---

१. 'दधता' इति पाठः. २. 'तरूनिव' इति पाठः. ३. 'वीची' इति नास्ति क्वचित्. ४. 'सति' इति नास्ति क्वचित्. ५. 'निगलित' इति पाठः. ६. 'निबिडम्' इति पाठः.

वध्वस्तदा मण्डलशो निविष्टा रुन्धद्भिराशा रुरुदुर्विलापैः ।
महत्सु दुःखेषु विजृम्भितेषु मालिन्युपालम्भनमस्पृशद्भिः ॥ ७९ ॥
तस्मिन्दिने संनिधिमागता सा कृष्णा दृशं केकयराजपुत्र्याः ।
मषीशलाकार्पणया विनापि मन्देतरामश्रुकणैरकार्षीत् ॥ ८० ॥

तावद्युधिष्ठिरमुखा अपि वातजात-
व्याधूतकीचककुलाकुलकोटिभागम् ।
निर्यत्प्रियानयनवारिझरीपरीतं
संकेतशैलमधिरुह्य निशश्वसुस्ते ॥ ८१ ॥

---

मण्डपं विडम्बयति अनुकुर्वंति सति शुचा दुःखेन निरस्तः मौलिः उष्णीषादि शिरोभूषणं यैस्तैः निर्गलिताः त्यक्ताः वाचः यैस्तैः वाचंयमैः निष्पन्दा निश्चला तनुर्येषां तैः निखिलैरपि पौरैः नृपतेः विराटस्य निलयस्य गृहस्य द्वारं निबिडितं सान्द्रितं अभूत् । पौराः सर्वे नृपमाश्वासयितुमाजग्मुरित्यर्थः ॥

**वध्व इति** । तदा वध्वः पौरस्त्रियः मण्डलशः वलयाकारेण निविष्टाः सत्यः महत्सु दुर्भरेषु दुःखेषु विजृम्भितेषु सत्स्वपि मालिन्याः द्रौपद्याः उपालम्भनं निन्दां अस्पृशद्भिः । गन्धर्वभयादिति भावः । आशाः रुन्धद्भिः दिगन्तव्यापिभिः विलापैः परिदेवनैः उपलक्षिताः रुरुदुः । अत्रोपालम्भनहेतोः कीचकवधस्य सत्त्वेऽपि तदनुदयवर्णनाद्विशेषोक्तिः ॥ ७९ ॥

**तस्मिन्निति** । तस्मिन्दिने कीचकवधदिवसे संनिधिं प्रत्यागता सा कीचकघातयितृत्वेन प्रसिद्धा कृष्णा केकयराजपुत्र्याः सुदेष्णायाः दृशं नेत्रं मषीशलाकायाः अञ्जनकाष्ठस्य अर्पणया विनापि विन्यसनं विनैव अश्रुकणैः बाष्पबिन्दुभिः मन्देतरां अनल्पाम् । तत्पूर्णामिति यावत् । अकार्षीत् चक्रे । इयमेव मद्भ्रातॄणां मृत्युरिति तया बाष्पायितमेत्यर्थः । अत्र अश्रुकारणं अञ्जनशलाकाविन्यसनं विनापि तदुदयवर्णनाद्विभावनालंकारः ॥ ८० ॥

**तावदिति** । तावत् तावता कालेन युधिष्ठिरो मुखं आदिर्येषां ते पाण्डवा अपि वातजातेन भीमेनैव वायुसमूहेन व्याधूतानां निहतानां कम्पितानां च कीचकानां सूतजानामेव वेणुविशेषाणामिति पूर्ववच्छ्लिष्टरूपकम् । कुलेन वृन्देन आकुलः संकुलः कोटिभागः अग्रदेशः यस्य तं निर्यन्त्या प्रियानयनवारिणा द्रौपदीबाष्पेणैव झर्या प्रस्रवणेन परीतं व्याप्तं संकेतं अज्ञातवाससंवत्सरशपथमेव शैलं अधिरुह्य प्रतिज्ञां निस्तीर्य निशश्वसुः निश्वसितवन्तः । कृच्छ्रादुत्तीर्णा विश्रम्य दीर्घं निश्वसन्तीति प्रसिद्धम् । समस्तवस्तुसावयवरूपकम् । यत्तु 'संकेते नृत्तमण्डपे' इति नृसिंहः, तदबोधात् विशेषणद्वयासांगत्यापत्तेः ॥ ८१ ॥

---

१. 'अपि जृम्भितेषु' इति पाठः।

तदनु विदितवार्तो धार्तराष्ट्रश्चरेभ्यः
शुभगुणचरितेभ्यः सूतजानां शतस्य ।
वसतिमरिजनानां मत्स्यभूपालपुर्यां
हृदयमुकुरलग्नैर्हेतुभिर्निश्चिकाय ॥ ८२ ॥

अन्येद्युरङ्गेश्वरसौबलाभ्यामास्थाय गोष्ठीमधिपः कुरूणाम् ।
भीष्माग्रगान्बन्धुजनान्विलोक्य गम्भीरमेवं गिरमावभाषे ॥ ८३ ॥

भो भोः, विदितं किं भवतामिदम् । संप्रति मात्स्यपुरे कामपि कामिनीं कामयमानः कीचकोऽपि निशि तस्याः पतिभिरदृश्यैः पञ्चभिर्गन्धर्वैरनुरहसि स्वसंख्यापदाभिधेयमनीयत । तस्यै पुनरपि

---

तदन्विति । तदनु पाण्डवानामज्ञातवासप्रतिज्ञानिस्तरणानन्तरं धार्तराष्ट्रः दुर्योधनः शुभानि गुणाः गूढसंचरणेङ्गितज्ञानादयः चरितानि यथार्थवक्तृत्वादीनि च येषां तेभ्यः चरेभ्यः चारेभ्यः सूतजानां शतस्य संबन्धिनी विदिता ज्ञाता वार्ता वधवृत्तान्तः येन तथोक्तः सन् हृदयं मन एव मुकुरं दर्पणं तस्मिन् लग्नैः संक्रान्तैः । निश्चितैरिति यावत् । हेतुभिः वक्ष्यमाणैः कीचककामनीयसौन्दर्य-तन्मरणादिभिः मत्स्यभूपालपुर्यां विराटनगर्यां अरिजनानां पाण्डवानां वसतिं निवासं निश्चिकाय निश्चितवान् । चिनोतेः कर्तरि लिट् । 'विभाषा चेः' इत्यभ्या-सात्परस्य कुत्वम् । अत्र शुभगुणचरितेभ्य इति विशेषणस्य तात्कालिकतदु-क्तीनां याथार्थ्याभिप्रायगर्भत्वात्परिकरस्य हेतुभिः पाण्डवस्थित्यनुमानस्य च द्वयोरङ्गाङ्गिभावेन संकरः ॥ ८२ ॥

अन्येद्युरिति । अन्येद्युः परस्मिन् दिने कुरूणामधिपः दुर्योधनः अङ्गेश्वर-सौबलाभ्यां कर्णशकुनिभ्यां सह गोष्ठीं आस्थानीं आस्थाय प्राप्य भीष्मः अग्रगः आदिमः येषां तान् बन्धुजनान् विलोक्य एवं वक्ष्यमाणप्रकारेण गिरं वाक्यं गम्भीरं उच्चैः आवभाषे उक्तवान् । इन्द्रवज्रावृत्तम् ॥ ८३ ॥

भो भो इति । भो भो हे बन्धुजनाः । 'अथ संबोधनार्थकाः । स्युः प्याट् पाडङ्ग हे है भोः' इत्यमरः । इदं वक्ष्यमाणं पाण्डववृत्तान्तं भवतां विदितं युष्माभिः ज्ञातं किमिति परिप्रश्ने । संप्रति मात्स्यपुरे कीचकः विराटश्यालः कामपि अज्ञा-तनामगोत्रां कामिनीं कामयमानः सन् अदृश्यैः दुर्ज्ञेयैः तस्याः कीचककामित-कामिन्याः पतिभिः पञ्चभिः गन्धर्वैः निशि रात्रौ अनुरहसि एकान्ते स्वसंख्यायाः पञ्चत्वस्य पदं वाचकं पञ्चत्वशब्दः तस्य अभिधेयं वाच्यम् । मरणमिति यावत् । अनीयत प्रापितः । नयतेः कर्मणि लङ् । पुनरपि । हतेऽपि कीचके इत्यर्थः । तस्यै कामिन्यै द्रुह्यन्तः चितिपातनरूपं द्रोहं कुर्वन्तः तस्य कीचकस्य अनुजा अपि तथैव । तत्पतिभिः पञ्चतामनीयन्तेत्यर्थः । इति उक्तप्रकारा इयं

---

१. 'सौबलिभ्याम्' इति पाठः. २. 'भीमादिमान्' इति पाठः. ३. 'अपीदम्' इति पाठः. ४. 'संप्रति खलु' इति पाठः. ५. 'अपि' इति नास्ति क्वचित्. ६. 'अभि-धेयताम्' इति च पाठः.

द्रुह्यन्तस्तदनुजा अपि तथैवेति काचिदियं किंवदन्ती कर्णात्कर्णमधिरोहति । एवं चेदसंशयं सा चतुष्पथमण्डपस्तम्भसालभञ्जिकेव सर्वजनकरपरामर्शभाजनं पाञ्चालदुहिता । तस्याः पतिविडम्बका इति प्रवादभाजस्तेऽपि पुनरज्ञातवासिनः परेतपतिपवमानपाकशासनाश्विनां पारस्त्रैणेयाः । तेष्वपि द्वितीयेनैव बाहुबलशालिना वधूद्रुहां निहन्त्रा भवितव्यम् । अहो सर्वत्र विशृङ्खलममीषां दौःशील्यम् ॥

तथाहि ।

देशे जरासंधमुखैर्व्यरुन्धन्वनेऽपि किर्मीरहिडिम्बमुख्यैः ।
गूढे निवासेऽपि च सूतपुत्रैः क नु स्थितास्ते कलहं विनान्यैः ॥ ८४ ॥

---

काचित् एका किंवदन्ती जनवादः कर्णात् एकस्य श्रोत्रात् कर्ण अन्यस्य श्रोत्रं अधिरोहति प्राप्नोति । एवं चेत् । उक्तवृत्तान्तः स्याद्यदीत्यर्थः । सा कीचककामितकामिनी चतुष्पथे चतुर्मार्गमेलनदेशे यो मण्डपः तस्य स्तम्भे सालभञ्जिका कृत्रिमपुत्रिकेव सर्वेषां जनानां करेण परामर्शनस्य स्पर्शनस्य भाजनं पात्रं पाञ्चालदुहिता द्रौपदी भवति असंशयम् । तस्याः कामिन्याः पतिविडम्बकाः भर्तार इति प्रवादभाजः ते पुनः गन्धर्वास्तु अज्ञातः वासः एषामस्तीति अज्ञातवासिनः परेतपतेः यमस्य पवमानस्य वायोः पाकशासनस्य इन्द्रस्य अश्विनोः आश्विनेययोश्च पञ्चानां परस्त्रियाः कुन्त्याः माद्र्याश्च पुत्राः पारस्त्रैणेयाः युधिष्ठिरभीमार्जुननकुलसहदेवाः । कल्याण्यादित्वाड्ढकि नङागमः । अनुशतिकादित्वादुभयपदवृद्धिः । भवन्ति असंशयम् । तेष्वपि बाहुबलशालिना द्वितीयेन भीमेनैव वध्वै द्रुह्यन्तीति द्रुहां कीचकानां निहन्त्रा मारकेण भवितव्यं असंशयम् । अमीषां पाण्डवानां दौःशील्यं दुःस्वभावः सर्वत्र स्वदेशे परदेशे च विशृङ्खलं निष्प्रतिबन्धकम् । अहो इत्याश्चर्ये ॥

तथाहीति । तथाहीत्युत्तरेणान्वयः ॥

देश इति । ते पाण्डवाः देशे स्वस्थाने स्थिताः सन्तः जरासंधः मुखं आदिः येषां तैः राजभिः सह व्यरुन्धन् विरोधं चक्रुः । रुधेः कर्तरि लङ् । वने स्थिताः सन्तोऽपि किर्मीरहिडिम्बमुख्यैः सह व्यरुन्धन् । किंबहुना गूढे निवासे अज्ञातवासेऽपि च स्थिताः सन्तः सूतपुत्रैः कीचकैः सह व्यरुन्धन् । अतः अन्यैः सह कलहं विना क नु कुत्र वा स्थिताः । न कुत्रापीत्यर्थः । अत्र सर्वत्र कलहसहभावं प्रति वाक्यार्थत्रयस्य हेतुत्वादनेकवाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ८४ ॥

---

१. 'मण्डपिका' इति पाठः. २. 'सर्वकरावमर्श' इति पाठः. ३. 'सुता' इति पाठः. ४. 'तेऽपि पुनरज्ञातवासिनः परेतपतिपवमानपाकशासनाश्विनां पारस्त्रैणेयास्तस्याः पतिविडम्बकाः' इति पाठः. ५. 'बल' इति नास्ति क्वचित्.

अत्रैव स्थित्वा वेषान्तरकञ्चकैः पञ्चभिरकिंचनैरेतैर्वञ्चितः खलु वृद्धो विराट इत्यभिधाय सुयोधनो राधेयेन सह कृतहस्ततालो वल्गद्भुजशिखरमुच्चैर्जहास ॥

ततः ।

संक्षोभे नगरस्य मत्स्यनृपतेर्योद्धुं स्वयं निर्गता-
न्दृष्ट्वा तानवकीर्णिनो वितनुमो गच्छाधुना त्वं पुरः ।
इत्युक्तः कुरुभूभुजा सदसि गा हर्तुं त्रिगर्तेश्वर-
स्तस्यैवाप पुरीं दिनावधिरिवार्यम्णः प्रतीचीं दिशम् ॥ ८५ ॥

तत्र[2] कचिदरुणतया निमग्नजमदग्निकुमारोष्णनिश्वासवेगविलुलित[3]विचित्रवीचीप्रपञ्चमिव [4]स्यमन्तपञ्चकम्, कचिन्नीलतया मद-

अत्रेति । वेषान्तरं अन्यो वेषः संन्यासादिः कञ्चुकं आच्छादकं येषां तैः अतएव पञ्चभिः एतैः अकिंचनैः दरिद्रैः पाण्डवैः । अत्र अस्मिन्नेव मत्स्यनगरे स्थित्वा वृद्धः । मन्दप्रज्ञ इति यावत् । अत एव वञ्चितः । खल्विति वाक्यालंकारे । इत्यभिधाय एवमुक्त्वा सुयोधनः राधेयेन कर्णेन सह कृतहस्ततालः सन् वल्गती उन्नमती भुजयोः शिखरे अग्रभागौ यस्मिंस्तथा उच्चैः तारं जहास हसितवान् । अत्र वृद्धभावस्य विशेषणगत्या वञ्चनहेतुत्वात्काव्यलिङ्गभेदः ॥.

तत इति । तत इत्युत्तरेणान्वयः ॥

संक्षोभ इति । ततः पाण्डवाः विराटपुरे गूढं वसन्तीति हेतोः मत्स्यनृपतेः नगरस्य विराटपुरस्य संक्षोभे सति । अस्माभिरिति शेषः । स्वयं योद्धुं निर्गतान् । महतां आश्रयरक्षापरतन्त्रत्वादिति भावः । तान् पाण्डवान् दृष्ट्वा अवकीर्णिनः भग्नाज्ञातवासव्रतान् । 'अवकीर्णी क्षतव्रतः' इत्यमरः । वितनुमः कुर्मः । किंच अधुना हे सुशर्मन्, त्वं पुरः पूर्वं गच्छ । गवाहरणायेति भावः । इति उक्तप्रकारं कुरुभूभुजा दुर्योधनेन सदसि सभायां उक्तः त्रिगर्तो नाम देशविशेषः तस्येश्वरः सुशर्मा तस्य विराटस्य गा धेनूः हर्तुं तस्यैव पुरीं विराटपुरं अर्यम्णः सूर्यस्य संबन्धी दिनावधिः । सायंकालिकगतिरित्यर्थः । प्रतीचीं दिशमिव आप प्राप्तवान् । सुशर्मा तत्पुरं सूर्यः अस्तं च अवापेत्यर्थः । आप्नोतेः कर्तरि लिट् । अत्र सुशर्मदिनावध्योः प्राप्त्या सादृश्यगम्यत्वात्तुल्ययोगितामेदः । शार्दूलविक्रीडितवृत्तम् ॥ ८५ ॥

तत्रेति । तत्र सायंकाले कचित् एकत्र अरुणतया अरुणवर्णत्वेन निमग्नस्य जमदग्निकुमारस्य परशुरामस्य उष्णानाम् । क्षत्रियेषु कोपादिति भावः । निश्वासानां वेगेन विलुलिताः प्रवृद्धाः विचित्राः वीचीप्रपञ्चाः तरङ्गपरम्पराः

१. 'पञ्चभिः' इति नास्ति कचित्. २. 'तत्र दक्षिणेन पुरं व्यग्रत्रसैन्येन काल्यमानं कचित्' इति पाठः. ३. 'विचित्र' इति नास्ति कचित्. ४. 'शमन्त', 'स्यमन्तक' इति च पाठः.

कण्डूलवेतण्डशुण्डाविधूनितविटपमालमिव तमालकाननम्, क्वचिद्धवलतया मन्दरगिरिमथनविक्षोभितफेनकूटमिव क्षीरोदमध्यम्, उन्नमितलाङ्गूलम् उद्गमितहुंकारम्, उल्ललितधूलीकम्, उद्दामघण्टारवं गोधनं दक्षिणेन पुरं व्यग्रतरसैन्येन तेन काल्यमानं निशम्य सेनाकुम्भिकुलगम्भीरबृंहितारम्भैर्मन्दिराग्रसिंहप्रतिच्छन्दवृन्दमुखकन्दरमौननियमं विभिन्दन्, अनुकूलपवमानपुरोनादितपटैर्वैरिभटजीविताहरणाय वैवस्वतमिवाह्वयद्भिः केतुदण्डैः परिमोटितगगनतटिनीतटविटपिवाटो विराटोऽपि रणप्रयाणारम्भमाटीकत् ॥

संख्याय यानेषु समारुरुक्षाकेलिस्पृशां कीचकबान्धवानाम् ।
अश्वप्रसङ्गेऽप्यभिधीयमानो गन्धर्वशब्दो गरलायते स्म ॥ ८६ ॥

---

यस्मिंस्तत्तथोक्तं स्यमन्तपञ्चकं कुरुक्षेत्रे परशुरामनिहतक्षत्रियरुधिरमयह्रदपञ्चकमिव स्थितम्, क्वचित् नीलतया मदेन कण्डूलानां दर्पवतां वेतण्डानां गजानां शुण्डाभिः विधूनिताः कम्पिताः विटपमालाः शाखापङ्क्तयः यस्मिंस्तथोक्तं तमालकाननं तापिञ्छवनमिव स्थितम्, क्वचित् धवलतया मन्दरेण गिरिणा मथनात् विक्षोभितानि उत्थापितानि फेनानां कूटानि राशयः यस्मिंस्तथोक्तं क्षीरोदस्य दुग्धाब्धेः मध्यमिव स्थितम्, उन्नमितानि लाङ्गूलानि येन तत्, उद्गमिता उत्पादिताः हुंकाराः येन तत्, उल्ललिताः उत्क्षिप्ताः धूलयः येन तत्कम् । उद्दामाः ताराः घण्टानां ग्रैवेयकाणां रवाः यस्मिंस्तत्, गा एव धनं दक्षिणेन पुरं पुरस्य दक्षिणभागे व्यग्रतरं ग्रहणे अतिप्रवणं सैन्यं यस्य तेन सुशर्मणा त्रिगर्तेश्वरेण काल्यमानं नोद्यमानं निशम्य श्रुत्वा सेनायां कुम्भिकुलस्य गजबृन्दस्य गम्भीरबृंहितानां गर्जितानां आरम्भैः उपक्रमैः मन्दिराग्रेषु सौधशिखरेषु सिंहप्रतिच्छन्दानां कृत्रिमसिंहानां बृन्दस्य मुखानि कन्दराणीव तेषां मौननियमं विभिन्दन् । प्रतिध्वनयन्नित्यर्थः । अनुकूलैः पवमानैः वायुभिः पुरः अग्रे नादिताः पटाः येषु तैः अतएव वैरिभटानां शत्रुयोधानां जीवितस्य आहरणाय आहर्तुमिति 'तुमर्थाच्च भाववचनात्' इति चतुर्थी । वैवस्वतं यमं आह्वयद्भिरिव स्थितैः केतुदण्डैः ध्वजैः परिमोटितः छिन्नः गगनतटिन्याः आकाशगङ्गायाः तटयोः विटपिनां वृक्षाणां वाटः समूहः येन तथोक्तः विराटोऽपि रणप्रयाणस्य आरम्भं संनाहं आटीकत् आचरितवान् । उत्प्रेक्षातिशयोक्त्योः संसृष्टिः ॥

**संख्यायेति** । संख्याय युद्धं कर्तुमिति 'क्रियार्थ—' इत्यादिना चतुर्थी । यानेषु वाहनेषु गजादिषु समारोढुमिच्छा समारुरुक्षा सैव केलिः क्रीडा तां स्पृश-

---

१. 'सालवनम्' इति पाठः. २. 'मन्थनपरिक्षोभितः' इति पाठः. ३. 'उल्लसितं' इति पाठः. ४. 'दक्षिणेन पुरं व्यग्रतरसैन्येन तेन काल्यमानं' इति नास्ति क्वचित्. ५. 'सैन्यपरिवर्तेन' इति पाठः. ६. 'जीविततहरणाय' इति पाठः. ७. 'केतनदण्डैः' इति पाठः. ८. 'आरभटीम्' इति पाठः. ९. 'अटीकत' इति पाठः.

सभ्यैश्च सूदैश्च तुरङ्गिभिश्च गोपैश्च[1] विज्ञापितवीर्यभूम्नः ।
दन्तानिवेन्द्रद्विरदः स पार्थान्वीरः[2] पुरोधाय रुरोध शत्रुम् ॥ ८७ ॥

तृणकल्पमपि त्रिगर्तभूपं तमुपेक्ष्यैव तदा गवां कुलानि ।
सहदेवविलोकमात्रहर्षात्सहसा मात्स्यचमूसमीपमापुः ॥ ८८ ॥

मौर्वीकुशाङ्कितकरावथ बद्धपङ्क्ती
मत्स्य[3]त्रिगर्तवसुधाधिपयोरनीकौ ।
आध्मातशङ्खनिनदप्रवणप्र[4]णाद-
मायोधनाध्ययनमद्भुतमारभेताम् ॥ ८९ ॥

---

न्तीति तथोक्तानां कीचकबान्धवानां सूतात्मजसंबन्धिनां वीराणां अश्वानां प्रसङ्गे आरोहणप्रस्तावेऽपि । किमुत मालिनीप्रस्ताव इत्यपिशब्दार्थः । अभिधीयमानः गन्धर्व इति शब्दः अश्वस्यापि वाचकं पदं गरलायते स्म । कालकूटतुल्योऽभूदित्यर्थः । क्यङन्तात्कर्तरि स्मयोगे लट् । 'वाजिवाहार्वगन्धर्व–' इत्यश्वपर्यायेषु प्रसिद्धोऽपि हृदयशल्यायमानान्मालिनीपतीनेव सत्वरमुपस्थापयन् शब्दः तेषां गरलप्रायोऽभूदित्यभिप्रायः । उपमार्थापत्त्योः संसृष्टिः । इन्द्रवज्रावृत्तम् ॥ ८६ ॥

**सभ्यैरिति** । स वीरः विराटः सभ्यैः सभायां साधुभिश्च सूदैः पाचकैश्च तुरङ्गिभिः अश्वारोहैश्च गोपैः गोपालैश्च विज्ञापितः क्रमेण निवेदितः वीर्यभूमा शौर्यातिशयः येषां तान् । तेषामेव प्रत्येकं तैरासंवत्सरं परिचितत्वादिति भावः । पार्थान् युधिष्ठिरभीमनकुलसहदेवान् इन्द्रद्विरदः ऐरावतः दन्तान् चतुर इव पुरोधाय अग्रे कृत्वा शत्रुं सुशर्माणं रुरोध रुद्धवान् ॥ ८७ ॥

**तृणेति** । तदा सुशर्मणो निरोधसमये गवां कुलानि सहदेवस्य स्वपालकस्य विलोकमात्रेण दर्शनेनैव यो हर्षः तस्माद्धेतोः तृणकल्पं स्वग्रासतृणतुल्यमपि तं त्रिगर्तभूपं सुशर्माणं तृणकल्पमपि तृणप्रायं यथा तथैव । अपिरत्रैवकारार्थः । उपेक्ष्य अनादृत्यैव सहसा सत्वरं मात्स्यस्य विराटस्य चम्वाः सेनायाः समीपं आपुः । स्वजीवनादपि स्वपालके प्रेमौत्कट्यादिति भावः । औपच्छन्दसिकवृत्तम् ॥ ८८ ॥

**मौर्वीति** । अथ मौर्व्यः शिञ्जिन्य एव कुशाः तैः अङ्कितः संयुक्तः करः ययोस्तौ । बद्धा पङ्क्तिः पङ्क्तिशोऽवस्थानं याभ्यां तौ । मत्स्यवसुधाधिपः विराटः, त्रिगर्तवसुधाधिपः सुशर्मा, तयोः अनीकौ सैन्ये । आध्मातानां मुखवायुपूरितानां शङ्खानां निनदः ध्वनिरेव प्रणवप्रणादः ओंकारोच्चारणं यस्मिंस्तथोक्तं आयोधनं युद्धमेव अध्ययनं वेदपाठं अद्भुतं यथा तथा आरभेतां आरब्धवन्तौ । रभतेः कर्तरि लङ् । 'प्रणवप्रधानं' इति पाठे तादृशप्रणवः प्रधानं प्रथमपठनीयं यस्मिंस्तद्यथा तथेति क्रियाविशेषणं समस्तवस्तुवर्ति सावयवरूपकम् ॥ ८९ ॥

---

१. 'पौरैश्च' इति पाठः. २. 'धीरः' इति पाठः. ३. 'मात्स्य' इति पाठः. ४. 'प्रधान' इति पाठः.

मत्स्येन्द्रमन्दिरमहानसभक्ष्यवृन्द-
स्वच्छन्दभक्षणरहस्यवदावदेन ।
क्ष्वेलारवेण वल्लस्य तदा रिपूणां
चित्तं न केवलमकम्पि दिशो दशापि ॥ ९० ॥

उदये समरस्य सैनिकानामुभयेषामसिधेनवो ववल्गुः ।
निजनामपदापरार्धवाच्यं निखिलं ग्राहयितुं च रक्षितुं च ॥ ९१ ॥

तावदम्बरपथादभिगन्तुस्तामनीकधरणीं शमनस्य ।
कासरादहरधीशतुरंगः कांदिशीक इव दूरमयासीत् ॥ ९२ ॥

---

मत्स्येन्द्रेति । मत्स्येन्द्रस्य विराटस्य मन्दिरे यन्महानसं पाकस्थानं तस्मिन् भक्ष्याणां पञ्चविधानां वृन्दस्य स्वच्छन्दं यथेच्छं यथा तथा भक्षणस्य रहस्यं मर्म । तज्जनितान्तःसार इति यावत् । तस्य वदावदेन वक्त्रा । तत्र बहुनेन भुक्तं कथमन्यथास्यैवं नाद इति तद्भक्षणस्वाच्छन्द्यसूचकेनेति यावत् । अत एवानुमानालंकारः । वल्लस्य भीमस्य क्ष्वेलारवेण सिंहनादेन तदा रिपूणां चित्तं केवलं मन एव नाकम्पि कम्पितम् । किंतु दशापि दिशः अकम्पिषत । कम्पतेः कर्मणि लुङ् । अत्र रिपुहृदयानां दशदिशां च कम्पनेनौपम्यस्य गम्यत्वात्तुल्ययोगिताभेदः पूर्वोक्तानुमानेन संसृष्टः ॥ ९० ॥

उदय इति । उभयेषां मात्स्यत्रैगर्तानां सैनिकानां वीराणाम् । 'सेनायां समवेता ये सैन्यास्ते सैनिका अपि' इत्यमरः । समरस्य युद्धस्य उदये आविर्भावे सति असिधेनवः खड्गाः । यद्यपि 'छुरिका चासिधेनुका' इति कोशादसिधेनुपदस्य स्वल्पे खड्गविशेषे प्रसिद्धिः, तथापि युद्धप्रकरणेन सामान्यपरत्वम् । यथात्रैव पार्थशब्दस्य अर्जुने प्रसिद्धस्य प्रकरणेन युधिष्ठिरादिपरत्वमिति ध्येयम् । निजस्य नामपदस्य असिधेनुरिति संज्ञाशब्दस्य संबन्धिनः अपरार्धस्य धेनुरित्युत्तरभागस्य वाच्यं गोकुलं निखिलं निःशेषं यथा तथा ग्राहयितुं त्रैगर्तैरपहारयितुं रक्षितुं मात्स्यैः पालयितुं चेत्यर्थः । ववल्गुः चलन्ति स्म । उभयेऽपि खड्गैर्युध्यन्ते स्मेत्यर्थः । औपच्छन्दसिकं वृत्तम् ॥ ९१ ॥

अथ दशभिः सूर्यास्तमयं वर्णयति—तावदिति । तावत् तदानीमेव अम्बरपथात् आकाशमार्गात् तां अनीकधरणीं मात्स्यत्रैगर्तयुद्धभूमिं अभिगन्तुः आगच्छतः शमनस्य यमस्य कासरात् वाहनमहिषात् कांदिशीकः भयात्पलायत इवेत्युत्प्रेक्षा । अहरधीशस्य सूर्यस्य तुरंगः रथाश्वः दूरं अयासीत् गतवान् । अस्तंगतः सूर्य इत्यर्थः । यातेः कर्तरि लुङ् । अश्वमहिषयोर्नैसर्गिकं वैरमिति प्रसिद्धम् । स्वागतावृत्तम् ॥ ९२ ॥

---

१. 'निजनामपरार्धवाच्यमेतत्' इति पाठः।

पाटलीकृतपयोधरपङ्क्तिः प्रादुरास शनकैरथ संध्या ।
वासरस्य रजनेरपि सीम्नोर्मध्यभागकुरुविन्दशिलेव ॥ ९३ ॥

संध्या बभौ सा समरे भटौघो
बिम्बं विभिद्यादिति भीतिभारात् ।
विवस्वता विद्रवता विसृष्टा
नभःस्थले[1] दीप्तिरिवाग्निदेया ॥ ९४ ॥

नभःपयोधेर्लवविद्रुमश्रीः क्रमेण संध्या कृशिमानमाप[2] ।
उद्यत्प्रकोपैरुभयैरनीकैर्विभज्य नीतेव विलोचनानि ॥ ९५ ॥

ध्वजिनीजनितं रजोऽन्धकारं त्वरितं बान्धवकौतुकातिरेकात् ।
परिरब्धुमिवान्धकारसंघः परमार्थो रणचत्वरं जगाहे ॥ ९६ ॥

---

**पाटलीकृतेति** । अथ सूर्यास्तमयानन्तरं पाटलीकृता श्वेतरक्तीकृता पयोधराणां मेघानां पङ्क्तिः यया सा संध्या वासरस्य अह्नः रजनेरपि रात्रेश्च द्वयोः संबन्धिन्योः सीम्नोः अवधिपरिच्छेदकदेशयोः मध्यभागे कुरुविन्दशिला पद्मरागदृषदिवेत्युत्प्रेक्षा । शनकैः क्रमेण प्रादुरास आविर्बभूव ॥ ९३ ॥

**संध्येति** । सा एवमाविर्भूता संध्या समरे युद्धे भटानां अपरावर्तिनां ओघः समूहः बिम्बं मन्मण्डलं विभिन्द्यात् विपाटयेत् इत्युक्तप्रकारात् भीतिभारात् भयातिशयात् विद्रवता पलायमानेन विवस्वता सूर्येण अग्नये देया रात्रिदातव्या अत एव नभःस्थले आकाशे विसृष्टा निहिता दीप्तिः प्रभेवेत्युत्प्रेक्षा । बभौ । भातेः कर्तरि लिट् । अत्र सूर्यप्रभायाः रात्रावग्नौ प्रविशनमागमसिद्धम् ॥ ९४ ॥

**नभ इति** । नभसः आकाशस्येव पयोधेः समुद्रस्य नवानां विद्रुमाणां श्रीः संपदिति परम्परितरूपकम् । संध्या उद्यत्प्रकोपैः अतएव उभयैः अनीकैः मात्स्यत्रैगर्तसैन्यैः विभज्य समं विभागं कृत्वा विलोचनानि स्वस्वनेत्राणि नीता प्रापितेवेत्युत्प्रेक्षा । क्रमेण कृशिमानं कृशत्वं आप आगात् । ननाशेत्यर्थः । अत्र लोचनानां प्रकोपादारुण्यगुणनिमित्ता संध्याप्रापणोत्प्रेक्षा पूर्वोक्तरूपकेण संसृष्टिः ॥९५॥

**ध्वजिनीति** । ध्वजिनीभ्यां सेनाभ्यां उभाभ्यां जनितं करितुरगरथपत्तिपदघट्टनोत्थं रज एवान्धकारं ध्वान्तं बान्धवेन साजात्यकृतेन यः कौतुकातिरेकः हर्षातिशयः तस्माद्धेतोः परिरब्धुं आलिङ्गितुमिवेत्युत्प्रेक्षा । परमार्थः वास्तवः अन्धकारसंघः तमोराशिः रणचत्वरं युद्धाङ्गणं त्वरितं शीघ्रं जगाहे प्रविवेश । अत्र रजस्तमसोः 'अन्धं करोति लोकम्' इति व्युत्पत्तिसिद्धं साजात्यकृतबान्धवमिति ध्येयम् । औपच्छन्दसिकं वृत्तम् ॥ ९६ ॥

---

१. 'दिवस्थले' इति पाठः. २. 'आगात्' इति पाठः.

संकोच्य पक्षानेकेषु संविशत्स्वपि पत्रिषु।
विस्तार्य पक्षानपरे विचेरुस्तत्र पत्रिणः ॥ ९७ ॥
शरवर्षभयेन तत्र युद्धे सकले कङ्ककुले गतेऽपि दूरम्।
प्रमदं दधदेक एव कङ्कः परिबभ्राम सभीमपक्षपातः ॥ ९८ ॥
अन्योन्यपट्टिशविघट्टभवैः स्फुलिङ्गै-
राजिस्थले [1]तिमिरकर्दमभाजि योधाः।
आगामिनीषु समितिष्वधिकं विधातु-
मासन्प्रतापनववीजमिवावपन्तः ॥ ९९ ॥
नलिनीशविम्बपथचारमलब्ध्वा
नभसि भ्रमत्सु नववीरसुरेषु।

संकोच्येति। तत्र अन्धकारे एकेषु कतिषु पत्रिषु पक्षिषु पक्षान् गरुतः संकोच्य मुकुलयित्वा संविशत्सु निलीयमानेषु सत्स्वपि। कुलायेष्विति भावः। अपरे कतिचित् पत्रिणः पक्षिणः बाणाश्च। 'पत्रिणौ शरपक्षिणौ' इत्यमरः। पक्षान् विस्तार्य विकासयित्वा तत्रैव विचेरुः संचरन्ति स्म। श्लेषसंकीर्णो विरोधाभासोऽलंकारः ॥ ९७ ॥

शरेति। तत्र युद्धे। तद्देश इत्यर्थः। शरवर्षभयेन बाणसंपातभयेन सकले कङ्कानां गृध्राणां कुले दूरं दूरदेशं गते सत्यपि प्रमदं संतोषं प्रकृष्टरणगर्वं च दधत् वहन्नेव एकः कङ्कः गृध्रः युधिष्ठिरश्च भीमेन भयंकरेण पक्षयोः पातेन गमनेन भीमस्य पक्षापातेन सहायकरणेन च सहितः सभीमपक्षपातः सन् परितः सर्वत्र बभ्राम संचचार। अत्रापि पूर्ववद्विरोधाभासः। औपच्छन्दसिकं वृत्तम् ॥ ९८ ॥

अन्योन्येति। योधाः उभये भटाः अन्योन्यस्य पट्टिशेभ्यः खड्गविशेषेभ्यः पट्टिशनामिति वा विघट्टेन संघर्षेण विघट्टाद्वा भवन्ति जायन्त इति भवैः स्फुलिङ्गैः अग्निकणैः उपलक्षिताः आगामिनीषु समितिषु युद्धेषु अधिकं उपचयं विधातुं तिमिरं तम एव कर्दमं पङ्कं भजतीति भाजि आजिस्थले युद्धक्षेत्रे प्रतापस्य नवं बीजं आवपन्तः न्यस्यन्त इवेत्युत्प्रेक्षा। आसन् बभूवुः। अत्र तिमिरस्य पङ्कत्वेन रूपणेन आजिस्थलस्य केदारत्वरूपणप्रतीतेरेकवर्तिरूपकालंकारः ॥ ९९ ॥

नलिनीति। नवाः वीराः अपरावर्त्यमृतभटा एव सुराः तेषु। देवभूयं गतेषु योधेष्वित्यर्थः। नलिनीशस्य सूर्यस्य बिम्बे पन्थाः बिम्बपथः तस्मिन् चारं गमनं अलब्ध्वा अप्राप्य। तदा सूर्यस्यास्तंगतत्वादिति भावः। नभसि आकाश एव भ्रम-

१. 'रुधिर' इति पाठः.

करपल्लवौ परिनिपीड्य मृगाक्ष्यः
कलहाय नक्तमशपन्त सुराणाम् ॥ १०० ॥

रराज हैमी रथकेतुराजी रज्यत्पटा रक्तकणैः प्रकीर्णैः ।
आकर्ण्य युद्धाद्भुतमर्धमार्गाद्द्रष्टुं निवृत्ता चरमेव संध्या ॥१०१॥

तत्र तावदरि[1]शरनिकृत्तमत्तगजसै[2]प्तिरथपत्तिकुलनवरक्तसिक्तं रणचत्वरमनुभूय भूयसा रोषेण संवर्तसमवर्तिसममूर्तिर्हृदि नर्तितधूर्तधार्तराष्ट्रशासनवार्तस्त्रै[3]गर्तः कैवर्त इव मत्स्यचक्रवर्तिनमाहर्तुं मुहूर्तादुपावर्तत ॥

---

त्सु सत्सु । सुराणां मृगाक्ष्यः अप्सरसः कलहाय रात्र्या सह वाग्युद्धं कर्तुमिति 'क्रियार्थ–' इत्यादिना चतुर्थी । करौ पल्लवाविव तौ परिनिपीड्य मिथो मेलयित्वा नक्तं रात्रिं अशपन्त । अस्मद्भोगाय द्रुह्यन्ती कियच्चिरं विलम्बस इत्यादि परुषवाचोऽवदन्नित्यर्थः । सूर्यमण्डलगमनानुसारेण तेषां स्वर्गप्राप्त्या यावन्नक्तं तदसंभवादिति भावः । अत्र नववीरसुराणां गगने विलम्बासंबन्धेऽपि तत्संबन्धोक्तिरूपातिशयोक्तेः सुराङ्गनानां रात्रिशपनासंबन्धेऽपि तत्संबन्धरूपातिशयोक्तेश्च द्वयोरङ्गाङ्गिभावेन संकरः । सुमङ्गलीयं वृत्तम् ॥ १०० ॥

रराजेति । अथ प्रकीर्णैः उत्क्षिप्तैः रक्तकणैः योधानां रुधिरबिन्दुभिः रज्यन्तः अरुणायमानाः पटाः पताकावस्त्राणि यस्याः सा हैमी काञ्चनी रथेषु केतूनां राजिः पङ्क्तिः युद्धाद्भुतं आकर्ण्य द्रष्टुं अर्धमार्गात् मार्गमध्यात् निवृत्ता पुनरागता चरमा संध्या सायंतनसंध्येवेत्युत्प्रेक्षा । रराज ॥ १०१ ॥

तत्रेति । तत्र युद्धे । तावदिति वाक्यालंकारे । अरीणां शरैः निकृत्तानां छिन्नानां निजानां च इति विशेषणद्वयं चतुरङ्गेष्वपि योज्यम् । मत्तानां गजानां सप्तीनां अश्वानां रथानां सर्वत्र तदारूढानां चेत्यपि पत्तीनां पादातानां च यानि कुलानि वृन्दानि तत्पङ्क्तीनां संबन्धि नवैः रक्तैः सिक्तं आर्द्रितं रणचत्वरं युद्धाङ्गणं अनुभूय दृष्ट्वा भूयसा महता रोषेण संवर्तसमवर्तिना प्रलयकालान्तकेन समा मूर्तिः शरीरं यस्य स तथोक्तः । रोषभीषणाकृतिरित्यर्थः । हृदि मनसि नर्तिताः पुनः पुनः स्मर्यमाणाः धूर्तस्य वञ्चकस्य धार्तराष्ट्रस्य दुर्योधनस्य शासनवार्ता आज्ञावाक्यं येन तथोक्तः । त्रिगर्तानां नाम जनपदानां राजा त्रैगर्तः सुशर्मा कैवर्तः मत्स्यग्राहीव मत्स्यचक्रवर्तिनं विराटं मीनश्रेष्ठं च मुहूर्तात् अल्पकालात् आहर्तुं ग्रहीतुं उपावर्तत समीपमागतवान् । श्लिष्टाश्लिष्टविशेषणोपमाद्वयस्य वृत्त्यनुप्रासस्य चैकवाचकानुप्रवेशसंकरः ॥

---

१. 'शरनिकरनिकृत्त' इति पाठः. २. 'सप्तिकुलपत्तिनव' इति पाठः. ३. 'त्रिगर्तः' इति पाठः.

मानिनामचरमोऽथ सुशर्मा मध्यवर्तिनमनीकपयोधेः ।
संमुखो झटिति बन्धमनैषीत्स ज्यया रिपुमपत्रपया च ॥१०२॥

भूपे पराभवपदे युधि धर्मसूनो-
र्भ्रूवल्लिकम्पकलिकामवतंसयन्सः ।
मथ्नन्बलानि रिपवे मरुतः कुमारो
मात्स्यं विमुच्य विततार दशां तदीयाम् ॥ १०३ ॥

विराटसैन्येषु मिषत्सु युद्धे त्रिगर्तनेतुर्दृढबन्धनाय ।
कोदण्डयुक्तो गुण एव तत्र कर्ता च जज्ञे करणं च जज्ञे ॥१०४॥

---

**मानिनामिति** । अथ विराटसमीपगमनानन्तरं मानिनां प्रशस्तमानानां अचरमः प्रथमः सः सुशर्मा संमुखः विराटाभिमुखः सन् अनीकस्य सैन्यस्यैव पयोधेः मध्यवर्तिनं रिपुं विराटं ज्यया धनुर्गुणेन झटिति सत्वरं बन्धं अनैषीत् प्रापयामास । झटिति तत्क्षणमेव अपत्रपया लज्जया च बन्धं अनैषीत् अतिलज्जितं चक्रे । मानभङ्गादिति भावः । नयतेर्द्विकर्मकात् कर्तरि लुङ् । अत्र धनुर्गुणबन्धनव्यापारेणैवैकेन लज्जाबन्धनस्याप्यन्यस्योत्पत्तिवर्णनाद्विशेषालंकारभेदः । स्वागतावृत्तम् ॥ १०२ ॥

**भूप इति** । भूपे विराटे युधि युद्धे पराभवस्य पदे स्थाने । अवमानिते सतीति यावत् । धर्मसूनोः युधिष्ठिरस्य भ्रूरेव वल्ली तस्याः कम्पः आज्ञासूचक एव कलिका कोरकः तां अवतंसयन् शिरोभूषणीकुर्वन् । तदाज्ञां शिरसा वहन्नित्यर्थः । अतएव सः प्रसिद्धः मरुतः वायोः कुमारः भीमः बलानि शत्रुसैन्यानि मथ्नन् भञ्जयन् सन् मात्स्यं विराटं विमुच्य बन्धान्मोचयित्वा तस्य विराटस्येमां तदीयां दशां बन्धनावस्थां रिपवे सुशर्मणे विततार दत्तवान् । अत्र भ्रूवल्लिकम्पे आरोप्यमाणायाः कलिकायाः अवतंसीकरणोपयोगित्वात् परिणामालंकारः । बन्धनकर्तुः बन्धनमित्यनुरूपसंघटनात्मकसमालंकारेण संकीर्णः ॥ १०३ ॥

**विराटेति** । युद्धे युधि विराटसैन्येषु मिषत्सु स्वयंकर्तुमशक्यत्वात्तूष्णीं पश्यत्सु सत्सु त्रिगर्तनेतुः सुशर्मणः दृढं बन्धनाय कोदण्डेन चापेन युक्तः सहितः कोदण्डे युक्तः योजितश्च गुणः भीम एव मौर्व्येवेति च कर्ता कारकश्च जज्ञे अभूत् । करणं श्रेष्ठसाधनं च जज्ञे । भीमो धनुर्गुणेन सुशर्माणं बबन्धेत्यर्थः । अत्र कर्तुराख्यातेनाभिहितत्वात् प्रथमा, करणस्य अनभिहितत्वात् तत्र तृतीया चेति ध्येयम् । अत्रैकस्यैव तत्रापि गुणस्य कर्तृत्वं करणत्वं चाश्चर्यमिति भावः । अतएव विरोधाभासः । गुणशब्दश्लेषभित्तिकाभेदाध्यवसायमूलातिशयोक्त्यनुप्राणित इति तयोरङ्गाङ्गिभावेन संकरः । 'गुणः प्रधाने रूपादौ मौर्व्यां सूदे वृकोदरे' इति विश्वः ॥ १०४ ॥

तस्यां निशायां तु तमःकदम्बकं
निमीलनोन्मीलनयोर्दृशां यथा ।
इत्थं तयोर्मात्स्यसुशर्मणोस्तथा
समानरूपं फलमेव संदधौ ॥ १०५ ॥

विमानितो वायुभुवा विराटतो
विमोचितो धर्मभुवा दयालुना ।
तया रजन्येव स सामिशेषया
समं ध्वजिन्या निरगाद्यथागतम् ॥ १०६ ॥

व्याकृत्तशीर्षकरको विमलास्थिदन्तो
रक्तह्रदांशुकधरो रथकेतुदण्डः ।
सेनाक्षयाद्धृतशमः स्वयमाजिरङ्गः
कङ्कादिवाप चरमाश्रमसंप्रदायम् ॥ १०७ ॥

---

**तस्यामिति** । तस्यां निशायां रात्रौ तमसः कदम्बकं वृन्दं दृशां लोकनेत्राणां संबन्धिनोः निमीलनस्य उन्मीलनस्य च द्वयोरपि समानरूपं एकविधमेव फलं इदमेतदिति वस्तुपरिच्छेदज्ञानशून्यत्वरूपम् । यथा संदधौ संघटयांचक्रे तथा तस्यां निशायां युद्धमपि मात्स्यस्य विराटस्य सुशर्मणश्च द्वयोरपि समानरूपमेव फलं बन्धनरूपं संदधौ । अत्र तमोयुद्धयोः प्रकृतयोः समानफलसंदायकत्वेनौपम्यस्य गम्यत्वात्तुल्ययोगिताभेदः । वृत्तं तु इन्द्रवंशावंशस्थमिश्रितोपजातिभेदः । 'स्यादिन्द्रवंशा ततजैरसंयुतैः' इति इन्द्रवंशालक्षणम् । "जतौ तु वंशस्थमुदीरितौ जरौ" इति वंशस्थलक्षणम् ॥ १०५ ॥

**विमानित इति** । वायुभुवा भीमेन विमानितः । बद्ध इति यावत् । दयालुना करुणाशीलेन धर्मभुवा धर्मराजेन विराटतः विराटात् विमोचितः अनुज्ञापितः । तदानीं तस्य स्वप्रभुत्वादिति भावः । सः सुशर्मा सामि अर्धं शेषः यस्यास्तया । अर्धावशिष्टयेत्यर्थः । तयैव रजन्या रात्र्या यथागतम् । यस्मादागतस्तं देशमुद्दिश्येत्यर्थः । ध्वजिन्या समं सेनया सह निरगात् निर्गतवान् वंशस्थवृत्तम् ॥ १०६ ॥

**व्याकृत्तेति** । व्याकृत्तं छिन्नं शीर्षं शिर एव करकः कमण्डलुः यस्य तथोक्तः । विमलाः शुभ्राः अस्थीन्येव दन्ता यस्य तथोक्तः । रक्तह्रदा एव अंशुकानि काषायवस्त्राणि धरतीति तद्धरः रथकेतुरेव दण्डः यस्य तथोक्तः । सेनाक्षयात् धृतः शमः युद्धोपरम एव अन्तरिन्द्रियनिग्रहः येन तथोक्तः । आजिरङ्गः युद्धदेशः स्वयमपि कङ्कात् युधिष्ठिरात् चरमाश्रमस्य संन्यासस्य संप्रदायं आचारं आप प्राप्तवानिवेत्युत्प्रेक्षा । समस्तवस्तुवर्तिसावयवरूपकोज्जीवितेति द्वयोरङ्गाङ्गिभावेन संकरः ॥ १०७ ॥

---

१ 'युद्धम्' इति पाठः. २. 'सेनाक्षयद्धृतशमः' इति पाठः.

तदनु मुहुर्मुहुर्वल्लमेव केवलमवलोकमाना बलशासनदिशायामोजायमानेन चन्द्रमसा प्रसृताभिर्मदसहितकरिघटाविषाणाङ्गणप्रतिफलनशतगुणितधवलिमवीचिभिर्मरीचिभिर्दलितरणविमर्ददुर्दशाविराटस्य चमूरपि प्रतिनिवर्तनहृष्यमाणगोधनवेगप्रस्नुतक्षीरधारापातशीतलितसिकतायां पदव्यां पक्ष्मपङ्क्तिनिलीनेन समरभूरेणुभारेण नयननिमीलनशिल्पकल्पितबहुसाहाय्यकमुद्रया निद्रया तां यामिनीं पश्चार्धसीमानं प्रत्यवीवहत् ॥

इत्यनन्तभट्टकविकृतौ चम्पूभारते षष्ठः स्तबकः ।

---

तदन्विति । तदनु युद्धोपरमानन्तरं सुशर्मगमनानन्तरमिति वा वल्लं भीममेव केवलं मुख्यं यथातथा मुहुर्मुहुः अवलोकमाना पश्यन्ती विराटस्य चमूः सेनापि बलशासनस्य इन्द्रस्य दिशायां प्राच्याम् । 'आपं चैव हलन्तानाम्' इति वागुर्यनुशासनादाकारान्तत्वम् । ओजायमानेन प्रकाशमानेन । ओजःशब्दस्तद्वत्परः । चन्द्रमसा चन्द्रेण प्रसृताभिः प्रकटिताभिः मदसहितायाः मदयुक्तायाः करिघटायाः गजवृन्दस्य विषाणयोः दन्तयोः अङ्गणेषु प्रदेशेषु प्रतिफलनैः संक्रमणैः शतगुणिताः । शतशब्दोऽनेकत्वपरः, अन्यथा तत्रत्यगजविषाणानां शतत्वेन निर्णायकाभावात् धावल्यपरम्परासु शतगुणितत्वोक्तौ हेत्वनुपन्यासेन निर्हेतुत्वदोषापत्तिरिति ध्येयम् । तथा च अनेकधा आवृत्ता इत्यर्थः । धवलिम्नः श्वैत्यस्य वीचयः परम्पराः यासां ताभिः मरीचिभिः किरणैः दलिता निरस्ता रणे विमर्देन मिथः संघर्षेण या दुर्दशा दुरवस्था श्रमरूपा यस्यास्तथोक्ता सती प्रतिनिवर्तनेन सुशर्मावरोधात् प्रत्यागमनेन हृष्यमाणात् संतुष्यतः गोधनात् वेगेन गमनत्वरया प्रस्नुतानां क्षरितानां क्षीराणां धारापातैः शीतलिताः संजातशैत्याः सिकता यस्यां तथोक्तायां पदव्यां मार्गे पक्ष्मणां नेत्रपुटलोम्नां पङ्क्तिषु निलीनेन संलग्नेन समरभुवि युद्धभूमौ रेणोः धूलेः भारेण अतिशयेनैव भारेणेति श्लिष्टरूपकम् । नयनयोर्निमीलनशिल्पे मुकुलनव्यापारे विषये कल्पिता बह्वी साहाय्यकमुद्रा सहायताकरणं यस्यास्तया निद्रया उपलक्षितां तां यामिनीं युद्धरात्रिं अपरोऽर्धः पश्चार्धः उत्तरभागः । 'अपरस्यार्धे पश्चभावो वक्तव्यः' इत्यपरशब्दस्य पश्चादेशः । तस्य सीमानं अन्तभागं प्रति अवीवहत् प्रापयामास । तां रात्रिं गमयामासेत्यर्थः । णिजन्ताद्वहतेः कर्तरि

---

१. 'मुहूर्तं मुहुरविरलं वल्लमेव' इति पाठः. २. 'अवलोकमाना वल्गमाना' इति पाठः. ३. 'प्रसृतैर्मदकरटिघटाविषाणाङ्कुरप्रति' इति पाठः. ४. 'विमर्दभटश्रमदुर्दशा' इति पाठः. ५. 'निवर्तनवेगहर्षमाणगोधनपयःप्रस्नवणधारा' इति पाठः. ६. 'निमीलनेन' इति पाठः. ७. 'लोचनयोर्निमीलन' इति पाठः. ८. 'पाश्चात्यसीमानमत्यवीवहत्' इति पाठः.

लुङ् । 'च्लि लुङि' इति च्लौ 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इति च्लेश्चङि 'चङि' इति द्वित्वे 'सन्वल्लघुनि चङ्परेऽनग्लोपे' इति सन्वद्भावे 'सन्यतः' इत्यभ्यासाकारस्येत्वे 'दीर्घो लघोः' इति तस्य दीर्घे चावीवहदिति रूपम् । अत्र मुहुर्मुहुर्वल्लमेव पश्यन्तीति विशेषणस्य विराटमोचनसुशर्मबन्धनसामर्थ्याभिप्रायगर्भत्वात्परिकरालंकारः । 'अलंकारः परिकरः साभिप्राये विशेषणे' इति तल्लक्षणात् । वललमेव पश्यन्ती 'वल शासनदिशायाम्' इत्यत्र वलेति वर्णद्वयस्य अव्यपेतव्यपेतात्मकावृत्तिश्रवणाच्छेकानुप्रासः । द्वयोश्च काव्यप्रकाशिकोक्तदिशा एकवाचकानुप्रवेशसंकरः । विषाणां क्वणेति शतगुणितेति च णकारस्य त्रिवारमावृत्तेर्वृत्त्यनुप्रासोऽस्य चोक्तसंकरेण संसृष्टिः ॥

इति कुरविकुलचन्द्रस्य रामकवीन्द्रस्य कृतौ चम्पूभारतव्याख्याने लास्याभिधाने षष्ठः स्तबकः समाप्तः ।

## सप्तमः स्तबकः ।

आरूढे द्यामर्कबिम्बे परेद्युः
साकं सैन्यैः सार्वभौमः कुरूणाम् ।
पार्थादेकां बिभ्रदाहृत्य गोत्रां
मात्स्यादन्यां तत्पुरं[1] हर्तुमागात् ॥ १ ॥

सुदूर[2]मार्गश्रमविह्वलाङ्गी सेना समस्ता धृतराष्ट्रसूनोः ।
आभीरवाटान्तिक एव तस्थौ सद्यो निरुद्धेव तदाज्यगन्धैः ॥ २ ॥

तावत्तस्य पादातं सर्वाभिसारेण गाहं गाहं गवां व्रजं व्रजगृहे प्र[3]जगृहे ॥

---

आरूढ इति । परेद्युः दक्षिणगोग्रहणदिवसात् परस्मिन् दिवसे अर्कबिम्बे सूर्यमण्डले द्यां आकाशं आरूढे ईषद्दूरमाक्रान्ते सति कुरूणां सार्वभौमः दुर्योधनः । पार्थात् धर्मराजात् एकां गोत्रां भुवं आहृत्य द्यूतेनापहृत्य बिभ्रदपि सन् । 'नाभ्यस्ताच्छतुः' इति नुम्निषेधः । मात्स्यात् विराटादपीत्यपिरुभयत्राप्यध्याहार्यः । 'कमपराधलवं मयि पश्यसि' इत्यादाविव गम्यमानार्थत्वादप्रयोगः । अन्यां गोत्रां भुवं गोसमूहं च । 'गोत्रा गोनिचये भूम्याम्' इति वैजयन्ती । हर्तुं तस्य पुरं विराटस्य पट्टणं प्रति । सैन्यैः चतुरङ्गैः साकम् । 'साकं सत्रा समं सह' इत्यमरः । आगात् प्राप्तवान् । 'प्रायो धनवतामेव धने तृष्णा गरीयसी । पश्य कोटिद्वयासक्तं लक्षाय प्रवणं धनुः ॥' इति प्रसिद्धेरिति भावः । अत्र भूगोवृन्दयोः श्लेषमित्तिकाभेदाध्यवसायमूलातिशयोक्त्या दुष्पूरा धनवतां धने तृष्णेति वस्तुप्रतीतेरलंकारेण वस्तुध्वनिः । शालिनी वृत्तम् ॥ १ ॥

सुदूरेति । सुदूरेण अतिदूरेण मार्गेण । मार्गगमनेनेत्यर्थः । यः श्रमः तेन विह्वलानि श्रान्तानि अङ्गानि यस्यास्तथोक्ता । अतएव समस्ता धृतराष्ट्रसूनोः दुर्योधनस्य सेना । आभीरवाटस्य गोपपल्ल्याः अन्तिके समीप एव । तस्याः गोपपल्ल्याः संबन्धिभिः आज्यगन्धैः घृतपरिमलैः सद्यः आगमनक्षण एव निरुद्धेवेत्युत्प्रेक्षा । तस्थौ अतिष्ठत् । परिमलाघ्राणस्य श्रमशामकत्वं प्रसिद्धम् ॥ २ ॥

तावदिति । तावत् तदानीमेव तस्य पादातं पादचारि बलं व्रजगृहे गोपपल्ल्यां गाहं गाहं प्रविश्य प्रविश्य सर्वाभिसारेण सर्वोद्योगेन गवां व्रजं वृन्दं प्रकर्षेण जगृहे जग्राह ॥

---

१. 'तत्पुरे' इति पाठः. २. 'विदूर' इति पाठः. ३. 'जगृहे' इति पाठः.

दण्डाघाते दीयमानेऽपि योधैर्दुग्धं भूयो दोहशेषं वहन्त्यः ।
घोषाद्गावो निःसरन्ति स्म यत्नाद्गोभ्यो घोषो यत्नलेशं विनैव ॥ ३ ॥
इतस्ततः संभ्रममीयुषीणां गोपाङ्गनानां कुचदर्शनेन ।
निषादपङ्क्तिर्निजहस्तिमस्तके[1] सृणिं निधातुं[2] श्लथपाणिरासीत् ॥ ४ ॥
भीमसेनभिषजा शमितो यो दक्षिणे झटिति मत्स्यपुरस्य[3] ।
उत्तरेऽप्युदभवत्स तु पार्श्वे पक्षवात[4] इव कौरवबाधः[5] ॥ ५ ॥

---

**दण्डेति** । योधैः दुर्योधनभटैः दण्डैः लगुडैः आघाते ताडने दीयमाने कृते सत्यपि दोहात् शेषं अवशिष्टं भूयः बहुलं दुग्धं क्षीरं वहन्त्यः । ऊधःस्थिति भावः ।-अतएव गावः यत्नात् । अतिकष्टादित्यर्थः । घोषात् गोपपल्ल्याः निःसरन्ति स्म निर्जग्मुः । घोषः गोपपल्लीषु संक्षोभजनितहुंभारावस्त्विति च (?) । 'घोषः संकुलनिध्वानगोपालाभीरपल्लिषु' इति विश्वः । यत्नलेशं अल्पमपि यत्नं विनैव निःसरन्ति स्म । जाता इत्यर्थः । अत्र घोषाद्गोनिःसरणमान्द्यस्य दोहावशिष्टबहुलक्षीरधारणेन समर्थनात्पदार्थहेतुकं काव्यलिङ्गम् । एवमुत्तरवाक्यार्थे यत्नरूपं कारणं विनैव घोषनिःसरणरूपकार्यवर्णनाद्विभावनालंकारः । अयं च गोकुलसंकुलारावयोः घोषशब्दश्लेषाभित्तिकाभेदाध्यवसायमूलातिशयोक्त्यनुप्राणित इति द्वयोरङ्गाङ्गिभावेन संकरः । अस्य च पूर्ववाक्यार्थकाव्यलिङ्गस्य च स्फुटावगम्यवैलक्षण्यात्संसृष्टिः ॥ ३ ॥

**इतस्तत इति** । इतस्ततः परितः संभ्रमं भयेन भ्रमं ईयुषीणां प्राप्तानां गोपाङ्गनानां कुचयोः दर्शनेन हेतुना । निषादिनां गजयन्तॄणां पङ्क्तिः निजानां हस्तिनां गजानां मस्तके मूर्ध्नि कुम्भद्वय इति यावत् । सृणिं अङ्कुशं निधातुं श्लथौ निर्व्यापारौ पाणी हस्तौ यस्यास्तथोक्ता आसीत् । गजकुम्भयोः द्वित्वैकवृत्तित्वपीनत्वादिगुणसंपत्तिकृतगोपाङ्गनाकुचभ्रमान्निषादिनः नखोचितयोरनयोः नाङ्कुशः पात्य इत्यालोच्य तं तत्र परिजहुरित्यर्थः । अतएवोक्तभ्रान्तेर्विशेषणगत्या अङ्कुशप्रहारत्यागहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गं भ्रान्तिमदुज्जीवितमिति तयोरङ्गाङ्गिभावेन संकरः ॥ ४ ॥

**भीमेति** । मत्स्यपुरस्य दक्षिणे देशे सव्येतरपक्षे च यः कौरवबाधः गोग्रहणरूपः । भीमसेनेनैव भिषजा वैद्येन झटिति सत्वरं शमितः निवारितः चिकित्सितश्च स तु कौरवबाधः पक्षवातः वायुरोगविशेष इव मत्स्यपुरस्य उत्तरे पार्श्वेऽपि सव्ये पक्षेऽपि उदभवत् आविर्बभूव । एकस्मिन् पक्षे शान्तस्य पक्षवायोः परस्मिन् उदयः प्रसिद्धः । उपमालंकारः । स्वागता वृत्तम् ॥ ५ ॥

---

१. 'मस्ते' इति पाठः. २. 'विधातुं' इति पाठः. ३. 'तस्य पुरस्य' इति पाठः. ४. 'पक्षघात' इति पाठः. ५. 'वेधः' इति पाठः.

वृत्तं निवेदयितुमेतदतीव वेगा-
दाधाव्य कश्चिदथ गोपयुवा विविग्नः ।
रिङ्खत्पदाः क्षितिपतेरिव घोषसीम्नि
स्वस्यापि गा विमुमुचे नृपसूनुगोष्ठ्याम् ॥ ६ ॥

औदास्यं किमिदं कुमार कुरवो गृह्णन्ति गास्तेऽखिला-
स्त्वद्दोष्णोः समयोऽयमाजिषु परैर्दुष्प्रापमाप्तुं यशः ।
देवीं केकयनन्दनां कुरु महावीरप्रसूमूर्धसु
द्रागारोह रथं गृहाण च धनुर्धत्स्वाभ्यमित्रीणताम् ॥ ७ ॥

---

वृत्तमिति । अथ उत्तरगोग्रहणानन्तरं कश्चिद्गोपयुवा, न तु वृद्धः बालो वा । द्वयोरपि गतिवेगपाटवासंभवादिति युवेत्युक्तम् । विविग्नः अतिदुःखितः सन् । एतत् वृत्तं वृत्तान्तं कौरवैर्गोग्रहणं निवेदयितुं ज्ञापयितुं अतीव भृशं वेगात् आधाव्य धावित्वा घोषसीम्नि गोकुले रिङ्खन्ति प्रस्खलन्ति पदानि पादन्यासाः शब्दाश्च यासां ताः । क्षितिपतेः विराटस्य गाः धेनूरिव स्वस्य आत्मनः गाः वाचोऽपि धेनूरपीति । नृपसूनोः उत्तरस्य गोष्ठ्यां सभायां विमुमुचे त्यक्तवान् उक्तवांश्चेत्यर्थः । अत्र प्रकृतानामेव धेनूनां वाचां च श्लेषभित्तिकालब्धैक्यत्वा-गोदीरणद्विकस्खलत्पादन्यासगद्गदशब्दकलद्विकधर्माभ्यां औपम्यस्य गम्यत्वात्तु-ल्ययोगिताभेदः । 'स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्योः स्त्रियां पुंसि' इत्यमरकोशाद्धेनूनां वाचां च श्लेषभित्तिकाभेदाध्यवसायमूलातिशयोक्त्या सहैकवाचकानुप्रवेशेन संकीर्णः ॥ ६ ॥

औदास्यमिति । हे कुमार उत्तर, इदं औदास्यं उदासीनत्वम् । उपेक्षेति यावत् । किम् । कुत इत्यर्थः । कुरवः दुर्योधनादयः अखिलाः ते तव गाः गृह्णन्ति अपहरन्ति । आजिषु युद्धेषु परैः अन्यैः दुष्प्रापं दुर्लभं यशः आप्तुं लब्धुं तव दोष्णोः अयं समयः अवसरः । केकयनन्दनां देवीं सुदेष्णां त्वन्मा-तरं महतीनां वीरप्रवीरमातॄणां मूर्धसु अग्रभागेषु कुरु । सर्वोन्नत्यं प्रापयेत्यर्थः । रथं द्राक् सत्वरं आरोह । धनुश्च गृहाण । अभ्यमित्रीणतां शत्रून्प्रति गमनं धत्स्व स्वीकुरु । 'यो गच्छत्यलं विद्विषतः प्रति । सोऽभ्यमित्रोऽभ्यमित्रीयोऽप्य-भ्यमित्रीण इत्यपि ॥' इत्यमरः । 'अभ्यमित्राच्छ च' इति चकारादनुवर्तमानः खप्रत्ययः । अत्रैकस्यैवोत्तरस्य कर्तृकारकस्य स्थापनाद्यनेकक्रियान्वयित्वात्का-रकदीपकं नामालंकारः । 'क्रमिकैकगतानां तु गुम्फः कारकदीपकम्' इति लक्षणात् ॥ ७ ॥

---

१. 'विषण्णः' इति पाठः. २. 'नन्दिनीं' इति पाठः.

उक्तोऽयमित्थं पुरतो वधूनामुल्लासयञ्श्मश्रुलवान्नखाग्रैः ।
किंचिन्मणिस्तम्भवियोजिताङ्गो गिरं दधेऽन्तःपुरमात्रधीरः ॥ ८ ॥
तथा भुजं विक्रमयेयमेतं यन्ता यदि स्यादिह मे युयुत्सोः ।
षष्ठोऽपि नः[1] कश्चन पाण्डवोऽभूदिति त्रसेयुः कुरवो यथा ते ॥ ९ ॥
इदं निशम्य स्मितलाञ्छितोष्ठ्या तत्रोत्तरा केशकृता प्रणुन्ना ।
बृहन्नलां सारथिकृत्यदक्षां भ्रात्रे निवेद्यानयति स्म चैनाम् ॥ १० ॥

अवाप्य तां संसदमादृतः क्रमा-
दवाग्बभार द्वयमिन्द्रनन्दनः ।
नृपात्मजं पूजयितुं च मस्तकं
नितम्बिनीर्[2]हासयितुं च कञ्चुकम् ॥ ११ ॥

---

उक्त इति । इत्थं उक्तप्रकारेण वधूनां अन्तःपुरस्त्रीणां पुरतः । समक्षमित्यर्थः । उक्तः । गोपयूनेति शेषः । अन्तःपुरमात्रे अन्तःपुर एव धीरः । नतु युद्ध इत्यर्थः । अयमुत्तरः । नखाग्रैः अग्रनखैः श्मश्रूणां ऊर्ध्वोष्ठोपरिलोम्नां लवान् कुटिलाग्रभागान् उल्लासयन् उन्नमयन् सन् किंचित् ईषत् मणिमयेन स्तम्भेन वियोजितं विश्लेषितं अङ्गं येन तथोक्तश्च सन् । त्यक्ततदवलम्बश्च सन्निति यावत् । गिरं वक्ष्यमाणां दधे । उक्तवानित्यर्थः ॥ ८ ॥

तथेति । इह इदानीं योद्धुमिच्छोः युयुत्सोः मे मम यन्ता कश्चित्सारथिः, तदा पलायमानस्य मम निरोधकः कश्चिदिति च । यदि स्यात् भवेच्चेत् तदा अहं एतं मदीयं भुजम्, मद्भुजप्रायमेतं मन्नियन्तारमिति च । तथा विक्रमयेयं प्रतापशालिनं कारयेयं ते गोग्राहकाः कुरवः नः अस्माकं षष्ठोऽपि कश्चन पाण्डवः षण्ढाकृतिः कश्चिदिति च अभूत् जातः इति उक्तप्रकारेण यथा त्रसेयुः बिभीयुः तथेति योज्यम् ॥ ९ ॥

इयमिति । तत्र तदानीं इदं उत्तरवाक्यं निशम्य स्मितेन लाञ्छितः अलंकृतः ओष्ठो यस्यास्तया । स्मेराधरयेत्यर्थः । केशान् करोति भूषयतीति केशकृता सैरन्ध्र्या प्रणुन्ना सारथ्ये निपुणा ज्ञातपूर्वा बृहन्नलेति प्रेरिता । उत्तरा विराटपुत्री बृहन्नलां षण्ढाकृतिमर्जुनं सारथिकृत्ये सारथ्ये दक्षां समर्थां भ्रात्रे उत्तराय निवेद्य किं च एनां बृहन्नलां आनयति स्म उत्तरसमीपं प्रापयामास ॥ १० ॥

अवाप्येति । इन्द्रनन्दनः अर्जुनः तां संसदं अन्तःपुरस्त्रीसभां अवाप्य आदृतः उत्तरादिभिः अनुगृहीतः सन् नृपात्मजं उत्तरं पूजयितुं नमस्कर्तुं मस्तकं शिरश्च नितम्बिनीः अन्तःपुराङ्गनाः हासयितुं कञ्चुकं कवचं च द्वयं क्रमात् आचारात् संप्रदायाच्च अवाक् अवनम्रं कथमेतत्सारथ्यं करोमीत्यादिवाग्रहितं च

---

१. 'अयं' इति पाठः. २. 'विलासिनीः' इति पाठः.

षण्ढोऽपि तेजसा तत्र सारथ्यसदृशाकृतिः ।
न कासां पौरदृष्टीनां चकासामास फल्गुनः[1] ॥ १२ ॥
तं सारथिपदे कृत्वा स धातारमिवेश्वरः ।
परसेनां हसन्नेव प्रधक्ष्यामीत्यमन्यत ॥ १३ ॥
मालिनी तादृशः पत्युर्महान्तं तं रणोद्यमम् ।
श्यामाकचरुनिर्वापं जज्ञे सोमाय वाजिने ॥ १४ ॥

---

यथा तथा बभार धृतवान् । यद्वा द्वितीयपक्षे ऊर्ध्वाधोभागसव्यदक्षिणभागेषु विपरीतं यथा तथा बभारेत्यर्थः । अत्र शिरसो नमनेन कञ्चुकस्य वैपरीत्येन च द्वाभ्यामवाक्छब्देन तन्त्रेण गृहीताभ्यां क्रमेणान्वयाद्यथासंख्यालंकारः । 'यथासंख्यं क्रमेणैव क्रमिकाणां समन्वयः' इति लक्षणात् । एवं राजकुमारपूजनान्तःपुराङ्गनाहासनक्रिययोर्यौगपद्यात् समुच्चयालंकारश्च द्वयोः संसृष्टिः । वंशस्थं वृत्तम् ॥ ११ ॥

**षण्ढ इति** । षण्ढः नपुंसकोऽपि स फल्गुनः अर्जुनः कासां पौरदृष्टीनां पुरवासिजननेत्राणां तेजसा सारथ्यस्य सदृशी अनुरूपा आकृतिर्यस्य तथोक्तः सन् न चकासामास न स्फुरति स्म । सर्वासामपि तथा स्फुरति स्मैवेत्यर्थः । अत्र तेजसा सारथ्यौचित्यसमर्थनात्पदार्थहेतुकं काव्यलिङ्गम् ॥ १२ ॥

**तमिति** । स उत्तरः तमर्जुनं ईश्वरः शंभुः धातारं ब्रह्माणमिव सारथेः पदे स्थाने कृत्वा । सारथिं विधायेत्यर्थः । परेषां कौरवाणां त्रैपुरदानवानां च सेनां हसन् हासं कुर्वन्नेव । हासमात्रेणैवेति यावत् । प्रधक्ष्यामि दग्धां करिष्यामि इत्युक्तप्रकारं अमन्यत तर्कितवान् । उपमालंकारः ॥ १३ ॥

**मालिनीति** । मालिनी द्रौपदी तादृशः क्लीबत्वेऽपि सारथ्योचितवेषस्य संबन्धिनं महान्तं अतिश्लाघ्यं तं उक्तविधं रणे विषये उद्यमं उद्योगम्, वाजम् अन्नं देयद्रव्यं अस्यास्तीति वाजिने सोमाय । वाजित्वगुणविशिष्टसोमदेवताया इत्यर्थः । श्यामाकचरुणा निर्वापम् । श्यामाकतण्डुलान्नपात्रद्रव्यकयागमित्यर्थः । जज्ञे तर्कयामास । तत्र 'सोमाय वाजिने श्यामाकं चरुं निर्वपेद्यः क्लैब्याद्बिभीयात्' इति श्रुत्या श्यामाकचरुद्रव्यकवाजित्वगुणविशिष्टसोमदेवताकयागस्य षण्ढत्वनिवृत्तिफलकत्वविधानाद्रणस्य पौरुषैकसाध्यत्वाच्च अर्जुने तदुद्यमोऽपि षण्ढत्वनिवर्तकतादृशयागत्वेनोत्प्रेक्षितः । तया च क्लीबत्वनिवृत्तिसामयिकाज्ञातवाससमाप्त्यनुमानप्रतीतेरलंकारेणालंकारध्वनिः ॥ १४ ॥

---

१. 'फाल्गुनः' इति पाठः.

अकर्तृकाण्यद्य वशे कुरूणां
पाण्डुस्नुषाया वसनानि सन्ति ।
आहृत्य नस्तानि दिशेति कन्या-
स्तमभ्ययाचन्त कुतूहलिन्यः ॥ १५ ॥

तत्क्षणं यातायातसरभसराजलेखवाहमुखश्रुतवल्लभुजावलेप-वृत्तान्तमोदमानसूदकुलं वीरपत्नीत्ववीरजननीत्वयुगपत्प्रसिद्धेर्वैजननो वासरोऽयमिति कात्यायनीजनसंस्तूयमानसुदेष्णं मस्तकतलविन्यस्त-हस्तप्रवृद्धवल्लवयोषिदभययाचनावचनप्रतिशब्ददानदक्षगवाक्षमात्रोप-

अकर्तृकाणीति । न विद्यते कर्ता तन्तुवायः येषां तानि । 'नद्यृतश्च' इति कप् । तेषां भगवत्कारुण्येन स्वयमेवोत्पन्नत्वादिति भावः । पाण्डोः स्नुषायाः द्रौपद्याः वसनानि दुःशासनापहृतवस्त्राणि अद्य कुरूणां वशे सन्ति तानि वस्त्राणि आहृत्य नः अस्मभ्यं दिश प्रतियच्छ । इत्युक्तप्रकारं कन्याः उत्तरायाः कुतूहलिन्यः अपूर्ववस्त्रकौतूहलवत्यः सख्यः । तं युद्धसंनद्धमुत्तरं अभ्ययाचन्त याचितवत्यः ॥ १५ ॥

तदिति । तस्मिन्नेव क्षणे तत्क्षणं उत्तरयात्राक्षण एव तत्पुरं विराटनगरं यातायातयोः गतप्रत्यागतयोः रभसेन वेगेन सहितानां सरभसानां राज्ञः विराटस्य संबन्धिनां लेखवाहानां पत्रिकानेतॄणां मुखैः वचनैः श्रुतेन ज्ञातेन बल्लवस्य भीमस्य भुजयोः अवलेपस्य गर्वस्य । पराक्रमस्येति यावत् । वृत्तान्तेन मोदमानं संतुष्यत् सूदकुलं पाचकवृन्दं यस्मिन् तथोक्तम् । अयं वासरः वीरपत्नीत्वस्य वीरजननीत्वस्य च द्वयोः युगपत् ऐककालिकायाः प्रसिद्धेः कीर्तेः वैजननः प्रसूतिदिवसः इत्युक्तप्रकारेण कात्यायनीजनेन सम्यक्स्तूयमाना सुदेष्णा यस्मिंस्तथोक्तम् । दक्षिणे गोग्रहे विराटस्येव उत्तरस्य उत्तरेऽपि ताभिः जयसंभावनादिति भावः । 'कात्यायन्यर्धवृद्धा या काषायवसनाधवा' इत्यमरः । मस्तकतले शिरसि विन्यस्तौ प्रणामार्थं निहितौ हस्तौ याभिस्तासां प्रवृद्धानां बल्लवयोषितां गोपाङ्गनानां संबन्धिनां अभयस्य याचनावचनानां प्रार्थनावाक्यानां प्रतिशब्ददाने प्रत्युत्तरदाने प्रतिध्वनिदाने च दक्षैः समर्थैः गवाक्षैरेव गवाक्षमात्रैः उपल-

१. 'अकृत्रिमाणि' इति पाठः. २. 'बल्लवभुजलतावलावलेप' इति पाठः. ३. 'वीरपत्नीवीरजननीति तव' इति पाठः. ४. 'हस्तपल्लवतल्लजवृद्ध' इति पाठः. ५. 'याच्ञा' इति पाठः. ६. 'गवाक्षोपलक्षितम्' इति पाठः.

लक्षितं कुमारप्रयाणपरिहार्यमाणमातुलशतान्तःपुरवधूटीनवविलापघोषं तत्पुरमासीत् ॥

लाजाभिवर्षी ललनासमाजो
राज्ञः कुमाराय रथस्थिताय ।
मुदाशिषं मूल्यमिव व्यतानी-
ज्जिघृक्षितानां द्विषदंशुकानाम् ॥ १६ ॥

आलेख्यदत्तैः पुरुषैरुपेतामालोकयन्राजपथे प्रतोलीम् ।
घोटान्नुदन्तीं स रथे निबद्धान्पोटां पुरस्कृत्य पुरात्प्रतस्थे ॥ १७ ॥

तदनु दक्षिणदिङ्मुखादुदयमानः पवमानो वृन्दारकमुक्तमन्दारकुसुमवर्षमन्दायितधूमगन्धं वैललस्य चिकुरबन्धमाघ्राय नि-

---

क्षितं दृश्यमानम् । उत्तरं विना सर्वेषामपि वीराणां विराटेन सह गतत्वात् प्रतिशब्दायमानान् गवाक्षान् विना प्रत्युत्तरदायकस्य कस्याप्यभावादिति भावः । कुमारस्य उत्तरस्य प्रयाणकाले परिहार्यमाणः अमङ्गलाशङ्कया विसृज्यमानः मातुलशतस्य कीचकशतस्य अन्तःपुरे वधूटीनां भार्याणां संबन्धिनः नवस्य विलापस्य भर्तृशोकरोदनस्य घोषः कोलाहलः यस्मिंस्तथोक्तं च आसीत् ॥

लाजेति । ललनानां पौराङ्गनानां समाजः समूहः रथे स्थिताय राज्ञः विराटस्य कुमाराय उत्तराय लाजान् शुभार्थं आचारलाजान् अभितो वर्षतीति तथोक्तः सन् गृहीतुमिष्टानां जिघृक्षितानाम् । गृह्णातेः सन्नन्तात्कर्मणि क्तः । द्विषदंशुकानां कौरववस्त्राणां मूल्यं क्रयद्रव्यमिवेत्युत्प्रेक्षा । आशिषं आशीर्वादं मुदा व्यतानीत् विस्तारयामास ॥ १६ ॥

आलेख्येति । स उत्तर आलेख्ये चित्रे दत्तैः युध्यमानत्वेन लिखितैः पुरुषैः उपेतां संगतां प्रतोलीं चतुष्पथमण्डपं राजपथे राजमार्गे आलोकयन् ईदृशान्येव सर्वाण्यपि युद्धानीति तर्कयन् सन्नित्यर्थः । रथे निबद्धान् घोटान् अश्वान् नुदन्तीं प्रेरयन्तीं पोटां स्त्रीपुंसलक्षणां बृहन्नलां पुरस्कृत्य पुरात् प्रतस्थे ॥ १७ ॥

तदन्विति । तदनु उत्तरनिर्गमनानन्तरं दक्षिणायाः दिशः मुखात् अग्रभागात् । मलयादिति यावत् । उदयमानः आविर्भवन्निति शैत्योक्तिः । पवमानः वायुः वृन्दारकैः देवैः मुक्तानां सुशर्मविजयसमये प्रसारितानां मन्दारकुसुमानां वर्षेण मन्दायितः क्षीणः धूमगन्धः महानसलग्नः यस्य तथोक्तं वललस्य चिकुरबन्धं धम्मिल्लं आघ्राय स्पृष्ट्वेति सौरभ्योक्तिः । निशि रात्र्यां

---

१. 'प्रयाणकाल' इति पाठः. २. 'पथ' इति पाठः. ३. 'घोपान्' इति पाठः. ४. 'वृन्दारकवृन्दमुक्त' इति पाठः. ५. 'वललचिकुर' इति पाठः.

शितस्य जयोत्सवं विज्ञापयितुमवसरं विचिन्वन्निव विराटकुरुन-न्दनयोः स्यन्दनसमीपे मन्दंमन्दमस्पन्दत ॥

प्रस्वापितेभ्यः परभूपतिभ्यः सजातिवर्गः सुलभो रणेऽस्मिन् ।
भविष्यतीव प्रननर्त हृष्टा शताङ्गशाटी शतमन्युसूनोः ॥ १८ ॥

जले मत्स्यान्दधानोऽपि स्थले मत्स्यान्विलोकितुम् ।
आगतोऽब्धिरिवानीकः कुरूणां ददृशे ततः ॥ १९ ॥

सेहे जिष्णुर्न तत्रारेः सेनाधूलिं विसृत्वरीम् ।
प्रायेण मानिना पुंसा परागो न हि सह्यते ॥ २० ॥

---

तस्य भीमस्य स्वपुत्रस्य जयोत्सवं विज्ञापयितुं अवसरं युक्तकालं विचिन्वन् प्रतीक्षमाण इव । विराटनन्दनस्य उत्तरस्य कुरुनन्दनस्य अर्जुनस्य द्वयोः । स्यन्दनस्य रथस्य समीपे मन्दं मन्दं अस्पन्दत चलति स्म । गुणत्रयसमृद्धः पवनः अनुकूलः प्रवृत्त इत्यर्थः । अत्र दक्षिणदिङ्मुखादुदयमान इति विशेषणस्य भीमविजयवृत्तान्तविज्ञानाभिप्रायगर्भत्वात्परिकरालंकारः । तेन च शुभसूचकपवमानमान्द्ये विजयवृत्तान्तविज्ञापनफलकावसरप्रतीक्षाप्रयुक्तत्वोत्प्रेक्षानुप्राणनात् द्वयोरङ्गाङ्गिभावेन संकरः ॥

**प्रस्वापितेभ्य इति** । शतं मन्यवः क्रतवः यस्य तस्य इन्द्रस्य सूनोः अर्जुनस्य । 'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमरः । शताङ्गे रथे शाटी ध्वजपटः अस्मिन् रणे युद्धे प्रस्वापितेभ्यः प्रस्वापनास्त्रेण निद्रां प्रापितेभ्यः परभूपतिभ्यः शत्रुराजभ्यः समाना अभिन्ना जातिः वस्त्रत्वरूपा येषां तेषां वर्गः समूहः सुलभः भविष्यतीति हेतोः हृष्टेवेत्युत्प्रेक्षा । ननर्त नृत्यति स्म । अनुकूलवातेन चचालेत्यर्थः । 'भविष्यतीतीव ननर्त' इत्येव पाठः । 'प्रणनर्त' इति पाठे उत्प्रेक्षाया गम्यत्वापातः ॥ १८ ॥

**जल इति** । ततः कुरूणां अनीकः कौरवसैन्यम् । जले मत्स्यान् मीनान् दधानोऽपि स्थले मत्स्यान् वैराटांश्च विलोकितुं आगतः अब्धिः समुद्र इवेत्युत्प्रेक्षा । ददृशे । उत्तरार्जुनाभ्यामिति शेषः । अत्र कुरुसैन्यस्य समुद्रत्वोत्प्रेक्षया दारुणत्वदुरवगाहत्वादिवस्तुप्रतीतेरलंकारेण वस्तुध्वनिः ॥ १९ ॥

**सेह इति** । तत्र तदानीं जिष्णुः अर्जुनः अरेः दुर्योधनस्य संबन्धिनीं विसृत्वरीं सर्वतो व्याप्नुवन्तीं सेनायाः धूलिं परागं न सेहे न क्षमते स्म । तथाहि मानिना प्रशस्तमानवता पुंसा पुरुषेण परेषां आगः अपराधः परागः धूलिश्च न सह्यते न क्षम्यते । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । धूलीपरागयोः श्लेषभित्तिकाभेदाध्यवसायमूलातिशयोक्त्याङ्गाङ्गिभावेन संकीर्णः ॥ २० ॥

---

१. 'विजयाय विज्ञापयितुं' इति पाठः. २. 'भविष्यतीति प्रणनर्त' इति पाठः

तत्रारिसैन्यमवलोकितुरुत्तरस्य
स्त्रीगोष्ठिकाजनि रणे निजवेश्मनीव ।
भीश्चित्तमश्रुलहरी नयनं विमूर्च्छा
बुद्धिं च¹ वेपथुरुजा वपुरानशे यत् ॥ २१ ॥

व्यातन्वन्कुरवं गले विरचयंस्तालुन्यपां शोषणं
वृष्टीरक्ष्णि विवर्धयन्विपुलयन्द्यां धार्तराष्ट्रारवैः ।
सेवायां त्वरयन्धनंजयगुणस्यान्तर्बहिः² कम्पयं-
स्त्रासो मात्स्यसुते चकार चरितं षण्णामृतूनां क्रमात् ॥ २२ ॥

---

तत्रेति । तत्र तदानीं अरीणां कौरवाणां सैन्यं अवलोकितुः पश्यतः उत्तरस्य निजवेश्मनि स्वगृह इव रणे युद्धदेशेऽपि स्त्रीमयी गोष्ठिका सभैव अजनि आविर्बभूव । यत् यस्मात् भीः भयं तद्रूपा स्त्रीति सर्वत्र स्त्रीलिङ्गेन प्रतीतिः । चित्तं आनशे व्याप्नोति स्म । अश्रुलहरी बाष्पधारा नयनं आनशे । विशेषेण मूर्च्छा बुद्धिं आनशे । वेपथुः कम्प एव रुजा रोगः वपुः शरीरं आनशे । उत्तरस्येति सर्वत्र योज्यम् । अत्रानेकवाक्यार्थेन स्त्रीगोष्ठीसमुदयसमर्थनात्काव्यलिङ्गभेदः॥२१॥

'भीश्चित्तमानशे' इत्युक्तम्, तामेव प्रपञ्चयति—व्यातन्वन्निति । गले कण्ठे कुरवं कुत्सितध्वनिम् । रोदनमिति यावत् । कुरुवकवृक्षं च व्यातन्वन् विस्तारयन् किसलयकुसुमादिभिर्वर्धयंश्च । तालुनि काकुदे अपां जलानां शोषणं निर्द्रवत्वं विरचयन् कुर्वन् । अक्ष्णि नेत्रे वृष्टीः बाष्पवर्षाणि विवर्धयन् । द्यां आकाशेन्द्रियं श्रोत्रं आकाशं च धार्तराष्ट्राणां दुर्योधनादीनां नीलहंसानां च आरवैः कोलाहलैः विपुलयन् । विदारयन्नित्यर्थः । धनंजयस्य अर्जुनस्य गुणस्य गाण्डीवमौर्व्याः धनंजयस्य अग्नेः गुणस्य उष्णस्पर्शस्य च । सेवायां भजने । एकत्र कोट्यारोपणादौ अन्यत्र समीपावस्थाने चेति विवेकः । त्वरयन् अन्तः अन्तरङ्गे बहिः बाह्याङ्गे च कम्पयन् वेपथुं कुर्वन् मात्स्यसुते उत्तरे त्रासः भयं क्रमात् । षण्णामृतूनां चरितं वसन्ताद्यृतुषट्कचरित्रं चकार प्रकटयति स्म । अत्र कुरवविस्तारीकरणादीनां कुरववृक्षरोदनायोः श्लेषभित्तिकया अभेदाध्यवसितानां षड्ऋतुधर्माणां प्रकृतात्मतया क्रमेण विन्यासाद्रत्नावल्यलंकारः—'क्रमिकं प्रकृतार्थानां न्यासं रत्नावलीं विदुः' इति लक्षणात् । स च श्लेषभित्तिकाभेदाध्यवसायमूलातिशयोक्त्यनुप्राणित इति द्वयोरङ्गाङ्गिभावेन संकरः ॥ २२ ॥

---

१. 'प्रवेपथु' इति पाठः. २. 'पदस्य' इति पाठः.

अथ रथादवप्लुत्य पुरं प्रति पलायमानोऽयमुत्तरः पश्चादनुधाव्य कचेषु गृहीतवते फल्गुनाय फल्गुना कण्ठरवेण प्राक्तनचित्रमिव प्रमुषितार्धवर्णं वच[1] एवमवादीत् ।

किं वा चिकीर्षुरसि हन्त बृहन्नले त्व-
मक्ष्णोर्न मान्ति कुरुराजबलान्यमूनि ।
सद्यो निवर्तय रथं समरेच्छयालं
नेष्याम्यहं निजगृहेष्ववशेषमायुः ॥ २३ ॥

गाः कालयन्तु सह वत्सकुलैरशेषै-
र्घोषान्दहन्तु कुरवः प्रहरन्तु गोपान् ।
मह्यं पलायनमहोत्सवमेव देहि
प्राणेषु किंचिदपि मे गुरुतां न वेत्सि ॥ २४ ॥

---

अथेति । अथ भयविकारानन्तरं रथात् अवप्लुत्य लङ्घित्वा पुरं निजं प्रति पलायमानः अयं उत्तरः पश्चात् पृष्ठतः अनुधाव्य । उत्तरस्याभिमुखं धावने शत्रुभ्यः स्वपृष्ठप्रदर्शनापत्तेरिति भावः । कचेषु केशेषु गृहीतवते । आत्मानमिति शेषः । फल्गुनाय अर्जुनाय फल्गुना निःसारेण कण्ठस्य रवेण । हीनस्वरेणेति यावत् । 'वाच्यवत्फल्गु(?)वसारं च' इति शब्दार्णवे । प्रमुषितानि अस्फुटानि अर्धवर्णानि शब्दार्धभागाः यस्मिन् तथोक्तम् । अर्धप्रमृष्टनीलपीतादिवर्णकं च । अतएव प्राक्तनं पुरातनं चित्रं आलेख्यमिव स्थितं वचः वाक्यं एवं वक्ष्यमाणप्रकारेण अवादीत् उक्तवान् । श्लिष्टविशेषणेयमुपमा । सरूपोपमेति दण्ड्यनुयायिनः ॥

किमिति । हे बृहन्नले, त्वं किंवा प्राणापहारि कृत्यं चिकीर्षुः कर्तुमिच्छुरसि । हन्तेति खेदे । अमूनि पुरोवर्तीनि कुरुराजस्य दुर्योधनस्य बलानि चतुरङ्गाणि अक्ष्णोः । वीक्षणस्येत्यर्थः । न मान्ति न मिलन्ति । अपारत्वादिति भावः । रथं सद्यः इदानीमेव निवर्तय पुराभिमुखं कुरु । समरेच्छया युद्धवाञ्छया अलं पर्याप्तम् । अवशेषं गतावशिष्टं आयुः निजगृहेष्वेव नेष्यामि गमयिष्यामि । युद्धाज्जीवितनाशो मम मा भूदित्यर्थः ॥ २३ ॥

गा इति । कुरवः दुर्योधनादयः गाः धेनूः अशेषैः वत्सानां कुलैः वृन्दैः सह कालयन्तु नयन्तु । घोषान् गोपपल्लीः दहन्तु । गोपान् प्रहरन्तु । हे बृहन्नले, त्वं मह्यं पलायनमेव महोत्सवमेव देहि । मे मम प्राणेषु विषये गुरुतां गौरवं किंचित् ईषन्मात्रमपि न वेत्सि न जानासीत्याक्रोशोक्तिः । पश्वादिभ्यः प्राण एव मे गरीयानित्यर्थः । 'आयुषः क्षण एकोऽपि स्वर्णकोट्या न लभ्यते' इति उक्तत्वादिति भावः ॥ २४ ॥

---

१. 'वचनम्' इति पाठः.

मातुर्मुखं मम पुरःपुर[१] एव तिष्ठ-
त्युत्कण्ठितस्य नय तत्सविधं कृपालो ।
यावन्ति सन्ति मम कोशगृहे सवित्री
तावद्भिरेव कनकैरभिषेक्ष्यति त्वाम् ॥ २५ ॥
चित्रे युद्धं विलोक्याहं चापलादेत्य वञ्चितः ।
तत्रासद्भिरिहोद्यद्भिः क्ष्वेलाहेषितबृंहितैः ॥ २६ ॥
यथाहं भूतलं त्यक्त्वा रथमारुक्षमुच्छ्रितम् ।
तथा हृदन्तरं मुक्त्वा[२] कण्ठं प्राणोऽधिरोहति ॥ २७ ॥

इति बहु[३] विलप्य पदयोः[४] प्रणिपतन्तं तं नृपसुतमपराङ्गे कर-पुटेन मुहुरास्फालयन्[६]सस्मितं गिरममर्त्यपतिसुतोऽपि[५] प्रवर्तयामास ॥

---

मातुरिति । किं च उत्कण्ठितस्य मातृदर्शनोत्सुकस्य मम मातुर्मुखं पुरःपुरः अग्रेऽग्र एव तिष्ठति । चक्षुषोर्बद्धमिव पश्यामीत्यर्थः । हे कृपालो करुणाशीले बृहन्नले, तस्या मातुः सविधं समीपं प्रति मां नय प्रापय । एवं चेदिति योज्यम् । 'भीताद्युक्तिषु न्यूनपदत्वं न दोषाय' इत्यालंकारिकाः । मम कोशगृहे यावन्ति कनकानि सन्ति तावद्भिरेव कनकैः सवित्री मन्माता त्वां अभिषेक्ष्यति । तवाभिषेकं करिष्यतीत्यर्थः । पुत्रदात्रे किं न देयमिति भावः ॥ २५ ॥

एतावती चेद्भीतिस्तदा किमित्यागतोऽसीत्यत आह—चित्र इति । अहं चित्रे युद्धं विलोक्य चापलात् तद्वदेतदपीति भ्रमात् एत्य आगत्य । तत्र चित्रे असद्भिः अविद्यमानैः । अचेतनत्वादिति भावः । इह वास्तवयुद्धे उद्यद्भिः जृम्भमाणैः क्ष्वेलाभिः वीराणां सिंहनादैः, हेषितैः अश्वानां कोलाहलैः, बृंहितैः गजानां घींकारैः, वञ्चितः । प्राणसंशयमापन्नोऽस्मीत्यर्थः । भ्रान्तस्य सर्वत्रैव नानुकूला प्रवृत्तिरिति भावः । अतएव विषमालंकारः अनर्थोत्पत्तिरूपः ॥ २६ ॥

यथेति । अहं भूतलं त्यक्त्वा उच्छ्रितं रथं यथा आरुक्षं आरूढवानस्मि । आङ्पूर्वाद्रुहेः कर्तरि लुङ् । तथा प्राणः । ममेति शेषः । हृदः वक्षसः अन्तरं मध्यभागं मुक्त्वा कण्ठं हृदन्तरादुन्नतं अधिरोहतीवेत्युत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या । कण्ठगतप्राणोऽहं जहीहि । मां पलायननायेत्यर्थः ॥ २७ ॥

इतीति । इति इत्थं बहु निःसारवाक्यं विलप्य पदयोः प्रणिपतन्तं नमस्कुर्वन्तं तं नृपसुतं उत्तरं अपराङ्गे पृष्ठे करपुटेन मुहुरास्फालयन् । मा भैषीरिति सशब्दं परामृशन् सन् । अमर्त्यपतेः इन्द्रस्य सुतः अर्जुनोऽपि गिरं वाचं सस्मितं प्रवर्तयामास । उवाचेत्यर्थः ॥

---

१. 'एत्य' इति पाठः. २. 'त्यक्त्वा' इति पाठः. ३. 'बहुधा' इति पाठः. ४. 'पदोः' इति पाठः. ५. 'अमरपतिसुतः'; 'अमराधिपसुतः' इति च पाठः. ६. 'आपृश्यालिङ्गयन्' इति पाठः.

उदितोऽसि विराटभूपतेरुदराद्भद्र कथं त्वमीदृशः ।
प्रवया अपि यः कुतूहलात्परसैन्यैरधुनापि युध्यते ॥ २८ ॥

सारथौ गतभयेऽपि रथी त्वं संगरे यदि बिभेषि रिपुभ्यः ।
मत्स्यकेकयभुवां भुजभाजां मानकृन्तनमितोऽपि किमन्यत् ॥ २९ ॥

विस्तार्य संसदि विशृङ्खलवीरवादं
युद्धात्पलायितवतोऽद्य तवाङ्गकम्पः ।
अन्तःपुरेषु हसतामबलाजनाना-
माचार्य एव भविता कुचवल्गितानाम् ॥ ३० ॥

---

**उदित इति ।** हे भद्र, विपरीतलक्षणया अभद्र । कुलाधमेति यावत् । ईदृशः रणभीरुः त्वं विराटभूपतेः महावीरस्य उदरात् गर्भात् कथमुदितोऽसि जातोऽसि । कथंशब्दोऽत्राश्चर्ये । 'कारणगुणा हि कार्यगुणानारभन्ते' इति प्रसिद्धे-र्विरुद्धत्वादाश्चर्यम् । प्रवयाः अतिवृद्धोऽपि यः विराटः परेषां शत्रूणां सैन्यैः सह । अधुना । अत्यन्तवृद्धभावेऽपीत्यर्थः । कुतूहलात् युध्यते । हिरवधारणे । अत्र तादृग्रणधीरादीदृग्रणभीरूत्पत्तिवर्णनाद्विरुद्धकार्योत्पत्तिरूपो विषमप्रभेदः । वैतालीयं वृत्तम् ॥ २८ ॥

**सारथाविति ।** सारथौ मयि गतं भयं शात्रवं यस्य तथोक्ते सत्यपि । रथी रथिकः त्वं संगरे रिपुभ्यः शत्रुभ्यः बिभेषि यदि । त्रस्यसि चेदित्यर्थः । इतः तव शत्रुभयप्राप्तेरपि अन्यद्वस्तु भुजं बाहुप्रतापं भजन्तीति तद्भाजां मत्स्य-भुवां पितृवंश्यानां केकयभुवां मातृवंश्यानां द्वयेषामपि मानस्य कृन्तनं छेदः । किमिति काकुः । त्वत्पलायनमुभयकुलाकीर्तिकरमित्यर्थः । 'पुनः किम्' इति पाठस्तु पुनःशब्देन अन्यदिति लक्षयित्वा कथंचिद्योज्यः । स्वागता वृत्तम् ॥ २९ ॥

**विस्तार्येति ।** संसदि अन्तःपुरस्त्रीसभायां विशृङ्खलं निर्विरोधं वीरवादम् । 'पार्थोऽपि नः कश्चन पाण्डवोऽभूत्' इतीत्यादिवीरालापं वीरस्यैव वादमिति च । विस्तार्य उद्घोष्य । अद्य युद्धात्पलायितवतः तव अङ्गकम्पः अन्तःपुरेषु हसतां एतावदेव तव वीर्यमिति परिहासं कुर्वतां अबलाजनानां संबन्धिनां कुचयोः चलनानां हासक्षोभजनितकम्पानां आचार्यः उपदेष्टा भविता भविष्यत्येव । न तु न भविष्यतीत्यर्थः । युद्धे पलायित्वा गतं वीक्ष्य सकुचक्षोभं हसिष्यन्तीति समुदायार्थः । अत्र स्त्रीणामेव तथा हासे किमुत पुरुषाणामित्यर्थान्तराक्षेपार्था-पत्त्यलंकारः । तथा वस्तुना प्रतीयत इति वस्तुनालंकारध्वनिः ॥ ३० ॥

---

१. 'बलभाजां मानकर्तनमितोऽपि पुनः किम्' इति पाठः. २. 'विस्तीर्य' इति पाठः.

कियद्द्विषामंशुकमाहृतं ते सहोदरेणेति सखीभिरुक्ते ।
मानोत्तराया भृशमुत्तरायाः किमुत्तरं ब्रूहि तदुत्तर त्वम् ॥ ३१ ॥
जरठो जनकोऽपि मातुलाः शतमप्यन्तमगुस्त्वमेककः ।
यदि यासि न धैर्यमत्र ते न वशे राज्यमिदं[1] भविष्यति ॥ ३२ ॥
तदिदं विजहीहि साध्वसं कुरु पाणौ तृणतां कुरुष्वपि ।
तव मत्स्यपतेस्तु वाहिनीमुखभागे खलु वल्गनं क्षमम् ॥ ३३ ॥

---

कियदिति । हे उत्तरे, ते तव सहोदरेण उत्तरेण । द्विषां अंशुकं वस्त्राणीति जात्येकवचनम् । कियत् किंमात्रं आहृतं आनीतं इत्युक्तप्रकारं सखीभिरुक्ते प्रश्ने सति भृशं मानेन उत्तरायाः श्रेष्ठायाः । मानयुक्तप्रतिवाक्याया इति वा । उत्तरायाः त्वदनुजायाः उत्तरं प्रतिवाक्यं किं भवेदिति शेषः । तत् उत्तरायाः प्रतिवाक्यं हे उत्तर, त्वं ब्रूहि वद । त्वत्पलायनं मानधनमच्छिष्यद्वारा ममाप्यकीर्तिकरमिति भावः ॥ ३१ ॥

जरठ इति । किं चेत्यप्यर्थः । तव जनकः विराटः जरठः अतिवृद्धः, मातुलाः त्वन्मातृभ्रातरः शतं कीचका अपि अन्तं नाशं अगुः गताः । इणः कर्तरि लुङ् । त्वं च एककः निःसार एकश्च । अल्पार्थे कन् । अतः अत्र युद्धे धैर्यं न यासि यदि न प्राप्नोषि चेत् तर्हि इदं राज्यं मात्स्यं ते तव वशे प्रभुत्वे न भविष्यति न स्थास्यति । न केवलमुभयवंश्यानां मानहानिः, अपि तु तव राज्यहानिश्च भविष्यतीत्यर्थः । वैतालीयं वृत्तम् ॥ ३२ ॥

तदिति । तत् तस्मात् । पलायनस्य भयस्य वा बहुदोषाकरत्वाद्धेतोरित्यर्थः । इदं साध्वसं भयं विजहीहि त्यज । हातेर्विपूर्वाल्लोट् । 'ई हल्यघोः' इत्यभ्यासाकारस्येत्वम् । पाणौ तृणतां कार्मुकं कुरु । गृहाणेत्यर्थः । कुरुषु दुर्योधनादिष्वपि विषये तृणतां तृणभावं कुरु । कुरूनपि तृणकल्पत्वेन भावयेत्यर्थः । धैर्यशौर्याभ्यामिति भावः । 'तृणता स्यात्तृणत्वेऽपि तृणता कार्मुकेऽपि च' इति विश्वः । किं चेति त्वर्थः । मत्स्यानां जनपदानां मीनानां च पतेः प्रभोः । 'पतिः समास एव' इति घिसंज्ञानियमात् ङसि 'घेर्ङिति' इति गुणः पूर्वरूपं च । तव वाहिनीनां सेनानां नदीनां च मुखभागे अग्रदेशे वल्गनं संचारः क्षमं उचितम् । खल्वामन्त्रणे । 'सेनानद्योस्तु वाहिनी' इत्यमरः । अत्र पूर्वार्धे त्यागाद्यनेकक्रियायौगपद्याभिधानात्समुच्चयः । उत्तरार्धे मत्स्यपतित्ववाहिनीमुखसंचारयोरनुरूपसंघटनवर्णनात्समालंकारः । श्लेषभित्तिकाभेदाध्यवसायमूलातिशयोक्त्युज्जीवित इत्यनयोरङ्गाङ्गिभावेन संकरः । अस्य च समुच्चयेन संसृष्टिः, एकवाचकानुप्रवेशेन संकरो वा । वैतालीयं वृत्तम् ॥ ३३ ॥

---

१. 'राष्ट्रम्' इति पाठः.

इत्याश्वास्य पितृवनाटवीतटमुपेत्य शमीविटपिकोटिसमाटीकितकिरीटशङ्खचापनिषङ्गो जयलक्ष्मीपरिणयनयोग्यतां संपादयितुमिव खण्डितषण्ढभावोऽयमाखण्डलसुतो निजतत्त्वव्याकरण[1]शतधापल्लवितधार्ष्ट्येन तेनैव सुदेष्णापत्येन परिकल्पितसारथ्य[2]शिल्पं रथमधिरुह्य[3] क्षणेन वारिनिधिपूरस्य वाडववह्निरिव सपत्नसैन्यस्य संमुखीनो बभूव ॥

संख्यातीतमवेक्ष्य कौरवबलं तत्सव्यसाची पुर[4]-
श्चापे तादृशि किंचिदेव विदधे साचीभवन्तीं दृशम् ।
पार्वत्या निजपट्टवस्त्र[5]शकलं स्नेहद्वयार्द्रं स्वयं
न्यस्य न्यस्य चिकित्सितव्रणशिरा देवोऽपि यं श्लाघते ॥३४॥

---

इतीति । इत्युक्तप्रकारेणाश्वास्य विशोकं कृत्वा । तमिति शेषः । उत्तरमित्यर्थः । पितृवनस्य श्मशानस्य संबन्धि अटवीतटं अरण्यप्रदेशं उपेत्य शमीविटपिनः शमीवृक्षस्य कोटेः अग्रात् समाटीकिताः समानीताः किरीटः इन्द्रदत्तः, शङ्खः देवदत्तः, चापः गाण्डीवः, निषङ्गौ अक्षयतूणीरौ, ते सर्वे येन स तथोक्तः । जयलक्ष्म्याः परिणयनस्य पाणिग्रहणस्य योग्यतां संपादयितुमिवेत्युत्प्रेक्षा । खण्डितः त्यक्तः षण्ढभावः नपुंसकत्वं येन सः । अयं आखण्डलसुतः अर्जुनः । निजस्य तत्त्वस्य स्वरूपस्य पाण्डवत्वादेः व्याकरणेन विवरणेन हेतुना शतधा शतप्रकारं पल्लवितं उत्पन्नं धार्ष्ट्यं धृष्टत्वम् । धैर्यमिति यावत् । तत् यस्य तथोक्तेन । तेनैव यः प्रथमं रथिकस्तेनैव । यस्तथा भीतस्तेनैवेति वार्थः । सुदेष्णापत्येन उत्तरेण परिकल्पितं सारथ्यशिल्पं सारथिव्यापारः यस्मिंस्तं रथमधिरुह्य क्षणेन सपत्नसैन्यस्य शत्रुबलस्य वाडववह्निः वाडवानलः वारिनिधिपूरस्य समुद्रप्रवाहस्येव संमुखीनः अभिमुखं वर्तमानः बभूव । उपमोत्प्रेक्षयोः संसृष्टिः ॥

संख्येति । सव्यसाची अर्जुनः । संख्यामत्येतीति संख्यातीतं असंख्येयं तत् कौरवबलं पुरः अग्रे अवेक्ष्य तादृशि । शंभोरपि शिरसि व्रणदायक इत्यर्थः । चापे गाण्डीवे साचीभवन्तीं तिर्यक्प्रसरन्तीं दृशं दृष्टिं किंचित् ईषदेव । न तु पूर्णमित्यर्थः । विदधे अकरोत् । असंख्येयमपि परबलं मम गाण्डीवस्य कियान् विषय इतीपदालोकनाभिप्रायः । अतएव परिकरालंकारः । तादृशीत्युक्तप्रभावं प्रपञ्चयति—पार्वत्येति । पार्वत्या गौर्या स्नेहयोः घृतस्य प्रेम्णश्च द्वयेनार्द्रं निजस्य पट्टवस्त्रस्य शकलं खण्डं स्वयमात्मना न्यस्य न्यस्य निक्षिप्य निक्षिप्य । आदराद्द्विरुक्तिः । न त्वन्येन न्यासयित्वेत्यर्थः । चिकित्सितं प्रतिकृतं व्रणं यस्मि-

---

१. 'व्याकरणात्' इति पाठः. २. 'सारथि' इति पाठः. ३. 'आरुह्य' इति पाठः. ४. 'पुनः' इति पाठः. ५. 'निजवस्त्रपट्ट' इति पाठः.

नभसि प्रविसारि देवदत्ते नरदत्तध्वनितं ततो दधाने ।
मुमुहुर्द्विरदा मुमूर्च्छुरश्वा रथिनश्चुक्षुभिरे भटाश्च विभ्युः ॥३५॥

पर्यायेणास्य गाण्डीवः पातितज्यः प्रकोष्ठयोः ।
गन्धर्वयुद्धमारभ्य कृतं मौनं समापयत् ॥ ३६ ॥

अथ करतलद्वयमण्डपकृतताण्डवस्य गाण्डीवस्य विस्फारेण पाण्डवोऽयमिति निश्चित्य लीलानिस्तीर्णदुस्तरसंधासिन्धुरयं पुनरपि निर्वन्धुमागत इत्यधृष्यया निजेर्ष्यया रुक्षा विपक्षाः पूर्वपक्षाः सिद्धान्तमिव युद्धाय तं पर्यवारयन् ॥

---

स्तादृशं शिरः यस्य स देवः शंभुरपि यं गाण्डीवं श्लाघते किमुतान्य इत्यर्थापत्तिरूपेण वाक्यार्थेन कौरवबलानादरसमर्थनाद्वाक्यार्थहेतुककाव्यलिङ्गार्थापत्त्योरङ्गाङ्गिभावेन संकरः । शार्दूलविक्रीडितं वृत्तम् ॥ ३४ ॥

**नभसीति** । ततः देवदत्ते अर्जुनशङ्खे नभसि आकाशे प्रकर्षेण विसारि व्यापृतं नरेण अर्जुनेन दत्तं आध्मानेन जनितं ध्वनितम् । ध्वनतेर्भावे क्तः । दधाने सति द्विरदाः गजाः मुमुहुः संभ्रान्ता बभूवुः, अश्वाः मुमूर्च्छुः मूर्च्छां गताः, रथिनः रथिकाः चुक्षुभिरे क्षुभ्यन्ति स्म, भटाश्च बिभ्युः तत्रसुः । देवदत्तघोषेण चतुरङ्गमपि कौरवबलमुन्मादितमभूदित्यर्थः । अत्र मोहाद्यनेकक्रियायौगपद्यात्समुच्चयालंकारः । औपच्छन्दसिकं वृत्तम् ॥ ३५ ॥

**पर्यायेणेति** । अथ प्रकोष्ठयोः हस्तमूलयोः पातिता आकर्षणे प्रवेशिता ज्या मौर्वी यस्य सः अस्य अर्जुनस्य गाण्डीवः चापः गन्धर्वैः चित्रसेनादिभिः सह युद्धमारभ्य पर्यायेण क्रमेण कृतं मौनं नाम व्रतं समापयत् त्यजति स्म । अर्जुनो गाण्डीवं टंकारितवानित्यर्थः । गन्धर्वैर्युद्धप्रभृति कुत्रापि युद्धाभावादिति भावः । अत्र गाण्डीवगुणटंकारस्य मौनव्रतसमाप्तिरूपेण कथनात्पर्यायोक्तिरलंकारः—'पर्यायोक्तं तु गम्यस्य वचोभङ्ग्यन्तरेण यत्' इति लक्षणात् ॥ ३६ ॥

**अथेति** । अथ करतलयोः द्वयमेव मण्डपः रङ्गः तस्मिन् कृतं ताण्डवं गुणाकर्षणविमोचनव्यापारः यस्य तस्य । अर्जुनस्य सव्यसाचित्वादिति भावः । गाण्डीवस्य विस्फारेण गुणटंकारेण । 'विष्फारो धनुषः स्वानः' इत्यमरः । अयं पुरोवर्ती पाण्डवोऽर्जुन इति निश्चित्य अनुमीय अयं अर्जुनः लीलया अनायासेन निस्तीर्णः अतिक्रान्तः दुस्तरः तरितुमशक्यः संधा अज्ञातवासप्रतिज्ञैव सिन्धुः समुद्रः येन तथोक्तः सन् पुनरपि निर्बन्धुं निरोद्धुम् । राज्यायेति शेषः । आगतः इत्युक्तप्रकारया अधृष्यया दुर्निवारया निजया ईर्ष्यया मानसविकारेण गुणेष्वपि दोषारोपात्मकेन रूक्षाः कलुषाः विपक्षाः शत्रवः तं अर्जुनं पूर्वपक्षाः

---

१. 'गाण्डिवस्य विस्फारेण पार्थोऽयम्' इति पाठः. २. 'विस्तर' इति पाठः.

विजयस्य रथे ततो निपेतुर्विमतानामिषवः परःसहस्राः ।
जनमेजययागवेदिमध्ये जगतां भीतिकरा इवाहिसंघाः ॥३७॥

जम्भद्विषोऽपि तनयो जगदेकवीरो
जन्यं समारभत जृम्भयितुं महीयः ।
प्रत्यर्थिरक्ततटिनीस्नपनैः शराणां
भेत्स्यन्निवाथ पितृकाननवासदोषम् ॥ ३८ ॥

चलदश्वरथद्विपोत्थरेणून्वरणस्रङ्मधुभिः प्रणीय शान्तिम् ।
सुखदृष्टरणा यथा भवेयुः सुरवामा गगने तथा समेयुः ॥३९॥

---

प्रतिवादिवाक्योपन्यासाः सिद्धान्तं ग्रन्थकर्त्रभिमतार्थमिव युद्धाय योद्धुं दूषितुं चेति । 'तुमर्थाच्च भाववचनात्' इति चतुर्थी । पर्यवारयन् सर्वतो निरुन्धन्ति स्म । अत्र गाण्डीवटंकारेण अर्जुनानुमानादनुमानालंकारेण ईर्ष्याहेतुकपरिवारण-समर्थनात्मककाव्यलिङ्गोज्जीवनात् द्वयोरङ्गाङ्गिभावेन संकरः । अस्य च करतल-द्वयमण्डपेति परम्परितरूपकेण संधासिन्धुरिति केवलरूपकेण सिद्धान्तमित्युप-मया च संसृष्टिः । उपमया चार्जुनप्रावल्यकौरवदौर्वल्ययोः प्रतीतेरलंकारेण वस्तुध्वनिरित्यपि प्राहुः ॥

**विजयस्येति** । ततः परिवारणानन्तरम् । परःसहस्राः सहस्रेभ्योऽधिकाः विमतानां शत्रूणां इषवः बाणाः विजयस्य अर्जुनस्य रथे जगतां भीतिकराः भयंकराः अहिसंघाः सर्पसमूहाः जनमेजयस्य पारिक्षितस्य राज्ञः संबन्धिन्याः यागवेदेर्मध्ये वह्निकुण्ड इव निपेतुः । अत्राप्युपमया कौरवबाणानां सद्यो नश्वरत्वप्रतीतेरलंकारेण वस्तुध्वनिः । औपच्छन्दसिकं वृत्तम् ॥ ३७ ॥

**जम्भेति** । अथ जगत्येकः मुख्यः वीरः । वैवक्षिकविशेष्यभावात् समासः । जम्भद्विषः इन्द्रस्य तनयः अर्जुनोऽपि शराणां निजबाणानां पितृकानने श्मशाने यो वासः तेन यो दोषः अशुचित्वरूपः तं प्रत्यर्थिनां शत्रूणां रक्ततटिनीषु शोणितनदीषु स्नपनैः अभिषेचनैः भेत्तुं क्षालितुं इच्छन् भेत्स्यन्निवेति फलोत्प्रेक्षा । महीयः श्लाघ्यं जन्यं युद्धं जृम्भयितुं प्रकटयितुं समारभत उपक्रान्त-वान् । वसन्ततिलका वृत्तम् ॥ ३८ ॥

**चलदिति** । चलद्भिः धावद्भिः अश्वैः रथैः द्विपैश्च उत्थाः उद्धूताः रेणूः धूलीः ताः वरणस्रजां स्वयंवरार्थपुष्पमाल्यानां मधुभिः मकरन्दरसैः शान्तिं क्षयं प्रणीय प्रापय्य स्वयं सुखं अनावरणं यथा तथा दृष्टः रणः याभिस्तथोक्ता यथा भवेयुः तथा सुरवामाः अप्सरसः गगने आकाशे समेयुः मिलन्ति स्म । अत्र युद्धे निखिल नूतनवल्लभप्राप्तिं गृहीतवरणस्रजो गगने संजग्मुरित्यर्थः ।

---

१. 'सर्वार्थम्' इति पाठः. २. 'समीयुः' इति पाठः.

कौन्तेयकर्णद्वितयोपकण्ठमौहूर्तिकावेदितजैत्रयात्रैः ।
आशातशल्यै रुरुधेऽथ भल्लैराशा कुबेरस्य च वैरिणां च ॥४०॥

उद्धारसंधिपरिमुक्तिषु मार्गणाना-
माद्ये उभे अपि तदा तिसृषु क्रियासु ।
सायुज्यमापतुरिवान्तिमया समीके
चक्रीकृते धनुषि शक्रसुतेन तेन ॥ ४१ ॥

युद्धसीम्नि [1]भृतगर्वविप्रुषो मूर्च्छितान्कटकनिःसृताम्भसः ।
तत्र लक्ष्यमकरोत्स कुञ्जरांस्तस्य तात इव शैलसंचयान् ॥ ४२ ॥

---

अत्र रणरेणोः वरणमाल्यरसक्षयणासंवन्धेऽपि संबन्धोक्तिरूपाया अतिशयोक्तेः अर्जुनहनिष्यमाणवीरभटानां असंख्येयलल्पवस्तुव्यञ्जकायाः रसक्षयणयोर्हेतुहेतुमतोरुक्तिरूपस्य हेत्वलंकारस्य च द्वयोरेकवाचकानुप्रवेशसंकरः ॥ ३९ ॥

**कौन्तेयेति** । अथ कौन्तेयस्य अर्जुनस्य संबन्धिनः कर्णद्वितयस्य श्रोत्रयुग्मस्य उपकण्ठाभ्यां समीपाभ्यामेव मौहूर्तिकाभ्यां ज्यौतिषिकाभ्यां आवेदिता ज्ञापिता जैत्रयात्रा येषां तैः । आकर्णाकृष्टगुणमुक्तैरित्यर्थः । सव्यसाचित्वात्कर्णद्वितयेऽपीत्युक्तम् । आ समन्ताच्छातानि तीक्ष्णानि शल्यानि बाणाग्राणि येषां तैः भल्लैः बाणविशेषैः । कुबेरस्य आशा उत्तरदिक्, वैरिणां कौरवाणां आशा गोग्रहणतृष्णा च, द्वयमपि रुरुधे निरुद्धा भग्ना च । अत्र कुबेरदिशः कौरवतृष्णायाश्च श्लेषभित्तिकाभेदाध्यवसितेन रोधेनौपम्यस्य गम्यत्वात्तुल्ययोगिताभेदः ॥४०॥

**उद्धारेति** । तदा समीके युद्धे तेन शक्रसुतेन अर्जुनेन । धनुषि गाण्डीवे चक्रीकृते गुणाकर्षणेन मण्डलीकृते सति । मार्गणानां बाणानां संबन्धिनीषु उद्धारः निषङ्गादादानम्, संधिः संधानम्, परिमुक्तिः प्रयोगः, तासु तिसृषु क्रियासु । निर्धारणे सप्तमी । तासां मध्य इत्यर्थः । आद्ये उभे प्रथमद्वितीये उद्धारसंधानक्रिये द्वे अपि अन्तिमया मोचनक्रियया सह सायुज्यं एकीभावं आपतुः प्राप्ते इवेत्युत्प्रेक्षा । लाघवातिशयादज्ञेयादानसंधानं शराणां मोचनमेव सर्वैर्ददृश इत्यर्थः ॥ ४१ ॥

**युद्धेति** । कटावेव कटकौ कुम्भौ ताभ्यां निःसृतानि निर्गतानि अम्भांसि मदजलानि येषां तथोक्तान् । अन्यत्र नितम्बनिस्रुतनिर्झरोदकान् । अतएव भृताः धृताः गर्वस्य अहंकारस्य विप्रुषः यैस्तथोक्तानिव स्थितानित्युत्प्रेक्षा । तत्र युद्धसीम्नि रणभुवि मूर्च्छितान् व्याप्तान् कुञ्जरान् गजान् सः अर्जुनः तस्य अर्जुनस्य तातः पिता इन्द्रः शैलानां संचयान् समूहानिव लक्ष्यं शरव्यं अकरोत् ।

---

१. 'भुजगर्विणां द्विपासुच्छ्रितान्', 'भुजगर्वविप्रुषासुच्छ्रितान्' इति च पाठः.

काण्डैरपातयदधः करिमण्डलानां
शुण्डाः प्रचण्डतरदोर्युधि पाण्डुसूनुः ।
निद्रास्यतां निखिलवैरिमहीपतीना-
मुत्पादयन्निव पृथूरुपधानपङ्क्तीः ॥ ४३ ॥

विशालरन्ध्रं विजयास्त्रदत्तं देहस्य मध्ये दधतो महान्तः ।
स्कन्दस्य शक्त्या क्षतमेखलस्य क्रौञ्चस्य लीलां करिणो विवव्रुः॥४४॥

आधोरणस्य शिरसा पततार्धमार्गे
संधानभाजि दिवमुत्पतिते कबन्धे ।
न्यस्य स्रजं सुरवधूरथ बद्धमौना-
त्तस्माद्भिया दिवि पलायत दूरमेका ॥ ४५ ॥

---

गजानवधीदित्यर्थः । उपमोत्प्रेक्षयोः संसृष्टिः । यत्तु 'भुजगर्वविप्रुषामुच्छ्रि-तान्' इत्यपपाठे भ्रमेण भुजयोः गर्वविप्रुषां गर्वातिशयानामित्यर्थः । 'उच्छ्रितान् उन्नतान्' इति नृसिंहप्रलपितम्, तत्किं केन संगतमिति सहृदया एवाकलयन्तु । रथोद्धता वृत्तम् ॥ ४२ ॥

काण्डैरिति । प्रचण्डतरौ अतिभीषणौ दोषौ बाहू यस्य सः । 'भुजबाहू प्रवेष्टो दोः' इत्यमरः । पाण्डुसूनुः अर्जुनः निद्रास्यतां अग्रे स्वापनास्त्रेण शयनं करिष्यतां निखिलानां वैरिमहीपतीनां शत्रुराजानां पृथूः स्थूलायताः उपधा-नानां उपबर्हाणां पङ्क्तीः । शिरोभागक्षिप्यतूलादिनिर्मितयन्त्रविशेष उपधानम् । उत्पादयन् जनयन्निवेत्युत्प्रेक्षा । युधि युद्धे काण्डैः बाणैः । 'काण्डोऽस्त्री दण्ड-बाणार्ववर्गावसरवारिषु' इत्यमरः । करिमण्डलानां गजवृन्दानां शुण्डाः करान् अधः भूतले अपातयत् पातितवान् ॥ ४३ ॥

विशालेति । महान्तः करिणः गजाः देहस्य मध्ये विजयस्य अर्जुनस्य अस्त्रेण बाणेन दत्तं कृतं विशालं विस्तीर्णं रन्ध्रं दधतः सन्तः स्कन्दस्य कुमार-स्वामिनः शक्त्या नाम आयुधेन क्षता रन्ध्रिता मेखला मध्यदेशः यस्य तस्य क्रौञ्चस्य नाम पर्वतस्य लीलां विवव्रुः स्वीचक्रुः । अत्र अन्यलीलायाः अन्यत्रा-संभवेन तत्सदृशलीलाक्षेपादसंभवधर्मसंबन्धनिबन्धनो निदर्शनालंकारः ॥ ४४ ॥

आधोरणस्येति । एका काचित् सुरवधूः देवाङ्गना दिवं आकाशं प्रति उत्पतिते किंच पतता आधोरणस्य गजारूढस्य शिरसा । अर्जुनबाणच्छिन्नेनेति शेषः । अर्धमार्गे मार्गमध्ये संधानं संबन्धं भजतीति तद्भाजि कबन्धे अप-मूर्धकलेवरे कस्मिंश्चित् स्रजं वरणमाल्यं न्यस्य निक्षिप्य । नवसुरभ्रान्त्येति भावः । अथ निक्षेपानन्तरं बद्धं मौनं येन तस्मात् । अचेतनत्वेन गतसंलापात्त-

---

१. 'अथ लब्ध', 'अवबद्ध' इति च पाठः. २. 'भयात्' इति पाठः.

तुङ्गा गजाश्च जवनास्तुरगाश्च शूरा[1]
योधाश्च तेन निहता भुवमाशु जग्मुः ।
निद्रास्यतो निबिडमत्र नरेन्द्रसङ्घा-[2]
त्प्रागेव सम्यगवकाशजिघृक्षयेव ॥ ४६ ॥
गङ्गा सिता रविसुताप्यसिता पिशङ्गी[3]
चक्रे तयोः सहचरी च पुरा विधात्रा ।
शोणा रुचा न तटिनीति किलार्जुनेन[4]
बाणालिभिः शतमसृक्सरितां वितेने ॥ ४७ ॥

---

स्मात् । उक्तविधकबन्धात् भिया भयेन दिवि आकाशे दूरं पलायत धावति स्म । अत्र मौनजन्यभयस्य विशेषणगत्या पलायनहेतुत्वात्पदार्थहेतुककाव्यलिङ्गस्य भ्रान्तिमदुज्जीवितत्वात् द्वयोः संकरः । यत्तु 'गतप्राणं दृष्ट्वा लज्जावती बभूवेत्यर्थः' इति नृसिंहः, तदनाघ्रातशृङ्गारगन्धस्य तस्य न चोद्यम् । त्रासेन संचारिणः लज्जोदयस्य लोकशास्त्रोभयविरुद्धत्वादिति ॥ ४५ ॥

तुङ्गा इति । तुङ्गा उन्नताः गजाश्च, जवनाः जवाधिकाः तुरगाः अश्वाश्च, शूराः शौर्यशालिनः योधाश्च, तेन अर्जुनेन निहताः छिन्नाः सन्तः । अत्र युद्धभूमौ निबिडं संबाधं यथा तथा निद्रास्यतः अग्रे प्रस्वापनास्त्रेण शयिष्यतः । नरेन्द्राणां राज्ञां संघात् प्राक् पूर्वमेव सम्यक् असंबाधं यथा तथा । अवकाशस्य शयनस्थलस्य ग्रहीतुमिच्छया जिघृक्षयेवेत्युत्प्रेक्षा । भुवं प्रत्याशु जग्मुः । संबाधे सति नरेन्द्रापेक्षया दुर्बलानामवकाशस्य दुर्लभत्वादिति भावः ॥ ४६ ॥

गङ्गेति । पुरा सृष्टिकाले विधात्रा ब्रह्मणा गङ्गा नाम सिता श्वेता तटिनी नदी चक्रे सृष्टा । रविसुता यमुना नाम असिता नीला तटिन्यपि चक्रे । तयोः गङ्गायमुनयोः सहचरी सखी सरस्वती नाम पिशङ्गी पिङ्गला । गौरादित्वात् ङीप् । तटिनी चक्रे । रुचा कान्त्या शोणा रक्ता काचित्तटिनी न चक्रे । इति किल उक्तप्रकाराद्धेतोरिवेत्युत्प्रेक्षा । अर्जुनेन बाणानां आलिभिः पङ्क्तिभिः । असृक्सरितां रक्तनदीनां शतं वितेने सृष्टम् । अत्र 'गङ्गा सिता रविसुताप्यसिता पिशङ्गी चक्रे तयोः सहचरी च पुरा विधात्रा ।' इत्येव पूर्वार्धम् । द्वितीयान्तपाठे तु विरिञ्चिनेति व्यत्ययतोऽनुषङ्गः, चक्रे इत्यस्य स्थलत्रये कर्तरि एकत्र कर्मणि च प्रयोगमाश्रित्यान्वयायोगश्च । यद्यपि शोणो नदः विधात्रा सृष्ट एव, तथापि न स नदी । अतएव 'शोणा रुचा न तटिनी' इत्युक्तम् ॥ ४७ ॥

---

१. 'वीराः' इति पाठः. २. 'नृपेन्द्र' इति पाठः, ३. 'गङ्गां सितां रविसुतामसितां पिशङ्गीं चक्रे तयोः सहचरीं च पुरा विरिञ्चिः' इति पाठः. ४. 'शोणा कृता' इति पाठः.

कर्णे क्वेति गवेषणस्य विषये गान्धारनाथे पुन-
निर्गन्तुं धृतदिग्भ्रमे विकलितच्छत्रेऽपि दुर्योधने ।
द्रोणेऽपि क्षपितध्वजे कृतधनुर्भङ्गेऽपि तस्यात्मजे
मूर्च्छाले सरितः सुतेऽपि युधि सा मम्लौ कुरूणां चमूः॥४८॥

वीणामुनीन्द्रो विजयस्य युद्धं नीरन्ध्रभावेन निरीक्षमाणः ।
आनन्दजैरश्रुभिरेव चक्रे हस्तार्पितैराह्निककृत्यमभ्रे ॥ ४९ ॥

विस्मयार्णवविभावरीविभुं वीक्ष्य वीक्ष्य विजयस्य विक्रमम् ।
उत्तमाङ्गमखिलाप्सरोगणैरुर्वशी नभसि साप्यकम्पयत् ॥ ५० ॥

---

**कर्णेति** । ततः युधि युद्धदेशे । इदं सर्वत्र योज्यम् । कर्णे राधेये क्व कुत्रास्त इत्युक्तप्रकारस्य गवेषणस्य अन्वेषणस्य विषये पात्रे । पलायिते सतीति यावत् । गान्धारनाथे पुनः शकुनौ तु निर्गन्तुं अन्यत्र यातुं धृतः दिशां भ्रमः प्राच्यादेः प्रतीच्यादिज्ञानं येन तथोक्ते सति । दुर्योधनेऽपि विकलितं छिन्नं छत्रं यस्य तथोक्ते सति । द्रोणेऽपि क्षपितो नाशितो ध्वजो यस्य तथोक्ते सति । तस्य द्रोणस्य आत्मजे अश्वत्थाम्न्यपि कृतः धनुषः भङ्गः भेदः यस्य तथोक्ते सति । सरितः गङ्गायाः सुते भीष्मेऽपि मूर्च्छास्यास्तीति मूर्च्छाले सति । सा कुरूणां चमूः सेना मम्लौ म्लानाभूत् । अत्र पलायनाद्यनेकक्रियायौगपद्यात्समुच्चयालंकारः । शार्दूलविक्रीडितं वृत्तम् ॥ ४८ ॥

**वीणेति** । वीणाप्रियो मुनीन्द्रः वीणामुनीन्द्रः नारदः । शाकपार्थिवादित्वात्समासः । विजयस्य अर्जुनस्य युद्धं नीरन्ध्रभावेन अविच्छेदभावेन निरीक्षमाणः पश्यन् सन् अभ्रे आकाशे हस्तयोरर्पितैः हस्ताभ्यां गृहीतैरित्यर्थः । आनन्दाज्जातैः आनन्दजैः अश्रुभिः बाष्पजलैरेव । अह्निभवं आह्निकं कृत्यं मध्याह्नस्नानसंध्यावन्दनादिकार्यं चक्रे । असंबन्धे संबन्धरूपातिशयोक्तिः । इन्द्रवज्रा वृत्तम् ॥ ४९ ॥

**विस्मयेति** । विस्मयः आश्चर्यमेव अर्णवः समुद्रः तस्य विभावरीविभुं चन्द्रम् । इति परम्परितरूपकम् । अत्याश्चर्यप्रवर्धकमित्यर्थः । विजयस्य अर्जुनस्य विक्रमं वीक्ष्य वीक्ष्य । आदरात् द्विरुक्तिः । सा मनोरथभङ्गात् द्वेषित्वेन प्रसिद्धा उर्वश्यपि अखिलानां अप्सरसां गणैः सह उत्तमाङ्गं शिरः अकम्पयत् । श्लाघयामासेत्यर्थः । अत्र अपिशब्दसूच्यतादृक्प्रद्वेषवत्या उर्वश्यापि श्लाघने किमुतान्यैरित्यर्थान्तराक्षेपादर्थापत्त्यलंकारः । रथोद्धता वृत्तम् ॥ ५० ॥

---

१. 'शकलितः;' 'विगलित' इति च पाठः. २. 'मम्ले' इति पाठः.

वपुरस्त्रसात्कृतवतां सुभटानां
वरणस्रजे विबुधवारवधूभ्यः ।
कुसुमात्यये किसलयान्यपि दत्वा
क्षुपतामवाप कुलिशायुधशाखी ॥ ५१ ॥

बाह्वोः प्रवृष्टकुसुमस्य ततो निलिम्पैः
प्रस्वापनास्त्रमहिमातिशयेन तस्य ।
निद्रायते स्म निखिला पृतना रिपूणां
युद्धावतीर्णमपनेतुमिव श्रमं स्वम् ॥ ५२ ॥

ततः स बीभत्सुः परिषत्समानीतवधूपरिभवानुरूपफलप्रदित्सयेव सारथिना द्विषतामपहारितविविधपरिधानो गुरुप्रभृतिष्वमीषु दिवा स्वापो मा भूदिति कृपया मन्यमान इव पुनरपि तदस्त्रं क्षणादेव संजहार ॥

---

**वपुरिति** । वपुः निजदेहं अस्त्रेभ्यः अर्जुनबाणेभ्यः सात्कृतवतां अर्पितवताम् । 'तदधीनवचने च' इति सात्प्रत्ययः । सुभटानां सुरीभूतानां वरणार्थं स्रजे मालां कर्तुम् । इति 'क्रियार्थ–' इत्यादिना चतुर्थी । कुलिशायुधस्य इन्द्रस्य शाखी कल्पवृक्षः कुसुमानामत्यये व्यये सति किसलयानि पल्लवानपि विबुधवारवधूभ्यः दत्त्वा क्षुपतां ह्रस्वशाखित्वं अवाप प्राप्तवान् । 'ह्रस्वशाखाशिफः क्षुपः' इत्यमरः । अत्र कल्पवृक्षस्य स्वल्पशाखित्वासंबन्धेऽपि संबन्धोक्तेरतिशयोक्तिः । तया चार्जुननिहतारिवीराणामसंख्येयत्वप्रतीतेरलंकारेण वस्तुध्वनिः । सुमङ्गलीवृत्तम् ॥ ५१ ॥

**बाह्वोरिति** । ततः निलिम्पैः देवैः प्रकर्षेण वृष्टानि मुक्तानि कुसुमानि यस्य तथोक्तस्य तस्य अर्जुनस्य बाह्वोः संबन्धिनः प्रस्वापनास्त्रस्य महिमातिशयेन निखिला रिपूणां पृतना सेना युद्धादवतीर्णं प्राप्तं स्वं स्वीयं श्रमं अपनेतुं निवारयितुमिवेत्युत्प्रेक्षा । निद्रायते स्म शिश्ये । अत्रोक्तोत्प्रेक्षा प्रस्वापनास्त्रमहिमातिशयं प्रत्यहेतोरपि अर्जुने रणश्रमशामकस्य सुरतरुकुसुमवर्षस्य हेतुत्वोक्तिरूपप्रौढोक्त्यलंकारेणोज्जीवितेति द्वयोरङ्गाङ्गिभावेन संकरः ॥ ५२ ॥

**तत इति** । ततः स बीभत्सुः अर्जुनः रिपुसेनानिद्रानन्तरं परिषदि सभायां सम्यक् आनीतः प्रापितः यः वधूपरिभवः द्रौपदीतिरस्कारः वस्त्रापहाररूपः तस्यानुरूपस्य अनुगुणस्य फलस्य प्रदातुमिच्छा प्रदित्सा तयेवेत्युत्प्रेक्षा । सारथिना उत्तरेण विद्विषां कौरवाणां अपहारितानि विविधानि नानाजातीयानि परिधा-

---

१. 'सति दलान्यपि' इति पाठः. २. 'पृतना निखिला' इति पाठः. ३. 'निजवधू' इति पाठः. ४. 'विद्विषां' इति पाठः. ५. 'अमीषु' इति नास्ति क्वचित्.

अथ दृशः परिमृज्य कराञ्चलैररुणिताः परिमीलनमुद्रया ।
प्रकटितास्यबिलैः पटुजृम्भणात्[1]प्रबुबुधे कुरुराजचमूश्चिरात्[2] ॥ ५३ ॥

पूर्वप्रयोगमुदिता इव तस्य बाणा
निद्रां द्विषत्सु निखिला ददुरेव दीर्घाम् ।
पश्चात्प्रयुक्तममुनाहमितीव रोषा-
त्प्रस्वापनं तु वितताार न तादृशीं ताम् ॥ ५४ ॥

स तु वपुरनुशोच्य धार्तराष्ट्रः
समिति विराटसुतापनीतचेलम्[3] ।
कुलिशभृदनुजीविदत्तबन्धां
कुशलममन्यत घोषवाटयात्राम् ॥ ५५ ॥

---

नानि अधोवस्त्राणि येन तथोक्तः सन् । यद्वा परिधानशब्दोऽत्र परितः धत्त इति व्युत्पत्त्या वस्त्रमात्रपरः । तेन उत्तरीयादेः सत्त्वे किमिति 'ध्वजपटशकलाग्रैः क्लृप्तकौपीनकल्पाः' इत्युत्तरग्रन्थो न विरुध्यत इति ध्येयम् । अमीषु पुरोवर्तिषु गुरुप्रभृतिषु द्रोणाचार्यादिषु विषये । कृपया दिवा अह्नि स्वापः निद्रा मा भूत् । तस्य महादोषलस्सरणादिति भावः । इत्युक्तप्रकारं मन्यमानः आलोचयन्निवे-त्युत्प्रेक्षा । क्षणादेव तदस्त्रं प्रस्वापनं पुनरपि संजहार उपसंहृतवान् । उत्प्रेक्षा-द्वयस्य संसृष्टिः ॥

अथेति । अथ अस्त्रोपसंहारानन्तरम् । परिमीलनमुद्रया मुकुलनावस्थया अरुणिताः संजातारुण्याः दृशः नेत्राणि कराञ्चलैः अग्रकरैः परिमृज्य संघृष्य पटुजृम्भणात् जृम्भाकरणाद्धेतोः प्रकटितानि विवृतानि आस्यानि वक्त्राणि बिला-नीव तैः उपलक्षिता कुरुराजचमूः दुर्योधनसेना चिरात् प्रबुबुधे प्रबुद्धा । बुध्यतेः कर्तरि लिट् । स्वभावोक्तिः । द्रुतविलम्बितं वृत्तम् ॥ ५३ ॥

पूर्वेति । तस्य अर्जुनस्य निखिलाः बाणाः पूर्वं प्रथमतः प्रयोगेण मुदिता इवेत्युत्प्रेक्षा । द्विषत्सु दीर्घामेव निद्रां ददुः । मरणं चक्रुरित्यर्थः । अहमेकं तु अमुना अर्जुनेन पश्चात् सर्वेभ्योऽप्यनन्तरं प्रयुक्तं इत्युक्तप्रकाराद्रोषादिवेत्यु-त्प्रेक्षा । प्रस्वापनमस्त्रं द्विषत्सु तादृशीं दीर्घां तां निद्रां न वितताार न ददौ । मानिता एव प्राणात्ययेनापि प्रभोः कृत्यं निर्वहन्तीति भावः । प्रस्वापनास्त्रेण नैकोऽपि हत इत्यर्थः । उत्प्रेक्षाद्वयस्याङ्गाङ्गिभावेन संकरः ॥ ५४ ॥

स इति । स धार्तराष्ट्रः दुर्योधनस्तु समिति युद्धे विराटसुतेन उत्तरेण अप-नीते चेले अन्तरीयोत्तरीये यस्मिन् तथोक्तं वपुः निजशरीरं अनुशोच्य दृष्ट्वा परिखिद्य कुलिशभृतः इन्द्रस्य अनुजीविभिः भृत्यैः गन्धर्वैः दत्तः बन्धः यस्यां तां घोषवाटयात्रां गोकुलप्रयाणं कुशलं क्षेमं अमन्यत । ततोऽप्यवमानकरीयं

---

१. 'परिजृम्भणात्' इति पाठः. २. 'चमूचरैः' इति पाठः ३. 'चैलम्' इति पाठः.

पराञ्चि कर्तुं वदनान्यनीशाः
पश्चाद्विमर्देन नभस्यमर्यः ।
निरीक्ष्य नग्नान्नृपतीन्ह्रियार्ता
निमीलनाज्ञं नयनं निनिन्दुः ॥ ५६ ॥

इति परिभवलक्ष्म्या संभृतां भोगमुद्रां
तनुभिरभिदधानाः स्थाणुभिर्नग्नभावे ।
ध्वजपटशकलाग्रैः क्लृप्तकौपीनकृत्याः
सुबलदुहितृपुत्राः स्वां पुरीं प्रत्यगच्छन् ॥ ५७ ॥

---

यात्रेति संभावितवान् । अत्रोभयोः घोषवाटयात्रात्वेऽपि अत्र कुशलतररूपानर्थोत्पत्तिवर्णनाद्विषयप्रभेदः । एवं तत्र बन्धस्य दोषस्यापि गुणत्वेन वर्णनाल्लेशालंकारश्च । द्वयोरेकवाचकानुप्रवेशसंकरः । पुष्पिताग्रा वृत्तम् ॥ ५५ ॥

**पराञ्चीति** । अमर्यः अप्सरसः नग्नान् विवस्त्रान् नृपतीन् दुर्योधनादीन् निरीक्ष्य ह्रिया लज्जया आर्ताः खिन्नाः सत्यः अतएव वदनानि मुखानि पराञ्चि पराङ्मुखानि कर्तुं पश्चात् पृष्ठभागे नभसि आकाशे विमर्देन बहुसङ्घसंबाधेन हेतुना अनीशाः अशक्ताः सत्यः निमीलनं निमेषं न जानातीति निमीलनाज्ञम् । निमेषशून्यमित्यर्थः । नयनं नेत्रेन्द्रियं स्वीयं निनिन्दुः निन्दन्ति स्म । अत्र नग्ननृपावलोकनस्य लज्जां प्रति तस्याश्च वदनपराङ्मुख्योद्यमं प्रति च हेतुत्वात्पदार्थहेतुकं काव्यलिङ्गद्वयमङ्गाङ्गिभावेन संकीर्णम् । एवं पाश्चात्यभागसंमर्दस्य वदनपराङ्मुख्यकरणाशक्तिं प्रति तस्याश्च नेत्रनिमीलनोद्यमं प्रति तन्मीलनराहित्यस्य नेत्रनिन्दनं प्रति च हेतुत्वादुक्तविधमेव काव्यलिङ्गत्रयमङ्गाङ्गिभावेन संकीर्णम् । अत्र च प्राथमिकं विमर्देन पराङ्मुख्यकरणाशक्यसंबन्धेऽपि संबन्धोक्तिरूपयातिशयोक्त्या सहैकवाचकानुप्रवेशेन संकीर्णम् । त्रयाणामपि संकराणां पुनरङ्गाङ्गिभावेन संकर इति सुधीभिरनुसंधेयम् ॥ ५६ ॥

**इतीति** । इत्युक्तप्रकारम् । नग्नभावे वस्त्रराहित्ये स्थाणुभिः तिष्ठन्तीभिः । वस्त्रशून्याभिरित्यर्थः । तनुभिः शरीरैः परिभवलक्ष्म्या अर्जुनकृतावमानसमृद्ध्या स्त्रीलिङ्गेन स्त्रिया च संभृतां संपादितां भोगमुद्रां संभोगावस्थां अनुभूतिं च अभिदधानाः ज्ञापयन्तः सुबलदुहितुः गान्धार्याः पुत्राः दुर्योधनादयः ध्वजपटानां शकलाग्रैः क्लृप्तं निर्मितं कौपीनकृत्यं यैस्तथोक्ताः सन्तः । स्वां स्वीयां पुरीं हस्तिनगरं प्रत्यगच्छन् प्रत्यागताः । अत्र दिगम्बरत्वस्य अर्जुनकृतावमानानुमापकत्वात् अनुमानालंकारः । मालिनीवृत्तम् ॥ ५७ ॥

तदनु हरिदङ्गणविशृङ्खलविश्रमितविजयशङ्खरवो निजायुधनिक्षेपरक्षिषु भूतकुटुम्बेषु नवरुधिराञ्जलिपानतृप्तिकिलिकिलितमनुभवितुकाम इव पुनरपि पितृवनमेत्य तरुनिहितशस्त्रसंभारः पुरात्सहायातेषु गणेषु आवामेव तव रणाद्भुतदर्शनं प्रतिवञ्चिते इति उपालब्धुमिव कृतसांनिध्याभ्यां क्लैब्यसारथ्याभ्यां भूयः कृतानुषञ्जनः कुरुकुञ्जरो भूमिंजयमेवं जगाद ॥

कुमार कोशीकुरु केशपाशं मुखेऽश्रुणो मार्जय पातमार्गम् ।
तूण्या समं दोष्णि निधेहि चापं राशेरुपर्यास्स्व रथे पटानाम् ॥५८॥
बधान धैर्यं वद बन्धुगोष्ठ्यामात्मानमेवारिजयस्य हेतुम् ।
मातुः पितुर्वा धुरि मन्त्रिणां वा मा तत्त्वगन्धं मम सूचयेति ॥५९॥

---

तदन्विति । तदनु कौरवगमनानन्तरं हरितां दिशां अङ्गणेषु प्राङ्गणेषु विशृङ्खलं निष्प्रतिबन्धकं यथा तथा विश्रमितः व्याप्तः विजयः शङ्खरवः देवदत्तनिनादः यस्य सः निजानां आयुधानां निक्षेपं न्यासं रक्षन्तीति रक्षिषु भूतानां पिशाचानां कुटुम्बेषु नवैः रुधिराञ्जलिपानैः तृप्तैः यत्किलिकिलितं कलकलध्वनिः तं अनुभवितुं श्रोतुं कामो यस्य तथोक्त इव स्थित इत्युत्प्रेक्षा । पुनरपि पितृवनं श्मशानं एत्य तरौ शमीवृक्षे निहितः न्यस्तः शस्त्राणां आयुधानां संभारः समूहः येन तथोक्तः । पुरात् विराटनगरात् सहायातेषु सहागतेषु गणेषु आवां द्वे एव तव संबन्धिनो रणाद्भुतस्य दर्शनं प्रतिवञ्चिते इत्युक्तप्रकारं उपालब्धुं निन्दितुं कृतं सांनिध्यं याभ्यां तथोक्ताभ्यामिव स्थिताभ्यामित्युत्प्रेक्षा । क्लैब्यं नपुंसकत्वं सारथ्यं च ताभ्यां भूयः पुनरपि कृतं अनुषञ्जनं संबन्धः यस्य सः कुरुकुञ्जरः अर्जुनः भूमिंजय इत्युत्तरस्यैव नामान्तरम् । तं प्रत्येवं वक्ष्यमाणप्रकारेण जगाद उक्तवान् । उत्प्रेक्षाद्वयस्य संसृष्टिः ॥

उक्तिप्रकारं द्वाभ्यामाह—**कुमारेति** । हे कुमार उत्तर, केशपाशं शिथिलकचभारं कोशीकुरु । बन्धयेत्यर्थः । मुखे अश्रुणः बाष्पस्य पातमार्गं धारापद्धतिं मार्जय । दोष्णि निजबाहौ चापं तूण्या समं निषङ्गेण सह निधेहि निक्षिप । रथे पटानां कौरवांशुकानां राशेरुपरि आस्स्व उपविश । रथिकत्वेन तिष्ठेत्यर्थः ॥५८॥

**बधानेति** । धैर्यं बधान चित्ते स्थापय । बन्धूनां विराटादीनां गोष्ठ्यां सभायां आत्मानमेव अरीणां कौरवाणां जयस्य हेतुं वद ब्रूहि । मातुः सुदेष्णायाः धुरि अग्रे वा पितुः विराटस्य धुरि वा मन्त्रिणां धुरि वा मम तत्त्वस्य पाण्डवत्वादेः गन्धं लेशमपि मा सूचय वचनेङ्गिताभ्यां मा ज्ञापय । इति जगादेति पूर्वेणान्वयः । 'गन्धो गन्धक आमोदे लेशे संबन्धगर्वयोः' इति विश्वः ॥ ५९ ॥

---

१. 'कुटुम्बकेषु' इति पाठः. २. 'नवसमररुधिर' इति पाठः. ३. 'परितृप्ति' इति पाठः. ४. 'समायातेषु' इति पाठः. ५. 'भूयोऽपि क्लैब्य' इति पाठः. ६. 'भूय' इति नास्ति क्वचित्.

अथ तथेत्यभ्युपगम्य क्षतजपङ्कारुणितनेमिरेखैर्द्विषदौत्पातिकालातचक्रैरिव परिभ्रमद्भिश्चक्रैः संक्रीडता शताङ्गेन पथि गच्छन्नग्रेसरघोटकखुरपुटकुट्टनत्रुटितधरणीतलोच्चलितरजोभाराक्रमणविनम्रीकृतपक्ष्मणापि कुरुकुलजैत्रोऽयमिति विस्मयबलविस्तारितेन चक्षुषा बृहन्नलामप्यनादृत्य मुहुर्मुहुरापिवद्भिः पौरैरनुगम्यमानोऽयमुत्तरो नलकूवर इवालकां स्वां नगरीं प्रविश्य परस्परोपमर्दनद्विगुणितवन्दिवादित्रघोषेण महता राजमार्गेणोपलक्षितः पितुः सभामभिजगाम ॥

तान्येव पुष्पाणि त एव धूपास्ते केतवस्ते मणितोरणाङ्कः ।
पुत्रस्य तस्यापि पुरोपचारा वभूवुरग्रे जयिनः पितुर्ये ॥ ६० ॥

---

अथेति । अथ अर्जुनोक्त्यनन्तरम् । अथेति । यथा भवतोक्तं सर्वं तत्तथा करिष्यामीत्यर्थः । इत्युक्तप्रकारं अभ्युपगम्य अङ्गीकृत्य क्षतजपङ्केन रक्तकर्दमेन अरुणिताः संजातारुण्याः नेमिरेखाः चक्रान्तायःपट्टिकाः येषां तैः । अतएव द्विषतां औत्पातिकैः दुर्निमित्तजन्यैः अलातचक्रैः अङ्गारचक्रैरिव स्थितैरित्युत्प्रेक्षा । परिभ्रमद्भिः चक्रैः रथाङ्गैः संक्रीडता गच्छता शताङ्गेन रथेन उपलक्षितः । 'शताङ्गः स्यन्दनो रथः', 'चक्रं रथाङ्गं तस्यान्ते नेमिः स्त्री स्यात्प्रधिः पुमान्' इति सर्वत्राप्यमरः । पथि मार्गे नगरगामिनि गच्छन् अग्रेसराणां रथपुरोयायिनां घोटकानां अश्वानां खुराः पुटा इव तैः कुट्टनेन संघर्षणेन त्रुटितायाः विदारितायाः धरण्याः भूमेः तलात् उच्चलितस्य उद्गतस्य रजोभारस्य परागपुञ्जस्य आक्रमणेन विनम्रीकृतानि पक्ष्माणि यस्य तथोक्तेनापि । रजसा यो भारः तेनावनम्रीकृतपक्ष्मणापीति वा । अयं अस्मद्राजकुमारः कुरुकुलस्य दुर्योधनादिवृन्दस्य जैत्रः । इति उक्तप्रकारेण विस्मयवलेन आश्चर्यातिशयेन विस्तारितेन विवृतेन चक्षुषा इन्द्रियेण बृहन्नलां सारथित्वेन अग्रे स्थितामपि अनादृत्य मुहुर्मुहुः आपिवद्भिः निरीक्षमाणैः पौरैरनुगम्यमानः अयं उत्तरः स्वां स्वीयां नगरीं पुरीं नलकूबरः कुवेरपुत्रः अलकां तत्पुरीमिव प्रविश्य परस्परं अन्योन्यं उपमर्दनेन मेलनेन द्विगुणितः द्विरावृत्तः बन्दिनां स्तुतिपाठकानां वादित्राणां वीणावेणुमृदङ्गतालादीनां च घोषः संकुलशब्दः यस्मिंस्तथोक्तेन महता विस्तीर्णेन राजमार्गेण उपलक्षितः पितुः विराटस्य सभां आस्थानमण्डपं अभिजगाम प्राप्तवान् ॥

तानीति । जयिनः दक्षिणगोग्रहजयशालिनः पितुः विराटस्य अग्रे प्रथमम् ।

---

१. 'औत्पातिककालचक्रैः' इति पाठः. २. 'परिगच्छन्' इति पाठः. ३. 'गोघटा' इति पाठः. ४. 'भूत' इति पाठः. ५. 'कुरुभट' इति पाठः. ६. 'अलकामिव स्वां पुरीम्' इति पाठः. ७. 'उपलक्षितः' इति नास्ति क्वचित्.

तत्रावनीन्द्रः प्रणतं कुमारमस्रैर्द्वयैरार्द्रतनुत्रमाजौ ।
दोर्भ्यां द्विषद्बन्धनखेदभाग्भ्यामपि प्रमोदाद्दृढमालिलिङ्ग ॥ ६१ ॥

पार्थोऽप्युपानीय रथस्य गर्भात्पार्श्वेस्थितायै पितुरुत्तरायै ।
प्रादत्त पट्टांशुकमात्मसूनोः पाणिग्रहार्थं किल मन्त्रवासः ॥ ६२ ॥

आचेटमन्यमखिलं पटमासुदेष्ण-
मन्तःपुराय स विभज्य ददौ कुमारः ।
सैरन्ध्रये न तु मलीमसवाससेऽपि
संचिन्त्य तां बहुपटप्रभवावलग्नाम् ॥ ६३ ॥

---

पूर्वाह्ण इति यावत् । यानि पुष्पाणि, ये धूपाः, ये केतवः ध्वजाः, ये मणिमयास्तोरणाङ्काश्च पुरे उपचाराः बभूवुः । जयिनः उत्तरगोग्रहशालिनः पुत्रस्य तस्योत्तरस्य । पश्चादिति शेषः । अपराह्ण इत्यर्थः । तानि पुष्पाण्येव, ते धूपा एव, ते केतव एव, ते मणितोरणाङ्का एव, पुरोपचाराः बभूवुः । जयद्वयस्यैकाह्नापि विलम्बाभावादिति भावः ॥ ६० ॥

तत्रेति । अत्र आस्थानमण्डपे अवनीन्द्रः विराटः प्रणतं नम्रं द्वयैः द्विविधैः अस्रैः प्रथमं रोदनजन्यैः बाष्पैः पश्चात् शत्रुशरक्षतिजन्यैः शोणितैश्च आर्द्रं सिक्तं तनुत्रं कवचं यस्य तथोक्तम् । 'अस्रमश्रुणि शोणिते' इति विश्वः । कुमारं उत्तरं आजौ युद्धे द्विषता सुशर्मणा बन्धनेन यः खेदः श्रमः तं भजत इति भाग्भ्यामपि दोर्भ्यां बाहुभ्यां प्रमोदाद्धेतोः दृढं यथा तथा आलिलिङ्ग आलिङ्गितवान् । प्रेमपरवशा न गणयन्ति निजं श्रममिति भावः ॥ ६१ ॥

पार्थ इति । पार्थः अर्जुनोऽपि रथस्य गर्भात् मध्यात् पट्टांशुकं शात्रवं उपानीय आदाय आत्मसूनोः अभिमन्योः पाणिग्रहार्थं मन्त्रवासः । किलेति संभावनायाम् । कन्यानिश्चयकालिकवस्त्रमिवेत्युत्प्रेक्षा । पितुः पार्श्वे स्थितायै उत्तरायै ददौ ॥ ६२ ॥

आचेटमिति । स कुमारः उत्तरः अन्यं उत्तरायै अर्जुनदत्तादितरं अखिलं पटं वस्त्राणीति जात्येकवचनम् । आसुदेष्णं सुदेष्णामारभ्य आचेटं दासीजनपर्यन्तं अन्तःपुराय । अन्तःपुरजनायेत्यर्थः । ददौ । मलीमसं मलिनं वासः वस्त्रं यस्यास्तथोक्ताया अपि सैरन्ध्रये द्रौपद्यै तु तां द्रौपदीं बहूनां पटानां प्रभवः उत्पत्तिस्थानं अवलग्नं मध्यदेशः यस्यास्तथोक्तां संचिन्त्य स्मृत्वा न ददौ । पटं कंचिदिति शेषः । अनुचितत्वादिति भावः । अत्र बहुपटोत्पादकत्वेन द्रौपदीमध्यचिन्तनस्य विशेषणगत्या तस्यै वस्त्रदानप्रतिषेधहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ६३ ॥

---

१. 'तदा' इति पाठः. २. 'दिदेश'; 'व्यादत्त' इति च पाठौ.

विनार्जुनं पाण्डुसुतान्समाजे
विस्मित्य विस्मित्य विलोकमानम् ।
जिघ्रन्विराटश्चिकुरेषु सूनुं
जगाद विन्यस्य निजासनार्धे ॥ ६४ ॥

निपात्य पार्थान्कान्तारे निःसपत्नत्वमीयुषाम् ।
कण्ठेगड्डूयसे[१] वत्स कौरवाणां त्वमेककः ॥ ६५ ॥

नव्यं गुरुं भुवि न मार्गितुमुत्तरायाः
संरक्ष्य सूतमपि तादृशि संप्रहारे ।
जन्मर्क्षजीवदिनयोगफलं च दातुं
कन्यासु वत्स कथमेत्य कुरूनव्यजेष्ठाः ॥ ६६ ॥

---

**विनेति** । समाजे सभायां अर्जुनं विना अर्जुनवर्ज्यान् पाण्डुसुतान् धर्मराजभीमनकुलसहदेवान् अर्जुनोक्तवेषान्तरच्छन्नान् विस्मित्य विस्मित्य आश्चर्यं गत्वेत्यादराद्विरुक्तिः । विलोकमानं सूनुं उत्तरं विराटः निजासनार्धे विन्यस्य उपवेश्य चिकुरेषु । मूर्धनीत्यर्थः । जिघ्रन् सन् जगाद वक्ष्यमाणप्रकारेणोक्तवान् ॥ ६४ ॥

**निपात्येति** । पार्थान् कान्तारे अरण्ये निपात्य पातयित्वा । द्यूतव्याजेनेति भावः । निःसपत्नत्वं शत्रुशून्यत्वं ईयुषां प्राप्तानां कौरवाणाम् । हे वत्स, त्वं एककः एक एव कण्ठेगड्डूयसे कण्ठविवररोधिकिण इवाचरसि । पार्थास्तु पञ्चापि मिलित्वा तथा भवन्ति नतु प्रत्येकमित्यहो वीर्यातिशयस्तवेत्यर्थः । अतएव व्यतिरेकालंकारो व्यङ्ग्यः । उपमा समानगा श्रौती । द्वयोरेकवाचकानुप्रवेशसंकरालंकारः ॥ ६५ ॥

**नव्यमिति** । किंच हे वत्स, उत्तरायाः लङ्घगिन्या नव्यं बृहन्नलातो नूतनं गुरुं नाट्याचार्यं भुवि न मार्गितुं अनन्वेषितुम् । तस्या गुरुशोकं वारयितुमित्यर्थः । कन्यासु उत्तराप्रभृतिषु विषये जन्मर्क्षेण जन्मनक्षत्रेण सह जीवदिनस्य बृहस्पतिवासरस्य योगेन यत्फलं वस्त्रलाभः तत् दातुं च तादृशि दुस्तरे संप्रहारे युद्धे सूतं बृहन्नलामपि संरक्ष्य कुरून् दुर्योधनादीन् । कथमित्याश्चर्ये । व्यजेष्ठाः जितवानसि । अत्र गुरुशोकवारणस्य सूतरक्षणेन नूतनवस्त्रदानस्य कौरवजयेन सह क्रमेणान्वयाद्यथासंख्यालंकारः । 'अध्वा भोजनमालस्यं विद्यां वस्त्रं वराङ्गना । मृत्युश्चेति क्रमाज्जन्मर्क्षार्कादिदिनयोगतः ॥' इति ज्यौतिषिकाः ॥ ६६ ॥

---

१. 'गलयसे' इति पाठः.

इति प्रमोदचञ्चलेन पाणिना परामृश्य चरमाङ्गं पुनःपुनरनुयुञ्जानाय ताताय सौदेष्णेयोऽपि त्रपाप्रवाहाभिमुखमवस्थातुमपारयन्निव वि[2]वलितकंधरो गिरमेवं विज्ञापयामास ॥

रोदःप्रसारि ध्वनितं मया चक्रे धुरि द्विषाम् ।
यावान्मे वेगसंनाहस्तावांस्तत्र प्रदर्शितः ॥ ६७ ॥

अहमेको रणे तस्मिन्नपरैरननुष्ठिताम् ।
रथिसारथिपत्तित्वे रचयामि स्म कर्तृताम् ॥ ६८ ॥

देव[3], किं बहुना ।

अपार्थं कर्म मे नासीदाहवे यदरातिषु ।
पुरो विजयमाधाय[4] पुनरागां पुरीमिमाम्[5] ॥ ६९ ॥

---

इतीति । इति उक्तप्रकारेण प्रमोदेन चञ्चलेन कम्पमानेन पाणिना चरमाङ्गं पृष्ठभागं पुनः पुनः परामृश्य पुनःपुनरनुयुञ्जानाय पृच्छते ताताय पित्रे विराटाय । सुदेष्णायाः अपत्यं सौदेष्णेयः उत्तरोऽपि त्रपा लज्जैव प्रवाहः तस्याभिमुखं अवस्थातुं अपारयन् अशक्नुवन्निवेत्युत्प्रेक्षा । विवलिता व्यावर्तिता कंधरा ग्रीवा येन तथोक्तः सन् एवं वक्ष्यमाणप्रकारेण गिरं वाचं विज्ञापयामास विज्ञापितवान् ॥

रोद इति । हे तात, मया रोदसोः दिवि भुवि च प्रसारि व्याप्नुवत् । 'द्यावाभूमी च रोदसी' इत्यमरः । ध्वनितं सिंहनादं रोदनं च द्विषां धुरि अग्रे चक्रे कृतम् । करोतेः कर्मणि लिट् । उत्साहाद्भयाच्चेति भावः । मे मम वेगे पराक्रमे पलायने च यः संनाहः उद्योगः यावानस्ति तावान् वेगसंनाहः तत्र शत्रूणामग्रे प्रदर्शितः । मयेति योज्यम् ॥ ६७ ॥

अहमिति । किंच तस्मिन् रणे अहमेक एव । नान्यः कश्चिदित्यर्थः । अपरैः अन्यैः अननुष्ठितां अकृताम् । अनुचितत्वात् स्वप्नेऽप्यकरणीयां चेत्यर्थः । रथित्वे सारथित्वे पत्तित्वे चेत्यर्थः । पुरनिर्गमनप्रवेशयोः युद्धे पलायनवस्त्राहरणयोश्चेति विवेकः । कर्तृतां अधिकारं रचयामि स्म अकरवम् । रथी सारथिः पादचारी चाभवमित्यर्थः । अत्र वाच्यकक्ष्यायां अनेकसाध्ये कर्मत्रये एकस्य प्रवृत्त्या परानुष्ठित्वसमर्थनात्काव्यलिङ्गभेदः ॥ ६८ ॥

देवेति । देव, किं बहुना । उक्तेनेत्युत्तरेणान्वयः ॥

अपार्थमिति । हे देव स्वामिन्, बहुनोक्तेन किं प्रयोजनम् । न किमपीत्यर्थः । यत् यस्मात् आहवे युद्धे अरातिषु शत्रुषु विषये मे मम संबन्धि कर्म

---

१. 'तत्र' इति पाठः. २. 'विनम्रीभूत' इति पाठः. ३. 'अये देव' इति पाठः. ४. 'आदाय' इति पाठः. ५. 'इमां पुरीम्' इति पाठः.

इति तादृशीं तस्य वचनचातुरीं निशम्य[1] दुरोदरविहार[2]प्रहारवेदनामप्यविगणय्य तरलितेन शिरसा श्लाघयमाने[3] यतीन्द्रे वासरविरामशंसिनं यामशङ्खरवमाकर्ण्य यथोचितं सभास्तारान्विसृज्य मेदिनीपतिर्मोदेन सुदेष्णाप्रासादमाससाद ॥

सुतावलोकेन नरेन्द्रसुभ्रुव-
श्च्युताखिलाश्रुष्वपि सोदरात्ययात् ।
विलोचनाङ्गेष्वतिवृष्टिसंपदे
विभाण्डकापत्यविजृम्भणायितम् ॥ ७० ॥

---

युद्धं सारथ्यं च अपगतः अर्थः प्रयोजनं यस्मात्तथोक्तं पार्थेन रहितं च नासीत् तस्मात् कारणात् पुरः अग्रे विजयं जयं अर्जुनं च आधाय विन्यस्य इमां पुरीं प्रति पुनः आगां आगतवानस्मि । कर्म निष्फलं चेत्पार्थो न चेच्च जीवन्न पुनरागच्छेयमेवेत्यर्थः ॥ ६९ ॥

इतीति । इत्युक्तप्रकारां तादृशीं शब्दशक्तिमूलव्यञ्जनया वास्तवार्थप्रकाशिकां वचनानां चातुरीं नैपुण्यं निशम्य श्रुत्वा यतीन्द्रे युधिष्ठिरे दुरोदरविहारे द्यूतक्रीडायां प्रहारेण विहायोत्तरप्रशंसां बृहन्नलाप्रशंसया कुपितविराटकृतपाशकताडनेन या वेदना तामप्यविगणय्य अनादृत्य तरलितेन कम्पितेन शिरसा श्लाघयमाने अभिनन्दयति सति मेदिन्याः भूमेः पतिः विराटः वासरविरामस्य सायंकालस्य शंसिनं सूचकं यामानां चतुर्णां संबन्धिनं शङ्खरवं आकर्ण्य सभास्तारान् सभाजनान् यथोचितं तत्तदर्होपचारं यथा तथा विसृज्य अनुज्ञाप्य मोदेन पुत्रजयजन्यसंतोषेण उपलक्षितः सुदेष्णायाः उत्तरस्य मातुः संबन्धिनं प्रासादं सौधं आससाद प्रविवेश । पुत्रेण सहेति शेषः ॥

सुतेति । सोदराणां कीचकानां अत्ययात् नाशाद्धेतोः च्युतानि गलितानि अखिलानि निःशेषाणि अश्रूणि बाष्पजलानि येषु तथोक्तेष्वपि नरेन्द्रसुभ्रुवः सुदेष्णायाः विलोचनेषु अङ्गाः अङ्गाख्या जनपदा इवेत्युपमितसमासः । उपमाप्रायपाठात् तेषु अतिवृष्टिसंपदे समृद्ध्यै सुतस्य उत्तरस्य अवलोकेन दर्शनेन विभाण्डकापत्यस्य ऋष्यशृङ्गमुनेः विजृम्भणेन आविर्भावेनेव आचरितं तद्विजृम्भणायितम् । कृदन्तात्कर्तरि क्तः । ऋष्यश्रृङ्गागमेनाङ्गदेशेष्विव उत्तरावलोकेन सुदेष्णानेत्रयोरानन्दबाष्पाणां अतिवृष्टिरासीदित्यर्थः । ऋष्यशृङ्गागमान्महती वृष्टिर्भवतीत्यागमप्रसिद्धम् । अत्रानन्दबाष्पवृष्टिसुतावलोकनयोः कार्यकारणयोरुक्तेर्हेत्वलंकारः । तस्य चोपमया सहैकवाचकानुप्रवेशसंकरः । वंशस्थवृत्तम् ॥ ७० ॥

---

१. 'आकर्ण्य' इति पाठः. २. 'विहार' इति नास्ति क्वचित्. ३. 'श्लाघमाने' इति पाठः.

अन्येद्युरात्मजमुखादमीषां याथार्थ्यमवगम्य चकितचकितः कुटुम्बेन सह सचिवान्पुरस्कृत्य सभामागतो विराटो नामान्तरसंनिधानादिव हायनमेकमनुपसर्पद्भिः स्वैः स्वैर्वेषैः प्रकृतिमापन्नेन सोदर्यजनेन समुपास्यमानस्य युधिष्ठिरस्य चरणनलिनयोः पलितंभावुकेन मौलिना मरालयुवकेलिमुज्ज्वलयांचकार ॥

तदा नुनोद सितपाण्डुरिम्णा तपःसुतोऽक्षक्षतिहेतुमुग्रम् ।
महेन्द्रसूनोर्दृशि शोणिमानं मात्स्यस्य चित्तेऽपि च नीलिमानम् ७१

---

अन्येद्युरिति । अन्येद्युः परस्मिन् दिवसे आत्मजस्य मुखात् वचनात् अमीषां कङ्कादिसंज्ञानां पाण्डवानां याथार्थ्यं तत्त्वं पाण्डवत्वयुधिष्ठिरत्वादिकं अवगम्य ज्ञात्वा चकितचकितः सेवापचारादिभिः भीतभीतः । वीप्सायां द्विर्भावः । कुटुम्बेन कलत्रपुत्रादिना सह सचिवान् मन्त्रिणः पुरस्कृत्य सभां प्रत्यागतः विराटः नामान्तराणां कङ्कवललाद्यन्यसंज्ञानां संनिधानात् सांगत्यादिवेत्युत्प्रेक्षा । एकं हायनं संवत्सरं अनुपसर्पद्भिः समीपमागच्छद्भिः स्वैः स्वैः प्रत्येकं स्वीयैः वेषैः रूपैः प्रकृतिं स्वभावं आपन्नेन प्राप्तवता सोदर्यजनेन अनुजजनेन । भीमादिभिरिति यावत् । समुपास्यमानस्य सेव्यमानस्य युधिष्ठिरस्य । चरणे एव नलिने कमले तयोः पलितंभावुकेन धवलीभूतेन शिरोरुहेण । 'आढ्यसुभग—' इत्यादिना ख्युनि खित्वात् 'अरुर्द्विषत्—' इत्यादिना मुम् । मौलिना शिरसा । मरालयूनः तरुणहंसस्य केलिं लीलां उज्ज्वलयांचकार प्रकाशयामास । प्रणनामेत्यर्थः । अत्र अन्यलीलाया अन्यत्रासंभवेन तत्सदृशलीलाक्षेपान्निदर्शनालंकारः । चरणनलिनयोरिति रूपकोज्जीवित इति द्वयोरङ्गाङ्गिभावेन संकरः । स चोत्प्रेक्षया संसृष्टः ॥

तदेति । तदा विराटप्रणामसमये तपसः यमस्य सुतः धर्मराजः सितस्य पाण्डुरिम्णा धावल्येन हेतुना अक्षक्षतिः पाशकप्रहारव्रण एव हेतुर्यस्य तं उग्रं भयंकरं महेन्द्रसूनोः अर्जुनस्य दृशि नेत्रे शोणिमानं विराटे क्रोधेनारुण्यं नुनोद निरस्तवान् । किंच अक्षक्षतिहेतुं निजकृतपाशकप्रहारजन्यं उग्रं इतिकर्तव्यतामौढ्येन भयकरं मात्स्यस्य विराटस्य चित्ते नीलिमानं भयान्धत्वरूपं मालिन्यं नुनोद । अत्रार्जुनविराटाभ्यां धर्मराजस्मितनैर्मल्येन तदन्तःप्रसादानुमानादनुमानालंकारः । धर्मराजस्मितधावल्यव्याप्त्या अर्जुनलोचनारुण्यविराटमानसमालिन्यत्यागपूर्वकं वैशद्यप्राप्तिरूपतद्गुणालंकारद्वयेनाङ्गाङ्गिभावसंकीर्णेन प्रतीयत इत्यलंकारेणालंकारध्वनिः । एवममर्षत्यागशान्त्योरर्जुनविराटगतयोरसंलक्ष्यक्रमव्यङ्ग्ययोरङ्गाङ्गिभावेन संकरश्च । अस्य चोक्तव्यङ्ग्यानुमानालंकारसापेक्षत्वात् द्वयोः संलक्ष्यासंलक्ष्यक्रमव्यङ्ग्ययोरङ्गाङ्गिभावेन संकर इत्यलं प्रपञ्चेन ॥ ७१ ॥

---

१. 'याथात्म्यम्' इति पाठः. २. 'चकितम्' इति पाठः. ३. 'प्रत्यासन्नेन' इति पाठः.

मात्स्यस्ततः प्रमुदितो महितेऽह्नि कन्यां
शौरौ समेयुषि सहाखिलबन्धुवर्गैः ।
मृद्वीं शिरीषकुसुमादपि पार्थसूनोः
सीमाशिलामतनुत प्रथमाश्रमस्य ॥ ७२ ॥

तथोपचारं विदधे सुदेष्णाजानिः स पार्थेषु समाधवेषु ।
तमेव गान्धारपतिं यथा ते जानीयुरत्यन्तकृतोपकारम् ॥ ७३ ॥

अथोल्लास्य कुरूनेतान्हरिर्मात्स्यपुराद्ययौ ।
मन्दारप्रमुखान्कल्पान्वसन्त इव नन्दनात् ॥ ७४ ॥

इत्यनन्तभट्टकविकृतौ चम्पूभारते सप्तमः स्तबकः ।

---

मात्स्य इति । ततः अनन्तरं मात्स्यः विराटः प्रमुदितः संतुष्टः सन् शौरौ श्रीकृष्णे अखिलबन्धुवर्गैः सह समेयुषि प्राप्तवति सति महिते चन्द्रताराादिगुणसंपत्त्या श्लाघ्ये अह्नि वासरे कस्मिंश्चित् शिरीषस्य कुसुमादपि मृद्वीं सुकुमारां कन्यां उत्तरां पार्थसूनोः अभिमन्योः प्रथमाश्रमस्य ब्रह्मचर्यस्य सीमाशिलां अवधिदेशदृषदं अतनुत चक्रे । अभिमन्यवे कन्यां प्रायच्छदित्यर्थः । अत्र शिरीषकुसुमसुकुमार्याः परुषसीमाशिलात्ववर्णनाद्विरूपघटनात्मकविषमप्रभेदः । एवं पत्नीत्वस्य व्यङ्ग्यस्य ब्रह्मचर्यसीमाशिलात्वेन भङ्ग्यन्तरेण कथनात्पर्यायोक्त्यलंकारः । द्वयोश्चैकवाचकानुप्रवेशसंकरः ॥ ७२ ॥

तथेति । सुदेष्णा जाया यस्य सः सुदेष्णाजानिः स विराटः । माधवेन कृष्णेन सहितेषु समाधवेषु पार्थेषु धर्मराजादिषु विषये उपचारं पूजां तथा विदधे चक्रे यथा ते सकृष्णाः पार्थाः तं द्यूतेन सर्वस्वं हृत्वा तादृग् दुःखदायिनं गान्धारपतिं शकुनिमेव अत्यन्तं कृतः उपकारः येन तथोक्तं जानीयुः भावयेयुः । शकुनिना राज्याद्भ्रंशने ईदृग्विराटोपचारस्य प्रसक्त्यभावादिति भावः । अत्र शकुन्यपकारस्य गुणत्ववर्णनाल्लेशालंकारः । एवं विराटेनोपकृतानां शकुनावुपकारसंभावनादसंगत्यलंकारः । द्वयोश्च पूर्ववत्संकरः । 'विरुद्धं भिन्नदेशत्वं कार्यहेत्वोरसंगतिः' इत्यसंगतिलक्षणम् । लेशलक्षणं तूक्तम् ॥ ७३ ॥

अथेति । अथ विराटोपचारानन्तरं हरिः श्रीकृष्णः एतान् कुरून् युधिष्ठिरादीन् उल्लास्य संतोषयित्वा मात्स्यपुरात् । मन्दारप्रमुखान् कल्पान् सुरवृक्षान्[1] उल्लास्य किसलयकुसुमादिभिः प्रकाशयित्वा वसन्तः माधवः नन्दनादिव । ययौ प्रस्थितवान् । पूर्णोपमालंकारः ॥ ७४ ॥

इति श्रीसदाशिवपदारविन्दवन्दनकन्दलितानन्दसान्द्रस्य कुरविकुलचन्द्रस्य रामकवीन्द्रस्य कृतौ चम्पूभारतव्याख्याने लास्याख्याने सप्तमस्तबकविवरणं समाप्तमासीत् ॥

---

१. 'वृक्षान्' इति पाठः.

## अष्टमः स्तबकः ।

तावत्पाण्डुसुतेन कौतुकवता कर्तुं प्रकोष्ठाङ्कणे
ज्यामेकां युधि नर्तकीं भुजभुवि स्थास्नुं चिरस्थापराम् ।
आहूताः क्षितिपा विराटनगरीं सैन्यद्विपैरुन्मदैः
प्रावृड्वासरसंचया इव घनैः प्रापुर्महाद्रेस्तटीम् ॥ १ ॥

सेनानां यावतीः पार्थो युद्धायाक्षौहिणीर्दधौ ।
धार्तराष्ट्रश्चतसृभिस्तावतीरधिकाः पुनः ॥ २ ॥

उक्ताध्ववृत्तान्तमुवाच शल्यं पार्थस्ततो भानुसुतस्य युद्धे ।
आक्षेपवाचा हृदयं वितक्षन्नन्वर्थतामाचर मातुलेति ॥ ३ ॥

---

**तावदिति** । तावत् तदानीं प्रकोष्ठस्य कूर्पराधोभागस्य अङ्कणे अग्रभागे । हस्त इति यावत् । 'प्रकोष्ठः कूर्परादधः' इत्यमरः । कूर्परो बाहुमध्यग्रन्थिः । एकां ज्यां शिञ्जिनीं युधि युद्धे नर्तकीं चञ्चलाम् । आकर्षणविमोचनाभ्यामिति भावः । कर्तुं अपरां अन्यां ज्यां भुवम् । 'ज्या मौर्वीमातृभूमिषु' इत्युभयत्रापि विश्वः । भुजभुवि बाहुदेशे स्थास्नुं स्थिरतरां कर्तुं च कौतुकवता कुतूहलवता पाण्डोः सुतेन धर्मराजेन आहूताः चारसन्विवादिद्वारा आकारिताः क्षितिपाः राजानस्तत्तद्देश्या उन्मदैः सैन्यद्विपैः सैन्यगजैः उपलक्षिताः विराटनगरीं प्रावृड्वासराणां वार्षिकदिनानां संचयाः समूहाः घनैः मेघैरुपलक्षिताः महाद्रेस्तटीं तटमिव प्रापुः । उपमालंकारः । यत्त्वत्र 'प्रकोष्ठाङ्कणे' इत्यत्र 'प्रकोष्ठे विस्तृतकरे' इति नृसिंहेन कोशलेखनम्, तदबोधात् । यतः 'प्रकोष्ठे विस्तृतकरे हस्तो मुष्ट्या तु बद्धया । सरत्निः स्यादरत्निस्तु निष्कनिष्ठेन मुष्टिना ॥' इत्यादिना विस्तृतकरे प्रकोष्ठे हस्तः, बद्धया मुष्ट्या तु स हस्तः रत्निः, निष्कनिष्ठेन मुष्टिना अरत्निरिति मानविशेषनिर्णयायैव तत्र प्रकोष्ठग्रहणात् तदर्थनिर्णयस्त्वसल्लिखित एवेति स्पष्टं कोशार्थकोविदानामित्यलमसदावेशेन । शार्दूलविक्रीडितं वृत्तम् ॥ १ ॥

**सेनानामिति** । पार्थः धर्मराजः युद्धाय युद्धं कर्तुमिति 'क्रियार्थ-' इत्यादिना चतुर्थी । यावतीः सेनानां अक्षौहिणीः । यत्संख्याकाक्षौहिणीः सेना इत्यर्थः । दधौ संगृहीतवान् । चतसृभिरधिकास्तावतीः सप्त । सेनानामक्षौहिणीषु एकादशेत्यर्थः । धार्तराष्ट्रः दुर्योधनः दधौ । अत्र धर्मराजाक्षौहिणीनां सप्तत्वं प्रसिद्ध्या ग्राह्यमिति न न्यूनपदत्वदोषः ॥ २ ॥

**उक्तेति** । ततः उभयोः सेनासंग्रहानन्तरं पार्थः धर्मराजः उक्तः अध्वनि वृत्तान्तः उपचारपरितुष्टेन स्वेन दुर्योधनस्य साह्यकरणवरदानरूपः येन तथोक्तं शल्यं प्रति हे मातुल मातृसोदर, त्वं आसमन्तात् क्षेपः निन्दा यस्यास्तया वाचा । निन्दाप्रतिपादकवाक्येनेत्यर्थः । 'क्षेपो विलम्बे निन्दायाम्' इति विश्वः । युद्धे कर्णा-

---

१. 'प्रकोष्ठाङ्कणे' इति पाठः.

अथ भागिनेयेषु वत्सलतया सत्यसंगरस्तथेति प्रतिश्रुत्य ।
भद्राय तव मां विद्धि निद्रामुचमिति ब्रुवन् ।
मद्राधिपो ययौ पार्थात्स द्राग्दुर्योधनान्तिकम् ॥ ४ ॥

तदनन्तरम् ।
साह्याय युद्धे सरसीरुहाक्षं वरीतुकामस्य बलारिसूनुः ।
अजातशत्रोरवतंसयन्गां तुङ्गध्वजां द्वारवतीमयासीत् ॥ ५ ॥

---

र्जुनयुद्धसमये भानुसुतस्य कर्णस्य हृदयं मनः वक्षश्च वितक्षन् छिन्दन् सन् अन्वर्थतां शल्य इति सार्थकनामकत्वं आचर कुरुष्व । आत्मन इति शेषः । चरतेः प्रार्थनायां लोट् । 'वा पुंसि शल्यं शङ्कुर्ना' इत्यायुधविशेषपर्यायेष्वमरः । इत्युक्तप्रकारेण उवाच । प्रतिज्ञातदुर्योधनसाह्यस्य शल्यस्य प्रतिज्ञाभङ्गभयेन तावन्मात्रं तमयाचतेत्यर्थः । महतामात्मविपत्तावपि परे भङ्गात्संरक्षणीया एवेति भावः । यत्तु 'मा नास्ति तुला तवार्जुनेन साम्यं यस्य' इति व्युत्पत्तिसिद्धामन्वर्थतां आचरेत्यन्वर्थत्वं मातुलसंज्ञाया एवाह नृसिंहः, तन्न । आयुधसाध्यतक्षणबोधकस्य वितक्षन्निति पदस्य स्वारस्यभङ्गापत्तेः । परंतु मा तुला इतीति तन्त्रेण च्छेदमाश्रित्य हे कर्ण, तव अर्जुनेन तुला साम्यं मा नास्ति इत्युक्तप्रकारया आक्षेपवाचेति योजयितुं शक्यमिति प्राहुः ॥ ३ ॥

अथेति । अथेत्याद्युत्तरेणैकवाक्यम् ॥

भद्रायेति । अथ युधिष्ठिरप्रार्थनानन्तरं सत्यः संगरः प्रतिज्ञा यस्य स तथोक्तोऽपीत्यपिप्रयुक्तोऽपि 'कमपराधलवं मयि पश्यसि' इत्यादाविव योज्यः । मद्राधिपः शल्यः भगिन्या अपत्येषु भागिनेयेषु धर्मराजादिषु वत्सलतया प्रेम्णा तथा सूर्यसुतस्य हृदयमाक्षेपवाचा तक्षिष्यामीति अभ्युपगम्य अङ्गीकृत्य । 'प्रतिश्रुत्य' इति पाठेऽप्युक्त एवार्थः । हे पार्थ, तव भद्राय मां निद्रां मुञ्चतीति तथोक्तं प्रवणं विद्धि जानीहि इति ब्रुवन् सन् पार्थात् धर्मराजात् दुर्योधनस्य अन्तिकं समीपं प्रति द्राक् सत्वरं ययौ गतवान् । लाटानुप्रासालंकारः ॥ ४ ॥

तदनन्तरमिति । तदनन्तरमित्युत्तरेणान्वयः ॥

साह्यायेति । तदनन्तरं शल्यगमनानन्तरं बलारेः इन्द्रस्य सूनुः अर्जुनः सरसीरुहाक्षं श्रीकृष्णं युद्धे साह्याय परीतुं कामो यस्य तस्य अजातशत्रोः धर्मराजस्य गां वाचं उक्तार्थिकां अवतंसयन् शिरसि कुर्वन् सन् तुङ्गानि उन्नतानि ध्वजानि यस्यां तां द्वारवतीं द्वारकानगरं प्रति अयासीत् प्राप । यातेः कर्तरि लुङ् । 'वरीतुकामो बलवैरिसूनुः' इत्यर्जुनविशेषणतया पाठान्तरम् ॥ ५ ॥

---

१. 'भागिनेय' इति पाठः. २. 'ततः' इति पाठः. ३. 'कामो बलवैरिसूनुः' इति पाठः.

तत्र चिरदृष्टस्य [1]कुरुकुञ्जरस्य कुञ्जरकुमारकोमलचंक्रमविलासस्य तस्य विलोकनाय [2]वीथीषु जनाः संघीबभूवुः ।

हेतुं सुभद्राहरणे तदीयां यतित्वशु[3]द्धिं हृदि कुर्वतीनाम् ।
गवाक्षमार्गैः कृतवीक्षणानां स्त्रीणां मुखेन्दोः स्मितचन्द्रिकाभूत् ॥६॥

दौवारिकैस्तत्र स दत्तमार्गो निद्रायमाणस्य निकेतमध्ये ।
शौरेरुपायाच्चरणोपधानं [4]तत्स्यन्दिसिन्धुच्युतकूर्मशोभम् ॥ ७ ॥

यस्याधिमौलिसविधं प्रथमं समेत्य
तिष्ठन्कुरूद्वहसुतो युधि साह्यमर्थी ।
रेजे परीक्षितुमिवोत्सुकतां दधान-
स्तत्कुन्तले निजमनस्यपि वक्रिमाणम् ॥ ८ ॥

---

**तत्रेति** । तत्र द्वारकायां कुञ्जरकुमारस्य करिकलभस्येव कोमलः सुकुमारः चंक्रमविलासः गमनविलासः यस्य तथोक्तस्य चिरात् दृष्टस्य अतएव तस्य कुरुकुञ्जरस्य अर्जुनस्य विलोकनाय । तं विलोकितुमित्यर्थः । जनाः वीथीषु संघीबभूवुः ॥

**हेतुमिति** । सुभद्राया हरणे हेतुं तस्य अर्जुनस्य इमां तदीयां यतित्वस्य शुद्धिं नैर्मल्यम् । विपरीतलक्षणया कपटयतित्वमित्यर्थः । हृदि मनसि कुर्वतीनां आलोचयन्तीनां अतएव गवाक्षाणां मार्गैः रन्ध्रमार्गैः कृतं वीक्षणं अर्जुनदर्शनं याभिस्तासां स्त्रीणां द्वारकाङ्गनानां मुखस्यैव इन्दोः चन्द्रस्य स्मितमेव चन्द्रिका अभूत् । अयमेव स कपटसंन्यासी सुभद्रामपहृतवान् इति स्मेरानना बभूवुरित्यर्थः । अत्रार्जुनकपटसंन्यासचिन्तनतदवलोकनयोः विशेषणगत्या हसनहेतुत्वादनेकपदार्थहेतुककाव्यलिङ्गस्य परम्परितरूपकेण सहैकवाचकानुप्रवेशसंकरः ॥ ६ ॥

**दौवारिकैरिति** । तत्र तदानीं दौवारिकैः द्वारपालैः दत्तमार्गः । अन्तःप्रविष्ट इत्यर्थः । सोऽर्जुनः । निकेतस्य शयनगृहस्य मध्ये निद्रायमाणस्य स्वपतः शौरेः कृष्णस्य संबन्धि तस्मात् कृष्णचरणात् स्यन्दिन्याः प्रवहन्त्याः सिन्धोः गङ्गायाः च्युतस्य गलितस्य कूर्मस्येव शोभा यस्य तत्तथोक्तं तमिव स्थितमित्युत्प्रेक्षा । चरणस्य उपधानं उपबर्हं वर्तुलमुपायात् तत्समीपं प्राप्तवान् ॥ ७ ॥

**यस्येति** । युधि युद्धे साह्यं सहायतां अर्थी याचिष्यमाणः । 'अकेनोर्भविष्यदाधमर्ण्ययोः' इति कृद्योगे षष्ठीप्रतिषेधः । अतएव प्रथमं अर्जुनात्पूर्वमेव समेत्य आगत्य यस्य शौरेः मौलेः शिरसः सविधे समीपे अधिमौलिसविधम् । विभक्त्यर्थेऽव्ययीभावः । तिष्ठन् वर्तमानः कुरूद्वहस्य धृतराष्ट्रस्य सुतः दुर्योधनः निजे मनसि

---

१. 'कुरुकुञ्जरस्य' इति नास्ति क्वचित्. २. 'वीथीवीथीषु'; 'वीथीषु वीथीषु' इति च पाठौ. ३. 'शुद्धिम्' इति पाठः. ४. 'तद्गर्भे' इति पाठः.

निमीलनालिङ्गितनेत्रयुग्मो निष्पन्ददेहो नितरां वभौ यः ।
स्वध्यानशैलीसुखमास्थितानां तपस्विनां सङ्गमिवानुकुर्वन् ॥ ९ ॥

देवीकुचाद्विरुरुचे घुसृणेन क्लृप्तः
सक्तः कपोलफलके मकरो यदीये ।
स्वाङ्कध्वजारिजयिने[1][2] विजयाय सिद्धिं
विश्राणयेति निगदन्निव कर्णमूले ॥ १० ॥

पाश्चात्यपाथोनिधिपार्श्वभागे सम्पूर्य कुक्षिं सलिलस्य पूरैः ।
सजातियूथाच्च्युतिमाश्रितस्य क्रमं दधौ यो घनशावकस्य ॥ ११ ॥

ततः प्रबुद्धेन तेन देवेन तयोः क्रमेण[3] प्रथमाभ्यागमनदर्शनाभ्यां[4]

---

तस्य शौरेः कुन्तले कचेऽपि द्वयोः वक्रिमाणं कौटिल्यम् । तत्तारतम्यमिति यावत् । परीक्षितुं उत्सुकतां औत्सुक्यं दधान इवेत्युत्प्रेक्षा । रेजे वभौ ॥ ८ ॥

**निमीलनेति** । निमीलनेन निमेषेण आलिङ्गितं संगतं नेत्रयोर्युग्मं यस्य तथोक्तः निष्पन्दः निश्चलः देहः यस्य सः यः शौरिः स्वस्य आत्मनः ध्यानशैल्या विगलितवेद्यान्तरमैक्यानुसंधानेन यत्सुखं ब्रह्मानन्दः तदास्थितानां प्राप्तवतां तपस्विनां योगिनां सङ्गं अनुकुर्वन्निवेत्युत्प्रेक्षा । नितरां वभौ रेजे ॥ ९ ॥

**देवीति** । देव्या रुक्मिण्याः कुचात् यस्य शौरेः संवन्धिनि यदीये कपोलः फलक इव तस्मिन् सक्तः चुम्बनसमये लग्नः घुसृणेन कुङ्कुमेन क्लृप्तः लिखितः मकरः मकराकृतिः रेखा स्वं अङ्कः यस्मिन् तादृशं ध्वजं यस्य तस्य मन्मथस्य अरेः शंभोः जयिने विजयाय अर्जुनाय सिद्धिं काङ्क्षितार्थसाफल्यं विश्राणय ददस्व इति कर्णमूले निगदन् विज्ञापयन्निवेत्युत्प्रेक्षा । विरुरुचे रराज । 'मीनध्वज–' इति पाठः प्रकृतमकरे विज्ञापनोत्प्रेक्षया असंगतार्थकत्वादुपेक्ष्यः । मीनकेतन इत्यत्र मत्स्यजातित्वान्मकर एव मीन इत्यमरव्याख्यानात् । कथंचित्संगमनेऽपि पर्यायभङ्गाख्यदोषापत्तिरिति ॥ १० ॥

**पाश्चात्येति** । यः शौरिः पश्चाद्भवः पाश्चात्यः पश्चिमः पाथोनिधिः समुद्रः तस्य पार्श्वभागे सलिलस्य पूरैः प्रवाहैः कुक्षिं संपूर्य सजातीनां सकुल्यानां मेघानां यूथात् वृन्दात् च्युतिं भ्रंशं आश्रितस्य प्राप्तस्य घनशावकस्य मेघबालकस्य क्रमं रीतिं दधौ धृतवान् । अत्रान्यक्रमस्य अन्यत्रासंभवेन तत्सदृशक्रमाक्षेपादसंभवद्धर्मसंवन्धनिवन्धनो निदर्शनालंकारः । यस्येत्यादिश्लोकचतुष्टये यच्छब्दस्तस्य शौरेरिति पूर्वश्लोकेऽन्वेतीति ध्येयम् ॥ ११ ॥

**तत इति** । ततः दुर्योधनार्जुनागमनानन्तरं प्रबुद्धेन तेन देवेन कृष्णेन तयोः

---

१. 'मीनध्वजा' इति पाठः. २. 'जयिनः' इति पाठः. ३. 'क्रमेण' इति नास्ति क्वचित्. ४. 'प्रथसागमन' इति पाठः.

कृत्यसाम्यं हृदिकृत्य रणाङ्गणे[1] गृहीतहेतीनां नवकोटिसंख्यावतां गोपकुमाराणां कदम्बेन केनचिदंशेन केवलसंनिधानेन स्वेनापि केनचिदंशेन परिपूरितघनमनोरथौ सुयोधनधनंजयौ स्वावासकटकभुवमासेदतुः ॥

सेनागजेन्द्रमदसौरभवीचिवेग-
निर्धूतगोग्रहणसंयुगपूतिगन्धम् ।
संवीक्ष्य मत्स्यवसुधेन्द्रपुरोपकण्ठं
शौरिश्च शक्रतनयश्च ननन्दतुस्तौ ॥ १२ ॥

दृष्ट्वा निवृत्य वदतो युधि पाण्डवाना-
मुत्साहमुग्रमथ संजयतो निशम्य ।
वातैर्विनापि मणिसौधतले निवासं
कुर्वन्नकम्पत भृशं कुरुवंशकेतुः ॥ १३ ॥

---

दुर्योधनस्य अर्जुनस्य च द्वयोः क्रमेण प्रथमं अभ्यागमनेन प्रथमं दर्शनेन च द्वाभ्यां हेतुभ्यां कृत्ये साह्यकरणे विषये साम्यं तौल्यं हृदिकृत्य । मनसि निश्चित्येत्यर्थः । रणाङ्गणे गृहीतहेतीनां धृतायुधानां नवकोटिरूपा संख्या एषामस्तीति तद्वतां गोपकुमाराणां नारायणगोपालाख्यानां कदम्बेन वृन्देन । तदात्मकेनेत्यर्थः । एवमग्रेऽपि । केनचिदंशेन एकेन भागेन केवलं निरायुधं यथा तथा संनिधानेन समीपे वर्तमानेन स्वेनापि केनचिदंशेन च परिपूरितः घनमनोरथः साह्यकरणरूपः ययोस्तौ सुयोधनधनंजयौ दुर्योधनार्जुनौ स्वस्य स्वस्य च आवासं निवासभूतां कटकभुवं हास्तिनपुरप्रदेशं मात्स्यपुरप्रदेशं च आसेदतुः प्राप्तवन्तौ ॥

**सेनेति** । शौरिः कृष्णश्च शक्रतनयः अर्जुनश्च तौ सेनासु धर्मराजसहायार्थमागतेषु सैन्येषु गजेन्द्राणां मदस्य दानजलस्य सौरभवीचिभिः परिमलपरम्पराभिः वेगेन निर्धूतः निरस्तः गोग्रहणे संयुगस्य गोग्रहणनिमित्तयुद्धस्य संवन्धी पूतिगन्धः दुर्गन्धः हतकरितुरगरथिकपदातिकलेवरजन्यः यस्मिन् तथोक्तं मत्स्यवसुधेन्द्रपुरस्य विराटनगरस्य उपकण्ठं समीपदेशं सम्यक् वीक्ष्य ननन्दतुः । अत्र तादृक्पुरोपकण्ठदर्शनस्य विशेषणगत्या आनन्दहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् ॥१२॥

**दृष्ट्वेति** । अथ कृष्णार्जुनागमनानन्तरं दृष्ट्वा पाण्डवान् विलोक्य निवृत्य पुनरागत्य वदतः कथयतः संजयतः संजयात् । पाण्डवतत्त्वजिज्ञासया प्रेषितादिति शेषः । युधि युद्धे विषये पाण्डवानां धर्मराजादीनां संवन्धिनं उग्रं भयंकरं उत्साहं वीररसं निशम्य श्रुत्वा कुरुवंशस्य केतुरिव केतुः । तद्वत्प्रख्यापक इत्यर्थः । धृतराष्ट्रः कुरूणां संबन्धी वंशकेतुः वेणुकाण्डवद्ध्वज इत्यपि । मणिमये सौधतले निवासं

---

[1] 'रणाङ्कणे' इति पाठः.

पाण्डोः सुताय वसुधां प्रविभज्य दित्सोः
प्रज्ञादृशो रहसि सान्त्वपथोपदिष्टम् ।
दुर्योधनस्तु वचनं न चकार कर्णे
कर्णे स्वमेव वचनं मधुरं चकार ॥ १४ ॥

तदनु दिने दिने समुपचीयमाननानाविधनरपतिकुलचतुरङ्गबल-कलकलानप्यभिभवद्भिः कङ्ककाकसालावृकजम्बुकरटितैः[1] कटूकृतनिकटयोः कुरुविराटपुटभेदनयोः कतिपयदिनैरेव[2] पञ्च खलु वीराः कौरव[3]-साम्राज्यलक्ष्मीमभिवीक्ष्य स्थातुमवशिष्येरन्निति किंवदन्त्यां[4] क्षितिपतिः क्षीणधैर्यो दीनाक्षरेण[5] सहोदरसमक्षं सरसीरुहाक्षमेवमाचचक्षे[6]

---

कुर्वन्नपि सन् वातैर्विनापि वायुभिर्विनापि भृशं अकम्पत कम्पितवान् । अत्र पुत्रविपत्तिभयकृतस्य धृतराष्ट्रकम्पस्य तत्सूचकौत्पातिकध्वजकम्पस्य च द्वयोः प्रकृतत्वात्केवलप्रकृतास्पदः श्लेषालंकारः । तद्बहिरवस्थानशीतमारुतधूननरूपकारणाभावेऽपि कम्पनरूपकार्योदयवर्णनाद्विभावनालंकारश्च द्वयोरभिन्नपदबोध्यत्वादेकवाचकानुप्रवेशसंकरः ॥ १३ ॥

पाण्डोरिति । पाण्डोः सुताय धर्मराजाय वसुधां भूमिं प्रविभज्य अर्धांशं विभागं कृत्वा दातुमिच्छोः दित्सोः प्रज्ञादृशः अन्धस्य धृतराष्ट्रस्य संबन्धि रहसि सान्त्वपथेन साममार्गेण उपदिष्टं बोधितं वचनं तु दुर्योधनः कर्णे श्रोत्रे राधेये च न चकार नाङ्गीकृतवान्, न श्रावितवांश्चेत्यर्थः । किंतु स्वं स्वीयं मधुरं वचनमेव कर्णे चकार । धृतराष्ट्रोक्तं दूरीकृत्य कर्णेन दुर्मन्त्रिणा सह दुरालोचनं कृतवानित्यर्थः । 'परेतकल्पा हि गतायुषो नरा हितं न गृह्णन्ति सुहृद्भिरीरितम्' इत्यभियुक्ता इति भावः ॥ १४ ॥

तदन्विति । तदनु दिनेदिने समुपचीयमानानाम् । आगत्य संघीभवतामित्यर्थः । नानाविधानां क्षत्रियम्लेच्छकिरातादिजातीनां नरपतीनां राज्ञां कुलस्य वृन्दस्य यानि चतुरङ्गाणि बलानि करितुरगरथिकपदातिरूपाणि तेषां कलकलान् कोलाहलरवानपि अभिभवद्भिः आच्छादयद्भिः कङ्कानां गृध्राणां काकानां सालावृकाणां शुनां जम्बुकानां शृगालानां रटितैः दुर्घोषैः । 'सालावृकाः कपिक्रोष्टुश्वानः' इत्यमरः । कुरुपुटभेदने हास्तिनपुरे विराटपुटभेदने मत्स्यपुरे च द्वयोः कटूकृताः कर्णकठोरीभूताः निकटाः । समीपदेशाः ययोस्तथोक्तयोः सतोः । कतिपयैः स्वल्पसंख्यै-

---

१. 'जम्बूककदम्बकरटितैः' इति पाठः. २. 'कतिपयैः' इति पाठः. ३. 'पौरव' इति पाठः. ४. 'किंवदन्त्यां प्रवहन्त्यां सत्याम्' इति पाठः. ५. 'दीनाक्षरः' इति पाठः. ६. 'सरोरुहाक्षमेवं व्याचचक्षे' इति पाठः.

एतावतो बन्धुजनान्निहत्य किं लब्धया कृष्ण भुवाऽनया मे ।
सकन्दमूलानि सनिर्झराणि न किं ममाद्यापि वनानि तानि ॥ १५ ॥

संतापकाले सति सर्वमम्भः पतत्यधस्तादिति हि प्रसिद्धिः ।
जिह्वां विहायाद्य जलं मुहुर्मे दृष्टिं समारोहति चित्रमेतत् ॥ १६ ॥

गलत्समीरैर्गजकर्णतालैर्नटत्पटेभ्यो नगरध्वजेभ्यः ।
तनूरिदानीं मम तान्तकान्तिराकम्पनाम्नायमसावधीते ॥ १७ ॥

---

रेव दिनैः । न तु पक्षमासादिभिरित्यर्थः । पञ्चवीराः धर्मराजादयः । कुरूणामिमां कौरवीं साम्राज्यलक्ष्मीं अभिवीक्ष्य स्थातुमवशिष्येरन् खलु । ततोऽन्ये सर्वेऽपि वीरा नंक्ष्यन्तीत्यर्थः । इत्युक्तप्रकारायां किंवदन्त्यां लोकप्रवादे । 'किंवदन्ती जनश्रुतिः' इत्यमरः । प्रवहन्त्यां सर्वत्र वर्धमानायां सत्यां क्षीणं धैर्यं यस्य तथोक्तः क्षितिपतिः धर्मराजः सहोदराणां भीमादीनां समक्षं तेषु शृण्वत्सु सत्स्विति यावत् । दीनेन दुःखगद्गदेन अक्षरेण वाक्येन उपलक्षितः । सरसीरुहाक्षं श्रीकृष्णं प्रति एवं वक्ष्यमाणप्रकारेण आचचक्षे उक्तवान् । चक्षेः कर्तरि लिट् ॥

एतावत इति । हे कृष्ण, एतावतः इयत्संख्यान् बन्धुजनान् निहत्य रणे घातयित्वा लब्धया अनया भुवा । राज्येनेत्यर्थः । किं प्रयोजनम् । न किमपीत्यर्थः । सकन्दमूलानि सनिर्झराणि जलप्रवाहसहितानि । भोक्तुं पातुमिति क्रमेण शेषः । तानि पूर्वमुषितानि वनानि अरण्यानि अद्यापि मम न सन्ति किम् । सन्त्येवेत्यर्थः । महतां स्वदुःखमेव परदुःखाच्छ्रेय इति भावः ॥ १५ ॥

संतापेति । सर्वं नानाविधमपि अम्भः जलं सम्यक्तपतीति संतापस्तस्य काले ग्रीष्मादौ वर्तमाने सति अधस्तात् पतति इति हि इत्येव प्रसिद्धिः । न तूर्ध्वमित्यर्थः । अद्य प्रकृते तु तस्मिन् सत्यपि जलं जिह्वां विहाय त्यक्त्वा मे मम दृष्टिं ऊर्ध्वं स्थितां मुहुः । नतु सकृदित्यर्थः । समारोहतीति यत् तदेतत् चित्रम् । बन्धुनाशमनुचिन्तयतः संतापेन शुष्यति जिह्वा बाष्पायते च दृष्टिरित्यर्थः । अत्र जलाधोगमनकारणसंतापकालविरुद्धतदूर्ध्वगमनकार्योत्पत्तिवर्णनात् विरुद्धकार्योत्पत्तिरूपो विषमप्रभेदालंकारः ॥ १६ ॥

गलदिति । हे कृष्ण, इदानीं तान्तकान्तिः संतापात् म्लानप्रभा मम असौ तनूः शरीरम् । 'स्त्रियां मूर्तिस्तनुस्तनूः' इति शरीरपर्यायेष्वमरः । गलन्तः प्रसरन्तः समीरा वायवः येभ्यस्तैः गजानां कर्णाः तालाः व्यजनानीव तैः नटन्तः कम्पमानाः पटाः पताकाः येषां तेभ्यः नगरध्वजेभ्य आसमन्तात् कम्पनं वेपथुमेव आम्नायं वेदं अधीयते अभ्यसति । तद्वदन्तं कम्पत इत्यर्थः । बन्धुविपत्तिचिन्तनादिति भावः ॥ १७ ॥

---

१. 'अधुना' इति पाठः. २. 'धर्मम्' इति पाठः.

आनन्दयित्रीमखिलस्य जन्तोरन्तः क्षमां स्वामपहाय मोहात् ।
बन्धुप्रणाशाद्बहुदुःखदोग्ध्र्यै बहिः क्षमायै स्पृहयामि धिङ्माम् ॥१८॥
गतिर्न मेऽन्या गरुडध्वज त्वया विनाधुनास्या विपदो विधूतये ।
वनानलार्चिर्वलयावृतिस्थितेर्बलाहकात्किं शरणं मृगीशिशोः ॥ १९ ॥
बहुभिः किमिहापरैः प्रलापैर्बहिरन्तश्च वदामि तुल्यभावम् ।
कुकुराधिपबन्धुभिर्मम स्वैः कुरु संधिं कुरुवंशभूतये त्वम् ॥ २० ॥
इति ब्रुवन्तं यदुनायकोऽब्रवीद्युधिष्ठिरं योगिविचिन्त्यवैभवः ।
महीपते यद्भवता समीरितं महात्मनां युक्तमिदं भवादृशाम् ॥२१॥

---

आनन्दयित्रीमिति । हे कृष्ण, अखिलस्य जन्तोः प्राणिमात्रस्य आनन्दयित्रीं आनन्दं कुर्वन्तीं स्वां स्वीयां अन्तः मनसि क्षमां क्षान्तिगुणं मोहात् राज्यलोभकृतात् अज्ञानात् विहाय बन्धुप्रणाशाद्धेतोः बहुदुःखस्य दोग्ध्र्यै जनयित्र्यै बहिः बाह्यायै क्षमायै भूम्यै स्पृहयामि इच्छामि यतः ततो मां धिक् । निन्द्योऽहमित्यर्थः । अत्र बन्धुनाशाङ्गीकारपूर्वकं राज्यकाङ्क्षावाक्यार्थेनात्मनिन्दनसमर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ १८ ॥

गतिरिति । हे गरुडध्वज, अस्याः प्रकृतायाः मे मदीयायाः विपदः बन्धुक्षयरूपायाः विधूतये निवारणाय त्वया विना त्वत्तोऽन्या गतिः । अधुना नास्ति । वनानलस्य दावाग्नेः अर्चिर्वलयेन ज्वालामण्डलेन आवृता वेष्टिता स्थितिः यस्य तस्य मृग्याः शिशुः तस्य बलाहकात् मेघात् विना । मेघं विहायेति ल्यब्लोपे पञ्चमी वा । शरणं रक्षकं किम् । तदन्यन्नास्त्येवेत्यर्थः । अत्रोपमानोपमेयवाक्यार्थयोः द्वयोरविद्यमानस्वरूपैकसामान्यकत्वात्प्रतिवस्तूपमालंकारः । 'वाक्ययोरेकसामान्ये प्रतिवस्तूपमा मता' इति लक्षणात् । वंशस्थवृत्तम् ॥ १९ ॥

बहुभिरिति । कुकुराः यादवविशेषाः तेषामधिपेति संबुद्धिः । हे कृष्ण, बहुभिः अपरैः अन्यैः प्रलापैः निरर्थकवचनैः इह इदानीं किं प्रयोजनम् । न किमपीत्यर्थः । बहिः बाह्ये अन्तः मनसि च शक्तौ व्यञ्जनायां चेति वा । तुल्यः अभिन्नः भावः अभिप्रायः यस्मिंस्तद्यथा भवति तथा वदामि कृत्स्नं कथयामि । कुरुवंशस्य भूतये श्रेयसे मम स्वैः स्वीयैः बन्धुभिः सह संधिं त्वं कुरु । औपच्छन्दसिकवृत्तम् ॥२०॥

इतीति । इत्युक्तप्रकारेण ब्रुवन्तं वदन्तं युधिष्ठिरं प्रति योगिभिः स्वात्मनि चित्तलयविद्भिः विचिन्त्यं ध्येयं वैभवं माहात्म्यं यस्य तथोक्तः यदुनायकः कृष्णः हे महीपते युधिष्ठिर, भवता यत्समीरितं कथितं इदं वचनं भवादृशां त्वत्तुल्यानां महात्मनां युक्तं उचितमेव इत्यब्रवीत् । अत्र माहात्म्यस्य वंशश्रेयःप्रवणताभिप्रायगर्भत्वात्परिकरालंकारः । एवं माहात्म्यसम्यग्वचनयोः अनुरूपघटवर्णनात् समालंकारश्च । द्वयोः संसृष्टिः । वंशस्थं वृत्तम् ॥ २१ ॥

---

१. 'भावः' इति पाठः.

सरिदात्मजशासितोऽपि सन्स दुरध्वं न जहाति कौरवः ।
इति चिन्तयतो ममाधुना हृदि सिद्धिः खलु संक्षयेशया ॥ २२ ॥

प्रयते तथापि नृप संधिलब्धये
प्रयतेन्द्रियैर्भुवि पणायितस्य ते ।
फलति क्वचिन्न फलति क्वचित्क्रिया
प्रविधातुरेष नहि दोषशीकरः ॥ २३ ॥

इत्थं निगद्य मधुरस्मितमीक्षमाणो
भीमस्य वक्त्रमपि दारुकनीतमग्रे ।
आरुह्य रत्नरथमाश्रितरक्षलीला-
कूलंकषो हरिरगात्कुरुराजधानीम् ॥ २४ ॥

---

**सरिदिति** । किंतु हे युधिष्ठिर, स कौरवः दुर्योधनः सरिदात्मजेन भीष्मेण शासितः सन्मार्गे प्रवर्तितोऽपि सन् दुरध्वं असन्मार्गं न जहाति न त्यजति । इत्युक्तप्रकारेण अधुना चिन्तयतः संधिकार्यमालोचयतः मम हृदि मनसि सिद्धिः संधिसाफल्यं संशये भवेद्वा न भवेद्वेति संदेहे शेते वर्तेत इति शया भवतीति योज्यम् । अत्र कुरुपितामहभीष्मशासनलङ्घनवाक्यार्थस्य संधिसिद्धिसंशयास्पदत्वहेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गम् । वैतालीयवृत्तम् ॥ २२ ॥

**प्रयत इति** । तथापि । यद्यपि सिद्धिः संशयास्पदा तथापीत्यर्थः । हे युधिष्ठिर, प्रयतानि लोभमोहादिभ्यो गृहीतानि इन्द्रियाणि चक्षुरादीनि येषां तैः महात्मभिः पणायितस्य संस्तुतस्य । 'ईडितशस्तपनायितपणायितप्रणुतपनितपणितानि' इति स्तुतिपर्यायेष्वमरः । ते तव संधेः लब्धये लाभाय । दुर्योधनादिभिः सहेति शेषः । प्रयते उद्युक्ते । क्रिया कार्योद्योगः क्वचित् कुत्रचित्कार्ये विषये फलति सिद्धिं करोति । क्वचित्तु न फलति । एषः क्वचित्फलाभावः प्रविधातुः कार्यकर्तुः दोषस्य शीकरो लेशोऽपि नहि न भवत्येव । 'यत्ने कृते यदि न सिध्यति कोऽत्र दोषः' इति न्यायादिति भावः । अत्र उत्तरवाक्यार्थत्रयेण संशयास्पदसिद्धिमत्संधिप्रयत्नसमर्थनादनेकवाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ २३ ॥

**इत्थमिति** । आश्रितान् रक्षतीति रक्षिण्याः लीलायाः विलासस्य कूलंकषः पारदृश्वा । तत्परिपूर्ण इति यावत् । हरिः श्रीकृष्णः इत्थं उक्तप्रकारेण निगद्य धर्मराजं प्रत्युक्त्वा भीमस्य वक्त्रं मुखमपि मधुरं सुकुमारं स्मितं यस्मिंस्तत्तथा ईक्षमाणः सन् । अत्र दरहासो भीमस्यानभिमतः संधिरिति सूचयति । अथ अग्रे दारुकेण सारथिना नीतं प्रापितं रत्नमयं रथं आरुह्य कुरुराजधानीं हास्तिनपुरं अगात् प्राप्तवान् ॥ २४ ॥

---

१. 'सिद्धये' इति पाठः.

[1]अवलोकयन्नथ पुरप्रतोलिकामनिमेषपौरजनतानिरन्तराम् ।
मृदुरानतेषु स दुरासदः परैर्यदुराज एष विदुरालयं ययौ ॥ २५ ॥
तमसां कुलानि सकलानि दर्शने
सति सद्य एव शमयन्महामहाः ।
स विवेश तत्र विदुरस्य मन्दिरं
चरमाद्रिकन्दरमभीशुमानिव[2] ॥ २६ ॥
कंसवैरिणि समेयुषि गेहं क्षत्तुरातिशयिकं मदनृत्तम्[3] ।
[4]संक्षिपां गमयति स्म पुरारेः सांध्यताण्डवविधेरवलेपम् ॥ २७ ॥
विरतेरुचितं विशुद्धमह्नो
विधिमाधाय पितृष्वसुः सकाशे ।

**अवलोकयन्निति** । अथ हास्तिनपुरप्राप्त्यनन्तरं आनतेषु प्रणतेषु विषये मृदुः कृपार्द्रः परैः आनतेभ्योऽन्यैः शत्रुभिर्वा दुरासदः प्राप्तुमशक्यः स एष यदुराजः श्रीकृष्णः अनिमेषया कृष्णावलोकनार्थं निर्निमेषनेत्रया पौरजनतया पुरवासिजनसमूहेन निरन्तरां संबन्धां पुरः हास्तिनपुरस्य प्रतोलिकां रथ्यां अवलोकयन् सन् विदुरस्यालयं गृहं प्रति ययौ गच्छति स्म । लाटानुप्रासालंकारः । मञ्जभाषिणीवृत्तम् ॥ २५ ॥

**तमसामिति** । महत् लोकोत्तरं महः तेजः यस्य तथोक्तः । अतएव सः कृष्णः दर्शने सति सद्य एव सकलानि तमसां पापानां अन्धकाराणां च कुलानि वृन्दानि । 'तमोऽन्धकारे स्वर्भानावघे शोके गुणान्तरे' इति विश्वः । शमयन् नाशयन् सन् । तत्र हास्तिनपुरे विदुरस्य मन्दिरं गृहं अभीशुमान् सूर्यः चरमाद्रेः अस्तशैलस्य कन्दरं दरीमिव विवेश प्रविष्टवान् । अत्र कृष्णसूर्ययोः प्रवेशेनौपम्यस्य गम्यत्वाकेवलप्रकृतास्पदस्तुल्ययोगितामेदः । 'अंशुमानपि' इति पाठेऽप्युक्त एवालंकारः । परंतु वाक्यमेदमात्रम् ॥ २६ ॥

**कंसेति** । कंसस्य वैरिणि कृष्णे गेहं गृहं प्रति समेयुषि प्राप्तवति सति अतिशयात् सर्वोत्कर्षाज्जातं आतिशयिकं क्षत्तुः विदुरस्य मदस्य संतोषस्य नृत्तं नाट्यम् । वृद्धिरिति यावत् । 'मदो रेतसि दर्पे च हर्षेद्विरददानयोः' इति विश्वः । पुरारेः शंभोः संबन्धिनः संध्यायां भवस्य सांध्यस्य ताण्डवविधेः नाट्यक्रियायाः अवलेपं गर्वं संक्षिपां संक्षेपं गमयति स्म प्रापयामास । आनन्दसान्द्रोऽभूदित्यर्थः । 'गतिबुद्धि—' इत्यादिना अणिकर्तुः कर्मत्वम् । उपमालंकारः । 'तस्य मुष्णाति सौभाग्यम्' इत्यादौ दण्डिना तदभिधानादिति । स्वागतावृत्तम् ॥ २७ ॥

**विरतेरिति** । अह्नो विरतेः सायंकालस्य उचितं करणीयं विशुद्धं पावनं

१. अयं श्लोकः केपुचित्पुस्तकेषु न दृश्यते. २ 'अभीषुमानपि' इति पाठः. ३. 'आतिशयितं मदनृत्तम्' इति पाठः. ४. 'संक्षयं' इति पाठः.

वसतोऽस्य निशैव सा [1]समाप्ता
वसुदेवात्मभुवः कथा न तास्ताः ॥ २८ ॥

[2]अथ वि[3]रतायां निशीथिन्यामिव पृथाकथायां दीनद्युतिषु तारकाकलापेष्विव प्रदीपेषु वि[4]जृम्भितेषु शकुन्तिभिरिव बन्दिभिः कलकलेषु विकसितेषु नलिनेष्विव नयनेषु [5]चञ्चरीकेष्विव पौरजनेषु उत्पलादिव राजमन्दिरान्महोत्पलं प्रतीव विदुरमन्दिरमागतेषु विरोचन इव कमललोचनः प्राचीनगिर्यङ्कादिव पर्यङ्कादुत्तस्थौ ।
समाप्य संध्यौपयिकं स कृत्यं समापयिष्यन्नथ शार्ङ्गधन्वा ।
अलंकृताङ्गो विदुरस्य हस्तमालम्ब्य मन्दं निरगान्निकेतात् ॥ २९ ॥

---

विधिं कर्म संध्यावन्दनादिकं आधाय कृत्वा पितृष्वसुः कुन्त्याः सकाशे संनिधौ वसतः वर्तमानस्य अस्य वसुदेवात्मभुवः कृष्णस्य सा निशा प्रवेशरात्रिरेव समाप्ता विरताभूत् । तास्ताः कथास्तु त्रिदशकवार्षिक्यः न समाप्ता अभूवन् । तयोरिति शेषः । कृष्णकुन्त्योरित्यर्थः । चिराद्दृष्टयोरिष्टजनयोः स प्रेमसंलापः स्वर्गादप्यतिशेत इति भावः । औपच्छन्दसिकवृत्तम् ॥ २८ ॥

अथेति । अथ निशीथिन्यां रात्राविव पृथाकथायां कुन्तीसंलापे विरतायां समाप्तायां सत्याम् । द्वयोरपि समाप्तयोः सत्योरित्यर्थः । एवमग्रेऽपि । 'पृथासुतकथायाम्' इति पाठे पाण्डवसंबन्धिकथायामित्यर्थः । कृष्णकथ्यमानायामिति शेषः । तारकाणां नक्षत्राणां कलापेषु समूहेष्विव प्रदीपेषु दीपेषु दीना म्लाना द्युतिः शोभा येषां तथोक्तेषु सत्सु । शकुन्तिभिः पक्षिभिरिव बन्दिभिः स्तुतिपाठकैः कलकलेषु कोलाहलरवेषु विजृम्भितेषु प्रकटितेषु सत्सु । नलिनेषु पद्मेष्विव नयनेषु लोकलोचनेषु विकसितेषु सत्सु । चञ्चरीकेषु भृङ्गेष्विव पौरेषु जनेषु । उत्पलात् कुवलयादिव राजमन्दिरात् राज्ञः धृतराष्ट्रस्य मन्दिरात् महोत्पलं कमलं प्रतीव विदुरस्य मन्दिरं प्रति आगतेषु सत्सु विरोचनः सूर्य इव कमललोचनः श्रीकृष्णः प्राचीनगिरेः उदयशैलस्य अङ्कात् तटादिव पर्यङ्कात् शयनात् उत्तस्थौ उत्थितवान् । अत्र पृथाकथानिशीथिनीद्विकादीनां प्रकृतानामेव विरत्यादिना धर्मेणौपम्यस्य गम्यत्वात्केवलप्रकृतगोचराणां तुल्ययोगितानां संसृष्टिः ॥

समाप्येति । अथ उत्थानानन्तरं अलंकृतानि निद्रावसरपर्यस्तवस्त्रभूषणादीनां यथापूर्वमवस्थापनेन विभूषितानि अङ्गानि यस्य तथोक्तः स शार्ङ्गधन्वा

---

१. 'समाप्तेव' इति पाठः. २. 'अथ' इत्यादि 'निकेतात्' इत्यन्तं क्वचिन्नास्ति. ३. 'विगतायां रजन्यामिव पृथासुतकथाम्' इति पाठः. ४. 'जृम्भितेषु' इति पाठः. ५. 'उत्पलादिव महोत्पलं राजनगराद्विदुरमन्दिरमागतेषु चञ्चरीकेष्विव सारिकेषु विरोचन इव कमलविलोचनः प्राचीनगिरेरिव पर्यङ्कात्' इति पाठः.

तदनु निखिलमहरारम्भकृत्यमवसाय्य बालातपेन बलाहक इव घुसृणमसृणितेन पटीरपङ्केन चर्चितकलेवरः पङ्केरुहशङ्किनीभिरञ्चललिखितराजहंसराजिभिरवकृष्यमाणेनेव पीताम्बरभागेन परिचुम्बितप्रपदपल्लवो निजोदरान्तरानवकाशतया बहिर्निर्गतैर्जगदण्डशिशुभिरिव मुक्ताफलैः प्रत्युप्तमेखलामुखभागो वर्षाहेमन्तसमययोरप्यविनश्वरं लक्ष्मीलीलाकमलमुपश्लोकितुमागतेन दिनमणिबिम्बेनेव कौस्तुभेन देदीप्यमानभुजान्तरो दनुजपरिषदुत्पातरक्तपरिवेषेणेव पद्मरागकेयूरेण परिमण्डितभुजदण्डो

---

श्रीकृष्णः संध्यायां प्रातःकालिकायां औपयिकं युक्तं कृत्यं वन्दनादिकं समाप्य कृत्वा संधेः कुरूणां पाण्डवैः सह संधानस्य औपयिकं कृत्यं धृतराष्ट्रादिभिः सह आलोचनमपि समापयिष्यन् करिष्यमाणः सन् विदुरस्य हस्तं आलम्ब्य गृहीत्वा निकेतात् शयनगृहात् मन्दं सविलासं यथा तथा निरगात् बहिरागतवान् । 'तमसां कुलानि' इत्यादिश्लोकपञ्चकं गद्यमेकं च बहुषु मूलपुस्तकेषु संदर्भविरुद्धक्रमं दृष्टं यथासंदर्भानुरोधं व्याख्यातमिति ध्येयम् ॥ २९ ॥

तदन्विति । तदनु शयननिर्गमनानन्तरं निखिलं अह्नः वासरस्य आरम्भे आदौ । प्रातःकाल इति यावत् । यत् कृत्यं स्नानसंध्यावन्दनादिकं तत् अवसाय्य समाप्य बालातपेन बलाहकः मेघ इव घुसृणेन कुङ्कुमेन मसृणितेन मिश्रितेन पटीरपङ्केन चन्दनेन चर्चितं लिप्तं कलेवरं देहः यस्य तथोक्तः । पङ्केरुहं अरुणकमलमिव शङ्कन्त इति शङ्किनीभिः अञ्चले अन्तभागे लिखिताभिः चित्रिताभिः राजहंसानां राजिभिः पङ्क्तिभिः अवकृष्यमाणेन अधोनीयमानेनेव स्थितेन पीताम्बरस्य भागेन प्रान्तदेशेन परिचुम्बितं स्पृष्टं प्रपदं पादाग्रं पल्लवमिव यस्य तथोक्तः । निजस्य उदरस्य कुक्षेः अन्तः मध्ये न विद्यते अवकाशः येषां तेषां भावः तत्ता तया हेतुना । असंख्येयत्वादिति भावः । बहिः निर्गतैः जगदण्डानां ब्रह्माण्डानां शिशुभिरिव स्थितैः मुक्ताफलैः प्रत्युप्तः संघटितः मेखलायाः काञ्च्याः मुखभागः अग्रदेशः यस्य तथोक्तः । वर्षासमये च द्वयोरपि अविनश्वरं अक्षीणशोभमित्यर्थः । प्रभावादिति भावः । लक्ष्म्याः वक्षःस्थितायाः लीलाकमलं उपश्लोकितुं स्तोतुं आगतेन दिनमणेः सूर्यस्य बिम्बेनेव स्थितेन कौस्तुभेन रत्नेन देदीप्यमानं भुजान्तरं वक्षः यस्य तथोक्तः । तदनुजपरिषदः राक्षसकुलस्य उत्पातेन दुर्निमित्तेन रक्तपरिवेषेणेव स्थितेन पद्मरागमयेन केयूरेण अङ्गदेन । 'उत्पातालातचक्ररक्तपरिवेषाभ्यामिव केयूराभ्याम्' इति पाठान्तरम् । परिमण्डितौ अलंकृतौ भुजौ दण्डाविव यस्य

---

१. 'अपरेद्युरखिल'; 'अन्येद्युरखिल' इति च पाठः. २. 'बहिर्जैनैः' इति पाठः. ३. 'उपश्लोकयितुम्' इति पाठः. ४. 'औत्पातिक' इति पाठः. ५. 'बाहुदण्डो द्वारि' इति पाठः.

निर्गत्य सुयोधनदुर्वासिताया नगरभुवः स्पर्शनं[1] परिहर्तुमिव द्वारि[2] सविनयमुपागतेन[3] दारुकेण संयोजितमणिपादुकः किंचिदवनमितपू[4]र्वकायेण विदुरेण वितीर्यमाणहस्तावलम्बो गुरुकृपप्रमुखैर्[5]ब्रह्मसंघैः[6] प्रतिपाद्यमानां जयाशिषं शिरसा प्रतिगृह्णानः कुशलप्रश्नकोरकितमोदाभ्यां कुरुराजदेवव्रताभ्यां सदनाभिगमनाय संप्रार्थ्यमानश्चिरतरा[7]वसरं प्रतिपालयतामक्षौहिणीपतीनामञ्जलिकमलवनालिम[8]वलोकनेन संभावयमानो मुकुन्दो वन्दिवृन्दपरिपठ्यमानकंसादिविजयवि[9]रुदावलिप्रबन्धबन्धुरेण[10] मङ्गलकुसुमगन्धसंपदन्धीकृतपुष्पंधयझंकारसहचरवादित्रघोषेण मेघवर्जमुन्मिषन्तीभिः सौदामिनीभिरिव कनकवेत्रलताभिराकुलीकृतेन[11] महता राजपथेन सुयोधनादिभिश्चतुर्भिरध्यासितपूर्वं सभामण्डपं शनैः शनैरवजगाहे ॥

तथोक्तः । निर्गत्य द्वारपर्यन्तमागत्य सुयोधनेन खलेन दुर्वासितायाः निवासानर्हीकृतायाः नगरभुवः हास्तिनपुरभूमेः स्पर्शनं परिहर्तुमिव द्वारि द्वार एव । नतु प्राङ्गण इत्यर्थः । सविनयं यथा तथा उपागतेन दारुकेण संयोजिते संघटिते मणिमये पादुके यस्य तथोक्तः । किंचित् अवनमितः विनयात् प्रह्वीकृतः पूर्वकायः येन तेन विदुरेण वितीर्यमाणः दीयमानः हस्तावलम्बः यस्य तथोक्तः । गुरुः द्रोणः कृपश्च द्वौ प्रमुखौ प्रधानौ येषां तैः ब्रह्मसंघैः ब्राह्मणकुलैः प्रतिपाद्यमानां क्रियमाणां जयाशिषं शिरसा प्रतिगृह्णानः शिरोवनतिपूर्वकं स्वीकुर्वाणः । कुशलप्रश्नैः कोरकितः संजातकोरकः । प्रवर्धित इति यावत् । मोदः संतोषः ययोस्ताभ्यां कुरुराजदेवव्रताभ्यां धृतराष्ट्रभीष्माभ्याम् । यत्तु 'कुरुराजो दुर्योधनः' इति तन्न । 'सुयोधनादिभिश्चतुर्भिरध्यासितपूर्वम्' इत्युत्तरग्रन्थेन संदर्भविरोधात् । सदनाभिगमनाय निजगृहं प्रति आगन्तुमिति । 'तुमर्थाच्च भाववचनात्' इति चतुर्थी । सम्यक् प्रार्थ्यमानः चिरतरं अत्यन्तविलम्बेन अवसरं नमस्कारसमयं प्रतिपालयतां निरीक्षमाणानां अक्षौहिणीपतीनां अक्षौहिणीसंख्यसेनानायकानां अञ्जलीनामेव कमलवनानां आवलिं पङ्क्तिं अवलोकनेन दर्शनेन सौरतेजःप्रसरणात्मकेन संभावयमानः बहुमन्यमानः मुकुन्दः श्रीकृष्णः वन्दिनां स्तुतिपाठकानां वृन्देन परितः पठ्यमानैः कंसादीनां खलानां विजयस्य संबन्धिभिः विरुदावलीभिः नाम प्रबन्धैः बन्धुरेण व्याप्तेन । शब्दायमानेनेति यावत् । मङ्गलकुसुमानां आचारार्थं विकीर्णपुष्पाणां गन्धसंपदां परिमलसमृद्ध्या अन्धीकृतानां पुष्पंधयानां मत्तानां भृङ्गाणां झंकारैः सहचरः मिश्रः

१. 'संस्पर्शनम्' इति पाठः. २. 'द्वारि' इति नास्ति क्वचित्. ३. 'आगतेन' इति पाठः. ४. 'किंचिदेव' इति पाठः. ५. 'मुखैः' इति पाठः. ६. 'ब्राह्मणैः' इति पाठः. ७. 'चिरमवसरं' इति पाठः. ८. 'वनजावलिम्' इति पाठः. ९. 'वद' इति पाठः. १०. 'प्रबन्धनस्' इति पाठः. ११. 'आकुलितेन' इति पाठः.

द्वारं समेयुषि हरावथ तत्र गोष्ठ्याः
सर्वैः समं नरपतिः सहसोदतिष्ठत् ।
पूर्वाचलाश्रयिणि पूषणि पद्मपङ्क्तेः
सौरभ्यपूर इव षट्चरणैरनेकैः ॥ ३० ॥

तत्रातितुङ्गे तरसोपनीते रत्नासनेऽयं रचितोपवेशः ।
पुरोहितैरग्रभुवि प्रदिष्टां पूजामुपादत्त पुमान्पुराणः ॥ ३१ ॥

सभान्तरे तत्र समग्रकान्तिं संवीक्ष्य संवीक्ष्य सरोरुहाक्षम् ।
नरेन्द्रवर्जं नगरीजनेषु न कस्य वाभून्नयनप्रमोदः ॥ ३२ ॥

---

वादित्राणां वीणावेणुमृदङ्गतालादीनां घोषः कोलाहलः यस्मिंस्तथोक्तेन मेघवर्जं यथा तथा समुन्मिषन्तीभिः स्फुरन्तीभिः सौदामिनीभिः विद्युद्भिरिव स्थिताभिः कनकमयीभिः वेत्रलताभिः कञ्चुकिधृताभिः आकुलीकृतेन निःसार्यमाणप्रेक्षकपौरसंकुलितेन महता विस्तीर्णेन राजपथेन उपलक्षितः चतुर्भिः सुयोधनः आदिः येषां तैः दुर्योधनदुःशासनशकुनिकर्णैः पूर्वं अध्यासितं उपविष्टं अध्यासितपूर्वं सभामण्डपं आस्थानीं शनैः शनैः अवजगाहे प्रविवेश । उत्प्रेक्षासंसृष्टिः । एतद्द्वयस्यादौ 'अन्येद्युः' इति पाठोऽसंगतार्थत्वादुपेक्ष्यः ॥

**द्वारमिति** । अथ हरौ श्रीकृष्णे द्वारं प्रति समेयुषि प्राप्तवति सति तत्र आस्थानमण्डपे नरपतिः दुर्योधनः सहसा सत्वरं गोष्ठ्याः समाजात् सर्वैः सभ्यैः समं पूषणि सूर्ये पूर्वाचलं उदयशैलं आश्रयिणि प्राप्तवति सति पद्मानां पङ्क्तेः अनेकैः षट्चरणैः भृङ्गैः समं सौरभ्यपूरः परिमलप्रवाह इव उदतिष्ठत् प्रत्युत्थितवान् । पूर्णोपमालंकारः । 'द्वारं समेयुषि हरावथ तत्र गोष्ठ्याः सर्वैः समं नरपतिः सहसोदतिष्ठत् । पूर्वाचलाश्रयिणि पूषणि पद्मपङ्क्तेः सौरभ्यपूर इव षट्चरणैरनेकैः ॥' इतीदं पद्यं बहुषु मूलपुस्तकेषु न दृष्टमित्यत्र लिखितम् ॥ ३० ॥

**तत्रेति** । तत्र आस्थाने तरसा द्रुतं उपनीते समीपं प्रापिते अतितुङ्गे अत्युन्नते रत्नमये आसने रचितः कृतः उपवेशः येन सः अयं पुराणः पुमान् पुराणपुरुषः श्रीकृष्णः अग्रभुवि पुरोहितैः प्रदिष्टां निवेदितां पूजां अर्घ्यपाद्यादिकं उपादत्त स्वीकृतवान् ॥ ३१ ॥

**सभेति** । तत्र तदानीं सभायाः अन्तरे मध्ये समग्रा संपूर्णा कान्तिः सौन्दर्यं यस्य तथोक्तं सरोरुहाक्षं श्रीकृष्णं संवीक्ष्य संवीक्ष्य । आदराद्द्विरुक्तिः । नरेन्द्रेण दुर्योधनेन वर्जं यथा तथा । तदितरेषु नगरीजनेषु । पौराणां मध्य इत्यर्थः । कस्य वा जनस्य नयनप्रमोदः नेत्रानन्दः नाभूत् । तमेकं विना सर्वस्याप्यभूदेवेत्यर्थः । पाण्डवपक्षपातिनो हरेर्द्वेष्यतया तन्निरीक्षणं न तस्यानन्दकरमिति भावः । यत्तु 'नरेन्द्रवर्जं धृतराष्ट्रवर्जम्' इति व्याख्याय अन्धत्वान्न तस्यानन्दोऽभूदिति भावः

---

१. अयं श्लोकः केषुचित्पुस्तकेषु न दृश्यते. २. 'प्रदत्तां' इति पाठः.

भद्रासनादुपनतं पदपल्लवाग्रं
संवाहयत्युपगते विदुरे दयार्द्रः ।
सामाजिके बुधजने सति दत्तकर्णे
प्रज्ञादृशं नृपमभाषत पद्मनाभः ॥ ३३ ॥

अल्पैरहोभिरधियुद्धमवेक्ष्य नङ्क्ष्य-
च्चान्द्रं कुलं तव सुतैः सह पाण्डवानाम् ।
संधिं विधातुमधुना समये विधेयं
प्राप्तोऽहमस्मि भरतर्षभ ते सकाशम् ॥ ३४ ॥

शतेन संधत्स्व तनूभवानां कुन्तीकुमारान्कुशलोदयाय ।
कल्लोलजालेन कलिन्दजाया गङ्गातरङ्गानिव गेयकीर्ते ॥ ३५ ॥

---

इति, तत्र । दर्शनानन्दयोः समानकर्तृकत्वबोधकं संवीक्ष्येति ल्यबन्तेन तत्रोभयत्र धृतराष्ट्रस्य प्रसक्त्यभावस्फोरणादिति ॥ ३२ ॥

भद्रेति । दयया आर्द्रः मधुरस्वभावः । पद्मं नाभौ यस्य सः श्रीकृष्णः । भद्रासनात् रत्नसिंहासनात् उपनतं अधःप्रसारितं पदे पल्लवे इव तयोरग्रं भागं उपगते समीपस्थिते विदुरे संवाहयति मृदु मर्दयति सति । सामाजिके सभ्ये बुधजने दत्तौ किमेष कथयिष्यतीति सावधानौ कर्णौ यस्य तथोक्ते सति च प्रज्ञादृशं अन्धं नृपं धृतराष्ट्रं प्रति अभाषत उक्तवान् । वक्ष्यमाणप्रकारेणेति भावः ॥ ३३ ॥

अल्पैरिति । हे भरतर्षभ धृतराष्ट्र, अल्पैः पञ्चषैः अहोभिः वासरैः अधियुद्धं युद्धे चन्द्रस्येदं चान्द्रं कुलं नङ्क्ष्यत् नाशं गमिष्यत् । अन्योन्यकलहादिति भावः । अवेक्ष्य ज्ञात्वा अधुना अस्मिन् समये विधातुं कर्तुं योग्यं विधेयम् । अन्यथा(दा) तु कृतेनापि तेन प्रयोजनाभावादिति भावः । तव सुतैः दुर्योधनादिभिः सह पाण्डवानां संधिं अन्योन्यानुकूल्यं विधातुं ते तव सकाशं समीपं प्रति अहं प्राप्तोऽस्मि ॥ ३४ ॥

शतेनेति । हे गेयकीर्ते स्तव्यकीर्ते धृतराष्ट्र, तव तनूभवानां पुत्राणां शतेन सह कुन्तीकुमारान् धर्मजादीन् कलिन्दजायाः यमुनायाः कल्लोलानां महातरङ्गाणां जालेन समूहेन सह गङ्गायास्तरङ्गानिव कुशलस्य अन्योन्यक्षेमस्य उदयाय आविर्भावाय संधत्स्व संधिं कुरु । अत्रोपमया कुरुपाण्डवानां दौर्बल्यवैमल्ययोः प्रतीतेरलंकारेण वस्तुध्वनिरलङ्कारः ॥ ३५ ॥

---

१. 'अवनतम्' इति पाठः. २. 'गिरस्' इति पाठः.

पादारविन्दे प्रणतीः शिरोभिः शतं शतं सादरमर्पयन्तः ।
पाण्डोः कुमाराश्च भवन्तमेवं विज्ञापयन्ति स्म विनीतपूर्वम् ॥३६॥

जाता वने वयममी भवदङ्कभूमौ
वृद्धिं[1] गताः शिरसि शासनमादधानाः ।
निस्तीर्णसंगरपयोनिधयस्त्वयाद्य
स्थाप्या यथांशमवनेरवने वने वा ॥ ३७ ॥

बाल्ये वनान्तजनुषां मम पाण्डवाना-
मेकापि रक्षणविधौ न बभूव धात्री ।
इत्येव शोकमनिशं हृदये दधान-
स्तस्यास्तु नार्धमपि संप्रति दित्ससि त्वम् ॥ ३८ ॥

---

**पादेति** । किं च पाण्डोः कुमाराः धर्मराजादयः भवन्तं त्वां प्रति पादारविन्दे शिरोभिः शतं प्रत्येकं शतसंख्याः प्रणतीः नमस्कारान् सादरं यथा तथा अर्पयन्तः कुर्वन्तः सन्तः विनीतिः विनयः पूर्वं यस्मिंस्तत्तथा । एवं वक्ष्यमाणप्रकारेण विज्ञापयन्ति स्म विज्ञापितवन्तः । मन्मुखेनेति भावः । यत्तु शतं शतं दशसहस्रमिति, तन्न । तथा सति 'संख्यार्थे द्विबहुत्वे स्तः' इत्यनुशासनात् प्रणतीरिति बहुवचनान्तविशेष्यवाचकानुरोधेन शतशतानि इत्येव प्रयोगः स्यात् । 'विंशत्याद्याः सदैकत्वे' इत्यनुशासनाच्च न यथोक्तव्याख्यानविरोध इत्यपीति ध्येयम् ॥ ३६ ॥

विज्ञापनप्रकारमेवाह द्वाभ्याम्—**जाता इति** । वने जाताः उत्पन्नाः भवतः तव अङ्कभूमौ उत्सङ्गदेशे वृद्धिं गताः शासनं आज्ञां भवदीयां शिरसि आदधानाः बिभ्राणाः निस्तीर्णः अतिक्रान्तः संगरः वनवासाज्ञातवासप्रतिज्ञैव पयोनिधिः समुद्रः यैस्तथोक्ताः । अमी एवंभूताः वयं त्वया अद्य यथांशं अवनेः भूमेः अवने रक्षणे वा । राज्ये वेति यावत् । स्थाप्याः स्थापितुमर्हाः । वने वा स्थाप्याः । उभयमपि त्वदधीनमित्यर्थः । पित्राज्ञाया दुर्लङ्घ्यत्वादिति भावः ॥ ३७ ॥

**बाल्य इति** । वनान्ते अरण्यमध्ये जनुः जन्म येषां तेषां मम मदीयानां पाण्डवानां रक्षणविधौ पोषणक्रियायां विषये एकापि धात्री उपमाता न बभूव इत्युक्तप्रकारं शोकं उपमात्रभावकृतमेव अनिशं हृदये दधानः त्वं तस्याः धात्र्याः भूमेः उपमातुश्च संप्रति इदानीं न दित्ससि दातुं नेच्छसीति काकुः । किंतु दित्सस्येवेत्यर्थः । अत्र वने धात्रीमात्रभावशोचनस्य स्वसमक्षं अर्धधात्रीदानावश्यकत्वहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् । तच्चोपमातृभुवोः धात्रीशब्द श्लेषभित्तिकाल्ब्धाभेदाध्यवसायमूलातिशयोक्त्युज्जीवितमिति तयोरङ्गाङ्गिभावेन संकरः ।

---

१. 'संवर्धिताः' इति पाठः.

इत्थं ब्रुवाणं यदुवीरमेनं निश्वस्य दीर्घं नृपतिर्बभाषे ।
व्यरंसिषं व्यध्वममुं विमुञ्च विमुञ्च वत्सेत्यनुशास्य शौरे ॥ ३९ ॥

मधुमथन निमीलिता मुनीन्द्रे
मम जननी खलु पुत्रवत्सला सा ।
मुखमहमनवेक्ष्य मूर्खसूनो-
र्मुदमधिकामधुना यथा दधामि ॥ ४० ॥

स्वयमपि न विबुध्यते सुतोऽयं
सुमतिजनस्य शृणोति नापि वाचम् ।
कुरुकुलकुशलाङ्कुराभिवृद्ध्यै
गुणगणवारिनिधे गतिस्त्वमेव ॥ ४१ ॥

---

'धात्री स्यादुपमातापि क्षितिरप्यामलक्यपि' इति नानार्थरत्नमालायाम् । इति विज्ञापयन्ति स्मेति पूर्वेणान्वयः ॥ ३८ ॥

इत्थमिति । इत्थं उक्तप्रकारं ब्रुवाणं पाण्डवविज्ञापनां कथयन्तं एनं यदुवीरं श्रीकृष्णं प्रति नृपतिः धृतराष्ट्रः दीर्घं यथा तथा निश्वस्य हे वत्स दुर्योधन, अमुं व्यध्वं दुर्मार्गं पाण्डववैररूपं विमुञ्च विमुञ्च त्यज त्यज । इत्यादराद्विरुक्तिः । इत्युक्तप्रकारेण अनुशास्य शिक्षयित्वा हे शौरे श्रीकृष्ण, अहं व्यरंसिषं विरतवानस्मि । शान्तवानस्मीत्यर्थः । इति बभाषे उक्तवान् ॥ ३९ ॥

मधुमथनेति । किंच हे मधुमथन मधुनामकदैत्यनाशक कृष्ण, सा प्रसिद्धा मम जननी अम्बिका पुत्रे मयि वत्सला खलु दयालुः सत्येव मुनीन्द्रे व्यासे विषये निमीलिता मुकुलितनेत्राभूत् । यया पुत्रदायिनि मुनीन्द्रे मीलिताक्ष्या जनन्या अहं अन्धत्वेन जात इत्यर्थः । मूर्खस्य स्वतः अविवेकिनः परैर्बोधितं अश्रोतुश्च सूनोः दुर्योधनस्य मुखं अनवेक्ष्य अधुना अधिकां निरवधिं मुदं आनन्दं दधामि धारयामि । तत्तादृक् दुःखात् । आन्ध्यादपि दुःखायते पुत्रस्य मौर्ख्यमित्यर्थः । अत्र किमुत्तरवाक्यार्थेन पुत्रवात्सल्यसमर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्गम्, उत आन्ध्यस्य दोषस्यैव संतोषजनकत्वेन गुणत्ववर्णनाल्लेशालंकारः । इत्युभयत्र साधकसाम्यादेकत्र बाधकाभावाच्च द्वयोः संदेहसंकरः । पुष्पिताग्रा वृत्तम् ॥ ४० ॥

पुत्रमौर्ख्यं विशदयति—स्वयमिति । अयं सुतः दुर्योधनः स्वयं आत्मनापि न विबुध्यते । शोभना कार्याकार्यविवेचिका मतिः आगामिगोचरबुद्धिः यस्य तस्य जनस्य भीष्मविदुरादेः वाचमपि न शृणोति । नानुतिष्ठति इत्यर्थः । अतः हे गुणगणवारिनिधे श्रीकृष्ण, कुरुकुलस्य कुशलमेवाङ्कुरः तस्याभिवृद्ध्यै त्वमेव गतिः । नान्य इत्यर्थः । तथा च त्वमेव नयभयाभ्यामिदानीं संधिं घटयेति भावः । वृत्तं पूर्ववत् ॥ ४१ ॥

इति सिद्धान्तितवति बद्धाञ्जलौ राजनि निजासनार्धनिवेशित-करतलतया किंचिदुन्नमितवामभुजशिखरेण गण्डमण्डले निमज्जितमकरकुण्डलं कटिचलनकन्दलितकाञ्चनपटमर्मराखमीषत्कंधरां विनिवर्त्य—

> क्लृप्तस्मितं रविभुवा कृतहस्ततालं
> दुःशासनेन धुरि दूषितसंधिपक्षम् ।
> कर्णोपकण्ठचलिताधरमातुलास्यं
> कौरव्यमाह कुरुसंसदि कंसवैरी ॥ ४२ ॥

पृथासुतेभ्यः पृथिवीं तदीयां पुनर्दिशेति ब्रुवतो गुरोर्गाम् ।
अशृण्वतः पौरव ते कथं वा संभूतिरेषा शशिनोऽन्ववाये ॥४३॥

---

इतीति । इत्युक्तप्रकारं बद्धाञ्जलौ राजनि धृतराष्ट्रे सिद्धान्तितवति प्रकृतकार्यं निश्चितवति सति । निजस्य आसनस्य रत्नपीठस्य अर्धे मध्ये निवेशितं निक्षिप्तं करतलं येन तस्य भावः तत्ता तया हेतुना किंचित् उन्नमितेन वामभुजस्य शिखरेण अग्रभागेन गण्डमण्डले वामकपोलमध्ये निमज्जितं प्रवेशितं मकराकृतिकुण्डलं यस्मिन् तत्तथा । कटेः नितम्बस्य चलनेन तिर्यग्व्यावर्तनेन कन्दलितः संजातः काञ्चनपटस्य पीताम्बरस्य मर्मरारवः मर्मरेतिशब्दः यस्मिंस्तत्तथा । ईषत् किंचित् कंधरां ग्रीवां विनिवर्त्य अभ्यावर्त्य इत्युत्तरेणान्वयः ॥

क्लृप्तेति । कंसवैरी कृष्णः रविभुवा कर्णेन सह कृताः हस्ताभ्यां तालाः मिथस्ताडनानि यस्मिंस्तत्तथा क्लृप्तं निर्मितं स्मितं येन तम् । धुरि अग्रे दुःशासनेन भ्रात्रा दूषितः निन्दितः संधिपक्षः संधिना साध्यं यस्य तम् । कर्णस्य श्रोत्रस्य उपकण्ठे मूले चलितः गूढसंधिपक्षदूषणेन कम्पितः अधरः यस्य तादृशं मातुलस्य शकुनेः आस्यं वक्त्रं यस्य तथोक्तम् । कौरव्यं दुर्योधनं प्रति कुरुसंसदि कौरवसभायाम् । शृण्वन्त्यां सत्यामिति शेषः । आह वक्ष्यमाणप्रकारेण उवाच ॥ ४२ ॥

पृथेति । हे पौरव दुर्योधन, पृथासुतेभ्यः धर्मराजादिभ्यः तेषामिमां तदीयाम् । न तु त्वदीयामित्यर्थः । पृथिवीं भूमिं द्यूतेनापहृतां पुनः प्रतिज्ञाप्रकारं दिश प्रयच्छ इत्युक्तप्रकारेण ब्रुवतः कथयतः गुरोः पितुः गां वाक्यं अशृण्वतः उल्लङ्घयतः ते तव संबन्धिनी एषा पित्राज्ञोल्लङ्घिनी संभूतिः जन्म शशिनः चन्द्रस्य अन्ववाये वंशे कथं वेत्याश्चर्ये । अभूदिति योज्यम् ॥ ४३ ॥

---

१. 'सिद्धान्तवति' इति पाठः. २. 'विनिवेशित' इति पाठः. ३. 'गण्डमण्डल' इति पाठः. ४. 'कटितटचलन' इति पाठः. ५. 'मर्मरसीपत' इति पाठः. ६. 'कौरव.' इति पाठः.

तत्तादृशं शृणु महत्तव वंशवृत्तं
पूरुर्ददौ नववयः पितुरात्तजीर्णः ।
त्यक्त्वाश्रमं पितृमुदे तृणवद्द्वितीयं
देवव्रतोऽयमिह तिष्ठति धीरधीरः ॥ ४४ ॥

कितवोक्तिभिः किसलितः[1] स कर्णयोः
सफलो भवेत्तव तदा मनोरथः ।
हरिनन्दनेन युधि पातितं धनु-
र्हरमस्तकान्न पुनरुन्ममज्ज चेत् ॥ ४५ ॥

वंशः कुरूणां महितोऽयमस्मिन्धर्तुं कलङ्कं चतुरौ खलु द्वौ ।
एकत्र कोटौ रजनेरधीशः परत्र मन्ये परुषो[2] भवांश्च ॥ ४६ ॥

---

ननु चन्द्रवंश्येनापि लङ्घ्यतां पित्राज्ञेत्यत आह—तदिति । हे कौरव, तत् तादृशं अनुपमं अतएव महत् श्लाघ्यं तव संबन्धिनः वंशस्य वृत्तं चारित्रं शृणु । येन राज्ञा यूयं पौरवा इति ख्याताः स पूरुर्नाम राजा चन्द्रवंश्यः पितुः ययातितः आत्ता जीर्णा जरा येन तथोक्तः सन् । नवं वयः यौवनं स्वीयं ददौ । तस्मा इति शेषः । कालान्तरीयं तत्तिष्ठतु । आधुनिकमेव पश्येत्याह—त्यक्त्वेति । धीराणामपि धीरः असदृशधैर्यशाली अतएव अयं देवव्रतः भीष्मः पितुः शन्तनोः मुदे सत्यवतीलाभसंतोषाय द्वितीयमाश्रमं गार्हस्थ्यम् । दारपरिग्रहमिति यावत् । तृणवत् तृणमिव त्यक्त्वा । इह इदानीं अत्र च तिष्ठति । ननु यदा कदा वा यत्र कुत्र वेत्यर्थः ॥ ४४ ॥

नयेनोक्त्वा भयेनाह—कितवेति । किंच हे कौरव, कर्णयोः कितवस्य अक्षविद्यानिपुणस्य शकुनेः उक्तिभिः दुर्वोधनैः किसलितः संजातपल्लवः । उत्पन्न इति यावत् । 'किसाल्यं किसलयं किसालं किसलं किसम्' इति श्रीहर्षः । सः पाण्डवसर्वस्वापहरणविषयकत्वेन प्रसिद्धः तव संबन्धी मनोरथः कामः तदा सफलः भवेत् । यदि कैराते हरिनन्दनेन अर्जुनेन पातितं ताडितं निवेशितं धनुः गाण्डीवं हरस्य मस्तकात् शिरसः पुनः नोन्ममज्ज चेत् नोत्थितं यदि तदा भवेदिति संबन्धः । गाण्डीवमेव तेभ्यः सर्वस्वं ददाति । किं त्वयेति भावः । अत्र किसलितत्वफलितत्वारोपेण मनोरथस्य वृक्षत्वारोपप्रतीतेरेकदेशवर्ति रूपकम् । मञ्जुभाषिणी वृत्तम् ॥ ४५ ॥

वंश इति । अयं कुरूणां वंशः महितः लोकैकपूज्यः यद्यपि तथापि अस्मिन् वंशे एकत्र कोटौ अग्रे । आदिभाग इति यावत् । कलङ्कं चिह्नं अपवादं च धर्तुं रजनेः रात्रेः अधीशः चन्द्रश्च, परत्र कोटौ अन्त्यभागे कलङ्कं अपवादं चिह्नं च धर्तुं परुषः निर्दयः भवांश्च द्वौ चतुरौ निपुणौ खल्विति मन्ये । 'कलङ्कोऽङ्कापवादयोः' इत्यमरः ॥ ४६ ॥

---

१. 'किसलितश्च' इति पाठः. २. 'पुरुषो' इति पाठः.

बन्धूपदिष्टं न शृणोषि वत्स संधानमस्मिन्न तवाद्य दोषः ।
गन्धर्वराजेन कृतं वनान्ते वन्धं पुनर्मुक्तवता हि तेषाम् ॥ ४७ ॥

इति निगदितवति भगवति क्रोधनः सुयोधनोऽपि गिरमिमामुज्जगार ।

अये नन्दनन्दन, केवलं विराटतनयाश्रयलाभेन कृतकृत्यंमन्यमानानां कुन्तीभुवां च बहुभिरक्षौहिणीपतिभिरनुक्षणमावेद्यमानाञ्जलि धोरणीमवलोकयितुमप्यलब्धावसराणामस्माकं च किं वा संधानं किं वा तव दूतकृत्यं किं वा मया देयमीदृग्विधं मुधायासमवधूय यथागतं गन्तव्यमिति ।

---

बन्ध्विति । हे वत्स शिशुवत्कर्तव्यानभिज्ञ, त्वं बन्धुभिः उपदिष्टं बोधितं संधानं संधिं न शृणोषि नाङ्गीकरोषीति यत् अस्मिन् संध्यनङ्गीकारे विषये अद्य तव दोषः अपराधः न भवति । किंतु वनान्ते द्वैतवनमध्ये गन्धर्वराजेन चित्रसेनेन कृतं वन्धं त्वदीयं पुनर्मुक्तवतां मोचितवतां तेषां हि पाण्डवानामेव दोषः भवति । अत्र क्रमेण दोषगुणयोः वन्धूक्तसंध्यनङ्गीकारवन्धमोचनयोः गुणत्वस्य दोषत्वस्य च वर्णनाल्लेशालंकारद्वयं अङ्गाङ्गिभावेन संकीर्णम् ॥ ४७ ॥

इतीति । इत्युक्तप्रकारेण भगवति श्रीकृष्णे निगदितवति उक्तवति सति क्रोधनः कुपितः सुयोधनः दुर्योधनोऽपि इमां वक्ष्यमाणां गिरं वाक्यं उज्जगार उक्तवान् ॥

अये इति । नन्दो नाम कश्चिद्गोपालः तस्य नन्दनः पुत्रः तस्य संबुद्धिः अये नन्दनन्दन हे श्रीकृष्ण, इत्यामन्त्रणं गोपालानां मौढ्यप्रसिद्धिमनुरुध्येति ध्येयम् । विराटतनयया उत्तरया अभिमन्यवे दत्तया आश्रयः विराटरूपः तल्लाभेन । केवलं तल्लाभमात्रेण स्त्रीमूलकाश्रयोपजीवनेनेत्यर्थः । विराटतनयः उत्तरः रणभीरुः स एवाश्रयः तल्लाभेनेति वा । उभयथापि मौढ्योद्घाटनम् । कृतकृत्यंमन्यमानानां आत्मानं कृतार्थं संभावयताम् । 'आत्ममाने खश्च' इति खशि खित्त्वात् 'अरुर्द्विषत्–' इत्यादिना मुम् । कुन्तीभुवां धर्मराजादीनां च । अत्र 'कुन्तीभुवां' इति पाठे स्त्रैणेयत्वप्रकाशोक्तिः । अनुक्षणं बहुभिरक्षौहिणीपतिभिः आवेद्यमानां विज्ञाप्यमानां अञ्जलिधोरणीं नमस्कारपरम्परां अवलोकयितुमपि अलब्धः अवसरः अवकाशः यैस्तेषामस्माकं च उभयेषां संधानं संधिः किंवा कीदृशः । अनुचित एवेत्यर्थः । प्रबलानां दुर्बलैः सह संधेः लोकवेदोभयदूषितत्वादिति भावः । तव दूतकृत्यं किं वा । मया देयं दातव्यं किं वा । ईदृशी विधा प्रकारः यस्मिंस्तथोक्तम् । मुधायासं निरर्थकश्रमं

---

१. अयं श्लोकः केषुचित्पुस्तकेषु न दृश्यते. २. 'प्रगदित'; 'गदित' इति च पाठः. ३. 'उज्जहार' इति पाठः. ४. 'अरे' इति पाठः. ५. 'मन्यानाम्' इति पाठः. ६. 'अक्षौहिणीभिः' इति पाठः. ७. 'अञ्जली' इति पाठः. ८. 'अवलोकितुम्' इति पाठः. ९. 'भवता यथा' इति पाठः.

आकर्ण्य तच्चकितचेतसि नम्रवक्त्रे
कर्णौ पिधाय नृपतौ करसंपुटाभ्याम् ।
मत्वा तृणाय मधुवैरिणमप्यलङ्घ्यं
गोष्ठ्या जवेन निरगात्कुरुराजसूनुः ॥ ४८ ॥

तदनु दनुजारातिरेष रोषस्मितलेशरूषिताधरस्ताद्दशेन तस्याव-लेपवचनेन भिया विहस्तान्मुदा निरस्तान्समस्तानपि सभास्तारान्पुं-रस्तान्निरीक्ष्य पुनरपि वाचमेवं [२]जगाद ॥

धराभुजा किं तटिनीभुवा किं मयाधुना किं वसतापि दूत्ये ।
पार्थाय दातुं प्रभवेद्धरित्रीं गदैव सा गन्धवहस्य सूनोः ॥४९॥

---

अवधूय त्यक्त्वा यथागतम्, आगमनं यथा निष्फलं तथेत्यर्थः । गन्तव्यम् । त्वयेति शेषः । इति गिरं उज्जगारेति पूर्वेणान्वयः । अत्र स्त्रैणोपजीवनकौन्तेयार्थगोपालदूत्यवस्तुना तदीयदूत्यं त्वदनुगुणमेवेत्यनुरूपघटनात्मकसमालंकारप्रतीतेः वस्तुनालंकारध्वनिः ॥

आकर्ण्येति । तत् दुर्योधनस्य दुरुक्तं आकर्ण्य चकितं भीतं चेतः यस्य तस्मिन् अतएव नृपतौ धृतराष्ट्रे । करौ संपुटे इव ताभ्यां कर्णौ पिधाय आच्छाद्य नम्रं नतं वक्त्रं मुखं यस्य तथोक्ते सति । किंकर्तव्यतामौढ्येनेति भावः । कुरुराजसूनुः दुर्योधनः अलङ्घ्यं लोकत्रयेणाप्यनतिक्रमणीयं मधुवैरिणं श्रीकृष्णमपि । किमुतान्यानित्यर्थः । तृणाय मत्वा । तृणमिवानादृत्येत्यर्थः । 'मन्यकर्मण्यनादरे' इति चतुर्थी । जवेन वेगेन गोष्ठ्याः सभातः निरगात् निर्गतवान् । मूर्खाणां न क्वापि विवेकावकाश इति भावः ॥ ४८ ॥

तदन्विति । तदनु दुर्योधननिर्गमनानन्तरं एषः दनुजारातिः श्रीकृष्णः । तादृशेन किं वा संधानं इत्यादिविधेन तस्य दुर्योधनस्य अवलेपवचनेन साहंकारवाक्येन यो रोषः क्रोधः तेन यः स्मितलेशः हासलवः तेन रूषितः व्याप्तः अधरः यस्य तथोक्तः सन् । भिया क्षत्रियलोकमात्रविपत्तिभयेन विहस्तान् व्याकुलान् मुदा संतोषेण निरस्तान् त्यक्तान् । तच्छून्यानिति यावत् । समस्तानपि सभास्तारान् सभ्यान् [१]पुरस्तात् अग्रे निरीक्ष्य दृष्ट्वा पुनरपि वाचं एवं वक्ष्यमाणप्रकारेण जगाद उक्तवान् ॥

धरेति । अधुना धराभुजा धृतराष्ट्रेण किं कार्यम् । तटिनीभुवा भीष्मेणापि किम् । दूत्ये वसता वर्तमानेन मयापि किम् । अस्माभिस्तु पार्थाय धरित्री न दाप्यत एवेत्यर्थः । परंतु सा दुर्निवार्यत्वेन प्रसिद्धा गन्धवहस्य वायोः सूनोः भीमस्य गदैव पार्थाय धर्मराजाय धरित्रीं भूमिं दातुं दापयितुं प्रभवेत् समर्था भवेत् ॥ ४९ ॥

---

१. 'पुरस्तात्' इति नास्ति क्वचित्. २. 'व्याजहार' इति पाठः.

शौरेस्तां वाचमाकर्ण्य साध्वसाक्रान्तचेतसः ।
जोषंभावं सभास्तारा युगपद्दधुरुत्तरम् ॥ ५० ॥

बहिः स संमन्त्र्य बलावलिप्तैस्त्रिभिः सहायैर्धृतराष्ट्रसूनुः ।
गन्धर्वराजेन कृतां दशां स्वां गदाग्रजन्मानमियेष नेतुम् ॥५१॥

श्रुत्वा तत्कुपितो हरिः स्वयमसावेकोऽपि सर्वात्मक-
स्ताराभिर्नवभिर्ग्रहैर्निबिडितां शैलैर्वनैः सागरैः ।
पेट्यां भूषणमञ्जरीमिव धृतां कुक्षौ जगन्मण्डलीं
जङ्घालामतनोत्सभाजिरजुषां दृक्पङ्क्तिघण्टापथे ॥ ५२ ॥

---

**शौरेरिति** । तां उक्तविधां शौरेः वाचं आकर्ण्य साध्वसेन भयेन आक्रान्तं चेतः येषां ते सभास्ताराः सभ्याः युगपत् एकदा जोषंभावं तूष्णीमवस्थानमेव उत्तरं प्रतिवाक्यमिति श्लिष्टरूपकम् । दधुः चक्रुः । भीताः सर्वे न किंचिदवद-न्नित्यर्थः । 'तूष्णीं जोषं भवेन्मौने' इति वैजयन्ती ॥ ५० ॥

**बहिरिति** । स गोष्ठ्या निर्गतः धृतराष्ट्रसूनुः दुर्योधनः बलेन चतुरङ्गेण शौर्येण वा अवलिप्तैः गर्वितैः त्रिभिः सहायैः कर्णशकुनिदुःशासनैः सह संमन्त्र्य आलोच्य गदस्य यादवभेदस्य अग्रजन्मानं ज्येष्ठं श्रीकृष्णं गन्धर्वराजेन चित्रसे-नेन कृतां स्वां स्वीयां दशां बन्धनावस्थां नेतुं प्रापितुं इयेष इच्छति स्म । तं बन्द्धुमालोचितवानित्यर्थः । सर्वतोमुखं हि दौरात्म्यं खलानामिति भावः ॥५१॥

**श्रुत्वेति** । सर्वेषां प्राणिनां आत्मैवात्मकः जीवरूपः, सर्वं चराचरात्मकं प्रपञ्चं आत्मा स्वरूपं यस्येति वा । 'सर्वं खल्विदं ब्रह्म' इति श्रुतेः । अतएव स्वयमेकोऽपि असौ हरिः श्रीकृष्णः तत् दुर्योधनदुरालोचितं श्रुत्वा । दुर्योधना-दावन्तर्यामितया वर्तमानत्वादिति भावः । कुपितः क्रुद्धः सन् ताराभिः अश्वि-न्यादिभिः, नवभिः ग्रहैः सूर्यादिभिः, शैलैः मेर्वादिभिः, वनैः नैमिषादिभिः, सागरैः क्षीरोदादिभिः, निबिडितां सान्द्रितां कुक्षौ धृताम् । अतएव पेट्यां मञ्जूषायां धृतां भूषणानां कटकमुकुटादीनां मञ्जरीं समूहमिव स्थिताम् । जगतां भूरादिलोकानां मण्डलीं समूहम् । सभायाः अजिरं प्राङ्गणं जुषन्त इति जुषां सभ्यानां दृशां नेत्राणां पङ्क्तिरेव घण्टापथः राजमार्गः तस्मिन् जङ्घालां अति-वेगेन वर्तमानाम् । तन्नेत्रविषयामित्यर्थः । अतनोत् चक्रे । विश्वरूपं सद्यः प्रदर्शितवानित्यर्थः । उपमालंकारः । शार्दूलविक्रीडितं वृत्तम् ॥ ५२ ॥

---

१. 'पेटी' इति पाठः

तस्मिन्नङ्गुष्ठमात्रे नव इव मुकुरे वीक्ष्य सर्वं प्रपञ्चं
विस्मेराः[1] सिद्धविद्याधरसुरनिकराः पुष्पवृष्टीर्[2]व्यमुञ्चन् ।
सान्द्रं मोहान्धकारं सकलमुनिजनः संमदाश्रूणि भीष्मः
क्षत्ताक्ष्णोः पक्ष्मकम्पं[3] कुरु[4]पुरजनता प्रेम दुर्योधनेऽपि ॥५३॥

अस्याट्टहासध्वनिरादिपुंसो विशृङ्खलं व्योम्नि विजृम्भमाणः ।
दिक्पालसौधावलिजालकानामध्यापकत्वं विभरांबभूव ॥ ५४ ॥

संस्तूयमानचरितस्य जनैस्त्रिलोकी-
साधारणीकृतकृपस्य हरेः प्रसादात् ।
चक्षुष्मतां समधिरुह्य धुरं मुहूर्तं
भूयस्ततोऽप्यवततार स भूमिपालः ॥ ५५ ॥

---

**तस्मिन्निति** । अङ्गुष्ठमात्रे 'अङ्गुष्ठमात्रः पुरुषः' इत्यादिश्रुतिसिद्धाङ्गुष्ठ-परिमितमाने तस्मिन् सर्वात्मके श्रीकृष्णे परब्रह्मणि नवे निर्मले मुकुरे दर्पण इव सर्वं चराचरात्मकं प्रपञ्चं वीक्ष्य विस्मेराः विस्मयान्विताः सिद्धानां विद्याधराणां च देवयोनिविशेषाणां सुराणां च निकराः वृन्दानि पुष्पाणां वृष्टीः व्यमुञ्चन् । सकलमुनिजनः सान्द्रं मोहमेव अन्धकारं व्यमुञ्चत् । भीष्मः संमदाश्रूणि आनन्दबाष्पाणि व्यमुञ्चत् । क्षत्ता विदुरः अक्ष्णोः पक्ष्मणोः कम्पं निमेषोन्मेषरूपं व्यमुञ्चत् । कुरुपुरे हस्तिननगरे जनता जनसमूहः दुर्योधने प्रेमापि व्यमुञ्चत् । प्रेमत्यागः 'अपन्थानं तु गच्छन्तं सोऽदरोऽपि विमुञ्चति' इति न्यायादिति भावः । अत्रानेकक्रियायौगपद्यात् समुच्चयालंकारः । अत्र सुरनिकरः पुष्पवृष्टिं मुमोचेति 'संमदादश्रु' इति चैव पठनीयम् । यथाश्रुतपाठे तु कर्तृकर्मक्रियाणां विभिन्नसंख्याकत्वेन प्रक्रमभङ्गाख्यदोष इति ध्येयम् । स्रग्धरा वृत्तम् ॥ ५३ ॥

**अस्येति** । अस्य विश्वरूपिणः आदिपुंसः प्रथमपुरुषस्य श्रीकृष्णस्य अट्टहास-ध्वनिः उच्चैर्हासः किलकिलशब्दः व्योम्नि आकाशे विशृङ्खलं निष्प्रतिबन्धं यथा तथा विजृम्भमाणः सन् । दिक्पालानां इन्द्रादीनां सौधावलीषु हर्म्यपङ्क्तिषु जालकानां गवाक्षाणां अध्यापकत्वं अध्ययनाचार्यत्वं विभरांबभूव वहति स्म । तानि प्रत्यध्वनयदित्यर्थः । 'भीश्री—' इत्यादिना श्लुवद्भावात् भृञोऽभ्यासः ॥५४॥

**संस्तूयमानेति** । जनैः लोकत्रयवासिभिः संस्तूयमानानि कीर्त्यमानानि चरितानि दुष्टनिग्रहशिष्टानुग्रहरूपाणि यस्य तस्य । त्रयाणां लोकानां समाहारः त्रिलोकी । 'द्विगोश्च' इति ङीप् । तस्यां साधारणीकृता अवैषम्यं प्रापिता कृपा दया येन तस्य । अतएव हरेः श्रीकृष्णस्य प्रसादात् । सः अन्धत्वेन प्रसिद्धः

---

१. 'संस्मेराः' इति पाठः. २. 'सदसः पुष्पवृष्टिम्'; 'सदसः पुष्पवर्षम्' इति-पाठौ. ३. 'पक्ष्मपातं' इति पाठः. ४. 'करि' इति पाठः.

ओजस्तवेदमुपसंहर माधवेति
घुष्यत्सु सत्सु गुरुभीष्मपुरोगमेषु ।
घोरं विहाय निमिषेण कुशेशयाक्षो
गोपीदृशां कुतुकहेतुमवाप रूपम् ॥ ५६ ॥

ततस्तादृशं निरुपमानं[1] तस्य महिमानमनुभूय चरितार्थो मुनिसार्थः[2] शान्तमूर्तिं तमेवमस्तौषीत्—

भगवन्, महात्मभिरपि योगिभिरविदितप्रभावाय तस्मै भवते[3] नमः ।

---

भूमिपालः धृतराष्ट्रः । चक्षुष्मतां सनेत्राणां धुरं रीतिम् । चक्षुष्मत्तामिति यावत् । मुहूर्तं अल्पकालं समधिरुह्य प्राप्य भूयः तादृग्महिमानं भगवन्तं दृष्ट्वा पुनरपि ततः चक्षुष्मद्रीतेः अवततार अपक्रान्तवान् । अन्धो बभूवेत्यर्थः । आजन्मनः कंचिदपि अनवलोक्य अवलोक्य चाद्य जगन्मयं भगवन्तं पुनरन्यावलोकनस्यातिजुगुप्सितत्वादिति भावः । अत्र त्रिलोकीत्यादिविशेषणस्य तत्तादृक् अपराधिदुर्योधनजनकत्वेऽपि धृतराष्ट्रस्य चक्षुर्दानौचित्याभिप्रायगर्भत्वात्परिकरालंकारः ॥५५॥

ओज इति । हे माधव श्रीकृष्ण, तव त्वदीयं इदं विश्वात्मकं विश्वभयंकरं च ओजः रूपं उपसंहर संक्षिप । इत्युक्तप्रकारेण गुरुः द्रोणः भीष्मश्च द्वौ पुरोगमौ प्रधानौ येषां तेषु सत्सु सज्जनेषु घुष्यत्सु उच्चैः शब्दायमानेषु सत्सु कुशेशये कमले इव अक्षिणी यस्य तथोक्तः श्रीकृष्णः । 'शतपत्रं कुशेशयम्' इति कमलपर्यायेष्वमरः । निमिषेण क्षणेनैव घोरं जगद्भयंकरं रूपं विश्वाकारं विहाय गोपीनां गोपाङ्गनानां दृशां नेत्राणां कुतुकहेतुं कौतूहलकारणं रूपं चतुर्भुजादिविशिष्टमाकारं अवाप आप्तवान् । प्रसन्ने भगवति किं दुर्लभं महतां इति भावः । अत्र गोपीदृक्कुतुकहेतुत्ववस्तुना अतिमूढानां तासामेव नयनानन्दकरत्वे किमुतान्येषां इत्यर्थापत्त्यलंकारप्रतीतेः वस्तुनालंकारध्वनिः ॥ ५६ ॥

तत इति । ततः उक्तरूपस्वीकारानन्तरं तादृशं तद्विधं अतएव निरुपमानं असदृशं तस्य भगवतः महिमानं प्रभावं अनुभूय दृष्ट्वा चरितार्थः कृतार्थः मुनीनां सार्थः संघः । शान्ता लोकलोचनानन्दकरी मूर्तिर्यस्य तथोक्तं तं श्रीकृष्णं एवं वक्ष्यमाणप्रकारेण अस्तौषीत् स्तुतवान् । स्तौतेः कर्तरि लुङ् ॥

भगवन्निति । हे भगवन् श्रीकृष्ण, महान् ब्रह्मात्मैक्यानुसंधानात्तदैक्यावाप्त्या अपरिच्छिन्नः आत्मा चित्प्रतिबिम्बः जीवः येषां तथोक्तैः । योगः ब्रह्मणि मनोलयजनकः सांख्यतारकामनस्कनामभिः (?) प्रसिद्धः एषामस्तीति योगिभिरपि अविदितः अज्ञातः प्रभावः सामर्थ्यं जगज्जन्मादिकर्तृत्वं यस्य तथोक्ताय तस्मै भवते तुभ्यं नमः । इतीदमग्रिमदशश्लोक्येकवाक्यम् ॥

---

१. 'तस्य निरुपमानं' इति पाठः. २. 'सार्थः समुपस्थत्य' इति पाठः. ३. 'प्रभवते भवते भगवते' इति पाठः.

दुग्धाम्बुराशितनयानयनद्वयेन
तुल्याकृतित्वमहिमानमिवोपगन्तुम् ।
मत्स्यत्वमेत्य भुवि यः सुरवैरिनीता
मध्येसमुद्रमनवीनगवीर्विचिक्ये ॥ ५७ ॥

मन्थानशैलमपि मार्गरुधं हिमांशो-
र्वीचीकणैः सदृशमङ्गविषक्तिभाग्भिः ।
काये बभार चरमे कमठाकृतिर्यो
जीवातुमुद्गमयितुं जलधेः सुराणाम् ॥ ५८ ॥

दंष्ट्राग्रवर्ति किटिवेषधरस्य यस्य
क्ष्मामण्डलं कुवलयाङ्कुरकोमलाभम्[१] ।
ऊर्ध्वप्रसृत्वरबकावलिकावलीढः
प्रावृट्पयोदवलयस्य बभार लीलाम् ॥ ५९ ॥

दुग्धेति । यो भवान् दुग्धाम्बुराशितनयायाः महालक्ष्म्याः नयनयोर्द्वयेन तुल्या आकृतिः मूर्तिः यस्य तस्य भावः तत्त्वमेव महिमा विलासः तं उपगन्तुं प्राप्तुमिवेत्युत्प्रेक्षा । मत्स्यत्वं मीनरूपं एत्य स्वीकृत्य भुवि लोके सुरवैरिणा सोमकेन नीताः अपहृताः अनवीनाः अकृत्रिमाः गवीः श्रुतिवाचः मध्येसमुद्रं समुद्रस्य मध्ये । 'पारे मध्ये षष्ठ्या वा' इत्यव्ययीभावः । विचिक्ये अन्वेषितवान् । चिनोतेर्विपूर्वात् कर्तरि लिट् ॥ ५७ ॥

मन्थानेति । यो भवान् जलधेः क्षीरसमुद्रात् सुराणां देवानां जीवातुं जीवनौषधं अमृतं उद्गमयितुं जनयितुं कमठस्य कूर्मस्येव आकृतिः रूपं यस्य तथोक्तः सन् हिमांशोः चन्द्रस्यापि मार्गं रुणद्धीति तद्रुधम् । तावदुन्नतमपीत्यर्थः । मन्थानशैलं मन्दराद्रिं अङ्गे विषक्तिं संबन्धं भजन्तीति भाग्भिः । वीचीनां क्षीराब्धितरंगाणां कणैः लेशैः चरमे काये पृष्ठे बभार धृतवान् । बिभर्तेः कर्तरि लिट् ॥५८॥

दंष्ट्रेति । किटेः वराहस्येव वेषं रूपं धरतीति धरस्य वराहरूपिणः यस्य भवतः दंष्ट्रायाः अग्रे वर्तत इति वर्ति । कुवलयाङ्कुरस्य नीलोत्पलदलस्येव कोमला आभा नैल्यं यस्य तथोक्तं क्ष्मामण्डलं भूमण्डलम् । ऊर्ध्वं प्रसृत्वरायां गच्छन्त्यां बकानां आवलिकायां पङ्क्तौ अवलीढस्य सक्तस्य प्रावृट्पयोदवलयस्य वार्षिकमेघमण्डलस्य लीलां बभार । 'बकोटघट–' इति पाठेऽप्युक्त एवार्थः । अत्रान्यलीलाया अन्यत्रासंभवेनौपम्याक्षेपादसंभवद्धर्मसंबन्धनिबन्धनो निदर्शनालंकारः । यत्तु 'वराहदंष्ट्रायाः शुभ्रत्वात् भूमेश्च कृष्णत्वात् तथा दृष्टान्तोक्तिः' इति नृसिंहः, तत्तस्यानालंकारिकतां स्फोटयति । 'चेद्बिम्बप्रतिबिम्बत्वं दृष्टान्तस्तदलंकृतिः'

१. 'कुवलयाकर' इति पाठः.

इन्द्रद्विषो मदगजस्य हिरण्यनाम्नो
भेदं रसस्य पिशितस्तवकावलीनाम् ।
जिज्ञासमान इव यो धृतसिंहभावः
स्तम्भादुदेत्य नखरैस्तमुरस्यभाङ्क्षीत् ॥ ६० ॥

याञ्चाप्रतारणवशादधियज्ञशालं
यो वामनत्वमवलम्ब्य बलिं निगृह्णन् ।
दुःखं सतां स्वमिव खर्वतमं सुखं च
स्वीयं पदक्रममिवोन्नतमाततान ॥ ६१ ॥

सृष्टौ पुरा मुखभुजोरुपदे मुरारे-
रङ्गं द्वितीयमभजत्किमु वन्ध्यभावम् ।

---

इत्युक्तलक्षणस्यात्र प्रसक्त्यभावात् 'असंभवद्वस्तुसंबन्ध उपमार्थो निदर्शना' इति लक्षणस्य यथोक्तानुगामित्वाच्चेति ॥ ५९ ॥

इन्द्रेति । यो भवान् इन्द्रस्य द्विषः शत्रोः हिरण्येति नाम यस्य तस्य । हिरण्यमिति हिरण्यकशिपुरिति नामैकदेशे नामग्रहणम् । मदगजस्येति रूपकम् । पिशितस्तवकावलीनां मांसपिण्डपङ्क्तीनां संबन्धिनः रसस्य आस्वादस्य भेदं विशेषं जिज्ञासमानः ज्ञातुमिच्छुः सन्निवेत्युत्प्रेक्षा उक्तरूपकानुप्राणिता । धृतः सिंहस्येव भावः रूपं येन तथोक्तः सन् । स्तम्भात् प्रह्लादस्पर्धया हिरण्यकशिपुनिर्दिष्टात् उदेत्य आविर्भूय नखरैः नखैः तं हिरण्यनामकं मदगजं उरसि वक्षसि अभाङ्क्षीत् भञ्जितवान् । भञ्जेः कर्तरि लुङ् ॥ ६० ॥

याञ्चेति । यो भवान् यज्ञशालायां अधियज्ञशालं याञ्चया त्रिपदमात्रभूमिक्षया प्रतारणस्य वञ्चनायाः वशात् पारतन्त्र्याद्धेतोः बलिं नाम दानवं निगृह्णन् निग्रहिष्यन्निति वर्तमानसामीप्ये वर्तमाननिर्देशः । वामनत्वं वामनरूपम् । 'खर्वो ह्रस्वश्च वामनः' इत्यमरः । अवलम्ब्य स्वीकृत्य । स्वं आत्मानमिव सतां दुःखं खर्वतमं अत्यन्तह्रस्वम्, सतां सुखं च स्वीयं पदक्रमं पादविन्यासमिव उन्नतं अत्यन्तदीर्घं आततान अकरोत् । आङ्पूर्वात्तनोतेः कर्तरि लिट् । अत्र प्रकृतयोः भगवच्छरीरसज्जनदुःखयोरतिह्रस्वीकरणेन तत्पदक्रमतत्सुखयोश्चात्युन्नतीकरणेन चौपम्यस्य गम्यत्वात्केवलप्रकृतगोचरतुल्ययोगितामेदद्वयस्य संसृष्टिः ॥ ६१ ॥

सृष्टाविति । यस्य भवतः परशुरामरूपिणः संबन्धिषु आहवेषु युद्धेषु करे ताण्डवितः नर्तितः कुठारः परशुर्नामायुधविशेषः पुरा प्राथमिकायां सृष्टौ मुरारेः श्रीमहाविष्णोः संबन्धिनि मुखे भुजे ऊरौ पदे च । तेषां मध्य इत्यर्थः । प्राण्यङ्गत्वाद्द्वन्द्वैकवद्भावः । द्वितीयं अङ्गं भुजः । वन्ध्यस्य भावः वन्ध्यत्वम् । क्षत्रि-

---

१. 'इन्द्रद्विपन्' इति पाठः. २. 'उपेत्य' इति पाठः. ३. 'वाटम्' इति पाठः.

इत्येव संशयमशेषजनस्य चक्रे
यस्याहवेषु करताण्डवितः कुठारः ॥ ६२ ॥

श्वश्रूर्मुनेरजनि यस्य पदाब्जधूलि-
र्यत्कृष्टमीशधनुराप शरव्यकृत्यम् ।
यस्माद्भियाब्धिरपि कम्पमकम्पमागा-
द्यत्पत्रिणां विघस एव विभीषणोऽभूत् ॥ ६३ ॥

हन्यामहं युधि रिपूनहमेव हन्या-
मित्येव यन्मुसललाङ्गलयोर्विवादः ।

---

याजननमिति यावत् । अभजत् प्राप । किम्विति स्फुटार्थे । अव्ययानामनेकार्थकत्वाभिधानात् । अन्यथा कथं नः क्षत्रिया न दृश्येरन्नित्यर्थः । इत्युक्तप्रकारं सम्यवच्छेते अर्थान्तरमत्रेति व्युत्पत्त्या संशयं अर्थापत्तिज्ञानं निःक्षत्रियान्यथानुपपत्तिकल्पितम् अशेषस्य जनस्यैव । न तु यस्यकस्यचिदित्यर्थः । चक्रे । 'ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥' इति श्रुत्यपेक्षया निःक्षत्रियान्यथोपपत्तेः हेतोर्बलीयस्त्वादिति । न च वेदाऽप्रामाण्यज्ञानेन बौद्धत्वापत्तिः । कविनिरङ्कुशन्यायस्यैव शरणीकरणीयत्वात् । अत एव माघकाव्ये यमुनावर्णनप्रस्तावे—'व्यक्तं बलीयानिति हेतुरागमादपूरयत्सा जलधिं न जाह्नवी । गाङ्गौघनिर्भर्त्सितशंबुकन्धरासवर्णमर्णः कथमन्यथास्य तत् ॥' इत्युक्तम् । सा यमुनेत्यर्थः । इत्यलं प्रसक्तानुप्रसक्त्या । अत्र क्षत्रियकुलनिर्मूलनस्य भगवद्भुजवन्ध्यत्वरूपेण वर्णनात्पर्यायोक्त्यलंकारस्य अर्थापत्तिप्रमाणालंकारस्य च द्वयोरेकवाचकानुप्रवेशसंकरः ॥ ६२ ॥

**श्वश्रूरिति** । यस्य भवतः राघवरूपिणः पदाब्जस्य धूलिः मुनेः गौतमस्य श्वश्रूः पत्नीजननी अजनि अभूत् । तत्स्पर्शान्मुक्तशापा पतिमगच्छदहल्येत्यर्थः । येन भवता कृष्टमीशधनुः शरव्यस्य लक्ष्यस्य कृत्यं भङ्गम् । अपभग्नं आसीदित्यर्थः । यस्माद्भवतः भिया अब्धिः तादृग्गाम्भीर्यशाली । कम्पं आग्नेयास्त्रप्रयोगकाले क्षोभम्, अकम्पमपि उपायचिन्तनकाले नैःशब्द्याय निस्तरंगीभूय अचाञ्चल्यं च । आगात् प्राप्तवान् । 'हस्तेनाब्धिं स्तम्भितवान्वीचीकोलाहलोद्धतम्' इति सेतुमाहात्म्ये । हस्तेन । हस्तसंज्ञयेत्यर्थः । यस्य भवतः पत्रिणां बाणानां विघसः भोजनशेषः विभीषण एव अभूत् । तदितरे सर्वेऽपि राक्षसाः निहतास्तैरित्यर्थः । अत्र तृतीयपादवाक्यार्थे विरोधाभासेन पर्यायोक्त्यलंकारत्रयस्य इतरवाक्यत्रयार्थघटकस्य संसृष्टिः ॥ ६३ ॥

**हन्यामिति** । यस्य भवतः बलरामरूपिणः संबन्धिनोः मुसललाङ्गलयोः

---

१. 'उत्कृष्ट' इति पाठः. २. 'पत्रिणो' इति पाठः.

यस्याम्बरं निजरुचिप्रतिमल्लवर्णं
यत्षष्ठसंस्करणमासवपानमाहुः ॥ ६४ ॥

यः स्तन्यपानसमये[1] बत पूतनायाः
प्राणानपि प्रविदधे परमोपदंशम् ।
नाकाधिपस्य वनभूरपि येन सद्यो
नारीमुदे कृतनखंप[2]चधूलिरासीत् ॥ ६५ ॥

वार्यैस्तपोधनवरेण्यमनःखलीनै-
स्तृण्यां मुहुः कवलयञ्जगदार्तिरूपाम् ।
नीचान्विधातुमसुरान्निजशृङ्गतुल्या-
न्कोपादुदेष्यति चयः कुहनातुरंगः ॥ ६६ ॥

---

आयुधविशेषयोः युधि रिपून् अहमेव हन्यां मारयेयम्, अहमेव हन्याम्, इत्युक्तप्रकार एव विवादः कलहः अभूत् । यस्य अम्बरं निजायाः रुचेः सितायाः प्रतिमल्लः विरोधी वर्णः असितरूपः यस्य तथोक्तम् । यस्य षष्ठं संस्करणं अन्नप्राशनसंस्कारं आसवपानं सुरापानं आहुः । लोका इति शेषः । गर्भाधानसीमन्तपुंसवनजातकर्मनामकरणान्नप्राशनचौलोपनयनादीनां षोडशकर्मणां अन्नप्राशनं षष्ठमितत्वेन निर्दिष्टमिति ध्येयम् ॥ ६४ ॥

य इति । यः कृष्णरूपी भवान् पूतनायाः कंसप्रेषितासुर्याः संबन्धिनः स्तन्यस्य स्तनक्षीरस्य पानसमये । प्राणान् पूतनाया इति योज्यम् । परमं तत्कालौचित्यादतिश्रेष्ठं उपदंशं व्यञ्जनविशेषमपि प्रविदधे चक्रे । बतेत्याश्चर्ये । 'चरम–' इति पाठे भोजनावसानिकेत्यर्थः । नाकाधिपस्य इन्द्रस्यापि वनभूः नन्दनवनप्रदेशः नार्याः सत्यभामायाः मुदे संतोषं कर्तुमिति 'क्रियार्थ–' इत्यादिना चतुर्थी । येन कृता नखंपचा पारिजातापहरणप्रविष्टसौरतेजसा अत्युष्णा धूलिः यस्यां तथोक्ता आसीत् ॥ ६५ ॥

वार्य इति । तपोधनानां वरेण्यानि वीतमोहत्वेन श्लाघ्यानि मनांस्येव खलीनानि वक्त्रबन्धनायोयन्त्राणि तैः वार्यैः ग्राह्यः जगतः लोकस्य आर्तिरूपां पीडात्मिकां तृण्यां तृणसंहतिं मुहुः कवलयन् नाशयन् । कुहनातुरंगः कपटाश्वरूपी यो भगवान् कोपात् नीचान् खलान् असुरांशान् म्लेच्छादीन् निजशृङ्गाभ्यां तुल्यान् तत्कल्पान् नष्टान् विधातुं कर्तुं उदेष्यति कल्यन्ते आविर्भविष्यति । सर्वत्र यच्छब्दः 'सै भवते' इति पूर्वतनगद्यगतेनान्वयात्तत्रतत्र 'शेषे प्रथमः' इति प्रथमपुरुष इति ध्येयम् ॥ ६६ ॥

---

१. 'सति' इति पाठः. २. 'पद' इति पाठः.

एतैः स्तवैर्हृष्टमना यथार्थैर्मन्दस्मितश्रीमधुराधरोष्ठः ।
पीठादुदस्थादथ पीतवासा मेरोर्नितम्बादिव मेघशावः ॥ ६७ ॥

आस्थानाद्बहिरेत्य कैटभरिपुर्गाङ्गेयमालिङ्ग्य तं
पश्चार्धे परिमृश्य भूपमितरानापृच्छ्य सर्वान्कुरून् ।
आघ्रायातिचिरेण मूर्ध्नि विदुरं युक्तं शताङ्गं हयै-
रारूढोऽभिययौ विराटनगरीमन्तः स्मरन्पाण्डवान् ॥ ६८ ॥

श्रुत्वा ततः परमतं पुरुषोत्तमात्ते
फेनायमानरणसंनहनाब्धिपूराः ।
आराधयन्विधिवदस्त्रगणं श्मशाने
पीतां वमन्तमिव कान्तिमिषेण धूम्याम् ॥ ६९ ॥

---

एतैरिति । एतैः उक्तविधैः यथार्थैः । न त्वारोपितैरित्यर्थः । स्तवैः हृष्टं संतुष्टं मनो यस्य सः । अतएव मन्दस्मितस्य दरहासस्य श्रिया कान्त्या मधुरः मनोज्ञः अधरोष्ठः यस्य सः । पीतं वासः वस्त्रं यस्य सः श्रीकृष्णः । अथ मुनिसंघस्तोत्रानन्तरं पीठात् मेघशावः तरुणमेघः मेरोः नितम्बात् कटकादिव । उदस्थात् उत्थितवान् । उत्पूर्वात्तिष्ठतेः कर्तरि लुङ् । उपमालंकारः ॥ ६७ ॥

आस्थानादिति । कैटभस्य दैत्यस्य रिपुः श्रीकृष्णः आस्थानात् सभायाः । 'सभासमितिसंसदः । आस्थानी क्लीबमास्थानं स्त्रीनपुंसकयोः सदः ॥' इत्यमरः । बहिरेत्य तं भगवद्भक्त्या प्रसिद्धं गङ्गाया अपत्यं गाङ्गेयं भीष्मम् । 'स्त्रीभ्यो ढक्' इति ढक् । आलिङ्ग्य भूपं धृतराष्ट्रं पश्चार्धे ऊर्ध्वकाये परिमृश्य संस्पृश्य । इतरान् भूपादन्यान् सर्वान् कुरून् सोमदत्तादीन् आपृच्छ्य गमनप्रश्नं कृत्वा । विदुरं मूर्ध्नि अतिचिरेण आघ्राय परिचुम्ब्य । पुत्रवत् वात्सल्यादिति भावः । हयैः अश्वैः शैब्यादिभिः युक्तं शताङ्गं रथं आरूढः सन् विराटनगरीं प्रति अन्तः मनसि पाण्डवान् स्मरन् सन् । अभिययौ प्रतस्थे । शार्दूलविक्रीडितं वृत्तम् ॥ ६८ ॥

श्रुत्वेति । ततः पुरुषोत्तमात् श्रीकृष्णात् । हास्तिनपुरागतादिति शेषः । परस्य शत्रोः दुर्योधनस्य मतम् 'सूच्यग्रं न प्रदास्यामि पाण्डवेऽभ्यो भुवः स्थलम्' इति पक्षं श्रुत्वा । फेनायमानः अतिप्रवर्धमानः रणसंनहनं युद्धोद्योग एवाब्धिपूरः समुद्रप्रवाहः येषां तथोक्ताः ते पाण्डवाः कान्तिमिषेण नित्यरूपव्याजेन श्मशाने पीतां कवलितां धूम्यां चिताधूमसंहतिं वमन्तं उद्गिरन्तमिव स्थितं अस्त्राणां आयुधानां गणं विधिवत् यथाशास्त्रं आराधयन् पूजयामासुः । आङ्पूर्वाद्राधेः कर्तरि लङ् । अत्र प्रवर्धमानरणसंनाहस्य विशेषणगत्या स्वेष्टदेवताभूतास्त्रपूजनहेतुत्वात्काव्यलिङ्गभेदः वमन्तमिवेति सापह्नवोत्प्रेक्षया रणसंनाहनाब्धिपूरेति रूपकेण च संसृष्टः ॥ ६९ ॥

तत्रान्तरे[1] ।

ततः परं जह्नुकुमारिकायास्तटीवने कृत्यविदां पुरोगा ।
पृथा तपस्यन्तमवाप कर्णं कर्णे[2] प्रवृत्तिस्तु न किंचिदस्याः ॥ ७० ॥
कमनीययशोभरे तनूजे कवचोत्कर्तनकर्कशाङ्गकेऽपि[3] ।
नलिनान्मृदुलं नरेन्द्रपत्न्या[4] नयनं तत्र चिरेण संचचार ॥ ७१ ॥
स तत्र पूतः परमाभिषेकैस्तपोवसाने[5] तपनस्य सूनुः ।
श्रोत्रे वितेने शुचिमक्षमालां नेत्रे च राज्ञीं निकटं[6] प्रपन्नाम् ॥ ७२ ॥
विनतेः पदयोरनन्तरं विहिताशीः परिरभ्य तं सुतम् ।
परिहर्तुमुवाच पञ्चतामुभयीं धर्मसुतादिसूनुषु ॥ ७३ ॥

---

तत्रान्तर इति । तत्रान्तरे तस्मिन्नेव काल इत्युत्तरेणान्वयः ॥

तत इति । ततः परं आयुधाराधनानन्तरं कृत्यविदां कर्तव्यकोविदानां मध्य इति निर्धारणषष्ठी । पुरोगा श्रेष्ठा । पृथा कुन्ती । जह्नुकुमारिकाया गङ्गायाः तटीवने तीरोद्याने । तपस्यन्तं तपःकुर्वन्तं कर्णं पुत्रं अवाप । अस्याः प्रवृत्तिः आगमनवार्ता तु किंचित् ईषदपि कर्णं श्रोत्रं तस्य नावाप । योगाद्ब्रह्मणि लीनस्य मनसः संवन्धाभावादित्यर्थः ॥ ७० ॥

कमनीयेति । कवचस्य सहजस्य उत्कर्तनेन इन्द्राय दातुं उत्पाटनेन कर्कशानि व्रणकिणैः परुषाणि अङ्गान्येव अङ्गकानि यस्य तथोक्तेऽपि कमनीयः लोकैकमनोहरः यशोभरः कीर्त्यतिशयः यस्य तस्मिन् । किंच तनूजे आत्मसंभवे तत्र कर्णे नलिनात् कमलादपि मृदुलं सुकुमारं नरेन्द्रपत्न्याः कुन्त्याः नयनं चिरेण । न तु क्षणमित्यर्थः । संचचार । पुत्रवात्सल्यात्पुनःपुनरपश्यदित्यर्थः । प्रेम नात्मव्यथां चिन्तयतीत्यर्थः । यत्त्वत्र 'तत्र गङ्गातटे कवचोत्कर्तनेन' इति नृसिंहव्याख्यानम्, तन्न । उक्तस्वारस्यायोगात्प्रत्युत दूरान्वयः,कवचोत्कर्तने गङ्गातटवृत्तित्वप्रतीत्यापत्तिश्चेत्याद्यनुसंधेयम् । अत्र तादृङ्मृदुलनयनतादृक्कठिनाङ्गयोः घटनाया वैरूप्याद्विरूपघटनात्मको विषमप्रभेदः । पुत्रवात्सल्ययशोभरसमर्थितकर्कशाङ्गमृदुनयनसंचारात्मककाव्यलिङ्गभेदश्च द्वावप्येकवाचकानुप्रवेशेन संकीर्णौ ॥ ७१ ॥

स इति । परमैः पावनैः अभिषेकैः गङ्गास्नानैः पूतः पवित्रः तत्र तीरे तपस्यन् सः तपनस्य सूर्यस्य सूनुः कर्णः । तपसः अवसाने समाप्तौ । शुचिं शुद्धां अक्षमालां जपमालिकां श्रोत्रे वितेने निहितवान् । निकटं समीपं प्रपन्नां गतां राज्ञीं राजपत्नीं कुन्तीं च नेत्रे वितेने । अपश्यदित्यर्थः ॥ ७२ ॥

विनतेरिति । राज्ञी पदयोः विनतेः प्रणामात् अनन्तरं विहिता कृता

---

१. 'अत्रान्तरे' इति पाठः. २. 'कर्णे' इति पाठः. ३. 'जर्जराङ्गके', 'झर्झराङ्गके' इति च पाठः. ४. 'पुत्र्याः' इति पाठः. ५. 'सवनाभिषेकैः' इति पाठः. ६. 'निकट' इति पाठः.

अयि वत्स रवेरनुग्रहादजनिष्ठा मयि भाग्यमर्थिनाम् ।
तनुरक्षणमात्रकारिणौ तव राधातिरथौ[1] न जन्मभूः ॥ ७४ ॥
जहीहि राधातनयत्वबुद्धिं सहैव दुर्योधनसौहृदेन ।
गृहाण वाण्या सह धर्म्यया मे सहोदरान्धर्मतनूजमुख्यान् ॥ ७५ ॥
यस्यैकस्यैचन त्वं सहजकवचदः प्रार्थनातुल्यकालं
मातुः साक्षान्निदेशे मम सुकरतमे मा कृथा मन्दभावम् ।
पराङ्मुख्यं विधत्ते गुरुजनवचनानुष्ठिते[2] यस्य चेतो
धिक्शब्दस्याभिधेयं जगदिदमखिलं दोग्धि तस्मै सुखेन[3] ॥ ७६ ॥

---

आशीः आयुष्मान् भव वत्सेत्यादि यया तथोक्ता सती तं सुतं कर्णं परिरभ्य आलिङ्ग्य । धर्मसुतादिषु युधिष्ठिरादिषु सूनुषु पुत्रेषु विषये उभयीं द्विविधां पञ्चतां पञ्चत्वसंख्यां मरणं च परिहर्तुं उवाच वक्ष्यमाणप्रकारेणावदत् । कर्णेन सांगत्ये तेषां षट्त्वसंख्या लोकैकावध्यत्वं च भवतीति भावः । वैतालीयं वृत्तम् ॥ ७३ ॥

अयीति । अयि वत्स हे पुत्र, अर्थिनां याचकानां भाग्यं त्वं मयि रवेः सूर्यस्य अनुग्रहात् प्रसादात् अजनिष्ठाः जातोऽसि । जनेः कर्तरि लुङ् । तनोः रक्षणमात्रं बाल्ये त्वच्छरीरपोषणमेव कुरुत इति कारिणौ । राधा च अतिरथश्च सूतदम्पती द्वौ तव न जन्मभूः उत्पत्तिस्थानं न भवतः । वृत्तं पूर्वोक्तमेव ॥ ७४ ॥

जहीहीति । अयि वत्स, त्वं राधायाः तनयत्वबुद्धिं दुर्योधनस्य सौहृदेन सख्येन सहैव जहीहि त्यज । धर्मतनूजः धर्मराजः मुख्यः प्रथमः येषां तान् धर्मराजभीमार्जुननकुलसहदेवान् सहोदरान् सोदरान् । धर्मादनपेतया धर्म्यया । मे मदीयया वाण्या वाचा सह गृहाण अङ्गीकुरु । मद्वाक्यं युधिष्ठिरादौ सौभ्रात्रं च नातिक्रमणीयमित्यर्थः । अत्र राधातनयत्वबुद्धिदुर्योधनसौहृदयोस्त्यागेन वाणीयुधिष्ठिरादिसौदर्ययोः ग्राह्यत्वेन चौपम्यस्य गम्यत्वात्तुल्ययोगिताद्वयस्याङ्गाङ्गिभावेन संकरः ॥ ७५ ॥

यस्मा इति । अयि वत्स, यस्यैकस्यैचन अनात्मवान्धवाय इन्द्राय प्रार्थनायाः तुल्यकालः यस्मिंस्तथा याच्ञासमकालमेव सहजं कवचं ददातीति तथोक्तः त्वं साक्षात् जननादेव मातुः मम संबन्धिनि सुकरतमे अत्यनायासेन कर्तुं शक्ये । ननु कवचदान इवोत्कर्तनदुःखसाध्य इति यावत् । निदेशे आज्ञायां विषये मन्दस्य भावं मौढ्यं मा कृथाः मा कुरु । 'सुत सुतराम्' इति पाठे निदेशकरणकवचदानयोः सुकरत्वदुष्करत्वप्रतीतिदौर्लभ्यमिति ध्येयम् । किंच यस्य चेतः गुरुजनवचनस्य मातुः पितुर्वा आज्ञाया अनुष्ठिते करणे विषये ।

---

१. 'अधिरथौ' इति पाठः. २. 'अनुष्ठितौ' इति पाठः. ३. 'सुखेन' इति पाठः.

इति दशनकिरणव्याजादन्तश्चिररक्षितं तदंशं स्तन्यं प्रकाशयन्त्या इव कुन्त्या निदेशं कर्णः कर्णदेशाध्वनीनं विधाय साकमञ्जलिना समुचितमुत्तरं बबन्ध ॥

भोजान्ववायो भुवने प्रतीतः कुलं कुरूणां च तथा द्वयेऽस्मिन् ।
तवाम्ब जन्मोपयमश्च चेद्द्वौ त्वय्येव जागर्त्युचितज्ञभावः ॥ ७७ ॥
अङ्गद्वयं मे परिपालनीयमङ्ग त्वया शूरजनाग्रगेण ।
एवं वशे मे वितताम यस्तत्तस्यापि सख्यं किमुपेक्षणीयम् ॥ ७८ ॥

---

पराङ्मुखस्य भावं पराङ्मुख्यं औदासीन्यं विधत्ते वहति । तस्मै पुत्राय इदं अखिलं जगत् धिगिति शब्दस्य अभिधेयं अर्थम् । निन्दामिति भावः । सुखेन । विशृङ्खलमित्यर्थः । दोग्धि करोति । 'धिङ् निर्भर्त्सननिन्दयोः' इत्यमरः । यस्त्वत्र श्लोके 'यस्मैकस्मैचन पुरुषायेन्द्रायेत्यर्थः' इति व्याख्याय 'इन्द्रस्य स्वभर्तृत्वात् नाम्ना तद्ग्रहणमयुक्तमिति तथा व्यपदेशः' इति नृसिंहः, तन्न । अयि वत्स, रवेरनुग्रहादिति मूलासांगत्यापत्तेः । रवेरपि तद्भर्तृत्वेन तस्यापि तत्र नाम्ना व्यपदेशानौचित्यादिति ॥ ७६ ॥

**इतीति** । इत्युक्तप्रकारं अन्तः स्तनगर्भे चिराद्रक्षितं निहितं तस्य कर्णस्य अंशं भागं स्तन्यं स्तनक्षीरं दशनकिरणानां दन्तकान्तीनां व्याजात् प्रकाशयन्त्या बहिःप्रसारयन्त्या इव स्थिताया इत्युत्प्रेक्षा सापह्नवा च । कुन्त्याः निदेशं आज्ञावाक्यं कर्णः कर्णदेशे श्रोत्रमार्गे अध्वनीनं गच्छन्तं विधाय । तच्छ्रुत्वेत्यर्थः । समुचितं उभयलोकश्लाघ्यं उत्तरं प्रतिवाक्यं अञ्जलिना साकं बबन्ध । साञ्जलिबन्धं प्रत्युक्तवानित्यर्थः ॥

**भोजेति** । भोजानां यादवविशेषाणां अन्ववायो वंशः भुवने प्रतीतः प्रख्यातः । कुरूणां कुलं च तथा भुवने प्रतीतम् । हे अम्ब मातः, अस्मिन् द्वये भोजवंशे कुरुवंशे च क्रमेण तव जन्म उत्पत्तिः उपयमः विवाहश्च द्वौ चेत् अभूतां यदि, तर्हि त्वयि उचितज्ञः कर्तव्यकोविदः भावः अभिप्रायः जागर्ति स्फुरत्येव । गुणानामुभयवंशशुद्धिनियतत्वादिति भावः । अत एवानुमानालंकारः । उभयवंशशुद्ध्या उचितज्ञत्वानुमानादिति ॥ ७७ ॥

ततः किमत आह—**अङ्गद्वयमिति** । अङ्ग हे कर्ण, शूरजनानां अग्रगेण अग्रेसरेण त्वया मे मदीयं अङ्गस्य शरीरस्य अङ्गदेशस्य च द्वयं परिपालनीयम् । भुजाभ्यामिति भावः । एवं उक्तप्रकारेण । उक्त्वेति शेषः । यः दुर्योधनः तव अङ्गद्वयं मे मम वशे अधीनत्वे वितताम अकरोत् । मदधीनं कृतवानित्यर्थः ।

---

१. 'चिरकालरक्षितं' इति पाठः. २. 'तदंशं' इति पाठः. ३. 'अध्वनीतं' इति पाठः. ४. 'आबबन्ध' इति पाठः. ५. 'भोजान्वयो यो भुवनप्रतीतः' इति पाठः. ६. 'जन्मोपयमोत्सवौ चेत्' इति पाठः. ७. 'कर्णं' इति पाठः.

परस्य लोकस्य गतेर्हि विघ्नं कृतघ्नतामेव वदन्ति सन्तः ।
सा न स्पृशेन्मामधुना यथा त्वं तथा प्रसीदाम्ब कृपार्द्रचित्ता[१] ॥ ७९ ॥

इतिवादिनो रविसुतस्य मानसं
न निवर्तते स्म धृतराष्ट्रनन्दनात् ।
अपि तु स्वकीयतनयान्महाभुजा-
दनवाप्य काममियमेव केवलम् ॥ ८० ॥

इत्यनन्तभट्टकविकृतौ चम्पूभारतेऽष्टमः स्तवकः ।

---

तस्य तादृगुपकारिणः तथा विश्वस्तस्य दुर्योधनस्यापि सख्यं उपेक्षणीयं किं अनादरणीयं किम् । नानादरणीयमेवेत्यर्थः । अत्र तादृगुपकारविश्वासवाक्यार्थेन दुर्योधनसख्यानुपेक्षणीयसमर्थनात्काव्यलिङ्गभेदः । 'कर्ण त्वया' इति पाठोऽनुप्रास-भङ्गादुपेक्ष्यः ॥ ७८ ॥

**परस्येति** । सन्तः परस्य लोकस्य स्वर्गस्य गतेः कृतमुपकारं हन्ति विस्म-रतीति कृतघ्नः तस्य भावं कृतघ्नतामेव । नान्यमित्यर्थः । विघ्नं वदन्ति । सा कृतघ्नता अधुना मां यथा येन प्रकारेण न स्पृशेत् न प्राप्नुयात्, तथा हे अम्ब, कृपार्द्रचित्ता दयार्द्रचित्ता सती त्वं प्रसीद अनुगृहाण । 'कृतघ्ने नास्ति निष्कृतिः' इति तस्यां प्रायश्चित्तस्याप्यस्मरणादिति भावः ॥ ७९ ॥

**इतीति** । इतिवादिनः उक्तप्रकारेण वदतः रवेः सुतस्य कर्णस्य मानसं मनः धृतराष्ट्रस्य नन्दनात् दुर्योधनात् न निवर्तते स्म न न्यवर्ति । अपि तु किंतु । इयं कुन्त्येव कामं मनोरथं केवलम् । ईषदपीत्यर्थः । अनवाप्य अलब्ध्वा महान् भुजः तद्बलं यस्य तस्मात् स्वकीयात् तनयात् कर्णात् निवर्तते स्म । मञ्जुभाषिणी वृत्तम् ॥ ८० ॥

इति श्रीसदाशिवपदारविन्दवन्दनकन्दलितानन्दसान्द्रस्य कुरविकुलचन्द्रस्य
रामकवीन्द्रस्य कृतौ चम्पूभारतव्याख्याने लास्याख्याने
अष्टमस्तवकविवरणं समाप्तमासीत् ॥

---

१. 'चित्ते' इति पाठः.

## नवमः स्तबकः ।

अथोभये ते कुरवो रणाय स्वनामधेयोपपद[1]प्रसिद्धम् ।
क्षेत्रं व्यगाहन्त निरुद्धपार्श्वाः शताङ्गमातङ्गतुरंगयोधैः ॥ १ ॥

हिरण्वत्यास्तत्र त्रिदशविनुतायास्तटरुह-[2]
प्रसूनानां गन्धैर्मथितपथिखेदाः करिघटाः ।
कृतज्ञत्वेनैव[3] स्वयमपि मदाम्भोधिलहरी-[4]
र्ददुस्तस्यै वह्वीरतिसुरभिगन्धीः प्रियसखीः ॥ २ ॥

अस्मज्जन्मभुवः समानभिधया सप्तापि सिन्धूनिमा-
न्नेष्यामो वयमद्य शोषणमिति स्फीताभ्यसूया इव ।
सेनासैन्धवपङ्क्तयः खुरपुटैर्दीप्रक्षुरप्रोपमै-
र्भूमेरुल्लिखितात्तलाद[5]जनयन्भूयो रजोमण्डलम् ॥ ३ ॥

---

अथेति । अथ कुन्तीगमनानन्तरं ते प्रसिद्धाः उभये कुरवः पाण्डवा धार्तराष्ट्राश्च रणाय युद्धं कर्तुमिति 'क्रियार्थ-' इत्यादिना चतुर्थी । शताङ्गैः रथैः, मातङ्गैः गजैः, तुरंगैः अश्वैः, योधैः पदातिभिश्च निरुद्धाः संगताः पार्श्वाश्चत्वारो येषां ते तथोक्ताः सन्तः । स्वेषां नामधेयं कुरुरिति संज्ञाशब्दः उपपदं पूर्वपदं यस्य तेन कुरुक्षेत्रमिति शब्देन प्रसिद्धं व्यवहृतं क्षेत्रं व्यगाहन्त विविशुः ॥ १ ॥

हिरण्वत्या इति । तत्र कुरुक्षेत्रे करिणां गजानां घटाः वृन्दानि । त्रिदशैः देवैः विनुतायाः स्तुतायाः हिरण्वत्या नाम नद्याः तत्रत्यायाः तटरुहाणां तीरवृक्षाणां यानि प्रसूनानि कुसुमानि तेषां गन्धैः मथितः निरस्तः पथिखेदः मार्गश्रमः येषां तथोक्ताः सन्तः । कृतज्ञत्वेन उपकारस्मरणेन हेतुना स्वयमपि अतिसुरभिः भृशं घ्राणतर्पणः गन्धः यासां ताः अतिसुरभिगन्धीः बह्वीः अनेकाः मदाम्भोधेः दानजलसमुद्रस्य लहरीः । लक्षणया प्रवाहान् । तस्यै हिरण्वत्यै । प्रियसखीः ददुरिवेत्युत्प्रेक्षा । शिखरिणीवृत्तम् ॥ २ ॥

अस्मदिति । तत्र सिन्धौ नाम देशे भवाः सैन्धवाः अश्वाः सेनासु तेषां पङ्क्तयः अस्माकं जन्मभुवः सिन्धुदेशस्य अभिधया नाम्ना समांस्तुल्यान् । तन्नामकानिति यावत् । इमान् सप्तसिन्धून् समुद्रानपि वयमद्य शोषणं नेष्यामः प्रापयिष्यामः इत्युक्तप्रकारेण स्फीता प्रवृद्धा अभ्यसूया कोपः यासां तथोक्ता इवेत्युत्प्रेक्षा । दीप्रा उज्ज्वला । क्षुरप्रैः खड्गभेदैः उपमा सादृश्यं येषां तैः खुराः पुटानीव तैः उल्लिखितात् निष्पिष्टात् भूमेस्तलात् भूयः बहुलं रजोमण्डलं धूलि-

---

१. 'उपपदं' इति पाठः. २. 'तटतरु' इति पाठः. ३. 'एव' इति पाठः.
४. 'मदाम्भोलहरिभिः' इति पाठः. ५. 'स्थलात्' इति पाठः.

तेषां कुरूणां कलहोदयात्प्राग्रथस्वनानां करिबृंहितानाम् ।
आशामशेषां स्ववशे विधातुमन्योन्यमासीत्कलहो महीयान् ॥४॥

नाम्ना वो[1] नवमग्रहस्य समतां सोढास्महे हे[2] वयं
तुङ्गत्वं न सहेमहीत्यतिरुषा संनाहधुर्या[3] इव ।
उद्दण्डा अपि केतवो ददृशिरे स्थानं ग्रहाणामति-
क्रम्य स्यन्दनवृन्दमौलिकलिता मध्येनभस्वत्पथम्[4] ॥ ५ ॥

महीपतीनां पटमन्दिराणि मार्गं सुराणां लिलिहुः शिरोभिः ।
वयं हि दूष्याणि शुचीभवेमेत्यभ्रापगावारिसिमङ्क्षयेव ॥ ६ ॥

---

मण्डलं अजनयन् उत्थापयन्ति स्म । 'देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्' इति विश्वः । शार्दूलविक्रीडितं वृत्तम् ॥ ३ ॥

**तेषामिति** । तेषां कुरूणां पाण्डवधार्तराष्ट्राणां कलहस्य युद्धस्य उदयात् प्राक् आरम्भात् पूर्वमेव अशेषां आशां दिशं स्ववशे विधातुं कर्तुं रथस्वनानां करिबृंहितानां च अन्योन्यं महीयान् दुर्निवारः कलह आसीत् । रथनेमिघण्टा-गजकोलाहलैः दशापि दिशः सान्द्रा बभूवुरित्यर्थः । अत्र दिक्परिपालनव्या-पनयोः श्लेषमित्तिकाभेदाध्यवसायमूलातिशयोक्त्या 'संसर्गजा दोषगुणा भवन्ति' इति प्रसिद्धतादृशकौरवसंबन्धित्वकृताशेषराज्याभिलाषहेतुककलहोत्प्रेक्षाप्रतीतेर-लंकारेणालंकारध्वनिः ॥ ४ ॥

**नाम्नेति** । अपि किंचेत्यर्थः । स्यन्दनवृन्दस्य रथकट्यायाः मौलिषु अग्रेषु कलिताः घटिताः ऊर्ध्वा दण्डा येषां ते उद्दण्डाः केतवः ध्वजाः । हे ग्रहाः सूर्यादयः वयं वः युष्माकं मध्ये नवमस्य ग्रहस्य केतोः समतां साम्यं नाम्ना नाममात्रेण सोढास्महे क्षन्तास्महे । सहेः कर्तरि लुट् । तुङ्गत्वं औन्नत्यं तु न सहेमहि न क्षमेमहि । वः इत्यत्रापि योज्यम् । सहेः कर्तरि लिङ् । इत्युक्तप्रका-रया अतिरुषा भृशं क्रोधेन संनाहधुर्याः रणोद्युक्ता इवेत्युत्प्रेक्षा । ग्रहाणां नवाना-मपि स्थानं मण्डलं अतिक्रम्य मध्येनभस्वत्पथं महावायुपथस्य मध्ये ददृशिरे दृष्टाः । लोकैरिति शेषः । उक्तोत्प्रेक्षानुप्राणितातिशयोक्त्यलंकारः असंबन्धे संबन्धरूपः ॥ ५ ॥

**महीपतीनामिति** । महीपतीनां उभयेषां राज्ञां पटमयानि मन्दिराणि (कर्तॄणि) हि यस्मात्कारणात् वयं दूष्याणि अपरिशुद्धानि । दूष्येति संज्ञावन्ति च । 'दूष्याद्यं वस्त्रवेश्मनि' इत्यमरः । तस्मात् कारणाच्छुचीभवेम परिशुद्धानि भवेम । इत्यालोच्येति शेषः । अभ्रापगायाः आकाशगङ्गायाः वारिणि सिमङ्क्ष-या मङ्क्तुं स्नातुं इच्छयेवेत्युत्प्रेक्षा । शिरोभिः शिखरभागैः सुराणां मार्गं आकाशं लिलिहुः पस्पृशुः । अत्राप्यतिशयोक्तिः पूर्ववत् ॥ ६ ॥

---

१. 'वा' इति पाठः. २. 'अमी' इति पाठः. ३. 'धूर्या' इति पाठः. ४. 'पदम्' इति पाठः.

ततः क्षणादेव विशालविनिर्मितवीथीसहस्रवि[1]राजमानविशङ्कट-वि[2]पणिविविधपण्याहरणविमर्दसहक्रयिकलोकं विटकुलानुसार्य[3]माण-वारविलासिनीज[4]ननिविडवेशवाटं विशिखकृपाणकुन्तशक्ति[5]प्रमुखवि-विधायुधसंस्कारपरवशयोधसंबाधं तत्कुरुक्षेत्रं कुरुनगरमित्रं बभूव ॥

तत्र ताव[6]द्दुःशासनाग्रजः 'भगवन्, अस्मिन्नुपतस्थुषि वीरभुज-विनोद[7]काले त्वं वि[8]वाहविमुखोऽपि मदर्थं प्रत्यर्थिपार्थिवान्नि[9]हन्तुं पृतनाधिपत्यलक्ष्मीमु[10]पयच्छस्व' इति वि[11]ज्ञाप्य पितामहस्य [12]चरणयोः प्रणिपपात ॥

---

तत इति । ततः राज्ञा पटमन्दिरनिर्माणानन्तरं क्षणादेव विशालं विस्तीर्णं यथातथा विनिर्मितानां रचितानां वीथीनां सहस्रैः विराजमानं विशङ्कटासु विशालासु विपणिषु पुण्यवीथिषु विविधानां नानाजातीयानां पण्यानां क्रय्य-वस्तूनां आहरणे ग्रहणसमये विमर्दं संमर्दं सहन्त इति तत्सहाः क्रयिकलोकाः क्रेतृजनाः यस्मिन् तथोक्तम् । विटानां कुलेन वृन्देन अनुसार्यमाणेन वारवि-लासिनीजनेन वेश्याजनेन निविडाः सान्द्राः वेशवाटाः वेश्यानिवासा यस्मिं-स्तथोक्तम् । विशिखाः बाणाः, कृपाणाः खड्गाः, कुन्ताः, शक्तयः प्रमुखाः येषां तादृशानां विविधानां आयुधानां संस्कारे शाणोत्तेजनायां परवशैः प्रवणैः योधैः संबाधं संकटं तत् प्रसिद्धं कुरुक्षेत्रं कुरुनगरस्य हास्तिनपुरस्य मित्रं तुल्यं बभूव । उपमालंकारः ॥

तत्रेति । तत्र तावत् तदानीमेव दुःशासनस्याग्रजो दुर्योधनः हे भगवन् भीष्म, त्वं विवाहे विषये विमुखः पराङ्मुखोऽपि उपतस्थुषि सन्निहिते अस्मिन् वीराणां भुजविनोदकाले बाहुपराक्रमक्रीडासमये मदर्थं मम कृते प्रत्यर्थिनः पार्थिवान् शत्रुराजान् प्रत्यर्थिनः पाण्डवानां संबन्धिनः पार्थिवान् सहायान् ननु प्रत्यर्थिन इति च । निहन्तुं पृतनानां सेनानां आधिपत्यलक्ष्मीं उपयच्छस्व परिगृ-ह्णीष्व इति विज्ञाप्य पितामहस्य भीष्मस्य चरणयोः प्रणिपपात नमस्कृतवान् ॥

---

१. 'विराजमान' इति पाठः. २. 'विपणिविस्तारितविविध' इति पाठः. ३. 'वार' इति नास्ति क्वचित्. ४. 'निविडित' इति पाठः. ५. 'प्रासतोमरप्रमुख' इति पाठः. ६. 'तावत्' इति नास्ति क्वचित्. ७. 'विनोदन' इति पाठः. ८. 'विहितविवाह' इति पाठः. ९. 'विनिहन्तुं' इति पाठः. १०. 'उपयमस्व' इति पाठः. ११. 'विज्ञापितस्य' इति पाठः. १२. 'चरणनलिनयोः' इति पाठः.

दुर्योधने विशति मौलिभुवा पदं स्वं
शूराग्रणीष्वचरमः सुरसिन्धुसूनुः ।
अर्धक्षणादरिभटांस्त्रिदिवे विधास्य-
न्नध्यक्षतापदमविक्षदनीकिनीनाम् ॥ ७ ॥

पार्थाश्च ते द्रुपदनन्दनमाशु चक्रुः
सेनान्यमुद्धतविरोधिवनानि दग्धुम् ।
वह्निं प्रतापकपटान्निजजन्मकाले
सक्तं भुजे वहति यः सततं ज्वलन्तम् ॥ ८ ॥

अथ सदसि महारथपरिगणनकथायामर्धरथोऽयमिति जाह्नवी-येन निह्नुतपौरुषतया रोषचिह्नितवदनरोचिरह्नांपतिसूनुरह्नाय तस्या-वधिमेव निजहेतेरधारणस्यापि साधारणं प्रतिजज्ञे ॥

---

दुर्योधन इति । शूराणां अग्रणीषु श्रेष्ठेषु अचरमः प्रथमः सुरसिन्धोः सूनुः गाङ्गेयः भीष्मः दुर्योधने मौलिभुवा किरीटप्रदेशेन स्वं स्वीयं पदं चरणं विशति नमस्कुर्वति सति । अर्धक्षणात् क्षणार्धात् अरिभटान् त्रिदिवे स्वर्गे विधास्यन् करिष्यन्सन् । हनिष्यन्निति यावत् । अनीकिनीनां सेनानां अध्यक्षतापदं प्रभुत्व-स्थानं अविक्षत् प्रविष्टवान् । सेनाधिपतिर्बभूवेत्यर्थः । विशेः कर्तरि लुङ् ॥ ७ ॥

पार्था इति । ते पार्थाश्च द्रुपदस्य नन्दनं धृष्टद्युम्नम् । सेनाः नयति गमय-तीति सेनानीः तं सेनान्यं सेनाधिपतिं आशु चक्रुः । यः धृष्टद्युम्नः निजस्य जन्मनः वह्निकुण्डादुत्पत्तेः काले सक्तं ज्वलन्तं वह्निं अग्निं उद्धतान् गर्वितान् विरोधिनः शत्रूनिव वनानि दग्धुं प्रतापस्य कपटात् व्याजात् भुजे सततं वहति तं द्रुपद-नन्दनमिति योज्यम् । अपह्नवालंकारः ॥ ८ ॥

अथेति । अथ सदसि सभायाम् । 'आत्मानं सारथिं चाश्वान्रक्षन्युध्यति यो नरः । स महारथसंज्ञः स्यात्' इत्युक्तलक्षणलक्षितानां महारथानां परिगणन-कथायां संख्याप्रसङ्गे । अयं कर्णः जामदग्न्यब्राह्मणशापादिपराभूतः अर्धरथः इत्युक्तप्रकारं जाह्नवीयेन भीष्मेण निह्नुतं तिरस्कृतं पौरुषं शौर्यं यस्य तस्य भावः तत्ता तया हेतुना रोषशब्देन तत्कार्यं लक्ष्यते । भ्रुकुट्यादिना चिह्नितं वदनस्य रोचिः तेजः यस्य तथोक्तः अह्नांपत्युः सूर्यस्य सूनुः कर्णः तस्य भीष्मस्य अवधिं मरणमेव निजायाः हेतेः आयुधस्य संबन्धिनः अधारणस्य अग्रहणस्यापि साधारणं तुल्यं अह्नाय सत्वरं प्रतिजज्ञे । भीष्मनिधनपर्यन्तं आयुधं न धारयामीति प्रतिज्ञातवानित्यर्थः । 'अवसाने परिच्छेदे सान्नि काले बलेऽवधिः' इति रत्नमालायाम् ॥

---

१. 'रिपुभटान्' इति पाठः. २. 'तु' इति पाठः. ३. 'जाह्नवेयेन' इति पाठः. ४. 'कुमारः' इति पाठः. ५. 'युधि तस्य' इति पाठः.

इदं प्रतिपद्य खिद्यमानं मानधनं सुयोधनम् 'वत्स, मा भैषीः । महाभुजानपि रिपुमहीभुजः संख्ये खरतरविशिखमुखेन खाद[1]-यामि' इति पितामह आश्वासयामास[2] ॥

तदनन्तरम् ।

अभ्रापगातनयपार्षतनन्दनाभ्या-
मग्रावनौ[3] तिलकिता धृतकार्मुकाभ्याम् ।
उच्चावचं निजनिजं विरुदं वहन्तो
युद्धाय तस्थुरुभयेऽपि कुरुप्रवीराः ॥ ९ ॥

जेता पुरामिव तदा[4] जलजातयोनिं
पत्रीश्वरा[5]ग्रजमिव प्रथमो ग्रहाणाम् ।
अग्रे विधाय[6] यदुनायकमात्ततोत्रं
पार्थो रथी प्रधनभूमिमवाप वीरः ॥ १० ॥

---

इदमिति । इदं कर्णप्रतिज्ञातं प्रतिपद्य श्रुत्वा खिद्यमानं दुःखायमानं मानधनं सुयोधनं हे वत्स दुर्योधन, मा भैषीः कर्णदुष्प्रतिज्ञातः भयं माप्नुहि । महान् श्लाघ्यः भुजः बाहुपराक्रमः येषां तान् रिपुमहीभुजः शत्रुभूपान् संख्ये युद्धे खरतरेण अतितीक्ष्णेन विशिखमुखेन बाणेनैव वक्त्रेण खादयामि । भिन्द्यामित्यर्थः । इत्युक्तप्रकारेण पितामहः आश्वासयामास आश्वासितवान् ॥

तदनन्तरमित्युत्तरेणान्वयः ॥

अभ्रेति । धृतं कार्मुकं धनुः याभ्यां ताभ्याम् । अभ्रापगातनयेन भीष्मेण पार्षतनन्दनेन धृष्टद्युम्नेन द्वाभ्यामग्रावनौ अग्रदेशौ । तिलकिताः अलंकृताः । उभयेऽपि कुरुप्रवीराः कौरवाः पाण्डवाश्च उच्चावचं अनेकविधं निजनिजं प्रत्येकं स्वीयं विरुदं जयचिह्नं छत्रचामरादि वहन्तः सन्तः युद्धाय युद्धं कर्तुं तस्थुः । सन्नद्धा बभूवुरित्यर्थः ॥ ९ ॥

तेजेति । तदा युद्धारम्भकाले वीरः पार्थः अर्जुनः आत्तं गृहीतं तोत्रं अश्वताडनं येन तथोक्तं यदुनायकं श्रीकृष्णं पुरां त्रिपुराणां जेता जयी सदाशिवः जलजातयोनिं ब्रह्माणमिव । ग्रहाणां प्रथमः सूर्यः पत्रीश्वरस्य गरुडस्य अग्रजं अनूरुं अग्रे रथस्य अग्रभागे विधाय कृत्वा । सारथीकृत्येति यावत् । रथी रथमारूढः सन् प्रधनभूमिं युद्धभूमिं अवाप प्राप्तवान् । उपमाद्वय-संसृष्टिः ॥ १० ॥

---

१. 'खादिष्यामि' इति पाठः. २. 'प्रसादयामास' इति पाठः. ३. 'अग्रावनी' इति पाठः. ४. 'पुरा' इति पाठः ५. 'पक्षीश्वरा' इति पाठः. ६. 'निधाय' इति पाठः.

संचिन्त्य भीष्ममुखबन्धुजनस्य हानिं
संतापिनः समरसीमनि शक्रसूनोः ।
बाष्पाम्बु चक्षुरधिकं श्वसितं मुखेन्दु-
र्धैर्यं मनः करतलं च मुमोच चापम् ॥ ११ ॥

बलारिसूनुं वसुदेवसूनुर्वचोभिराश्वास्य चिरेण तैस्तैः ।
असासहिं पावकजाठराग्नेरग्राहयत्तत्र पुनः शरासम् ॥ १२ ॥

देवव्रतस्य जयकेतनचिह्नताल-
श्यामप्रभावलिरदृश्यत दूरदीर्घा ।
सख्याः सुतस्य समरे भुजवीर्यलक्ष्मीं
संवीक्षितुं रविसुतेव नभोऽधिरूढा ॥ १३ ॥

युद्धारम्भभटार्भटीपिशुनतामुद्दामयन्तस्तदा
निःसाणादिमजैत्रवाद्यनिनदा निर्धूतशब्दान्तराः ।
भ्रान्तिं क्षेप्तुमिवातिदूरपदवीसंपादितामम्बुधे-
र्वेलाशैलमहागुहासु विविशुर्व्याप्तासु धाराधरैः ॥ १४ ॥

---

**संचिन्त्येति** । समरसीमनि युद्धदेशे भीष्मो मुखं आदिः यस्य तस्य बन्धुजनस्य हानिं क्षयं संचिन्त्य आलोच्य संतापिनः खिद्यतः शक्रसूनोः अर्जुनस्य चक्षुः नेत्रं अधिकं बाष्पाम्बु मुमोच । मुखमिन्दुरिव मुखेन्दुः अधिकं श्वसितं मुमोच । मनः अधिकं धैर्यं मुमोच । करतलं च अधिकं चापं मुमोच । आधिक्यमेकत्र द्वये बहुत्वं अन्यत्र श्रैष्ठ्यमिति विवेकः । शक्रसूनोरिति चतुर्ष्वपि योज्यम् । अत्रानेकक्रियायौगपद्यात् समुच्चयः ॥ ११ ॥

**बलेति** । तत्र तदानीं वसुदेवसूनुः श्रीकृष्णः तैस्तैरध्यात्माध्वनीनैः वचोभिः गीतावाक्यैः चिरेणाश्वास्य निर्दुःखीकृत्य पावकस्य अग्नेः संबन्धिनः जाठराग्नेः औदरानलस्य असासहिं असोढारम् । खाण्डववनसमर्पणेनाग्निक्षुन्निवारकमित्यर्थः । कृद्योगात्कर्मणि षष्ठी । शरासं गाण्डीवं पुनः अग्राहयत् ग्राहयति स्म ॥ १२ ॥

**देवव्रतेति** । देवव्रतस्य भीष्मस्य संबन्धिनी दूरदीर्घा अत्यायता जयकेतने विजयध्वजे चिह्नतालस्य तालाकृतिलाञ्छनस्य श्यामप्रभाणां नीलकान्तीनां आवलिः परम्परा समरे युद्धे सख्याः गङ्गायाः सुतस्य भीष्मस्य भुजवीर्यलक्ष्मीं सम्यग्वीक्षितुं नभः आकाशं अधिरूढा रविसुता यमुनेव अदृश्यत । लोकैरिति शेषः । उत्प्रेक्षा ॥ १३ ॥

**युद्धेति** । तदा युद्धारम्भे भटानां आर्भट्याः शौर्यव्यापारस्य पिशुनतां सूचनं उद्दामयन्तः प्रकटयन्तः निर्धूतानि अन्तर्धापितानि शब्दान्तराणि अन्यशब्दाः

सङ्ग्रामदुन्दुभिरवश्रवणेन देवाः
सर्वे कंवाटघटितानि गृहाणि कृत्वा ।
आदाय नन्दनवनादभिषेक्तुमाजौ
वीरान्प्रसूनचयमप्यभजन्विहायः ॥ १५ ॥

सति घर्मजले मिथो विमर्दात्सकलं तद्व्यपनेतुमङ्गकेभ्यः ।
मघवत्प्रमुखाः सुरा बभूवुर्मरुतोऽपि स्वयमात्ततालवृन्ताः ॥ १६ ॥

तत्र तावेरिगणौ शनैः शनैः संगतौ सधनुषौ सगर्जितौ ।
पूर्वपश्चिममरुत्प्रचोदितौ पुष्करे घनघनाघनाविव ॥ १७ ॥

धावत्स्यन्दनकेतनांशुकमरुद्व्याधूतमन्दाकिनी-
विन्दूनामपि सैन्यंकुञ्जरघटाशुण्डासमुत्थायिनाम् ।

---

यैस्ते । निःसाणः जयभेरी आदिमः येषां तेषां जंत्राणां जयावहानां वाद्यानां निनदाः शब्दाः । अतिदूरया पदव्या । मार्गगमनेनेत्यर्थः । संपादितां लब्धां श्रान्तिं श्रमं क्षेप्तुं परिहर्तुमिवेत्युत्प्रेक्षा । धाराधरैः मेघैः व्याप्तासु । अम्बुधेः समुद्रस्य वेलाशैलः चक्रवालाद्रिः तस्य महतीषु गुहासु विविशुः विशन्ति स्म । उक्तोत्प्रेक्षानुप्राणिता असंबन्धे संबन्धरूपातिशयोक्तिः । शार्दूलविक्रीडितम् ॥१४॥

**संग्रामेति** । देवा इन्द्रादयः सर्वे संग्रामे दुन्दुभीनां भेरीणां रवश्रवणेन भांकाराकर्णनेन गृहाणि कवाटैर्घटितानि कृत्वा आजौ युद्धे वीरान् पौरुषशालिनः अभिषेक्तुं नन्दनवानात् प्रसूनानां पुष्पाणां चयं राशिं अपि आदाय गृहीत्वा विहायः आकाशं अभजन् प्रापुः ॥ १५ ॥

**सतीति** । मघवान् इन्द्रः प्रमुखः येषां ते सुराः । मिथः अन्योन्यं विमर्दाद्धेतोः घर्मजले स्वेदे सति । तत् घर्मजलं अङ्गकेभ्यः अवयवेभ्यः सकलं निःशेषं यथा तथा । व्यपनेतुं क्षेप्तुं स्वयं मरुतो वायवोऽपि देवाश्चेति च । आत्तानि गृहीतानि तालवृन्तानि व्यजनानि यैस्तथोक्ताः बभूवुः । यद्यपि पार्थिवानामेव खेदः न तैजसानां तथापि प्रौढोक्त्या तथोक्तमिति ध्येयम् । औपच्छन्दसिकं वृत्तम् ॥ १६ ॥

**तत्रेति** । तत्र तदानीं कुरुक्षेत्रे वा । सधनुषौ सचापौ सेन्द्रचापौ च । सगर्जितौ ससिंहनादौ सस्तनितौ च । तावुभयेऽरिगणौ शत्रुसंघौ । पुष्करे आकाशे । पूर्वमरुता प्राग्वायुना पश्चिममरुता प्रत्यग्वायुना च प्रचोदितौ प्रेरितौ घनौ महान्तौ घनाघनौ मेघाविव शनैः शनैः संगतौ बभूवतुः । उपमालंकारः । रथोद्धता वृत्तम् ॥ १७ ॥

अथ नवसर्गजयुद्धमाह—**धावदिति** । स्फुटया शरदि ताराणां नक्षत्राणां

---

१. 'कपाट' इति पाठः. २. 'रिपुगणौ' इति पाठः. ३. 'नवघना' इति पाठः. ४. 'सिन्धुर' इति पाठः.

दानाम्भःपृषतामपि स्फुटशरत्ताराकृतिस्पर्धिनां
भेदं ग्राहयितुं शशाक गगने भृङ्गानुरोधक्रमः ॥ १८ ॥

आसाद्य द्विपमाहवे रदपथेनारुह्य तीक्ष्णासिना
यन्तारं विनिपात्य साट्टहसितं स्कन्धे विधाय स्थितिम् ।
कुम्भास्फालनकारिणं रिपुभटं दृष्ट्वा दिवौकःस्त्रियाः
कस्याश्चित्कुचकुम्भयोः कठिनयोः कण्डूरखण्डाभवत् ॥१९॥

कश्चिद्गजः प्रतिभटेन करे विलूने-
ऽप्यामूलभागमसिना नमिताग्रकायः ।

---

आकृत्या स्वरूपेण सह स्पर्धन्त इति स्पर्धिनाम् । उभयत्र विशेषणम् । धावतां वेगेन गच्छतां स्यन्दनानां रथानां केतनेषु ध्वजेषु अंशुकानां पताकापटानां संबन्धिभिः मरुद्भिः व्याधूतानां च्यावितानां मन्दाकिन्याः आकाशगङ्गायाः बिन्दूनामपि । सेनासु समवेतानां सैन्यानां कुंजरघटानां गजवृन्दानां शुण्डाभिः करैः समुत्थाप्यन्त इति समुत्थायिनां दानाम्भसः मदजलस्य पृषतां बिन्दूनामपि उभयेषां भेदं मिथो वैलक्षण्यं ग्राहयितुं ज्ञापयितुम् । जनानामिति शेषः । गगने भृङ्गाणां अनुरोधक्रमः अनुसरणरीतिः । शशाक समर्थोऽभूत् । अत्र तादृशोभयबिन्दूनां भृङ्गानुसरणेन मिथो वैलक्षण्यस्फूर्त्या विशेषकालंकारः । 'वैशेष्यस्फूर्तौ विशेषकः' इति तल्लक्षणात् । स च 'ताराकृतिस्पर्धिनाम्' इत्युपमयोज्जीवित इति द्वयोरङ्गाङ्गिभावेन संकरः । शार्दूलविक्रीडितं वृत्तम् ॥ १८ ॥

**आसाद्येति** । आहवे युद्धे द्विपं शत्रुगजं आसाद्य संनिधाय रदपथेन दन्तमार्गेण आरुह्य तीक्ष्णेन असिना खड्गेन यन्तारं गजारूढं विनिपात्य पातयित्वा । अट्टहसितेन सहितं यथा तथा साट्टहसितम् । स्कन्धे गजस्य स्थितिं विधाय । कुम्भयोः आस्फालनं सशब्दं करस्पर्शं करोतीति कारिणं रिपुभटं शत्रुयोधं दृष्ट्वा कस्याश्चिद्दिवौकःस्त्रियाः देवाङ्गनायाः संबन्धिनोः कठिनयोः कुचौ कुम्भाविव तयोः अखण्डा अविच्छिन्ना कण्डूः खर्जूः अभवत् । अयं चेदेतयोरुचितोऽस्य कर इति हृष्यत्कुचाभूदित्यर्थः । अत्र तादृग्वीरदर्शनस्य विशेषणगत्या कुचकण्डूदयहेतुत्वात्पदार्थहेतुकस्य काव्यलिङ्गस्य कण्डूसंबन्धेऽपि संबन्धोक्तिरूपातिशयोक्तेश्च द्वयोरङ्गाङ्गिभावेन संकरः । वृत्तं पूर्वोक्तमेव ॥ १९ ॥

**कश्चिदिति** । कश्चिद्गजः प्रतिभटेन रिपुवीरेण ( कर्त्रा ) असिना ( करणेन ) करे शुण्डायां आमूलभागं मूलदेशपर्यन्तं विलूने विच्छिन्ने सत्यपि

क्षिप्रं प्रगृह्य रदनेन निषादिहस्ता-
स्त्रस्तं सृणिं पुनरदात्कुशलाय तस्मै ॥ २० ॥

भसितलेपसितौ करिणावुभौ युधि परस्परदत्तरदौ मुखे ।
हरिरवेक्ष्य वहत्यपि वाहने सरभसं निदधे सकला दृशः ॥२१॥

भिन्नैकदन्तमुसलः प्रतिदन्तिघाता-
त्कुम्भाग्रलक्ष्यकुटिलाङ्कुशचन्द्ररेखः ।
कश्चिद्गिरीशसमतां कलयन्करीन्द्रः
सारूप्यभागिव गणाधिपतेर्विरेजे ॥ २२ ॥

कश्चिन्निर्गत्य वेगादरिनृपतिवलेऽपातयत्स्वामिनं स्वं
तत्र स्कन्धाधिरूढं विमतमपि तथाधत्त नीत्वा स्वसैन्यम् ।

---

नमितः नम्रीकृतः अग्रकायः पूर्वकायः येन तथोक्तः सन् निषादिनः यन्तुः हस्तात् स्रस्तं गलितं सृणिं अङ्कुशं रदनेन दन्तेन क्षिप्रं सत्वरं प्रगृह्य आदाय कुशलाय क्षेमार्थम् । उभयोरपीति शेषः । तस्मै निषादिने पुनरदात् दत्तवान् अत्राङ्कुशादानासंबन्धेऽपि संबन्धोक्तिरूपातिशयोक्तिः ॥ २० ॥

**भसितेति** । भसितस्य भस्मनः लेपेन सितौ श्वेतीभूतौ युधि युद्धे मुखे परस्परं दत्तौ रदौ दन्तौ याभ्यां तौ उभौ करिणौ गजौ अवेक्ष्य । चतुर्दन्तत्वेन तन्मुखमवलोक्येत्यर्थः । हरिः इन्द्रः वहति आत्मनाधिरूढेऽपि वाहने ऐरावते सकलाः दृशः नेत्रसहस्रं सरभसं यथा तथा निदधे निहितवान् । ममैरावतः किं तत्र गत इति भ्रान्तः भयात् किमत्र नास्तीति सत्वरं तमालोकितवानित्यर्थः । भ्रान्तिमदलंकारः ॥ २१ ॥

**भिन्नेति** । प्रतिदन्तिनः शत्रुगजस्य घातात् दन्तप्रहारात् भिन्नं भग्नं एकदन्तो मुसलमिव यस्य सः कुम्भस्य अग्रे उपरिभागे लक्ष्या दृश्या कुटिला वक्रा अङ्कुशेन चन्द्ररेखा तदाकृतिव्रणं अङ्कुशः चन्द्ररेखेवेति वा यस्य सः कश्चित्करीन्द्रः गजश्रेष्ठः गिरीशस्य शंभोः पर्वतेन्द्रस्य समतां सारूप्यं औन्नत्येन तौल्यं च कलयन् स्वीकरिष्यमाणः सन् । वर्तमानसामीप्ये वर्तमाननिर्देशः । गणाधिपतेः विघ्नराजस्य सारूप्यं भजतीति भागिवेत्युत्प्रेक्षा । विरेजे । आदाविति शेषः । क्रममुक्तिरत्र विवक्षितेति ध्येयम् । उक्तोत्प्रेक्षा श्लेषोपमोज्जीवितेति तयोस्तस्याश्चाङ्गाङ्गिभावेन संकरः ॥ २२ ॥

**कश्चिदिति** । दुःसाधः असाध्यः रोधः निवारणं यस्य स यथोक्तः । अत एव कश्चित्करिकलभः तरुणगजः दूरं यथा तथा धूतः परास्तः अङ्कुशः येन तथोक्तः सन् । युधि वेगात् निर्गत्य । स्वबलादिति भावः । अरिनृपतिवले शत्रुसैन्ये स्वं स्वीयं स्वामिनं यन्तारं यत्र अपातयत् पातितवान् । तत्र अरिनृ-

---

१. 'स्रस्तां' इति पाठः. २. 'भग्नैक' इति पाठः.

इत्थं दुःसाधरोधो युधि करिकलभो दूरधूताङ्कुशः स-
न्विज्ञंमन्यं निषादिद्वयमपि विदधे हासपात्रं जनानाम् ॥२३॥

हस्तेन हस्तमथ दन्तयुगेन दन्तौ
कर्णौ च कर्णयुगुलेन पदे[1] च पद्भ्याम् ।
वालेन वालमभिहत्य च वारणौ द्वौ
तुल्याङ्गयुद्धमतिशिक्षितमादधाताम्[2] ॥ २४ ॥

निषादिनो दन्तिशिरस्यधोमुखं निपातिताङ्गा लगुडस्य ताडनैः ।
व्यथापनोदाय मदस्य सौरभं विनम्य जिघ्रन्त इवालुलोकिरे ॥२५॥

तीक्ष्णैः प्रत्यर्थिभल्लैरपहृतशिरसां हस्तिपानां शरीरा-
दुत्क्रान्ताः प्राणवाताः करिमदपयसां सौरभीमुद्वहन्तः ।

---

पतिबले स्कन्धे स्वीये अधिरूढम् । गजचर्यानैपुण्यसाहसादिति भावः । विमतं शत्रुं यन्तारमपि स्वं स्वीयं सैन्यं नीत्वा प्रापय्य । तथा उक्तप्रकारं आधत्त चक्रे । तत्रापातयदित्यर्थः । इत्थं उक्तप्रकारेण । विज्ञं मनुते आत्मानमिति विज्ञंमन्यं पण्डितंमन्यं मूर्खं निषादिनोः यन्त्रोः द्वयमपि स्वीयं परकीयं च जनानां सर्वेषां हासस्य पात्रं विदधे चक्रे । मदान्धो न परेषामेवानुकूलं चेष्टते । किंतु स्वेषामपीति भावः । अत्र दुःसाधरोधत्वादिना यन्तृपातनसमर्थनात्काव्यलिङ्गमेदद्वयेन वाक्यार्थरूपेण यन्तृद्वयपरिहाससमर्थनात् वाक्यार्थहेतुककाव्यलिङ्गस्य असंबन्धे संबन्धरूपातिशयोक्तिश्चैकवाचकानुप्रवेशसंकरः । स्रग्धरा ॥ २३ ॥

**हस्तेनेति** । द्वौ वारणौ गजौ हस्तेन हस्तं शुण्डया शुण्डां अभिहत्य प्रहृत्य । आदाविति शेषः । अथ अनन्तरम् । इदमग्रे सर्वत्र योज्यम् । दन्तयुगेन दन्तौ दन्तयुगं अभिहत्य । इदमपि तथैव योज्यम् । कर्णयुगलेन च कर्णौ । पद्भ्यां च पदे पादौ । वालेन च वालम् । एवं अत्यन्तं शिक्षितं तुल्यं अविशेषं अङ्गैर्युद्धं आदधातां अकुरुताम् । 'आदधाते' इति वर्तमानार्थकलडन्तपाठः संदर्भविरोधादुपेक्ष्यः । स्वभावोक्तिः ॥ २४ ॥

**निषादिन इति** । निषादिनः गजारूढाः लगुडस्य प्रतिगजकरगृहीतदण्डस्य ताडनैः दन्तिनः गजस्य शिरसि कुम्भोपरि अधोमुखं निपातितानि अङ्गानि ऊर्ध्वकायाः येषां तथोक्ताः सन्तः व्यथायाः दण्डताडनवेदनायाः अपनोदाय वारणाय । तां अपनोदितुमिति 'तुमर्थाच्च भाववचनात्' इति चतुर्थी वा । मदस्य दानजलस्य सौरभं परिमलं विनम्य प्रह्वीभूय जिघ्रन्त इवेत्युत्प्रेक्षा । आलुलोकिरे दृष्टाः । जनैरिति शेषः । वंशस्थं वृत्तम् ॥ २५ ॥

**तीक्ष्णैरिति** । तीक्ष्णैः प्रत्यर्थिनां शत्रूणां भल्लैः बाणविशेषैः अपहृतानि

---

१. 'पदौ' इति पाठः. २. 'आदधाते' इति पाठः.

पायंपायं कपोलस्थलकुचकलशस्वेदवारिप्रवाहं
चक्रुः संमर्दभाजां दिवि सुरसुदृशां तालवृन्तस्य कृत्यम् ॥ २६ ॥

अश्वावुभौ तस्थतुरग्रपादावुत्क्षिप्य युद्धाभिमुखीभवन्तौ ।
परस्परस्योपरि हेतिपातात्स्वसादिनौ त्रातुमिवोर्ध्वकायौ ॥ २७ ॥

ऐकैव वैरिभटखड्गवरस्य धारा
धारासु पञ्चसु सतीष्वपि कंचिदश्वम् ।
स्कन्धे विभिद्य तदसूनितरैर्दुरापां
जग्राह नाल्पमपि तत्क्षतजाम्बुलेशम् ॥ २८ ॥

---

छिन्नानि शिरांसि येषां तेषां हस्तिपानां गजारोहाणां शरीरात् उत्क्रान्ताः निर्गताः प्राणात्मकाः वाताः वायवः करिमदपयसां गजमदजलानां सौरभीं परिमलपरम्परां उद्वहन्तः सन्तः । दिवि आकाशे संमर्दभाजां सुरसुदृशां अप्सरसां कपोलस्थलयोः कुचौ कलशाविव तयोश्च स्वेदवारिणां श्रमजलानां प्रवाहं पायंपायं हृत्वा हृत्वा तालवृन्तस्य व्यजनस्य कृत्यं चक्रुः । अत्र अन्यकृत्यस्य अन्यत्रासंभवेन तत्सदृशकृत्याक्षेपात् असंभवद्धर्मसंबन्धनिबन्धनो निदर्शनालंकारः । असंबन्धे संबन्धरूपातिशयोक्तिश्चैकवाचकानुप्रवेशेन संकीर्णम् । स्रग्धरावृत्तम् ॥ २६ ॥

अथ चतुर्भिरश्वयुद्धं वर्णयति—अश्वाविति । उभौ अश्वौ अग्रपादौ पूर्वपादौ उत्क्षिप्य उद्धृत्य युद्धे अभिमुखीभवन्तौ सन्तौ स्वौ स्वीयौ सादिनौ तौरंगिकौ परस्परस्योपरि । शरीर इत्यर्थः । हेत्योः अन्योन्यायुधयोः पातात् त्रातुं रक्षितुम् । तं परिहर्तुमिति यावत् । ऊर्ध्वः सादितिरोधानाय ऊर्ध्वीकृतः कायः याभ्यां तथोक्ताविवेत्युत्प्रेक्षा । तस्थतुः स्थितवन्तौ ॥ २७ ॥

**एकेति** । वैरिभटस्य शत्रुवीरस्य यः खड्गवरः खड्गश्रेष्ठः तस्य धारा तीक्ष्णाग्रं एकैव स्वयं एकापि सती कंचिदश्वं शात्रवं पञ्चसु धारासु तीक्ष्णाग्रेषु आस्कन्दितादिगतिविशेषेषु च सतीष्वपि । 'धाराग्राम्बुसंतत्यां सैन्याग्रेऽश्वगतिष्वपि' इति वैजयन्ती । स्कन्धे ग्रीवामूलदेशे विभिद्य भित्त्वा इतरैर्दुरापां प्राप्तुमशक्याम् । पातुं दुर्लभामिति यावत् । दुर्लभं आपं अपां समूहः येषु तानि इति वा तस्य अश्वस्य असून् प्राणान् पञ्च जग्राह गृहीतवान् । किं चातएव तस्याश्वस्य क्षतजमेवाम्बु रक्तजलं तस्य लेशं लवं अल्पं ईषदपि न जग्राह । जुगुप्सितत्वादिति तैक्ष्ण्यातिशयादिति च भावः । अत्र एकस्या धारापञ्चकवदश्वभेदवर्णनात्कारणासाकल्येऽपि कार्योत्पत्तिरूपो विभावनाभेदः । एवं लोकैकदुर्लभजलवत्प्राणग्राहिण्योः जुगुप्सितरक्ताम्बुत्यागस्य आनुरूप्यात्समालंकारश्च । द्वयोरपि श्लेषोजीवितयोः संसृष्टिः ॥ २८ ॥

---

१. 'एकैक' इति पाठः.

समरभुवि बभासे सादिनो भूषणानां
मरकतमणिभासां मध्यगः कश्चिदश्वः ।
सकलभटविमर्दैश्चञ्चलाद्भिन्नवाहा-
न्निपतित इव रथ्यो नेतुरह्नां शताङ्गात् ॥ २९ ॥

आयोधनाङ्कणजुषामसृगापगाना-
मावर्तगर्भपतिताः कुणपा हयानाम् ।
संवभ्रमुर्विहितपूर्वमुपाददानाः
शिक्षाविशेषमिव मण्डलचङ्क्रमेषु ॥ ३० ॥

धन्वी धानुष्कमाराद्सिभृतमसिमान्कुन्तिनं कुन्तधारी
चक्रास्त्रं चक्रहेतिर्गदिनमपि गदापाणिरन्योन्यमेत्य ।
स्वस्वास्त्राणां प्रयोगे दृढपरिचितयो द्वन्द्ववध्यत्वशैली-
साधारण्ये प्रतिष्ठामभिविदधुरमी द्वन्द्वयोधाग्रगण्याः ॥३१॥

---

**समरेति** । सादिनः तौरंगिकस्य भूषणानां कटकमुकुटादीनां ये मरकतमणयः गारुत्मतानि तेषां भासां श्यामप्रभाणां मध्यं गच्छति प्राप्नोतीति मध्यगः । ताभिः श्यामीभूत इत्यर्थः । कश्चिदश्वः सकलानां बहूनां भटानां अपराधस्य मृतानां विमर्दैः निर्गमनजन्यैः चञ्चलात् कम्पितात् अतएव भिन्नः मुक्तबन्धनः वाहः रथ्यः यस्य तस्मात् । अह्नां नेतुः सूर्यस्य शताङ्गात् रथात् समरभुवि युद्धदेशे निपतितः रथ्यः रथाश्व इवेत्युत्प्रेक्षा । बभासे रराज । मालिनी वृत्तम् ॥ २९ ॥

**आयोधनेति** । आयोधनाङ्कणजुषां युद्धदेशगतानां असृगापगानां रक्तनदीनां आवर्तगर्भेषु जलभ्रममध्येषु पतिताः हयानां अश्वानां कुणपाः शवानि । मण्डलचङ्क्रमेषु च चक्राकृतिगतिविशेषेषु विषये पूर्वं शिक्षाकाले विहितं अभ्यस्तं विहितपूर्वं शिक्षाविशेषं उपाददानाः स्वीकुर्वाणा इवेत्युत्प्रेक्षा । संवभ्रमुः भ्रमन्ति स्म ॥ ३० ॥

अथैकेन पादातयुद्धमाह—**धन्वीति** । अथ स्वस्य स्वस्य संबन्धिनां अस्त्रीयानां स्वीयानामिति वा अस्त्राणामायुधानां प्रयोगे प्रहरणे विषये दृढा अविस्मृता परिचितिः अभ्यासः येषां तथोक्ताः । अत एव अमी द्वन्द्वं अनुरूपं यथातथा युध्यन्त इति द्वन्द्वयोधाः तेषां अग्रगण्याः श्रेष्ठाः धन्वी धनुर्धरः धानुष्कं धनुर्धरम्, असिमान् खड्गधरः असिभृतम्, कुन्तधारी कुन्तिनम्, चक्रं हेतिः आयुधं यस्य सः चक्रास्त्रम्, गदा पाणौ यस्य सः गदिनमपि । अन्योन्यं

---

१. 'विम्नमेदे' इति पाठः. २. 'अङ्गण' इति पाठः. ३. 'गर्ते' इति पाठः. ४. 'अगात्' इति पाठः. ५. 'अथ विदधुः' इति पाठः.

ततः ।

धृष्टद्युम्नोत्कृत्तमर्माणमग्रे दृष्ट्वा हाहाशब्ददीनां स्वसेनाम् ।
कोदण्डज्यामामृशन्घोरघोषां कोपाद्भीष्मः प्राविशत्पार्थसैन्यम् ३२

सासिंहनादे सरितः कुमारे चापं समाकृष्य शरैर्विमुक्तैः ।
परान्वरीतुं प्रथमं प्रवृत्ते वरान्वरीतुं वव्लेऽप्सरोभिः ॥ ३३ ॥

पृथासुतानां पृतनान्तराले पृथक्पृथक्तस्य पृषत्कवर्याः ।
द्विपान्सहस्रं तुरगान्सहस्रं भटान्सहस्रं पतितानकार्षुः ॥ ३४ ॥

सिन्धोः सुतस्य विशिखैर्जमदग्निसूनोः
प्राणान्विलिह्य धिगिति प्रविमुक्तवद्भिः ।

---

आरात् समीपं एत्य । पदत्रयमिदं प्रथमान्तद्वितीयान्तद्वयपञ्चकेऽपि योज्यम् । इत्थं द्वन्द्वीभूयेत्यर्थः । हन्तृत्वशैल्याः हिंसाकर्तृत्वस्वभावस्य वध्यत्वशैल्याः हिंसाश्रयत्वस्वभावस्य च द्वयोरपि साधारण्ये तुल्यभावे । प्रतिष्ठां स्थितिं अभिविदधुः चक्रुः । परान्घ्नन्तः तैर्हन्यमानाश्चाभूवन्नित्यर्थः । अत्रैकैकस्मिन्हन्तृत्ववध्यत्वरूपानेकगुणयौगपद्यात्समुच्चयभेदः । स्रग्धरावृत्तम् ॥ ३१ ॥

**धृष्टद्युम्नेति** । ततः धृष्टद्युम्नेन पाण्डवसेनानायकेन उत्कृत्तानि छिन्नानि मर्माणि आयुःस्थानानि यस्याः तथोक्ताम् । अतएव हाहाशब्दैः दीनां स्वीयसेनां अग्रे दृष्ट्वा । भीष्मः घोरः दारुणः घोषः हुंकारः यस्यास्तथोक्तां कोदण्डस्य चापस्य ज्यां गुणं आमृशन् टंकारयन् सन् । पार्थसैन्यं पाण्डवसेनां प्राविशत् प्रविष्टवान् । अत्र तादृग्दीनसेनावलोकनस्य तथा भीष्मप्रवेशं प्रति हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम् । शालिनीवृत्तम् ॥ ३२ ॥

**ससिंहनाद इति** । सिंहनादेन सहिते ससिंहनादे सरितः गङ्गायाः कुमारे सुते भीष्मे प्रथमं आदौ चापं समाकृष्य विमुक्तैः प्रयुक्तैः शरैः परान् शत्रून् वरीतुं वारयितुं प्रवृत्ते उद्युक्ते सति । अप्सरोभिः वरान् पतीन् वरीतुं वव्ले व्यापृतम् । वलतेर्भावे लिट् । अप्सरोभिरपि प्रथमं वरान् वरीतुं वव्ल इत्यपि प्राहुः । ततः पूर्वं महावीराणां नाशाभावादिति भावः । अत्र भीष्मपरवारणाप्सरोवरवरणक्रिययोर्यौगपद्यात्समुच्चयः ॥ ३३ ॥

**पृथेति** । तस्य भीष्मस्य पृषत्कवर्याः बाणश्रेष्ठाः पृथक् पृथक् प्रत्येकं प्रत्येकम् । एकैकश इति यावत् । पृथासुतानां पाण्डवानां पृतनान्तराले सेनामध्ये सहस्रं द्विपान् गजान्, सहस्रं तुरगान् अश्वान् । उभयत्र तदारूढानिति ध्येयम् । सहस्रं भटान् पदातींश्च पतितान् निहतान् अकार्षुः चक्रुः ॥ ३४ ॥

**सिन्धोरिति** । जमदग्निसूनोः परशुरामस्य प्राणान् विलिह्य संस्पृश्य धिक्

---

१. 'वर्माणम्' इति पाठः. २. 'आस्पृशन्' इति पाठः. ३. 'परीतुं' 'परेतुं' इति च पाठः.

कृत्तान्यमुञ्चत विरोधिकुलानि कश्चि-
त्कश्चिज्जवेन जगृहे युधि भूतवर्गः ॥ ३५ ॥

देवव्रते दलितवैरिणि दृष्टमात्रे
सारथ्यमात्रकरणे कृतसंगरोऽपि ।
मूले न केवलमहो[1] मुरभिद्[2]रथस्य
मध्येऽपि[3] चक्रमतिसंभ्रम[4]यांचकार ॥ ३६ ॥

अरिमण्डलखण्डनै[5]ः पृषत्कैरवदीर्णा रुधिरापगावलीनाम् ।
अवनीपतयो रुषा निजानामधिविन्नां जननीममुष्य चक्रुः ॥ ३७ ॥

---

असारा इमे तापसीया इति प्रविमुक्तवद्भिः तत्प्राणांस्त्यक्तवद्भिः । अतिदृढस्पर्शैरिति यावत् । विशिखैः बाणैः । युधि कृत्तानि छिन्नानि विरोधिकुलानि शत्रुसंघान् कश्चित् एकः भूतवर्गः । पृथिव्यादिपञ्चकदेह इति यावत् । जवेन अमुञ्चत तत्याज । मम्रुरित्यर्थः । कश्चिदन्यः भूतवर्गः पिशाचवृन्दं जवेन जगृहे गृहीतवान् । विरोधिकुलानीति योज्यम् । आहारार्थमिति भावः । 'भूतं क्ष्मादौ पिशाचादौ न्याय्ये सत्योपमानयोः' इति वैजयन्ती ॥ ३५ ॥

**देवव्रत इति** । दलिताः निहताः वैरिणः शत्रवः येन तथोक्ते । अतएव देवव्रते भीष्मे दृष्टमात्रे दृष्टे सत्येव । नतु विलम्बादित्यर्थः । सारथ्यमात्रकरणे सारथ्यस्यैव करणे । नतु युद्धकरण इत्यर्थः । कृतः संगरः प्रतिज्ञा येन तथोक्तोऽपि मुरभित् श्रीकृष्णः रथस्य अर्जुनरथस्य मूले केवलं मूलभाग एव चक्रं रथाङ्गं नातिसंभ्रमयांचकार । भृशं न भ्रामितवानित्यर्थः । किंतु रथस्य मध्येऽपि चक्रं सुदर्शनं अतिसंभ्रमयांचकार । भीष्मवधाय चक्रायुधं गृहीतवानित्यर्थः । 'चक्रं सैन्ये रथावर्ते रथाङ्गेऽन्यराष्ट्रयोः । शस्त्रभेदे पुमांश्चक्रवाके' इति वैजयन्ती । अत्र दलितवैरिभीष्मावलोकनस्य विशेषणगत्या श्रीकृष्णस्य प्रतिज्ञात्यागपूर्वकं चक्रभ्रामणहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् ॥ ३६ ॥

**अरीति** । अरिमण्डलस्य शत्रुसमूहस्य खण्डनैः छेदकैः अमुष्य भीष्मस्य पृषत्कैः बाणैः अवदीर्णाः विदारिताः अवनीपतयः शत्रुभूपाः रुषा कोपेनेवेत्युत्प्रेक्षा । अमुष्य जननीं गङ्गां निजानां रुधिरापगावलीनां रक्तनदीसमूहानां अधिविन्नां कृतसापत्न्यकां चक्रुः । ताभिर्बहुसपत्नीकां चक्रुरित्यर्थः । बहवो रक्तप्रवाहाः प्रसस्रुरिति परमार्थः । सापत्न्याच्च परं दुःखं स्त्रीणामिति भावः । अत्रात्महन्तारं भीष्मं साक्षात्प्रतिकर्तुमशक्तानां शत्रूणां तदीयजननीदुःखजननोद्योगवर्णनात्प्रत्यनीकालंकारः । 'प्रत्यनीकं बलवतः शत्रोः पक्षे पराक्रमः' इति लक्षणात् । औपच्छन्दसिकवृत्तम् ॥ ३७ ॥

---

१. 'असौ' इति पाठः. २. 'मुरजित्' इति पाठः. ३. 'च' इति पाठः. ४. 'विभ्रमयांचकार' इति पाठः. ५. 'खण्डकैः' इति पाठः.

तदनु समरसंमुखीनवैरिभटप्राणपरिमोक्षणोन्मुखशिलीमुखप्रस्थानसमयसमापृच्छनपात्रीकृतकर्णपुटैर्बलवैरिनगरवास्तव्यवारविलासिनीजनपाणिपङ्केरुहपरिगलितपारिजातप्रसवसहपतितचञ्चरीकपुञ्जमञ्जुगुञ्जितव्यञ्जितभेदचिकुरबन्धैर्वेगापतितविशिखविघट्टनविपर्यस्तमुकुटविप्रकीर्णविविधमुक्ताफलशङ्कावदान्यरणश्रमवारिशीकरनिकरकोरकितनिटिलभागै रोषातिरेकव्यतिकरितदशनावलिदंशनपुनरुक्तरक्तिमाधरैरयुतेन राज्ञां शिरोभिः कल्पान्तरुद्रबन्धुः सुरसिन्धुसूनुरयं वसुंधरां बन्धुरयांचकार ॥

नद्याः सुतेन जनितैर्नवदेववर्गैः

सान्द्रे स्वधाम्नि सति संकुचितस्थितीनाम् ।

---

तदन्विति । तदनु अनन्तरं कल्पान्ते प्रलयकाले रुद्रस्य बन्धुः सदृशः अयं सुरसिन्धुसूनुः भीष्मः समरे युद्धे संमुखीनानां अभिमुखमवस्थितानां वैरिभटानां संबन्धिनां प्राणानां परिमोक्षणे त्याजने उन्मुखानां प्रवणानां शिलीमुखानां बाणानां प्रस्थानसमये प्रयाणकाले समापृच्छनस्य प्रश्नस्य पात्रीकृतानि संमुखीकृतानि कर्णपुटानि येषां तैः । बलवैरिनगरे स्वर्गे वास्तव्यानां निवसन्तीनां वारविलासिनीजनानां अप्सरसां पाणिपङ्केरुहे कमले इव ताभ्यां परिगलितैः पारिजातप्रसवैः सह पतितानां सहागतानां चञ्चरीकपुञ्जानां भृङ्गसमूहानां मञ्जुना मनोहरेण गुञ्जितेन झंकारेण व्यञ्जितः प्रकटितः भेदः मिथो वैलक्षण्यं येषां तथोक्ताः चिकुरबन्धाः धम्मिल्लाः येषां तैः वेगेन आपतितैः लग्नैः विशिखैः बाणैः विघट्टनेन निर्घातेन विपर्यस्तेभ्यः विषमितेभ्यः मुकुटेभ्यः किरीटेभ्यः विप्रकीर्णानां गलितानां विविधानां मुक्ताफलानां शङ्कायाः ऊहस्य वदान्यैः दातृभिः । तद्भ्रान्तिदायिभिरिति यावत् । रणात् युद्धात् यः श्रमः तत्संबन्धिना वारिशीकरनिकरेण स्वेदजलबिन्दुबृन्देन कोरकितः संजातकोरक इव स्थितः निटिलभागः भालदेशः येषां तैः । रोषातिरेकेण कोपातिशयेन व्यतिकरितया संघटितया दशनावल्या दन्तपङ्क्त्या दंशनेन द्विगुणितः पुनरुक्तः रक्तिमा आरुण्यं यस्य तादृशः अधरः अधरोष्ठः येषां तैः । अयुतेन दशभिः सहस्रैः राज्ञां शत्रुभूपानां शिरोभिः वसुंधरां भूमिं बन्धुरयांचकार विषमितां चक्रे । दशसहस्राणि शत्रूनवधीदित्यर्थः ॥

नद्या इति । नद्याः सुतेन भीष्मेण जनितैः रणे महावीरान् निहत्य निर्मितैः ।

---

१. 'मोपण' इति पाठः. २. 'समाप्रच्छन' इति पाठः. ३. 'वारवनिताजनता' इति पाठः. ४. 'आपतित' इति पाठः. ५. 'कूजित' इति पाठः. ६. 'वेगादापतित' इति पाठः. ७. 'विपर्यस्तविकटमुकुटविशङ्कट ('विटङ्क') विप्रकीर्णमुक्ता' इति पाठः. ८. 'अयं' इति नास्ति क्वचित्. ९. 'बन्धुरयांचक्रे' इति पाठः.

स्वर्गौकसामजनि सा स्वयमेव काम्या
कूलंकषा कुशिकनन्दनकोपमुद्रा ॥ ३८ ॥

भीष्मस्य कन्याजनपाणिपीडां पितुर्मुदे त्यक्तवतोऽपि तस्य ।
संघात्सुराणां सति पुष्पवर्षे संतानलाभोऽजनि तद्विचित्रम् ॥ ३९ ॥

इत्थं विधाय दिनमेकमसौ समीकं
पाश्चात्यभूधरमुपेयुषि पद्मबन्धौ ।
प्रत्यर्थिनामिव चकार बलापहारं
स्वस्यापि चापशिखरादवरोपितज्यः ॥ ४० ॥

---

नवानां देवानाम् । देवभूयंगतानामिति यावत् । वर्गैः वृन्दैः स्वस्मिन् स्वीये धाम्नि निवासे स्वर्गे सान्द्रे निबिडिते सति संकुचिता स्वल्पीभूता स्थितिः आवासः येषां तेषां स्वर्गौकसां देवानां सा प्रसिद्धा कूलंकषा अनिवार्या कुशिकनन्दनस्य विश्वामित्रस्य कोपमुद्रा त्रिशङ्कुस्वर्गसृष्टिरूपकोपचिह्नं स्वयं आत्मभिरेव काम्या अभिलषणीया अजनि अभूत् । अत्र देवानां स्वर्गस्थितिसंकोचासंबन्धेऽपि एवं त्रिशङ्कुस्वर्गकामनासंबन्धेऽपि च संबन्धोक्तिरूपं अतिशयोक्तिद्वयं अङ्गाङ्गिभावेन संकीर्णम् ॥ ३८ ॥

भीष्मस्येति । पितुः शंतनोः मुदे सत्यवतीलाभरूपसंतोषाय कन्याजनस्य पाणिपीडां विवाहं त्यक्तवतः विसृष्टवतोऽपि तस्य भीष्मस्य सुराणां संघात् पुष्पवर्षे सति संतानानां अपत्यानां संतानाख्यसुरवृक्षपुष्पाणां च लाभः । अजनीति यत्, तदेतत् भार्याभावेऽपि संतानलाभः । विशेष्यापेक्षी नपुंसकत्वनिर्देशः । विचित्रम् । 'संतानं संचये गोत्रे स्यादपत्ये सुरद्रुमे' इत्यमरः । अत्र संतानकारणदारपरिग्रहाभावेऽपि तल्लाभवर्णनात् श्लेषप्रतिभोत्थापितो विभावनालंकारः ॥ ३९ ॥

इत्थमिति । इत्थं उक्तप्रकारेण असौ भीष्मः एकं दिनम् । यावद्दिवसमित्यर्थः । अत्यन्तसंयोगे द्वितीया । समीकं युद्धं विधाय पद्मबन्धौ सूर्ये पश्चाद्भवं पाश्चात्यं भूधरं अस्तशैलं उपेयुषि प्राप्नुवति । अस्तंगते सतीति यावत् । प्रत्यर्थिनां शत्रूणां बलस्य सामर्थ्यस्य अपहारं नाशमिव । चापशिखरात् धनुष्कोटितः अवरोपिता स्रंसिता ज्या गुणः येन तथोक्तः सन् स्वस्य आत्मनः बलस्य सैन्यस्य अपहारं शिबिरप्रवेशनमपि चकार । 'बलं शक्तिर्बलं सैन्यम्' इति यादवः । अत्र शत्रूणां भीष्मस्य च बलापहारेण श्लेषभित्तिकालब्धैक्येनौपम्यस्य गम्यत्वात्तुल्ययोगिताभेदः ॥ ४० ॥

इति नवदिनानि नवनवानि भुजविलसितानि प्रकाश्य दशमेऽह्नि पुनरसौ निजध्वजचिह्नमात्रं वियदारोहति भगवति विवस्वति समरवर्षासमयशिखण्डिना गाण्डीवधन्वना पुरस्कृतं शिखण्डिनं दृष्ट्वा 'स्त्रीपूर्वोऽयम् । अमुना सह न योद्धव्यम्' इति निषिध्य हस्ततलनिरस्तधनुर्लस्तकः प्रथमं स्वदूरापसरणकुपितयेव सिञ्जिन्या पश्चादतिदूरनिष्कासितैर्विजयविपाठैरादिवसावसानं विदारितकलेवरतया नितान्ततान्तः शान्तमनाः शान्तनवोऽसौ स्वान्तनिहितरमाकान्तः सुभटलोकसमुचितां शरशय्यां क्रमादधिशिश्ये ॥

---

इतीति । इत्युक्तप्रकारेण नवदिनानि नवनवानि दिने दिने अभिनवानि भुजयोर्विलसितानि नियुद्धक्रीडाः प्रकाश्य प्रकटीकृत्य । दशमे अह्नि दिने भगवति विवस्वति सूर्ये वियत् आकाशं निजे ध्वजचिह्नस्य तालस्य प्रमाणं चिह्नमात्रम् । प्रमाणे मात्रच् । आरोहति सति । समरमेव वर्षासमयः तस्मिन् शिखण्डिना मयूरेण । तद्वदुल्लासभाजेत्यर्थः । गाण्डीवधन्वना अर्जुनेन पुरस्कृतं शिखण्डिनं द्रुपदपुत्रं दृष्ट्वा । अयं शिखण्डी पूर्वं जन्मकाले स्त्री स्त्रीपूर्वः । अमुना स्त्रीपूर्वेण शिखण्डिना सह न योद्धव्यं युद्धं न कर्तव्यमिति । आलोच्येति शेषः । निषिध्य तेन सह युद्धं विहाय हस्ततलेन निरस्तः त्यक्तः धनुषः लस्तकः मध्यं येन तथोक्तः । 'लस्तकस्तु धनुर्मध्यम्' इत्यमरः । विशिष्टवाचकानां पदानां सति विशेषणे विशेष्यमात्रपरत्वान्न धनुःशब्दवैयर्थ्यम् । प्रथमं आदौ । संहितवाणाकर्षणसमय इति यावत् । स्वस्य सिञ्जिन्या आत्मनः दूरमपसरणस्य आकर्णान्तमपसर्पणस्य करणेन हेतुना कुपितयेवेत्युत्प्रेक्षा । सिञ्जिन्या गाण्डीवगुणेन । पश्चात् अनन्तरं अतिदूरे निष्कासितैः निःसारितैः विजयस्य अर्जुनस्य विपाठैः वाणविशेषैः आदिवसावसानं सायंकालपर्यन्तं विदारितं कलेवरं शरीरं यस्य तस्य भावः तत्ता तया हेतुना । नितान्तं तान्तः ग्लानिं प्राप्तः शान्तं प्राणिहिंसातः विरतं मनो यस्य स तथोक्तः । अतएवासौ शान्तनवो भीष्मः । स्वान्ते मनसि निहितः ध्यातः रमाकान्तः विष्णुमूर्तिः येन तथोक्तः सन् । सुभटलोकस्य महावीरजनस्य समुचितां शरमयीं शय्यां क्रमात् शनैः अधिशिश्ये शेते स्म ॥

---

१. 'भुजलता' इति पाठः. २. 'पुनरसौ' इति नास्ति क्वचित्. ३. 'आरोहति सति' इति पाठः. ४. 'गाण्डीविना' इति पाठः. ५. 'समीक्ष्य', 'विलोक्य' इति च पाठः. ६. 'अपसार' इति पाठः. ७. 'दूर' इति पाठः. ८. 'अवदारित' इति पाठः. ९. 'शान्तनवः शान्तमनाः स्वान्त' इति पाठः.

पार्थेन क्षितिविनिखातपुङ्खकानां
बाणानामुपरि पितामहः शयानः ।
बभ्राज[1] व्रणविलवान्तरक्तबिन्दु-
धाराणां घन इव शक्रगोप[2]वर्षी ॥ ४१ ॥

संवीक्ष्य तत्र शयितं[3] तमिमं शरेषु
सांक्रामिकं गुणमिव प्रतिपद्यमानः ।
भास्वानपि स्वयमुपात्तकरोष्मशान्तिः
पाश्चात्त्यसागरशरेषु शयालुरासीत् ॥ ४२ ॥

जगति विनुतकीर्तौ जामदग्न्यस्य शिष्ये
कवलितरिपुवर्गे कालधर्मं यियासौ[4] ।
बहुसुरवरलाभाद्बद्धकामोत्सवानां
श्वशुरमरणदुःखं स्वर्वधूनां बभूव ॥ ४३ ॥

---

**पार्थेनेति** । पार्थेन अर्जुनेन क्षितौ भूमौ विनिखाताः पुङ्खकाः बाणमूलभागाः येषां तेषाम् । शैषिकः कप् । बाणानां उपरि शयानः व्रणविलेभ्यः बाणक्षतरन्ध्रेभ्यः वान्ताः निःसरन्तः रक्तबिन्दवः येन तथोक्तः । पितामहः भीष्मः धाराणामुपरि शक्रगोपानाम रक्तकीटान् वर्षतीति वर्षी घनः मेघ इव बभ्राज रेजे । उपमालंकारः । प्रहर्षिणीवृत्तम् । 'म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्' इति लक्षणात् ॥ ४१ ॥

**संवीक्ष्येति** । तत्र युद्धभुवि शरेषु शयितं तमिमं भीष्मं संवीक्ष्य । संक्रमात् देहाद्देहान्तरप्राप्तेः भवतीति साङ्क्रामिकं गुणं प्रतिपद्यमानः प्राप्नुवन्निवेत्युत्प्रेक्षा । स्वयमप्युपात्ता स्वीकृता करोष्मणः भुजप्रतापस्य किरणौष्ण्यस्य च शान्तिः उपरतिः येन तथोक्तः । भास्वान् सूर्यः । पाश्चात्त्यसागरस्य पश्चिमाब्धेः शरेषु बाणेषु जलेषु च । शयालुः शयनशीलः आसीत् । 'शरो दर्भान्तरे बाणे शरं दध्नि जलेऽपि च' इति विश्वः ॥ ४२ ॥

**जगतीति** । जगति विनुता संस्तुता कीर्तिर्यस्य तथोक्ते । कवलितः नाशितः रिपूणां वर्गः संघः येन तथोक्ते । जामदग्न्यस्य परशुरामस्य शिष्ये भीष्मे कालधर्मं पञ्चत्वं यातुं प्राप्तुं इच्छौ यियासौ सति । 'प्रपन्ने' इति पाठान्तरम् । बहूनां सुराणां देवभूयंगतानां भटानामेव वराणां पतीनां लाभात् प्राप्तेः हेतोः । बद्धः कामोत्सवः संभोगः यासां तासां स्वर्वधूनां अप्सरसां ;श्वशुरस्य

---

१. 'बभ्राजे' इति पाठः. २. 'कोप' इति पाठः. ३. 'तमिमं शयितं' इति पाठः. ४. 'प्रपन्ने' इति पाठः.

पतिते युधि वाहिनीसुते पतदश्रुर्द्विविधापि वाहिनी ।
[1]प्रथमं परितापमुच्छ्रितं पटवेश्मानि ययौ ततः [2]परम् ॥ ४४ ॥

इत्यनन्तभट्टकविकृतौ चम्पूभारते नवमः स्तबकः ।

---

भर्तृपितुः मरणेन यत् तद्दुःखं बभूव । अत्राप्सरसां तादृशदुःखासंबन्धेऽपि संबन्धोक्तेरतिशयोक्तिः । मालिनीवृत्तम् ॥ ४३ ॥

**पतित इति** । वाहिन्याः गङ्गायाः सेनायाश्च सुते भीष्मे युधि युद्धभुवि पतिते सति । द्विविधा कौरवीया पाण्डवीयापि वाहिनी सेना पतन्ति गलन्ति अश्रूणि बाष्पाणि यस्यास्तथोक्ता सती प्रथमं आदौ उच्छ्रितं महान्तं परितापं ययौ प्राप । ततः परं पटवेश्मानि दूष्याणि ययौ । वैतालीयं वृत्तम् ॥ ४४ ॥

इति श्रीसदाशिवपदारविन्दवन्दनकन्दलितानन्दसान्द्रस्य कुरविकुलचन्द्रस्य रामकवीन्द्रस्य कृतौ चम्पूभारतव्याख्याने लास्याख्याने नवमस्तवकविवरणं समाप्तमासीत् ॥

---

१. 'प्रथमा' इति पाठः. २. 'परा' इति पाठः.

## दशमः स्तबकः ।

अपरेऽहनि कौरवश्चमूनामधिपत्वे परिकल्प्य कुम्भयोनिम् ।
पुरतो निजगाद भीष्मपाताद्[1]दितोच्छूनदृशां नराधिपानाम् ॥ १ ॥

कुम्भोत्पत्त्या प्रसिद्धो मुनिवृ[2]षभ इव क्ष्माधरं विन्ध्यसंज्ञं
लोके तादृग्विधस्त्वं युधि निजमहसा भूभृ[3]तः स्तम्भयित्वा ।
जीवग्राहं गृहीत्वा विनमितवदनं लज्जया धर्मसूनुं
पद्भ्यामेव प्रचारं विदधतमधुनालीलया मेऽर्पयेति ॥ २ ॥

उदितं तदिदं निशम्य गोष्ठ्यामुचितज्ञः करमुन्नमय्य किंचित् ।
गुणसंनिभविक्रमस्तदानीं गुरुरेषोऽपि कुरूद्वहं बभाषे ॥ ३ ॥

कर्तुं हि शक्यमखिलं नृप काङ्क्षितं ते
धर्मात्मजे परिवृतेऽपि धराधिनाथैः ।

---

अपर इति । अपरेऽहनि परस्मिन् दिने । कौरवः दुर्योधनः । कुम्भयोनिं द्रोणम् । चमूनां अधिपस्य भावः अधिपत्वं तस्मिन् परिकल्प्य । तदधिपं कृत्वेति यावत् । भीष्मस्य पाताद्रुदितेन उच्छूने स्थूलीभूते दृशौ नेत्रे येषां तेषां नराधिपानां स्वपक्षाणां पुरतः अग्रे निजगाद उक्तवान् । तमिति शेषः । द्रोणं प्रतीत्यर्थः । औपच्छन्दसिकं वृत्तम् ॥ १ ॥

कुम्भेति । कुम्भे घटे उत्पत्त्या जन्मना प्रसिद्धः मुनिवृषभः मुनिश्रेष्ठः अगस्त्यः विन्ध्य इति संज्ञा यस्य तं क्ष्माधरं शैलमिव लोके तादृशी विधा प्रकारः कुम्भोत्पत्तिरूपः यस्य तथोक्तः । त्वमपि महसा स्वतेजसेति पूर्वत्रापि योज्यम् । युधि भूभृतः शैलान् शत्रुराजांश्च स्तम्भयित्वा । 'भूभृन्नरेन्द्रशैलेषु' इति विश्वः । जीवग्राहं गृहीत्वा । जीवन्तं गृहीत्वेत्यर्थः । धर्मसूनोरेवार्थादत्रापि कर्मत्वम् । 'समूलाकृतजीवेषु हन्कृञ्ग्रहः' इति णमुल् । कषादित्वादनुप्रयोगः । अतएव लज्जया विनमितवदनम् । किंच पद्भ्यामेव प्रचारं गमनं विदधतं कुर्वन्तम् । पादचारिणमिति यावत् । धर्मसूनुं धर्मराजं मे मह्यं लीलया अधुना अर्पय इति जगादेति पूर्वत्रान्वयः । उपमालंकारः । स्रग्धरावृत्तम् ॥ २ ॥

उदितमिति । गुहेन स्कन्देन संनिभः तुल्यः विक्रमः यस्य सः । उचितज्ञ अतएव एष गुरुः द्रोणोऽपि तदानीं गोष्ठ्यां सभायां तदिदं दुर्योधनोक्तं उदितं वाक्यं निशम्य करं किंचिदुन्नमय्य उद्धृत्य कुरूद्वहं दुर्योधनं प्रति बभाषे । औपच्छन्दसिकं वृत्तम् ॥ ३ ॥

कर्तुमिति । हे नृप दुर्योधन, धर्मात्मजे धर्मराजे धराधिनाथैः राजभिः विराटादिभिः परिवृते सत्यपि । शौरिणा श्रीकृष्णेन प्रणुन्नानां चोदितानां हयानां अर्जुनरथ्यानां हेषितशब्देन मिश्रः मिलितः नरस्य अर्जुनस्य शरास-

---

१. 'उदित' इति पाठः. २. 'ऋषभ' इति पाठः. ३. 'भूभृतम्' इति पाठः.

शौरिप्रणुन्नहयहेषितशब्दमिश्रो
न श्रूयते यदि नरस्य शरासघोषः ॥ ४ ॥
सर्वास्त्रविद्यासहवाससौख्यसंकेतभूमेरपि तस्य वाचम् ।
प्रत्युद्ययौ तां परिषद्गतानां तिर्यक्प्रचारः शिरसो नृपाणाम् ॥ ५ ॥
अथ द्रुपदजद्रोणौ [1]रथाश्वगजसंवृतौ ।
वद्धायतस[2]मुत्साहौ युद्धाय निरगच्छताम् ॥ ६ ॥
नामाक्षराङ्कितनदीसुतवा[3]र्णपूर्णे
रङ्गेऽवतेरतुरुभावपि राजवर्गौ ।
सक्ष्वेलितौ सविरुदौ [4]समहाट्टहासौ
[5]सास्फालितांसशिखरौ सहवल्गनौ तौ ॥ ७ ॥

---

घोषः गाण्डीवगुणटंकारः न श्रूयते यदि । अस्माभिरिति शेषः । तदा ते तव संबन्धि अखिलं काङ्क्षितं उक्तरीत्या तत्समर्पणरूपं कर्तुं शक्यम् । हिः खल्वर्थे । सार्जुनस्य तस्य ग्रहणं देवानामप्यशक्यमिति भावः ॥ ४ ॥

**सर्वेति** । सर्वासां अस्त्रविद्यानां सहवासेन यत्सौख्यं तस्य संकेतभूमिः परिनिर्दिष्टस्थानं तस्यापीत्यपिना किमुतान्यस्येत्यर्जुनस्य शौर्योत्कर्षो ध्वन्यते । तस्य द्रोणस्य संबन्धिनीं तां वाचं सार्जुनस्य धर्मराजस्य ग्रहणमशक्यमित्यात्मिकां प्रति परिषद्गतानां सभास्थितानां नृपाणां शिरसः तिर्यक्प्रचारः श्लाघाकम्पः प्रत्युद्ययौ उचितमेवोत्तरं दत्तमिति श्लाघयामासुः सर्वेऽपि सभ्या इत्यर्थः ॥ ५ ॥

**अथेति** । अथ द्रुपदजः धृष्टद्युम्नः द्रोणश्च तावुभौ पाण्डवकौरवसेनापती वद्धः आयतः विस्तीर्णश्च सम्यगुत्साहः युद्धोद्यमः याभ्यां तथोक्तौ सन्तौ अत एव रथैः अश्वैः गजैश्च संवृतौ सन्तौ युद्धाय युद्धं कर्तुं निरगच्छतां निर्गतवन्तौ ॥ ६ ॥

**नामेति** । अपि किंच । तावुभौ पाण्डवकौरवीयौ राज्ञां वर्गौ संघौ क्ष्वेलितेन सिंहनादेन सहितौ सक्ष्वेलितौ, विरुदैः छत्रचामरादिराज्यचिह्नैः सहितौ सविरुदौ, महता अट्टहासेन सहितौ समहाट्टहासौ, आस्फालितौ सशब्दं हस्तस्पृष्टौ अंसशिखरौ भुजशिरोग्रौ ताभ्यां सहितौ सास्फालितांसशिखरौ, वल्गनेन लङ्घनगमनेन सहितौ सहवल्गनौ च सन्तौ नामाक्षराङ्कितैः भीष्मेति वर्णचिह्नितैः नदीसुतस्य भीष्मस्य वाणैः पूर्णे रङ्गे युद्धभुवि अवतेरतुः प्रविशतुः ॥ ७ ॥

---

१. 'रथद्विपहयावृतौ' इति पाठः. २. 'महोत्साहौ' इति पाठः. ३. 'कीर्णे' इति पाठः. ४. 'समदाट्टहासौ' इति पाठः. ५. 'सस्फालनां'; 'संस्फालितां' इति च पाठः.

अक्षौहिणीरवनिवल्लभवाहिनीना-
मेकत्र गाढमिलिताः सुतरामसोढ्वा[1] ।
सा युद्धभूमिरुपरीव समुत्पतन्ती
सान्द्रा रजःपटलिका समदृश्यताभ्रे ॥ ८ ॥

भेरीरवे गगनवाहिनि[2] बाहुलीलां
द्रोणस्य वीक्षितुमनोभिरदृष्टपूर्वाम् ।
मध्ये विसृज्य दिवि जम्भभिदोऽवकाशं[3]
तस्थेऽभितस्त्रिदशकिन्नरयक्षसिद्धैः ॥ ९ ॥

ततस्ते नरेन्द्राः[4] सर्वेऽपि वसुधातलनिहितवामजानुभागाः क्ष्वेलितमन्त्रमुदीर्य तूणीरपेटिके[5]समुत्थापिताज्जीवाकर्षणसमुपजातत्वरान्परुषभीषणविषदिग्धान्विनततनयनिबद्धस्पर्धा[6]स्तक्षकमुखान्बाणपन्नगान्नभोभुवि चिराय[7] नर्तयन्तः परस्परपरिपन्थिनां[8] प्राणपवमानमपीप्यन् ॥

---

अक्षौहिणीरिति । एकत्र एकस्मिन् देश एव गाढं निबिडं यथा तथा मिलिताः अवनिवल्लभयो धर्मराजदुर्योधनयोः संबन्धिनीनां वाहिनीनां सेनानां अक्षौहिणीः अक्षौहिणीसंख्यवृन्दानि सुतरां असोढ्वा असहित्वा उपरि समुत्पतन्ती सा युद्धभूमिरिवेत्युत्प्रेक्षा । सान्द्रा रजःपटलिका धूलीपटलं करितुरगादिपदघट्टनजन्यं अभ्रे आकाशे समदृश्यत । लोकैरिति । शेषः ॥ ८ ॥

भेरीति । भेरीरवे विजयदुन्दुभीनां भांकारे गगनवाहिनि आकाशे व्याप्नुवति सति पूर्वं कदाचिदप्यदृष्टां अदृष्टपूर्वां द्रोणस्य चापाचार्यस्य बाहोर्लीलां युद्धविलासं वीक्षितुं मनो येषां तैः त्रिदशैः देवैः किन्नरैः यक्षैः सिद्धैश्च जम्भभिदः इन्द्रस्य अवकाशं मध्ये विसृज्य दिवि आकाशे अभितः तस्थे स्थितम् । तिष्ठतेर्भावे लिट् ॥ ९ ॥

तत इति । ततः ते सर्वेऽपि नरेन्द्राः राजान एव विषवैद्या इति श्लिष्टरूपकम् । 'नरेन्द्रो विषवैद्येऽपि' इति वैजयन्ती । वसुधायाः भूमेः तले निहितः निक्षिप्तः वामजानुभागः यैस्तथोक्ताः सन्तः । एकत्र धनुराकर्षणदार्ढ्याय, अन्यत्र सर्पनर्तनायेति भावः । क्ष्वेलितं सिंहनाद एव मन्त्रः सर्पवाग्बन्धनविद्याविशेषः तमुदीर्य प्रकटय्य तूणीरः निषङ्ग एव पेटिका तस्मात् समुत्थापितान् बहिर्नीतान् जीवायाः गुणस्य आकर्षणे जीवस्य आकर्षणे अपहरणे विषये च समुपजाता त्वरा येषां

---

१. 'असोढा' इति पाठः. २. 'शायिनि' इति पाठः. ३. 'भिदे' इति पाठः. ४. 'सर्वेऽपि नरेन्द्राः' इति पाठः. ५. 'पेटक' इति पाठः. ६. 'स्पर्धाभरांस्तक्षक' इति पाठः. ७. 'चिरं' इति पाठः. ८. 'परस्परं' इति पाठः.

कलशीतनयेऽथ कार्मुकं स्वं वलयीकुर्वति वैरिधन्वियूनाम् ।
युधि केवलमेव चापदण्डा धृतजीवा जनदृक्पथेष्[1]वतिष्ठन् ॥ १० ॥
विधातृसृष्टिं विपरीतरूपां विधातुमुद्युक्त इवैष वीरः ।
शराभिवर्[2]षेण चकार राज्ञामूर्ध्वं कबन्धानि शिरांस्यधस्तात् ॥ ११ ॥
तावद्घोटैर्वलक्षैर्वलयितसविधे तस्थिवांसं शताङ्गे
भारद्वाजो जिघृक्षुर्नृपतिमभिययौ भल्लवृष्टीर्विमुञ्चन् ।

---

तान् । 'जीवा जीवन्तिकामौर्व्योर्जीवः प्राणिनि गीष्पतौ' इत्यमरः । परुषं निष्करुणं यथा तथा भीषणेन भयंकरेण विषेण दिग्धान् लिप्तान्, परुषेण भीषणेन च विषेण दिग्धान् संगतान् । विनतातनयेन गरुत्मता सह निबद्धा स्पर्धा कलहः यैस्तान् । एकत्र वेगात् अन्यत्र निसर्गाचेति भावः । तक्षकः कर्मारः मुखं जनकः येषां तान् तन्निर्मितान्, तक्षकः नागराजः मुखं मुख्यः येषां तानिति च । 'तक्षको नागवर्धक्योः' इत्यमरः । 'मुखं तु प्रथमे मुख्ये' इति वैजयन्ती च । बाणानेव पन्नगान् नभसि आकाश एव भुवि चिराय नर्तयन्तः सन्तः परस्परं अन्योन्यं परिपन्थिनां शत्रूणां प्राणमेव पवमानं वायुं अपीप्यन् पाययन्ति स्म । तैरिति शेषः । बाणपन्नगैरित्यर्थः । पिबतेर्णिजन्ताल्लुङि चङि 'लोपः पिबतेरीच्चाभ्यासस्य' इत्युपधालोपः अभ्यासाकारस्य ईकारश्च । समस्तवस्तुवर्ति सावयवरूपकम् ॥

**कलशीति** । अथ कलशीतनये द्रोणे स्वं स्वीयं कार्मुकं धनुः वलयीकुर्वति संहितशरगुणाकर्षणेन मण्डलीकुर्वति सति वैरिधन्वियूनां तरुणशत्रुधनुर्धराणां चापदण्डा एव युधि युद्धदेशे धृतजीवाः धृतजीवात्मानः लग्नशिञ्जिनीकाश्च जनानां प्रेक्षकाणां दृक्पथेषु नेत्रमार्गेषु केवलं मुख्यं अतिष्ठन् । नतु वैरिधन्वियुवान इत्यर्थः । चापानेव सजीवानपश्यन्, नतु तद्धारिण इति निर्गलितार्थः । अत्र धन्वसूभयत्रप्राप्तस्य सजीवत्वस्यैकत्र धन्वसु नियमनात्परिसंख्यालंकारोऽसंबन्धे संबन्धरूपातिशयोक्तिश्चैकवाचकानुप्रवेशेन संकीर्णौ ॥ १० ॥

**विधात्रिति** । एष वीरः द्रोणः विधातुः ब्रह्मणः सृष्टिं ऊर्ध्वशिरोऽधःकबन्धरूपां विपरीतं व्यस्तं अधः शिर ऊर्ध्वं कबन्धीकृतं रूपं आकारः यस्यास्तथोक्तां विधातुं कर्तुं उद्युक्त इवेत्युत्प्रेक्षा । शराणां बाणानां अमितो वर्षेण राज्ञां वैरिणां कबन्धानि निःशीर्षकलेवराणि ऊर्ध्वं चकार शिरांसि अधस्ताच्चकार । शरैः पातितेषु शिरःसु ननृतुः कबन्धानीत्यर्थः ॥ ११ ॥

**तावदिति** । तावत् तदानीं वलक्षैः श्वेतैः घोटैः अश्वैः वलयितः वलयाकारेण संवृतः सविधः समीपदेशः यस्य स तस्मिन् शताङ्गे रथे तस्थिवांसं स्थितं नृपतिं धर्मराजं जिघृक्षुः गृहीतुमिच्छुः अत एव भल्लानां नाम बाणानां वृष्टीः

---

१. 'अवतिष्ठन्' इति पाठः. २. 'वर्षे' इति पाठः.

दंष्ट्रारोचिःशलाकास्तुमुलमवकिरन्दिक्षु सर्वासु घोराः
शीतांशुं मध्यसीम्नि स्थितमिव परिधेः सिंहिकायाः कुमारः॥ १२॥

तदनु तदीयमार्गणगणाभिघातनिवर्तितमुखैर्निजशिलीमुखैः सह दूरमपयातान्मातरिश्ववैश्वानराश्विनेयतनयप्रभृतीन्क्षितिपतिरक्षिणः[2] प्रवीरानभिवीक्ष्य[3] क्षणेन माधवधाव्यमानतुरंगेण[4] शताङ्गेन प्लवंगकेतनो नगेन्द्रो नदीप्रवाहमिव निर्निवाररथचर्यं[5] तमाचार्यमुपरुरोध ॥

शिवयुद्धकृतस्तस्य द्रोणयुद्धेऽप्यभून्मनः ।
सर्वापि जनता श्रेयः काङ्क्षते[6] ह्युत्तरोत्तरम् ॥ १३ ॥

---

विमुञ्चन् भारद्वाजः द्रोणः परिधेः परिवेषस्य मध्यसीम्नि स्थितं शीतांशुं चन्द्रं जिघृक्षुः ग्रसितुमिच्छुः अतएव घोराः दंष्ट्राणां दन्तानां रोचींषि तेजांसि शलाका इव ताः सर्वासु दिक्षु तुमुलं संकुलं यथा तथा अवकिरन् प्रसारयन् सिंहिका राहुमाता तस्याः कुमारः राहुरिव अभियय‍ौ समीपं प्राप्तवान् । घोराः सर्वासु दिक्ष्विति भल्लवृष्टिष्वपि योज्यम् । पूर्णोपमालंकारः । स्रग्धरावृत्तम् ॥ १२ ॥

तदन्विति । तदनु तस्य द्रोणस्य इमे तदीयाः मार्गणाः बाणाः तेषां गणस्य अभिघातेन प्रत्याहत्या निवर्तितानि व्यावर्तितानि मुखानि शल्यभागाः येषां तैः निजैः शिलीमुखैः बाणैः सह दूरं अपयातान् पलायितान् मातरिश्वतनयः मारुतिः भीमः, वैश्वानरतनयः अग्निप्रभवः धृष्टद्युम्नः, आश्विनेयतनयौ अश्विपुत्रौ नकुलसहदेवौ, ते प्रभृतयः तेषां तान् क्षितिपतिं धर्मराजं रक्षन्तीति रक्षिणः द्रोणात्पालयितॄन् प्रवीरान् अभिवीक्ष्य, प्लवंगः हनुमान् केतने यस्य सः अर्जुनः निर्निवारा दुर्निरोधा रथस्य चर्या गमनं यस्य तं, रथस्येव चर्या यस्येति च तं आक्षितिपतिग्रहणप्रवणं आचार्यं द्रोणं नगेन्द्रः शैलश्रेष्ठः नदीप्रवाहमिव माधवेन श्रीकृष्णेन धाव्यमानाः तुरंगा यस्मिंस्तेन शताङ्गेन रथेन उपलक्षितः अतएव क्षणेन उपरुरोध निरुद्धवान् । उपमालंकारः ॥

शिवेति । शिवेन शंभुना सह मानपात्रविशेषेण च युद्धं करोतीति कृतः तस्य अर्जुनस्य मनः । मनोरथ इत्यर्थः । द्रोणेन सह मानपात्रेण च युद्धे विषयेऽपि अभूत् । हि यस्मात् सर्वापि जनता जनसमूहः उत्तरादुत्तरं श्रेष्ठात् श्रेष्ठतरं उपर्युपरीति वा श्रेयः काङ्क्षते । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः श्लेषभित्तिकाभेदाध्यवसायमूलातिशयोक्त्युजीवित इति द्वयोरङ्गाङ्गिभावेन संकरः ॥ १३ ॥

---

१. 'ततः' इति पाठः. २. 'रथरक्षिणः' इति पाठः. ३. 'वीक्षमाणेन माधवेन इति पाठः. ४. 'तुरगेण प्लवंग' इति पाठः. ५. 'दुर्निरोधरथचर्यमाचार्यं' इति पाठः. ६. 'काङ्क्षति' इति पाठः.

दाता ग्रहीता [1] च धनंजयो वेत्युद्दामशब्दो [2] भुवनेऽस्ति यस्य ।
विस्फारघोषो धनुषोऽस्य भूयान्विजृम्भते स्म द्विषतामसह्यः ॥ १४ ॥
नामैषां मे ज्यायसः पुण्यकीर्तेरासीदिष्टं मात्स्यपुर्यामितीव ।
गाण्डीवोत्थैरेष बाणैर्हतानां कङ्कान्क्रव्यैर्विद्विषां पर्यतार्प्सीत् ॥ १५ ॥

तदनु सव्यसाचिशरवीचीनीचीकृतभुजदम्भविजृम्भः कुम्भसंभवः समराय परिगृहीतेषु संविधानेषु तूणीरमात्रमेव [3] प्रतिभटो- [4] न्मुखं विदधानैर्योधैः साकं चण्डभानुश्चरमगिरेरिव स्वयमपि कट- [5] कसीमानमासीदत् ॥

दातेति । यस्य गाण्डीवस्य दाता च धनंजयः ग्रहीता प्रतिग्राही च धनंजयो वा धनंजय एवेत्यर्थः । 'वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये' इत्यमरः । एकोऽग्निः, अपरोऽर्जुन इति तत्त्वम् । 'धनंजयोऽर्जुने वह्नौ' इत्यमरः । इत्युक्तप्रकारः उद्दामः महान् शब्द्यते कीर्त्यत इति शब्दः यस्य भुवने अस्ति । प्रसिद्ध इत्यर्थः । तस्यास्य धनुषः गाण्डीवस्य संबन्धी भूयान् गम्भीरः विस्फारघोषः गुणटंकारः द्विषतां असह्यः सोढुमशक्यः । कर्णकठोरः सन्निति यावत् । विजृम्भते स्म । 'धनंजयौ' इति द्विवचनान्तपाठस्तु दातृप्रतिग्रहीत्रोः द्वित्वेन प्रतीत्याधायकः कविविवक्षितविरोधाभासास्फोरकत्वात् उपेक्ष्यः ॥ १४ ॥

नामेति । एषां कङ्कानां नाम कङ्क इति संज्ञा मे मम संबन्धिनः पुण्यकीर्तेः ज्यायसः ज्येष्ठस्य धर्मराजस्य मात्स्यपुर्यां विराटनगरे । तत्रावस्थानसमय इति भावः । इष्टं काङ्क्षितं आसीत् । इत्युक्तहेतोरिवेत्युत्प्रेक्षा । एषोऽर्जुनः गाण्डीवादुत्थैः प्रयुक्तैः बाणैः हतानां विद्विषां क्रव्यैः मांसैः कङ्कान् गृध्रान् पर्यतार्प्सीत् । तृप्यतेः परिपूर्वाल्लुङि सिचि वृद्धिः । शालिनी वृत्तम् ॥ १५ ॥

तदन्विति । तदनु सव्यसाचिनः अर्जुनस्य शराणां वीचिभिः परम्पराभिः नीचीकृता क्षीणीभूता भुजयोः दम्भविजृम्भा दर्पचेष्टितं यस्य तथोक्तः कुम्भसंभवः द्रोणः चण्डभानुः सूर्यः चरमगिरेः अस्तशैलस्य कटकसीमानं नितम्बप्रदेशमिव स्वयमपि समराय युद्धं कर्तुमिति 'क्रियार्थ–' इत्यादिना चतुर्थी । परिगृहीतेषु संविधानेषु साधनानां मध्य इत्यर्थः । तूणीरमात्रं एकं निषङ्गमेव प्रतिभटानां शत्रुवीराणां उन्मुखं अभिमुखं विदधानैः कुर्वाणैः । पृष्ठं प्रकाश्य पलायमानैरित्यर्थः । योधैः साकं भटैः सह कटकसीमानं शिबिरप्रवेशं प्रति आसीदत् प्राप्तवान् । 'कटकं वलये सानौ राजधानीनितम्बयोः' इति वैजयन्ती । अत्र प्रकृतयोरेव भारद्वाजभास्करयोः श्लेषभित्तिकालब्धैक्यकटकसीमाप्रवेशेनौपम्यस्य गम्यत्वात्तुल्ययोगिताभेदः । एवं कुम्भे संभवति वर्तत इति कुम्भसंभवः तत्परिमि-

१. 'अपि धनंजयावित्युद्दामशब्दौ' इति पाठः. २. 'भुवनेषु' इति पाठः. ३. 'तूणी' इति पाठः. ४. 'प्रतिभटाभिमुखं' इति पाठः. ५. 'स्वकटकस्य सीमानं' इति पाठः.

अन्येद्युर्द्रोणसंचोदितनृपवचने तस्थिवद्भिस्त्रिगर्तै-
राहूतेऽन्यत्र योद्धुं गतवति विजये कृष्णक्लृप्तप्रशंसे[1] ।
प्रातस्ते धार्तराष्ट्राः परबलमभजन्वीतभीकैरनीकै-
र्दावज्वालेन शून्यं वनमिव चमरा वल्गवद्भिः स्वयूथैः ॥१६॥

भारद्वाजोऽपि तस्मिन्नहनि कुरुपतेर्वाञ्छितार्थं विधास्य-
न्रन्ध्रान्वेषैकतानो रथमधिनिकषा[2] स्थापिते धर्मसूनोः ।
कृष्णाभ्यां रक्षणाय प्रथितभुजमदे सत्यजित्युत्स्फुलिङ्गं
दृश्योर्युग्मं निधाय[3] प्रतिभटपृतनाकुक्षिमाविक्षदेकः ॥ १७ ॥

विद्ध्वा[4] चिरेण युगमात्रमपास्य रथ्या-
निर्धूनितेन सरुषा गुरुणा निकृत्तम् ।

---

तिजलादिः तस्य शरवीचिभिः बहुतरजलतरंगान्तर्हितत्वमनुरूपमित्यानुरूप्यघट-नात्मकः समालंकारश्च द्वयोः संसृष्टिः ॥

अन्येद्युरिति । अन्येद्युः परस्मिन् दिवसे प्रातः द्रोणेन संचोदितस्य त्रिगर्तैः सह अर्जुनस्य युद्धं घटयेति प्रेरितस्य नृपस्य दुर्योधनस्य वचने तस्थिवद्भिः तिष्ठद्भिः अतएव त्रिगर्तैः सुशर्मादिभिः योद्धुं आहूते कृष्णेन क्लृप्ता संघटिता प्रशंसा 'आहूताद्यान्यतो गच्छेयम्' इति विजयव्रतस्तुतिः यस्य तस्मिन् अत एव विजये अर्जुने अन्यत्र गतवति सति ते धार्तराष्ट्राः वीता भीः येषां तैः गत-भयैः । अर्जुनराहित्यादिति भावः । शैषिकः कप् । अनीकैः बलैः सह परेषां पाण्डवानां बलं चतुरङ्गं चमराः मृगविशेषाः वल्गवद्भिः प्लवद्भिः स्वैः यूथैः सजा-तीयसंघैः सह दावज्वालेन शून्यं वनमिव अभजन् प्राप्तवन्तः । 'द्वयोर्ज्वालकीलौ' इत्यनुशासनाज्ज्वालेनेति पुंस्त्वनिर्देशः । उपमालंकारः । स्रग्धरावृत्तम् ॥ १६ ॥

भारद्वाज इति । अपि किंचेत्यर्थः । तस्मिन्नहनि कुरुपतेः दुर्योधनस्य वाञ्छितमर्थं धर्मराजग्रहणरूपं विधास्यन् करिष्यन् अतएव रन्ध्रस्य परिच्छि-द्रस्य अन्वेषे विचारणे एकतानः अनन्यवृत्तिः भारद्वाजः धर्मसूनोः रक्षणाय रथं अधिनिकषा तद्रथस्य समीपे । 'अभितःपरितः—' इत्यादिना द्वितीया । कृष्णाभ्यां श्रीकृष्णार्जुनाभ्यां स्थापिते निवेशिते प्रथितः प्रसिद्धः भुजयोः मदः दर्पः यस्य तस्मिन् सत्यजिति नाम पाञ्चाले उद्यन्तः स्फुलिङ्गाः क्रोधाग्निकणाः यस्मात्तत् दृश्योः नेत्रयोः युग्मं निधाय । तमेव दर्शंदर्शमित्यर्थः । एकः अर्जुन-राहित्यादप्रतिभटः सन्नित्यर्थः । प्रतिभटपृतनायाः शत्रुसेनायाः कुक्षिं मध्यभागं आविक्षत् प्रविष्टवान् । स्रग्धरावृत्तम् ॥ १७ ॥

विद्ध्वेति । रथ्यान् द्रोणरथाश्वान् अपास्य विहाय युगमात्रं अश्वस्कन्धवा-

---

१. 'प्रसङ्गे' इति पाठः., २. 'रथमथ' इति पाठः. ३. 'निखाय'; 'विधाय' इति पाठौ. ४. 'युध्वा' इति पाठः.

तस्याथ रङ्गभुवि सत्यजितोत्तमाङ्गं[1]
बाष्पाम्बुभिः सह पपात युधिष्ठिरस्य ॥ १८ ॥

उच्चया त्वरया तस्मिन्नुपकण्ठं समागते ।
पार्थस्य पश्यतोऽग्रे तं प्राणा अपि तथाचरन् ॥ १९ ॥

तस्याथ द्वेषिसेनाजलधिकवलनात्कुम्भयोनित्वकीर्तिं[2]
स्पष्टीकर्तुं स्वकीयामिव कुतुकवतः पार्श्वमभ्येत्य वेगात्[3] ।
भीमो रथ्यानमथ्नाद्द्रुपदतनुभवः सूदयामास सूतं
कोदण्डं केतुदण्डं द्वयमपि शकलीचक्रतुर्दस्रपुत्रौ[4] ॥ २० ॥

ततस्तादृशं कुम्भसंभवस्याभिषङ्गमभिवीक्ष्य क्रोधनतया कर्णताल-समीरणसमृद्धिपरिणतचक्रवातगर्भपरिभ्रमद्रथकेतुपताकापटसहस्र-

---

ह्यतिर्यग्दारुविशेषमेव विद्ध्वा निर्भिद्य चिरेण निर्धूनितेन व्याकुलीकृतेन अतएव सरुषा सक्रोधेन गुरुणा द्रोणेन निकृत्तं छिन्नं तस्य सत्यजितः उत्तमाङ्गं शिरः रङ्गभुवि युद्धभूमौ । 'रङ्गो रणतले रागे' इति विश्वः । युधिष्ठिरस्य बाष्पाम्बुभिः सह पपात । 'युद्ध्वा' इति पाठोऽसंगतत्वादुपेक्ष्यः ॥ १८ ॥

**उच्चयेति ।** तस्मिन् द्रोणे उच्चया महत्या त्वरया उपकण्ठं समीपं प्रति समागते सति अग्रे पुरः । स्वसमीप इति यावत् । तं द्रोणं पश्यतः पार्थस्य युधिष्ठिरस्य प्राणा अपि तथा उक्तप्रकारं आचरन्, उपकण्ठं कण्ठसमीपं समागता इत्यर्थः । कण्ठगतप्राणो भीत्याभूद्धर्मराज इत्यर्थः । अत्र द्रोणस्य युधिष्ठिरप्राणानां च श्लेषमित्तिकालब्धैक्येनोपकण्ठसमागमनेन धर्मेणौपम्यस्य गम्यत्वात्केवलप्रकृतासदस्तुल्ययोगितामेदः ॥ १९ ॥

**तस्येति ।** अथ समीपागमनानन्तरं द्वेषिणां सेनाया एव जलधेः कवलनात् क्षपणात् स्वकीयां कुम्भयोनित्वेन अगस्त्यभावेन घटोत्पत्त्या च या कीर्तिः तां स्पष्टीकर्तुं कुतुकवतः कुतूहलिन इव स्थितस्येत्युत्प्रेक्षा उक्तरूपकानुप्राणिता । द्रोणस्य पार्श्वं प्रति वेगात् अभ्येत्य आगत्य । 'कोपात्' इति पाठान्तरम् । भीमो रथ्यान् अमथ्नात् हन्ति स्म । मथ्नातेः कर्तरि लङ् । द्रुपदतनुभवः धृष्टद्युम्नः सूतं सारथिं सूदयामास निजघ्ने । दस्रयोः अश्विनोः पुत्रौ नकुलः सहदेवश्च कोदण्डं केतुदण्डं च द्वयमपि शकलीचक्रतुः चिच्छिदतुः । स्रग्धरा वृत्तम् ॥ २० ॥

**तत इति ।** ततः अनन्तरं तादृशं उक्तविधं कुम्भसंभवस्य द्रोणस्य अभिषङ्गं पराभवं अभिवीक्ष्य क्रोधनतयां अतिक्रोधेन रणे मत्तः उन्मादितः भगदत्तः

---

१. 'वराङ्गं' इति पाठः. २. 'द्वेष्टृसेना' इति पाठः. ३. 'कोपात्' इति पाठः. ४. 'दलयां' इति पाठः.

संपादितसमरसागरावर्तवशंवदफेनकूटशोभानि सकलदिङ्मुखघण्टापथजाङ्घिकघण्टाभरणरणितवधिरीकृताष्टलोकपालपुरजनानि [1]निविडितसुरसमाजसमाक्रान्तगगनमण्डपसंधिबन्धस्थिरीकरणाय [2]दत्तायतेन्द्रनीलस्तम्भानिव शुण्डादण्डानूर्ध्वमु[3]न्नमयमानानि समस्तानि हास्तिकानि पुरस्ताद्विस्तार्य रणमत्तो भगदत्तः सुप्रतीकमधिरूढो हठाद्भीममभिदुद्राव ॥

घोरेऽभियाते सति सुप्रतीके [4]दूरेऽपसस्रुर्द्विषतां बलानि ।
परश्वधास्त्रे पतिते [5]जलानि पत्युर्नदीनामिव पश्चिमस्य ॥ २१ ॥

---

सुप्रतीकं नाम औपवाह्यं गजं अधिरूढः सन् कर्णौ तालौ व्यजने इव तयोः संबन्धिन्या समीरणसमृद्ध्या वायुमण्डल्या परिणतानां संजातानां चक्रवातानां गर्भेषु मध्येषु परिभ्रमद्भिः रथकेतुषु पताकापटानां सहस्रैः संपादिता समरस्यैव सागरस्य आवर्तानां भ्रमीणां वशंवदानि । परिभ्रमन्तीत्यर्थः । यानि फेनकूटानि तेषां शोभा यैस्तथोक्तानि सकलानि दिशां मुखानि अग्राण्येव घण्टापथाः महामार्गाः तेषु जाङ्घिकैः वेगेन गच्छद्भिः घण्टाभरणानां रणितैः घणघणारावैः वधिरीकृताः । विदारितकर्णा इत्यर्थः । अष्टानां लोकपालानां इन्द्रादीनां पुरेषु अमरावत्यादिषु जना यैस्तथोक्तानि । निविडितैः सान्द्रीभूतैः सुराणां समाजैः संघैः सम्यक् आक्रान्तस्य गगनस्यैव मण्डपस्य संधिबन्धेषु स्थिरीकरणाय दार्ढ्यसंपादनार्थं दत्तान् स्थापितान् आयतांश्च इन्द्रनीलस्तम्भानिव स्थितान् शुण्डाः दण्डा इव तान् । 'शुण्डा करिकरे मद्ये' इति विश्वः । उन्नमयमानानि ऊर्ध्वं प्रसारयन्ति समस्तानि हास्तिकानि गजबृन्दानि पुरस्तात् विस्तार्य हठात् बलात् भीमं अभिदुद्राव धावितवान् ॥

**घोर इति ।** घोरे भयंकरे सुप्रतीके भगदत्तगजे अभियाते प्राप्ते सति द्विषतां बलानि चतुर्विधानि परश्वध इत्यस्त्रे आयुधे परशुरामीये पतिते प्रविष्टे सति पश्चिमस्य नदीनां पत्युः समुद्रस्य जलानीव दूरे अपसस्रुः अपचक्रमुः । 'अम्बुपूराः' इति पाठे उपमाया भिन्नलिङ्गाख्य इति दोषापत्तिः । परश्वधोऽस्यास्तीति परश्वधः परशुरामः । अर्शआदित्वान्मत्वर्थीयोऽच् । तस्यास्त्र इत्यर्थः । तेन न्यूनपदत्वाख्यदोष इत्यपि प्राहुः । पुरा किल परशुरामेण विप्रदत्तायां क्षितौ स्थितिं जुगुप्समानेन वासदेशायार्थितोऽब्धिः तत्परश्वधपरिक्षिप्तः सुदूरमपससारेति पौराणिकाः ॥ २१ ॥

---

१. 'निविड' इति पाठः. २. 'दत्तानिन्द्र' इति पाठः. ३. 'उन्नमय्य' इति पाठः. ४. 'दूरं ससर्प द्विषतां बलौघः' इति पाठः. ५. 'अम्बुपूराः' इति पाठः.

केतून्पातयतो रथाञ्श्लथयतो दन्तावलान्कुन्ततो
घोटान्पाटयतो विभिद्य गदया भीमो द्विपान्विद्विषाम् ।
संग्रामाङ्गणरक्तवारिलहरीसंलक्ष्यमाणस्वक-
च्छायामात्रसहायमेव विदधे तं सुप्रतीकं क्षणात् ॥ २२ ॥

पादाग्रहस्तरदनप्रतिघातलीलाभग्नारिरक्तमसृणो भगदत्तदन्ती ।
आलक्ष्यत क्षितिभृतस्तटवप्रकर्मण्यालिप्तगात्र इव गैरिककर्दमेन २३

तदनु करटिमल्लं तत्र वीक्ष्यापतन्तं
दलितपरबलं तं दन्तकुन्तं वहन्तम् ।
चकितहृदयवृत्तेः [1]संगरे वायुसूनो-
र्जनकगुणसमृद्धिर्जङ्घयोराविरासीत् ॥ २४ ॥

---

**केतूनिति** । अथ केतून् पातयतः, रथान् श्लथयतः शिथिलान् कुर्वतः, दन्तावलान् गजान् कृन्ततः छिन्दतः, घोटान् अश्वान् पाटयतः विदारयतः, विद्विषां द्विपान् गजान् गदया विभिद्य भीमः तं सुप्रतीकं भगदत्तगजं क्षणात् संग्रामाङ्गणे युद्धदेशे रक्तवारीणां शोणितोदकानां लहरीषु महातरंगेषु संलक्ष्यमाणा परिदृश्यमाना स्वका च्छाया प्रतिबिम्ब एव च्छायामात्रं सहायः यस्य तथोक्तम् । विदधे चक्रे । तदितरान् सर्वानप्यवधीदित्यर्थः । अत्र सुप्रतीकभिन्नसर्वगजवधस्य स्वच्छायामात्रतत्सहायकत्वरूपेण वर्णनात्पर्यायोक्तालंकारः । शार्दूलविक्रीडितं वृत्तम् ॥ २२ ॥

**पादेति** । पादाग्रैः भग्नपादैः चतुर्भिः हस्तेन शुण्डया रदनाभ्यां दन्ताभ्यां च प्रतिघातलीलया प्रहारक्रियया भग्नानां अरिदन्तिनां शत्रुगजानां रक्तेन मसृणः । लिप्त इत्यर्थः । भगदत्तस्य दन्ती सुप्रतीकः । क्षितिभृतः अद्रेः तटे वप्रकर्मणि उत्खातकेल्यां गैरिकस्य रक्तधातुविशेषस्य कर्दमेन पङ्केन आ समन्तालिप्तं गात्रं यस्य तथोक्त इवेत्युत्प्रेक्षा । आलक्ष्यत ददृशे । लोकैरिति शेषः । लक्षतेः कर्मणि लङ् । यत्त्वत्र पादानां अग्रहस्तानां शुण्डाग्राणां रदनानां च प्रतिघातेनेति, यच्च वात्रैव गैरिकाणां मनःशिलानामिति व्याख्यानुसारेण 'धातुर्मनःशिलाद्यद्रेर्गैरिकं तु विशेषतः' इत्यमरकोशलेखनं नृसिंहस्य, तत्तस्य विज्ञंमन्यस्य न चोद्यम् । अग्रहस्तस्यैक्यं रदनयोर्द्वित्वं गैरिकमनःशिलयोर्विजातीयत्वं चानुभवतां सहृदयानां परं प्रसिद्धिविरुद्धताख्यो दोषस्तु हृदयं धुनोति ॥ २३ ॥

**तदन्विति** । तदनु तत्र युद्धभूमौ दन्तः कुन्तः आयुधविशेष इव तं वहन्तं अतएव दलितं विदारितं परबलं शत्रुसैन्यं यस्मिंस्तत्तथा । आपतन्तं आगच्छन्तं तं करटिमल्लं गजश्रेष्ठं सुप्रतीकं वीक्ष्य संगरे युद्धे विषये चकिता भीता हृदयस्य

---

१. 'धावतो' इति पाठः.

इति सुप्रतीकसंक्षुभितनिजध्वजिनीकोलाहलसमाकर्णनाकुलमानसो वासवसूनुर्महेषुनिषूदितावशेषसंशप्तकगणदूरनिरासप्रयुज्यमानवायव्यास्त्रवेगार्धं विभज्य निजरथाय वितीर्णवानिव तूर्णमासाद्य निर्वेलभुजगर्वदुर्विलसितौ तौ[3] कुम्भजातकिरातराजौ निरुध्य चिरेण योधयामास ॥

ततः[4] ।

मनश्च पार्थस्य रथं च भङ्क्तुं[5] मदावलेन्द्रस्य करे प्रवृत्ते ।
सारथ्यचातुर्यवशेन शौरेर्भग्नः स तस्यैव मनोरथोऽभूत् ॥२५॥

---

मनसः वृत्तिः अवस्था यस्य तस्य वायुसूनोः भीमस्य जङ्घयोः जनकस्य वायोः गुणः गमनवेगः तस्य समृद्धिः आविरासीत् जाता । पलायितोऽभूदित्यर्थः । अत्र तादृशवस्तुप्रतीकावलोकनस्य पलायनहेतुत्वात्काव्यलिङ्गभेदः । 'धावतो वायुसूनोः' इति पाठान्तरम् ॥ २४ ॥

इतीति । इत्युक्तप्रकारेण सुप्रतीकेन संक्षुभितायाः निजायाः ध्वजिन्याः सेनायाः कोलाहलस्य संकुलारावस्य समाकर्णनेन आकुलं व्याकुलं मानसं यस्य सः । वासवसूनुः अर्जुनः महद्भिः इषुभिः बाणैः निषूदितेभ्यः निहतेभ्यः अवशेषाणां संशप्तकानां नाम त्रैगर्तानां गणस्य दूरं निरासे विषये प्रयुज्यमानस्य वायव्यास्त्रस्य यो वेगस्तस्मादर्धं वेगं विभज्य । निजाय रथाय वितीर्णवान् दत्तवानिवेत्युत्प्रेक्षा । तूर्णं सत्वरं आसाद्य समीपं गत्वा निर्वेलानि अपाराणि भुजयोः गर्वस्य दुर्विलसितानि दुश्चेष्टितानि ययोस्तौ । कुम्भजातः द्रोणः किरातराजः भगदत्तः तौ द्वावपि निरुध्य चिरेण योधयामास युद्धमकारयत् । तावात्मनेति शेषः । द्रोणभगदत्तावित्यर्थः ॥

तत इति । ततः इत्युत्तरेणान्वयः ॥

मन इति । ततः अर्जुननिरोधानन्तरं पार्थस्य अर्जुनस्य मनश्च रथं च भङ्क्तुं भञ्जयितुं मदावलेन्द्रस्य सुप्रतीकस्य करे शुण्डायां प्रवृत्ते व्यापृते सति । शौरेः श्रीकृष्णस्य सारथ्ये चातुर्यवशेन नैपुण्यप्रभावेन सः अर्जुनमनोरथभङ्गविषयकः तस्य सुप्रतीकस्य मनोरथ एव भग्नोऽभूत् । मनश्च भग्नोऽभूत् । रथश्च भग्नोऽभूदिति चार्थः । आगच्छतस्तस्य मार्गादन्यतो रथं गमयामासेति परमार्थः । अत्र पार्थमनोरथभङ्गार्थमुद्यतस्य सुप्रतीकस्य मनोरथभङ्गवर्णनादनर्थोत्पत्तिरूपो विषमप्रभेदः मनसः रथस्य कामस्य च त्रयाणां मनोरथशब्दश्लेषभित्तिकाभेदाध्यवसायमूलातिशयोक्त्यनुप्राणित इति द्वयोरङ्गाङ्गिभावेन संकरः ॥ २५ ॥

---

१. 'ध्वजिनीचर' इति पाठः. २. 'समाकुल' इति पाठः. ३. 'तौ' इति नास्ति क्वचित्. ४. 'तत' इति नास्ति क्वचित्. ५. 'हन्तुं' इति पाठः.

पार्थस्य तस्य तदनु प्रहिता वधाय
भङ्गं ययौ पथि शरैर्भगदत्तशक्तिः ।
प्रस्थानकर्मसमये भयदायि तस्या
नागस्य दर्शनमजायत यत्समीपे ॥ २६ ॥

अथ तेन हरेः सुताय मुक्तं हृदि कृत्वा स्वयमात्मदैवमस्त्रम् ।
तदिदं वनमालया मुकुन्दः सहवास्तव्यकुटुम्बितामनैषीत् ॥ २७ ॥

स फल्गुनस्तत्र चकार बाणैश्चिकीर्षुमन्त्याक्षरवर्जितं स्वम् ।
कुलाचलात्पीवरमप्यरातेः करेणुमाद्याक्षरयोगशून्यम् ॥ २८ ॥

---

**पार्थस्येति** । तदनु सुप्रतीकशुण्डाप्रहारव्यसनानन्तरम् । तस्य पार्थस्य अर्जुनस्य वधाय वधं कर्तुमिति 'क्रियार्थ–' इत्यादिना चतुर्थी । प्रहिता प्रेरिता भगदत्तस्य शक्तिः नाम आयुधं पथि मार्गमध्ये शरैः अर्जुनबाणैः भङ्गं छेदं ययौ । शक्तिः सामर्थ्यं भङ्गं पराजयं ययावित्यपि प्राहुः । यत् यस्मात् तस्याः । भगदत्तशक्तेः प्रस्थानकर्मणः अर्जुनवधार्थं प्रयाणस्य समये भयं भङ्गजन्यं ददातीति तद्दायि नागस्य सर्पस्य गजस्य च । 'गजेऽपि नागमातङ्गौ' इत्यमरः । दर्शनं समीपे । नतु किंचिद्दूरं गमनानन्तरमित्यर्थः । अजायत अभूत् । तस्माद्भङ्गं ययावित्यन्वयः । अत्र नागदर्शनस्य हेतोः भङ्गस्य हेतुमतश्च द्वयोरुक्तेर्हेतुरलंकारः । नागशब्दश्लेषभित्तिकालब्धसर्पगलद्वयाभेदाध्यवसायमूलातिशयोक्त्यनुप्राणित इति द्वयोरङ्गाङ्गिभावेन संकरः । 'शशसर्पवृकादीनां दर्शनाद्भयमाप्नुयात्' इति शाकुनाः ॥ २६ ॥

**अथेति** । अथ शक्तिभङ्गानन्तरम् । तेन भगदत्तेन हरेः इन्द्रस्य सुताय अर्जुनं हन्तुमिति पूर्ववच्चतुर्थी । मुक्तं आत्मा स्वं विष्णुः दैवं यस्य तथोक्तम् । अस्त्रं वैष्णवास्त्रं विष्णोर्भूप्रार्थनया लब्ध्वा पित्रा दत्तं मुकुन्दः श्रीकृष्णः स्वयं हृदि कृत्वा वक्षसा गृहीत्वा । अर्जुनं ततो मोचयित्वेति यावत् । तत् वक्षसा गृहीतमिदं वैष्णवास्त्रं वनमालया सह वास्तव्यः एकत्रवासी यः कुटुम्बी गृही तस्य भावः तत्ता तां तया सह स्थितिं अनैषीत् प्रापयामास । तदस्त्रं वनमालेव कृष्णस्य वक्षसि कान्चिन्मालाभूदित्यर्थः । 'वज्रं तृणप्रायतां वह्निः शीतलतां हिमं दहनतामायाति यस्येच्छया' इत्यागमादिति भावः । औपच्छन्दसिकवृत्तम् ॥२७॥

**स इति** । स फल्गुनः अर्जुनः स्वं आत्मानं तत्र तदानीं अन्त्याक्षरेण फल्गुनेति नामनि अन्तिमवर्णेन । नकारेणेति यावत् । वर्जितं रहितं फल्गुम् । असारमित्यर्थः । 'वाच्यवत्फल्ग्वसारं च' इति यादवः । चिकीर्षुं कर्तुमिच्छुं किं च कुलाचलात् हिमवदादेरपि पीवरं पृथुलं अरातेः शत्रोः भगदत्तस्य करेणुं गजं सुप्रतीकं आद्याक्षरस्य ककारस्य योगेन संबन्धेन शून्यं रेणुम् । लवशश्छिन्नमित्यर्थः ।

---

१. 'दयिनोस्य' इति पाठः. २. 'कृत्य' इति पाठः. ३. 'क्रौञ्चाचलात्' इति पाठः.

मदपङ्कललामगन्धिफालं मघवत्सूनुररेर्निपात्य शीर्षम् ।
पृथुलां मुदमादधे ततोऽसौ पृथिवीगन्धवतीति गौतमोक्तेः ॥ २९ ॥

भगदत्ते वधं याते सह मत्तेन दन्तिना ।
सत्यजिन्नाशशोकार्तिमत्यजन्पाण्डुनन्दनाः ॥ ३० ॥

तदनु नाम्नारुणे तेजसि संध्ययापि तादृशे कलशयोनिः स्वयं, नाम्ना गुरुरपि व्यथयापि तादृग्विधस्त्रिभिरेवाङ्गैर्विरलितेन वलेनानुगम्यमानस्तादात्विकं स्वमनोरथमिव दूष्यतामुपगतमावासं शनैः शनैराववृते ॥

---

चकार । अत्र फल्गुनकरेणुशब्दयोस्तदर्थयोश्च अभेदाभिमानान्नावाच्यवचनत्वदोषः । अत्र फल्गुनस्यान्त्याक्षरराहित्यचिकीर्षोः सुप्रतीकस्य स्वस्यैव तद्विरुद्धाद्यक्षरशून्यत्वप्राप्तेर्विषादनं नामालंकारः । 'इष्यमाणविरुद्धार्थसंप्राप्तिस्तु विषादनम्' इति लक्षणात् ॥ २८ ॥

मदेति । ततः सुप्रतीकवधानन्तरम् । असौ मघवतः इन्द्रस्य सूनुः अर्जुनः मदपङ्केन कस्तूर्या यल्ललाम तिलकभूषणं तस्य गन्धोऽस्यास्तीति गन्धि फालं ललाटं यस्य तथोक्तम् । अतएव अरेः भगदत्तस्य शीर्षं शिरः निपात्य पातयित्वा । भुवीति शेषः । पृथिवी भूमिः गन्धः अस्या अस्तीति गन्धवती इत्युक्तप्रकारायाः गौतमस्य नैयायिकस्य उक्तेः वाक्यस्य पृथुलां महतीं मुदं आददे चकार । तदुक्तिं प्रत्यक्षप्रमाणसिद्धामकरोदित्यर्थः । अत्रैकत्र विलसत्कस्तूरीतिलकफालभगदत्तशीर्षपातनेन सर्वत्र तस्या गन्धवत्त्वबोधकगौतमोक्तिप्रमोदकरणासंवन्धेऽपि संवन्धोक्तेरतिशयोक्तिः । औपच्छन्दसिकं वृत्तम् ॥ २९ ॥

भगदत्त इति । भगदत्ते मत्तेन दन्तिना सुप्रतीकेन सह वधं याते प्राप्ते सति पाण्डुनन्दनाः युधिष्ठिरादयः सत्यजितः पाञ्चालस्य नाशेन द्रोणकृतेन यः शोकः तस्मादार्तिः व्यथा तां अत्यजन् तत्यजुः । शत्रूणां व्यसनेन महदप्यात्मव्यसनं निरस्यत इति भावः ॥ ३० ॥

तदन्विति । तदनु नाम्ना अरुणे तेजसि सूर्ये संध्यया सायंकालिकया । तद्रागेणापीति यावत् । तादृशे अरुणे सति । 'अरुणो भास्करेऽपि स्याद्वर्णभेदे स तु त्रिषु' इत्यमरः । कलशयोनिः द्रोणः । स्वयं नाम्ना गुरुरपि व्यथया पराभवदुःखेनापि तादृग्विधः गुरुः दुर्भरः सन्नित्यर्थः । त्रिभिरङ्गैः तुरगरथपदातिभिरेव विरलितेन असान्द्रेण । तुरीयाङ्गस्य गजरूपस्य भीमेन भङ्गत्वादिति भावः । वलेन अनुगम्यमानश्च सन् । तदा तस्मिन् काले भवं तादात्विकम् । 'तत्काले तु तदात्वं स्यात्' इत्यमरः । स्वं स्वीयं मनोरथं युधिष्ठिरग्रहणविषयक-

---

१. 'भालं' इति पाठः. २. 'आदधाव' इति पाठः ३. 'हस्तिना' इति पाठः. ४. 'पार्थसैनिकाः' इति पाठः. ५. 'तादात्विकमनोरथं' इति पाठः.

शिविरमेत्य तदैव सुयोधनः शितशरव्रणमोचितकञ्चुकम् ।
मृदुलमञ्चगतं कलशोद्भवं विरचिताञ्जलिरेवमभाषत ॥ ३१ ॥
महारथ त्वं मम वाञ्छितद्रुं फलेग्रहिं न प्रतनोषि यस्मात् ।
कृपेतिशब्दोऽपि बभूव नूनं ह्रस्वस्त्वयि श्याल इव त्वदीये ॥ ३२ ॥

भगवन्, त्वमिदं सावधानेन चेतसा स्मरणपथमधिरोपय[1] ।
पितामहः सोऽपि पृषत्कतल्पे वपुर्निजं माधवमन्तरङ्गे ।
तवैव हस्ते मम कार्यसिद्धिं कृत्वा हि[2] धाम स्वमियेष गन्तुम् ॥३३॥

---

मिव दूष्यतां निष्फलत्वाश्निन्द्यत्वं वस्त्रमयत्वं च उपगतं प्राप्तं आवासं शिविरं प्रति शनैः शनैः आवव्रृते प्रत्यावृत्तवान् । अत्रारुणे गुरुरित्यत्र केवलप्रकृतास्पद-श्लेषद्वयस्य निन्द्यत्ववस्त्रमयत्वयोः श्लेषभित्तिकाभेदाध्यवसायलब्धैक्येन दूष्यत्वेन द्रोणमनोरथशिविरयोरौपम्यगमकस्य तुल्ययोगितामेदस्य च तिलतण्डुलन्यायेन संसृष्टिः ॥

**शिविरमिति** । तदैव सुयोधनः शिविरं द्रोणावासं प्रति एत्य आगत्य शितैः तीक्ष्णैः शरैः यानि व्रणानि तेभ्यो मोचितः शनैस्त्याजितः कञ्चुकः कवचं यस्य तथोक्तम् । मृदुले मञ्चे शयने गतं शयितं कलशोद्भवं द्रोणं प्रति विरचितः अञ्जलिः नमस्कारः येन तथोक्तः सन् एवं वक्ष्यमाणप्रकारेण अभाषत उक्तवान् । द्रुतविलम्बितम् ॥ ३१ ॥

**महारथेति** । हे महारथ द्रोण, त्वं यस्मात्कारणात् मम मदीयं वाञ्छितं मनोरथमेव द्रुं वृक्षं फलेग्रहिं सफलम् । फलानि गृह्णातीत्यर्थे 'फलेग्रहिरात्मंभरिश्च' इति निपातनात्साधुः । न प्रतनोषि न करोषि । तस्मात् शब्द्यते व्यवह्रियत इति शब्दः पदार्थः । कृपेति दयानामकः सः 'कृ–पा' इत्यक्षरद्वयात्मकं दीर्घान्तपदं च त्वदीये श्याले पत्नीभ्रातरि शारद्वत इव त्वय्यपि ह्रस्वः अल्पः ह्रस्वान्तश्च बभूव । मत्काङ्क्षितं प्रतिज्ञाय तदनिर्वहणान्मयि तव करुणालेशोऽपि नास्तीत्यर्थः । अत्र मनोरथसफलीकरणाभावेन करुणाशून्यत्वानुमानादनुमानालंकारस्य कृपद्रोणयोः श्लेषभित्तिकालब्धैक्यात्यल्पत्वाकारान्तत्वद्वयात्मकह्रस्वत्वाश्रयकृपेति-शब्दवत्त्वेनौपम्यगमकतुल्ययोगितामेदस्य चैकवाचकानुप्रवेशसंकरः ॥ ३२ ॥

**भगवन्निति** । हे भगवन् द्रोण, त्वं इदं 'पितामहः सोऽपि' इति वक्ष्यमाणवाक्यं सावधानेन एकाग्रेण चेतसा मनसा स्मरणपथं स्मृतिविषयत्वं अधिरोपय प्रापय ॥

**पितामह इति** । अपि किंचेत्यर्थः । सः लोकैकवीरत्वेन प्रसिद्धः पिता-

---

१. 'भवदभिधामिदानीं स्मरणपथमारोपय चेतसा सावधानेन' इति पाठः.

२. 'च' इति पाठः.

तमेतं दूयमानेन समेतं शोकसंपदा ।
ऊचेऽथ गुरुणा तेन नीचेतरगुणाङ्घिना ॥ ३४ ॥

बाष्पातिवृष्टावपि पाण्डवानां पाथोरुहव्यूहवितीर्णमोदान् ।
प्रातःश्व एवाखिलधार्तराष्ट्रान्संचारयेयं युधि वाहिनीषु ॥ ३५ ॥

इति गिरा तमाश्वास्य राजानं सदनाय विसृष्टवतो मुहुर्मुहुरर्जुनस्य सव्यसाचित्वशैलीमनुचिन्त्य हृदि रणरणिकामनणीयसीं वि-

---

महः भीष्मः निजं वपुः शरीरं पृषत्कतल्पे शरशयने माधवं श्रीशं अन्तरङ्गे मनसि मम मदीयां कार्यस्य पाण्डवजयस्य सिद्धिं तवैव । नान्यस्येत्यर्थः । हस्ते कृत्वा निधायेति त्रिष्वपि योज्यम् । स्वं स्वात्मकं धाम चिन्मयं तेजः गन्तुं तस्मिन् लयेनैक्यं प्राप्तुं इयेष हि इच्छति स्म खलु । स्वं स्वीयं धाम स्थानं स्वर्गं गन्तुं इयेष हि । तस्य वस्वात्मकत्वादिति केचित् । अतस्त्वदेकपरायणे मय्यवश्यकरणीया दयेति भावः । अत्रानेकक्रियायौगपद्यात्समुच्चयालंकारः ॥ ३३ ॥

**तमिति** । शोकस्य संपदा समृद्ध्या समेतं अन्वितं तं उक्तप्रकारेण प्रार्थयमानं एतं दुर्योधनं प्रति नीचेतराणां अनल्पानां गुणानां वात्सल्यगाम्भीर्यादीनां अङ्घिना । आश्रयेणेत्यर्थः । अतएव दयमानेन सकरुणेन तेन गुरुणा द्रोणेन । अथ दुर्योधनप्रार्थनानन्तरं ऊचे उक्तम् । ब्रुवतेर्भावे लिटि वच्यादेशः । लाटानुप्रासालंकारः ॥ ३४ ॥

**बाष्पेति** । हे नृप, श्वः परस्मिन् दिने प्रातरेव युधि युद्धे । पाण्डवानां युधिष्ठिरादीनां पाण्डोः श्वेतरूपस्य इमे पाण्डवाः राजहंसाः तेषामिति च । 'राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः' इत्यमरः । बाष्पस्य नेत्रजलस्य अतिवृष्टौ सत्यामपि धार्तराष्ट्रान् युष्मान् नीलहंसांश्च । वाहिनीषु सेनासु नदीषु च । पाथोरुहव्यूहेन पद्माकारसेनाविन्यासविशेषेण कमलवृन्देन च वितीर्णः दत्तः । लब्ध इति यावत् । मोदः संतोषः येषां तथोक्तान् । संचारयेयं प्रचारयेयम् । 'धार्तराष्ट्रोऽसिते हंसे धृतराष्ट्रसुतेऽपि च', 'सेनानद्योस्तु वाहिनी', 'व्यूहस्तु बलविन्यासे निर्वाणे वृन्दतर्कयोः' इति क्रमेण विश्वामरौ । श्लेषानुप्राणितो विरोधाभासः ॥ ३५ ॥

**इतीति** । इत्युक्तप्रकारया गिरा वाचा तं राजानं दुर्योधनं आश्वास्य निर्दुःखं कृत्वा । सदनाय निवासाय विसृष्टवत आज्ञातवतः । किंच मुहुर्मुहुः अर्जुनस्य सव्यसाचित्वशैलीं हस्तद्वयेनापि बाणप्रयोगस्वभावं अनुचिन्त्य स्मृत्वा । अनणीयसीं महतीं रणरणिकां हृदि मनसि बिभ्राणस्य वहतः । 'रणरणिका संतापः पश्चात्तापोऽनुतापश्च' इत्यमरः । द्रोणस्य सकाशात् विनिर्गतां निद्रामेव सखीं विचेतुं अन्वेषितुमित्युत्प्रेक्षा । सा निशा रात्रिरपि तरसा वेगेन । निरगात्

---

१. 'पयोरुह' इति पाठः. २. 'अनुविचिन्त्य' इति पाठः.

भ्राणस्य द्रोणस्य सकाशाद्विनिर्गतां निद्रासखीं विचेतुमिव सा निशापि तरसा निरगात् ॥

अपरेद्युरसौ वृतो बलौघैरथ भेरीनिनदैर्नभो विभिन्दन् ।
कवची विशिखी रथी शरासी कलशीसूनुरवाप युद्धभूमिम्[1]॥३६॥
द्रोणस्य[2] सेनाचरधूलिपाली क्षोणेस्तु नम्रंकरणी बभूव ।
घटाथ तस्याः कटदानपूरैः पटं पुनः संघटयांचकार ॥ ३७ ॥
आश्चर्यस्थूललक्षं[3] तदनु दिविषदामन्तरिक्षस्थितानां
क्षोणीन्द्राणां रिपूणामसुमृगहरणे कूटयन्त्रायमाणम् ।
गन्धर्वैः केसराढ्यैर्मदमधुभिरिभैः केतुपत्रैः शताङ्गैः
पद्मव्यूहं व्यतानीत्प्रधनभुवि गुरुः सांयुगीनाग्रगण्यः ॥३८॥

---

गच्छति स्म । निर्निद्रमेव द्रोणः सर्वां रात्रिं व्यनैषीदित्यर्थः । अत्र रणरणिकाशब्दस्त्रीलिङ्गादिमहिम्ना अन्यकान्ताश्लिष्टप्रियाविलोकनकुपितनिष्क्रान्तनायिकान्वेषिसखीवृत्तान्तप्रतीतेः समासोक्तिः । तस्याश्च रूपकानुप्रणितोत्प्रेक्षायाश्चैकवाचकानुप्रवेशसंकरः ॥

अपरेद्युरिति । अपरेद्युः परस्मिन् दिवसे असौ कलशीसूनुः द्रोणः कवचमस्यास्तीति कवची । एवमग्रे । विशिखी बाणवान् । रथी । शरासी चापवांश्च सन् । निर्जैर्बलौघैः सह रथानां निनदैः नेमिघण्टाघणघणात्कारैः भेरीणां निनदैः भांकारैश्च नभः आकाशं विभिन्दन् युद्धभूमिं अवाप । औपच्छन्दसिकम् ॥३६॥

द्रोणस्येति । द्रोणस्य सेनाभ्यः चरति उद्गच्छतीति सेनाचरी च सा धूलिपाला रजःपटलं क्षोणेः भुवस्तु नम्रंकरणी विवरत्वकारिणी । समुद्रशोषिणीति यावत् । बभूव । समुद्रस्य तद्वस्त्रस्थानीयत्वादिति भावः । अत्र अथ घटा तदीयगजपङ्क्तिः । 'घटा गोष्ठ्यां हस्तिपङ्क्तौ' इत्यमरः । कटयोः कुम्भयोः दानपूराः मदजलप्रवाहाः तस्याः क्षोणेः पटं समुद्रं पुनः संघटयांचकार योजयामास । अब्धिं पूरयामासेत्यर्थः । अत्र नम्रीकृताया भुवः पुनः पटसंघटनरूपपूर्वावस्थानुवृत्तेः पूर्वरूपालंकारभेदस्य शोषणपूरणासंबन्धेऽपि तत्संबन्धोक्तिरूपातिशयोक्तिद्वयोज्जीवितत्वात् द्वयोरङ्गाङ्गिभावेन संकरः । 'द्रोणस्य' इत्येतत्पद्यमनेकमूलपुस्तकेषु न दृष्टमपि लिखितम् । उक्तसंकरस्य लाटानुप्रासाभ्यामेकवाचकानुप्रवेशसंकरश्चेत्यपि प्राहुः ॥ ३७ ॥

आश्चर्येति । तदनु रणरङ्गप्रवेशानन्तरम् । अन्तरिक्षस्थितानां दिविषदां देवानां आश्चर्यस्य स्थूललक्षं बहुप्रदम् । मुख्यजनकमिति यावत् । रिपूणां क्षोणीन्द्राणां शत्रुराजानां असवः प्राणा एव मृगास्तेषां हरणे विषये कूटयन्त्रं शिला-

---

१. 'युद्धरङ्गम्' इति पाठः. २. श्लोकोऽयं क्वचिन्न दृश्यते. ३. 'लक्ष्यं' इति पाठः.

समयेऽत्र[1] निशम्य वैरिवृत्तं तपसः सूनुरभाषताभिमन्युम् ।
अयि वत्स पितान्यतोऽधुना ते तव भारोऽजनि सर्वसैन्यरक्षा ॥ ३९ ॥
कवचं प्रतिमुञ्च धत्स्व चापं भज धैर्यं परितो विधेहि योधान् ।
अधिरोह शताङ्गमाविश त्वं कमलव्यूहमरीन्निषूदयस्व ॥ ४० ॥

इति राज्ञो निदेशं मौलिदेशे निवेश्य योद्धुं प्रतिष्ठमाने जयनिःसाणभेरीपटहपणवाद्यैर्वाद्यैर्गगनशायिने गुणाय सौखशा[2]यनिकाय-माने लीलया क[3]मलव्यूहमवगाह्य बालेऽपि स्वयमेकाकिनि निजको-

---

दार्वादिनिर्मितो यन्त्रविशेषः तद्वदाचरन्तं कूटयन्त्रायमाणम् । 'उन्माथः कूटयन्त्रं स्यात्' इत्यमरः । केसरैः स्कन्धलोमभिरेव किञ्जल्कैः आढ्यैः समृद्धैः । 'केसरोऽस्त्री स्कन्धलोम्नि किञ्जल्के बकुलेऽपि च' इति वैजयन्ती । गन्धर्वैः । मदः दानोदकमेव मधु मकरन्दः येषु तैः इभैः गजैः । केतवः पताका एव पत्राणि येषु तैः शताङ्गैः रथैश्च पद्मव्यूहं पद्माकारेण सैन्यविन्यासमेव कमलवृन्दमिति श्लिष्टाश्लिष्टसावयवरूपकम् । सांयुगीनानां रणे साधूनां अग्रगण्यः गणनीयः गुरुः द्रोणः प्रधनभुवि युद्धभूमौ व्यतानीत् निर्मितवान् । शताङ्गैरित्यत्र शतं अङ्गानि पत्राणि येषां तैरिति व्याख्यानं तु केतुपत्रैरिति विशेषणेन वैयर्थ्याद्गन्धर्वैरिति पदद्वये तथा कल्पनायोगेन प्रक्रमविरोधाच्चोपेक्षितम् । स्रग्धरावृत्तम् ॥ ३८ ॥

**समय इति** । अत्र अस्मिन् समये तपसः यमस्य सूनुः युधिष्ठिरः वैरिणां शत्रूणां वृत्तं पद्मव्यूहनिर्माणवृत्तान्तं निशम्य श्रुत्वा अभिमन्युं आर्जुनिं प्रति अभाषत वक्ष्यमाणप्रकारेणोक्तवान् । अयि वत्स हे पुत्र, यत् यस्मात् ते पिता अर्जुनः अधुना अन्यतः संशप्तकयुद्धदेशे भवति । तस्मात् कारणात् सर्वेषां सैन्यानां रक्षा तव भारः निर्वाह्यः अजनि । औपच्छन्दसिकवृत्तम् ॥ ३९ ॥

**कवचमिति** । किं च कवचं प्रतिमुञ्च धारय । चापं धत्स्व गृहाण । धैर्यं भज । योधान् परितः विधेहि सर्वत्र यथार्हं नियमय । शताङ्गं रथं अधिरोह । कमलव्यूहं पद्मव्यूहं आविश । अरीन् शत्रून् निषूदयस्व मारय । त्वमिति सर्वत्र योज्यम् ॥ ४० ॥

**इतीति** । इत्युक्तप्रकारं राज्ञः धर्मराजस्य निदेशं आज्ञां मौलिदेशे शिरसि निवेश्य । तेन गृहीत्वेति यावत् । योद्धुं प्रतिष्ठमाने निर्गच्छति जयनिःसाणः भेरीपटहः पणवश्च आद्या येषां तैः वाद्यैः । तद्ध्वनिभिरित्यर्थः । गगने शेत इति शायिने गुणाय शब्दाय सौखशायनिकायमाने सुखस्वपनपृच्छक इव स्थिते । तदुत्पादक इति यावत् । स्वयं आत्मनि बालेऽपि एकाकिनि असहाये तस्मिन्सौभद्रे अभिमन्यौ । लीलया कमलव्यूहं अवगाह्य प्रविश्य निजस्य कोदण्डस्य संबन्धिन्या चण्डिमसंपदा प्रतापसमृद्ध्या कौरवचमूं क्षोभयमाणे व्याकुलीकुर्वति

---

१. 'प्रतिपद्य' इति पाठः. २. 'शायि' इति पाठः. ३. 'पद्मव्यूहगर्भ' इति पाठः.

दण्डचण्डिमसंपदा कौरवचमूं क्षोभयमाणे तस्मिन्सौभद्रे सिन्धुपति-र्व्यूहमुखं पिधाय स्मरहरवरलाभदर्पेण तदनुधाविनीं पाण्डववाहिनीं क्रुधा रुरुधे ॥

उद्यद्भिर्युद्धरङ्गादपि सुरवनितापुष्पवर्षात्पतद्भि-
र्वेगाल्लग्नैः परागैर्दृढतरघटिते चक्षुषां पक्ष्मयुग्मे ।
स्थित्वा मध्येन्तरिक्षं विजयसुतभुजागर्वलीलायितानि
द्रष्टॄणां खेचराणां भृशमनिमिषता तत्क्षणं भङ्गुरासीत् ॥४१॥

शरशायितैर्द्विरदशैलमण्डलैर्विपुलैर्विधाय विषमां वसुंधराम् ।
पृथुचक्रवर्तिपृथुयत्नवैभवं वितथीचकार विजयस्य नन्दनः ॥४२॥

---

सति । सिन्धुपतिः सैन्धवः समुद्रश्च क्रुधा कोपेन व्यूहस्य पद्माख्यस्य मुखं द्वारभागं पिधाय आवृत्य । स्मरहरात् वरस्य लाभेन यो दर्पः गर्वः तेनोपल-क्षितः तं अभिमन्युं अनुधावतीति तदनुधाविनीं पाण्डवानां वाहिनीं सेनां नदीं च रुरुधे । अत्र सैन्धवसमुद्रयोः सेनानद्योश्च श्लेषभित्तिकाभेदाध्यवसायमूलाति-शयोक्तिभ्यां समुद्रस्य नदीमुखविधानपूर्वकं तन्निरोधानुरूप्यात्मकसमालंकारप्र-तीतेरलंकारेणालंकारध्वनिः ॥

**उद्यद्भिरिति** । युद्धरङ्गादुद्यद्भिः ऊर्ध्वं प्रसरद्भिः सुरवनितानां अप्सरसां संबन्धिनः पुष्पवर्षात् पतद्भिरपि । किंच वेगाल्लग्नैः संक्रान्तैः परागैः भौमैः कौसुमैश्च चक्षुषां नेत्राणां पक्ष्मणोः युग्मे दृढतरं अतिदृढं यथा तथा घटिते मुकुलीकृते सति । अन्तरिक्षस्य मध्ये मध्येन्तरिक्षम् । स्थित्वा विजयसुतस्य अभिमन्योः भुजागर्वलीलायितानि बाहुपराक्रमचेष्टितानि द्रष्टॄणाम् । तृन्नन्तत्वात् 'न लोक–' इत्यादिना षष्ठीप्रतिषेधः । पश्यतां खेचराणां देवानां अनिमिषता नेत्रयोर्निमेषराहित्यम् । तस्मिन्[1] क्षणे तत्क्षणम् । भृशं भङ्गुरा भग्ना अभूत् । अत्र देवानामनिमिषत्वभङ्गासंबन्धेऽपि तत्संबन्धोक्तेरतिशयोक्तिः । परागलग्नपक्ष्मयुग्म-घटनयोर्हेतुहेतुमतोरुक्त्यात्मकहेत्वलंकारोज्जीवितत्वात् द्वयोरङ्गाङ्गिभावेन संकरः । स्रग्धरा ॥ ४१ ॥

**शरेति** । विजयस्य अर्जुनस्य नन्दनः अभिमन्युः शरैः बाणैः शायितैः पातितैः विपुलैः महद्भिः द्विरदाः कौरवगजा एव शैलाः तेषां मण्डलैः समूहैः । वसुंधरां भूमिं विषमां निम्नोन्नतां विधाय कृत्वा । पृथोः नाम चक्रवर्तिनः पृथोः महतः यत्नस्य वैभवं धनुष्कोट्या भूमिसमीकरणरूपं प्राभवं वितथीचकार व्यर्थं चक्रे । अत्र पृथुचक्रवर्तिभूमिसमीकरणवैयर्थ्यकरणासंबन्धेऽपि तत्संबन्धोक्तेरति-शयोक्तिः । पुरा पृथुर्नाम महाराजः शैलैर्विषमितां क्षितिं धनुष्कोट्या तान्नि-

---

१. 'तस्मिन्' इति नास्ति क्वचित्.

पार्थात्मजो भानुसुतस्य सामि भित्त्वा[1] शताङ्गं शितभल्लवृष्ट्या ।
पितामहोक्तं कुरुवीरगोष्ठ्यां[2] तथ्यं चकारार्धरथत्वमस्य ॥ ४३ ॥
अथा[3]भिमन्युर्धृतभूरिमन्युर्द्रौणिं तदीर्ष्या[4]स्मितकान्तिलक्ष्यात् ।
बाल्ये निपीतान[5]पि पिष्टसारानुग्रैः शरैरुद्वमयांचकार ॥ ४४ ॥
सुतस्य शौर्यात्सुरराजसूनोरुदीर्णदिग्भ्रान्तिरुदारभीतिः ।
कृपस्वसुर्मङ्गलतन्तुनैव साकं चकम्पे स गुरुर्मुहूर्तम् ॥ ४५ ॥
विशिखं मुमुक्षुमथ गौतमात्मजे
विबुधेन्द्रपौत्रमभिवीक्ष्य भीषणम् ।
जनने विपद्यपि जना रणाङ्गणे
शर एव हेतुरिति तस्य मेनिरे ॥ ४६ ॥

---

मैथ्य समीचकार । अतएव भुवः पृथूकरणात् पृथुरिति नाम तस्येति पौराणिकाः । मञ्जुभाषिणी ॥ ४२ ॥

**पार्थेति** । पार्थात्मजः अभिमन्युः शितानां तीक्ष्णानां भल्लानां नाम बाणानां वृष्ट्या भानुसुतस्य कर्णस्य शताङ्गं रथं सामि अर्धं भित्त्वा । कुरुषु वीराणां गोष्ठ्यां कथायाम् । 'गोष्ठी सभायां संलापे' इति नानार्थरत्नमालायाम् । पितामहेन भीष्मेण उक्तं अस्य कर्णस्य अर्धरथत्वं तथ्यं यथार्थं चकार । अत्रार्धो रथो यस्य तस्य भावः तत्त्वम् । महारथलक्षणादर्थन्यूनत्वं चेति द्वयोः श्लेषभित्तिकया अभेदाध्यवसायादतिशयोक्तिभेदः ॥ ४३ ॥

**अथेति** । अथ कर्णपराभवानन्तरं अभिमन्युः धृतः भूरिः बहुलः मन्युः क्रोधः येन तथोक्तः सन् । उग्रैः दारुणैः शरैः द्रोणस्यापत्यं द्रौणिं अश्वत्थामानं तस्य अश्वत्थाम्नः ईर्ष्यया स्मितस्य कान्तेः श्वैत्यस्य लक्ष्यात् व्याजात् । बाल्ये निपीतान् । मात्रा दारिद्र्यवशात् क्षीराणीमान्येवेति प्रतार्य पायितानित्यर्थः । पिष्टसारानपि जलमिश्रिततण्डुलचूर्णांशानपि उद्वमयांचकार उद्गारयामास । आगर्भे रक्तोद्गारं निर्बिभेदेत्यर्थः । अपह्नवालंकारः ॥ ४४ ॥

**सुतस्येति** । सुरराजसूनोः सुतस्य अर्जुनसुतस्य अभिमन्योः शौर्यात् उदीर्णा उत्पन्ना दिशां भ्रान्तिः वैपरीत्येन ज्ञानं यस्य सः उदारा महती भीतिः यस्य तथोक्तः स चापाचार्यत्वेन प्रसिद्धः गुरुद्रोणः कृपस्वसुः कृप्याः द्रोणपत्न्याः मङ्गलतन्तुना साकं मङ्गलसूत्रेण सहैव मुहूर्तं चकम्पे कम्पितवान् । अत्र द्रोणस्य कम्पे तत्पत्नीमङ्गलसूत्रसाहित्यवर्णनात्सहोक्तिरलंकारः ॥ ४५ ॥

**विशिखमिति** । अथ द्रोणपराभवानन्तरं गौतमात्मजे कृपाचार्ये विशिखं

---

१. 'च्छित्त्वा' इति पाठः. २. 'कुरुराजगोष्ठ्यां' इति पाठः. ३. 'अथो' इति पाठः. ४. 'तदेर्ष्या' इति पाठः. ५. 'निपीतानिव' इति पाठः.

आश्चर्यकर्मसु कृतेष्वपि हर्षभारा-
न्मोक्तुं मुहुर्मुहुरमुष्य शिरोजबन्धे ।
दृष्टास्तदा सुमनसो दिवि कर्तृभूता
नाकेन्द्रनन्दनवने न तु कर्मभूताः ॥ ४७ ॥

अमुष्य कोदण्डमखण्डयद्रवेः सुतो रथाश्वान्प्रममाथ कुम्भजः ।
कृपः कृणत्ति स्म जवेन सारथिं व्यपाटयत्केतुपटं गुरोः सुतः ॥४८॥

एकाकिनः परिभवाय बहून्प्रवृत्ता-
नेतानवेक्ष्य निखिलोऽपि निलिम्पवर्गः ।
मन्दारशाखिकुसुमानि यथाभिमन्यौ
निन्दारवान्रिपुषु तस्य तथाभ्यवर्षत् ॥ ४९ ॥

---

मोक्तुमिच्छुं मुमुक्षुं अतएव भीषणं भयंकरं विबुधेन्द्रपौत्रं अभिमन्युं अभिवीक्ष्य रणाङ्गणे जनाः तस्य कृपाचार्यस्य जनने विपदि मरणेऽपि च विषये शर एव हेतुरिति मेनिरे । अनेनायं न जीवतीति निश्चिक्युरित्यर्थः । कृपस्य शरजन्मत्वं प्रसिद्धम् । मञ्जुभाषिणी ॥ ४६ ॥

**आश्चर्येति** । आश्चर्यकरेषु कर्मसु युद्धेषु । इति शाकपार्थिवादित्वात्समासः । कृतेषु सत्स्वपि । अमुष्य अभिमन्योः शिरोजबन्धे धम्मिल्ले हर्षभारात् संतोषातिशयात् मुहुर्मुहुः मोक्तुं वर्षितुं कर्तृभूताः । तत्तादात्म्याश्रयाः कर्तार इति यावत् । एवमग्रेऽपि । सुमनसः देवाः दिवि आकाशे दृष्टाः । कर्मभूताः कर्माणि सुमनसः पुष्पाणि तु । नाकेन्द्रस्य स्वर्गाधिपस्य नन्दनवने न दृष्टाः । उभयत्र लोकैरिति शेषः । देवाः कल्पकुसुमानि निःशेषमभिवर्ष्य ततः कुसुमदारिद्र्यात्तूष्णींबभूवुरित्यर्थः । 'सुमनाः पुष्पमालत्योस्त्रिदशे कोविदेऽपि च' इति विश्वः । अत्र सुमनसां कर्तृत्वकर्मत्वविरोधस्य श्लेषेणाभासाद्विरोधाभासस्य च नन्दनवने निष्कुसुमत्वासंबन्धेऽपि संबन्धोक्तिरूपातिशयोक्तेश्च संसृष्टिः ॥ ४७ ॥

**अमुष्येति** । अथ रवेः सुतः कर्णः अमुष्य अभिमन्योः कोदण्डं चापं अखण्डयत् चिच्छेद । कुम्भजः द्रोणः रथस्य अश्वान् प्रममाथ बिभेद । कृपः सारथिं जवेन कृणत्ति स्म चिच्छेद । गुरोः सुतः अश्वत्थामा केतोः पटं पताकां व्यपाटयत् विपाटितवान् । वंशस्थम् ॥ ४८ ॥

**एकाकिन इति** । एकाकिनः एकस्य परिभवाय तिरस्कारं कर्तुं इति 'क्रियार्थ-' इत्यादिना चतुर्थी । प्रवृत्तान् उद्युक्तान् बहून् एतान् कर्णादीनवेक्ष्य । निखिलोऽपि सकलोऽपि निलिम्पानां देवानां वर्गः संघः अभिमन्यौ मन्दारशाखिकुसुमानि यथा अभ्यवर्षत् । अतिधीरोऽयं बहुभिरसहायो युध्यतीत्याश्चर्यादिति

---

१. 'कृणत्ति स शरेण' इति पाठः. २. 'पटात्' इति पाठः.

रथादवप्लुत्य गदासखस्तदा विदार्य बालो विजयात्मसंभवः ।
चकार मन्दाक्षभृतो न केवलं रथानमीषां युधि तानपि क्षणात् ॥५०॥

बालौ ततः कृतरणौ धृतराष्ट्रपौत्रौ
भीरू पृथग्गमनकर्मणि मन्यमानः ।
पार्थात्मजः स तु परस्परसाह्यवन्तौ
चक्रे कृतान्तपुरवर्त्मनि गन्तुमग्रे ॥ ५१ ॥

अथ कर्णमुखा महारथास्ते मिलिताः कैतवमेत्य यौगपद्यात् ।
सुरनायकपौत्रमेनमस्त्रैः स्वयशोभिः सह पातयांबभूवुः ॥ ५२ ॥

---

भावः । तथा तस्य अभिमन्योः रिपुषु कर्णादिषु विषये निन्दारवान् निन्दनवाक्यकलकलान् अभ्यवर्षत् । उदीरयामासेत्यर्थः । एके बहूनां युद्धस्य लोकवेदनिषिद्धत्वादिति भावः । अत्र कल्पवृक्षकुसुमवर्षणनिन्दावाक्योदीरणयोर्यौगपद्यात्समुच्चयस्य पुष्पाणां निन्दावाक्यानां च वर्षणेन श्लेषभित्तिकाभेदाध्यवसितेनौपम्यस्य गम्यत्वात्तुल्ययोगिताभेदस्य चैकवाचकानुप्रवेशसंकरः ॥ ४९ ॥

**रथादिति** । तदा विजयस्य आत्मसंभवः अर्जुनपुत्रः बालः अभिमन्युः गदा सखा सहायः यस्य सः । गदापाणिः सन्निति यावत् । 'राजाहःसखिभ्यष्टच्' इति समासान्तष्टच् । 'सखा मित्रे सहाये च' इति यादवः । रथात् निहताश्वात् अवप्लुत्य अधिरुह्य । अमीषां कर्णादीनां रथान् केवलं रथानेव विदार्य निर्भिद्य । मन्दानि शून्यानि अक्षाणि चक्राणि बिभ्रतीति तद्भृतः चकार । किंतु तान् कर्णादीनपि युधि मन्दाक्षं व्रीडां बिभ्रतीति तद्भृतः चकार । गदाप्रहारैरित्युभयत्र भावः । अत्र रथानां रथिकानां च प्रकृतानामेव लज्जायाः शिथिलचक्राणां च श्लेषभित्तिकाभेदाध्यवसायसहकृतमन्दाक्षभरणेनौपम्यस्य गम्यत्वात्तुल्ययोगिताभेदः । मन्दानि विषयग्रहदुर्बलानि अक्षाणि इन्द्रियाणि चक्षुरादीनि बिभ्रतीति भृत इत्यर्थः । 'अक्षमिन्द्रियचक्रयोः' इति विश्व इत्यपि प्राहुः । वंशस्थवृत्तम् ॥ ५० ॥

**बालाविति** । ततः स तु पार्थात्मजः अभिमन्युः । कृतरणौ । आत्मना सहेति शेषः । बालौ अतएव धृतराष्ट्रस्य पौत्रौ दुर्योधनदुःशासनपुत्रौ द्वौ । पृथक् प्रत्येकम् । गमनकर्मणि परलोकयात्रायां भीरू भयशीलौ मन्यमान इवेत्युत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या । कृतान्तपुरस्य संयमिन्याः संबन्धिनि वर्त्मनि मार्गे गन्तुं अग्रे परस्परं साह्यवन्तौ । सहायवन्तावित्यर्थः । चक्रे । द्वावप्येकदा जघानेत्यर्थः ॥ ५१ ॥

**अथेति** । अथ कर्णः मुखं प्रथमः येषां तथोक्तास्ते पूर्वोक्ताः महारथाः कैतवं दुर्नीतिं एत्य स्वीकृत्य यौगपद्यात् मिलिताः एकदैकत्र वा संगताः सन्तः । अस्त्रैः बाणैः एनं सुरनायकपौत्रं अभिमन्युं स्वैः स्वीयैर्यशोभिः सह

तदनु[1] सेनयोस्तयोः क्ष्वेलितरुदिते अपि स्पर्धाजनितया परस्परविजिगीषुतयेव व्योमसीमानमुदलङ्घताम् ॥

तदानीं[2] नियमवृद्धपरिषदूर्ध्वविक्षिप्तकरपुटजलाञ्जलिक्षालनादिव व्यपयातमहोष्मणि[3] पूषणि तौ द्वावपि बलौघौ निर्जनिजस्कन्धावारानुसंधानाय निरगच्छताम् ॥

अथ त्रिगर्तानपि तान्क्षुरप्रैः सहस्रगर्तान्विरचय्य गात्रे ।
विनैव हेतुं व्यथमानचेता विडौजसोऽपि न्यवृतत्कुमारः ॥५३॥

बाष्पायते दृष्टियुगं कराग्राच्चापो गलत्यन्तरुदेति तापः ।
फलं किमेतस्य भविष्यतीति विचिन्तयन्धाम विवेश राज्ञः ॥५४॥

---

पातयांबभूवुः । बहुभिरेकस्य मारणान्न परं वीराणामपकीर्तिकरमिति भावः । सहोक्तिरलंकारः । औपच्छन्दसिकम् ॥ ५२ ॥

तदन्विति । तदनु अभिमन्युपतनानन्तरं तयोः सेनयोः कौरवपाण्डवीययोः क्ष्वेलितं सिंहनादः रुदितं रोदनं ते द्वे अपि । स्पर्धया आत्मोत्कर्षाभिनिवेशेन जनितया परस्परं विजिगीषुतया जयेच्छयेवेत्युत्प्रेक्षा । व्योम्नः सीमानं गगनान्तभागं उदलङ्घयतां अतिचक्रमतुः । अभिमन्युवधादुच्चैः कौरवा जगर्जुः, पाण्डवा रुरुदुरित्यर्थः ॥

तदानीमिति । तदानीं पूषणि सूर्ये नियमैस्तपोभिः वृद्धया पूर्णया परिषदा द्विजसमाजेन ऊर्ध्वं विक्षिप्तैः प्रेरितैः करपुटे जलाञ्जलिभिः क्षालनात् सेकादिवेत्युत्प्रेक्षा । व्यपयातः निरस्तः महान् ऊष्मा औष्ण्यं यस्य तथोक्ते । अस्तं गच्छति सतीत्यर्थः । तौ द्वावपि बलौघौ कौरवपाण्डवसैन्यसमूहौ । निजस्य निजस्य प्रत्येकमात्मीयस्य स्कन्धावारस्य शिबिरस्य अनुसंधानाय संगमनाय निरगच्छतां निर्गतवन्तौ ॥

अथेति । अथ बिडौजसः इन्द्रस्य कुमारः अर्जुनोऽपि त्रिगर्तान् । व्रणजन्यरन्ध्रत्रययुक्तानपि त्रिगर्तसंज्ञांश्चेति भावः । तान् सुशर्मादीन् । गात्रे शरीरे क्षुरप्रैः नाम बाणैः सहस्रं गर्ता येषां तान् तथोक्तान् । विरचय्य कृत्वा । हेतुं दुःखकारणं विनापि व्यथमानं दुःखायमानं चेतः यस्य तथोक्तः सन् । न्यवृतत् शिबिरं प्रति प्रत्यावृत्तवान् । विरोधाभासः ॥ ५३ ॥

वाष्पायत इति । दृष्ट्योः नेत्रयोः युगं बाष्पायते बाष्पं जनयति । कराग्राच्चापः गलति । अन्तः मनसि तापः संतापः उदेति आविर्भवति । एतस्य

---

१. 'तदनु तत्र तयोः सेनयोः' इति पाठः. २. 'तदानीं खलु जगति नियम' इति पाठः. ३. 'व्यपेत' इति पाठः. ४. 'निज' इति नास्ति क्वचित्.

तत्राश्रुनेत्रानथ सर्वबन्धून्निशाम्य पुत्रस्य निशम्य वार्ताम् ।
तापापदेशेन धनंजयस्य चित्तं चुचुम्ब स्वसमानतेजः ॥ ५५ ॥

वीरं तनूजमनुचिन्त्य विलापभाजं
धारालदृष्टियुगलं धरणौ लुठन्तम् ।
वाग्भिश्चिरेण वसुधाधिपसंयुतस्तं
विश्वंभरोऽर्जुनमपि व्यदधादशोकम् ॥ ५६ ॥

इन्द्रात्मजस्तदनु बाहुमुदस्य कोपा-
त्सिन्धूद्वहस्य समरे द्विषतां समक्षम् ।
हेत्यां श्व एव यदि तस्य शिरो न कुर्यां
तस्यां विशेयमहमित्यकरोत्प्रतिज्ञाम् ॥ ५७ ॥

---

सर्वस्य दुर्निमित्तस्य किं फलं भविष्यतीत्युक्तप्रकारेण विचिन्तयन् आलोचयन् सन्नेव राज्ञः युधिष्ठिरस्य धाम आवासं विवेश । विडौजसः कुमार इत्यत्रापि योज्यम् । अत्रानेकक्रियायौगपद्यात्समुच्चयः ॥ ५४ ॥

तत्रेति । अत्र युधिष्ठिरावासप्रवेशानन्तरम् । तत्र युधिष्ठिरधामनि अश्रूणि नेत्रयोः येषां तान् सर्वान् बन्धून् युधिष्ठिरादीन् निशाम्य निरीक्ष्य । पुत्रस्य अभिमन्योः वार्तां वधवृत्तान्तं निशम्य श्रुत्वा । धनंजयस्य अर्जुनस्य चित्तं स्वेनात्मना समानं नाम्ना तुल्यं तेजः अग्निम् । तापस्य पुत्रशोकसंतापस्य अपदेशेन व्याजेन चुचुम्ब स्पृशति स्म । पुत्रशोकात्संतप्तोऽभूदित्यर्थः । अपह्नवालंकारः ॥ ५५ ॥

वीरमिति । वीरं असहायशूरं तनूजं अभिमन्युं अनुचिन्त्य स्मृत्वा । विलापं परिदेवनं भजतीति तद्भाजं धारालं बाष्पधारापरितं दृष्ट्योः युगलं यस्य तथोक्तं धरणौ लुठन्तं भुवि विवर्तमानं तं अर्जुनमपि । विश्वंभरः कृष्णः वसुधाधिपेन धर्मराजेन संयुतः सन् । वाग्भिः आपद्धर्म्याभिः चिरेण । कृच्छ्रादित्यर्थः । अशोकं निर्दुःखं व्यदधात् चक्रे । विपूर्वाद्दधातेः कर्तरि लङ् । अत्र अर्जुनं कुटजवृक्षमपि अशोकं वञ्जुलवृक्षं व्यदधादिति विरोधस्य श्लेषेणाभासात् विरोधाभासालंकारः ॥ ५६ ॥

इन्द्रेति । तदनु कृष्णयुधिष्ठिराभ्यां आश्वासनानन्तरं इन्द्रात्मजः अर्जुनः कोपात् बाहुं उदस्य उद्यम्य । श्वः परस्मिन् दिन एव । नतु प्रपरस्मिन्नित्यर्थः । तस्य पुत्रानुयायिभवन्निरोधेन द्रोहकारिणः सिन्धूद्वहस्य सैन्धवस्य शिरः समरे युद्धे द्विषतां दुर्योधनादीनां समक्षं हेत्या आयुधे न कुर्यां यदि । तया न छिन्द्यां चेदित्यर्थः । अहं तस्यां हेत्याम् । अग्निज्वालायामित्यर्थः । विशेय-

---

१. 'तदाश्रु' इति पाठः. २. 'सन्नोक्ष' इति पाठः.

अथ वृत्तमेतदवकर्ण्य भीरवे विततान सिन्धुपतये प्रतिश्रुतम् ।
तव गुप्तियुग्ममपि मे भरोऽर्जुनात्समरे श्व इत्यतिगभीरधीर्गुरुः ॥५८॥

अन्येद्युरवलम्बितप्रथमशिखरिसानौ भानौ स्कन्धावारयुगवसुंधराधिपतियुद्धसन्नाहपैशुन्यलम्पटपटहध्वानतरले सिन्धुराजयुगले शरणागतभरणालंकर्मीणेन पद्मनेत्रेण सौभद्रवधशोकातिरेकपरिगलितबाष्पपूरपङ्किले द्वारदेशे समानीतं सौवीरनायकगोपनस्थलदिदृक्षयेव तुङ्गतरकेतुशृङ्गमधिरूढेन कपिपरिवृढेन परिमण्डितं मानसगरुडगन्धवहबान्धवैः सैन्धवैराहितबन्धनं स्यन्दनमधिरुह्य संक्रन्दन-

---

मित्युक्तप्रकारां प्रतिज्ञां अकरोत् । 'हेतिः स्यादायुधे वह्निकीले तरणितेजसि' इति विश्वः ॥ ५७ ॥

**अथेति ।** अथ अर्जुनप्रतिज्ञानन्तरं एतद्वृत्तं अर्जुनप्रतिज्ञावृत्तान्तं अवकर्ण्य श्रुत्वा भीरवे भयशीलाय सिन्धुपतये सैन्धवाय अतिगभीरा अत्यन्तगम्भीरा धीः मनः यस्य सः गुरुः द्रोणः । हे सैन्धव, तव अर्जुनात् गुप्त्योः आवरणरक्षयोः युग्ममपि श्वः समरे मे भरः निर्वाह्यः इत्युक्तप्रकारं प्रतिश्रुतं अङ्गीकारम् । प्रतिज्ञामिति यावत् । 'भावतः प्रतिश्रवम्' इति वा पाठः । विततान चक्रे । 'काररक्षणयोर्गुप्तिः' इति विश्वः । मञ्जुभाषिणीवृत्तम् ॥ ५८ ॥

**अन्येद्युरिति ।** अन्येद्युः भानौ सूर्ये अवलम्बितः आश्रितः प्रथमशिखरिणः उदयशैलस्य सानुः प्रस्थः येन तथोक्ते सति सिन्धुराजयोः सैन्धवसमुद्रयोः युगले युग्मे स्कन्धावरयोः सेनानिवेशयोः युगे । उभयस्मिन् कौरवीये पाण्डवीये चेत्यर्थः । वसुंधराधिपतीनां राज्ञाम् । उभयपक्षाणां दुर्योधनयुधिष्ठिरयोरिति वा । युद्धे सन्नाहस्य उद्योगस्य पैशुन्ये सूचने लम्पटैः लालसैः । सन्नाहसूचकैरिति यावत् । पटहानां वाद्यविशेषाणां ध्वानैः ध्वनिभिः तरले चञ्चले सति शरणार्थमागतानां भरणे दुःखनिवारणे कर्मणि समर्थेन अलंकर्मीणेन । 'कर्मक्षमोऽलंकर्मीणः' इत्यमरः । पद्मनेत्रेण श्रीकृष्णेन सुभद्राया अपत्यस्य सौभद्रस्य अभिमन्योः वधात् यः शोकातिरेकः दुःखातिशयः तेन परिगलितैः बाष्पपूरैः पङ्किले कर्दमिते द्वारदेशे समानीतं सौवीरनायकस्य सैन्धवस्य यद्गोपनस्थलं रक्षणदेशः तस्य द्रष्टुमिच्छया दिदृक्षयेवेत्युत्प्रेक्षा । तुङ्गतरं अत्युन्नतं केतोः शृङ्गं शिखरं अधिरूढेन कपिपरिवृढेन हनूमता परितो मण्डितं अलंकृतं मानसस्य गरुडस्य गन्धवहस्य वायोश्च त्रयाणां बान्धवैः । वेगेन सदृशैरित्यर्थः । सैन्धवैः अश्वैः आहितं संपादितं बन्धनं यस्मिन् तथोक्तं स्यन्दनं रथं अधि-

---

१. 'प्रतिश्रवम्' इति पाठः. २. 'समरेऽत्वभीरिति' इति पाठः. ३. 'भगवता प्राणिमित्रतोत्रेण पद्म' इति पाठः. ४. 'शूरजनवाष्प' इति पाठः. ५. 'द्वारतले' इति पाठः. ६. 'मानसमार्गणगरुड' इति पाठः. ७. 'सैन्धवैः' इति नास्ति क्वचित्.

नन्दनः समरोचितवेषसंपदविकलेन निजबलेन सह प्रतिष्ठमानो निरुद्धवियत्पथै रथैर्मदबन्धुरैः सिन्धुरैर्विविधगतिनाटकैर्घोटकैः कृतरणासत्तिभिः पैत्तिभिर्विरचितपरिपन्थिजनमोहस्य व्यूहस्य पृष्ठभागे जयद्रथं प्रतिष्ठाप्य स्वयमपि पुरोभागं परिष्कुर्वाणस्य द्रोणस्य चरणयोर्बाणाभ्यां प्रणीतप्रणिपातस्तेन दीयमानमार्गावकाशश्चण्डमारुत इव घनमण्डलं तमेव व्यूहं क्षणादेव क्षोभयामास ॥

तदनन्तरम् ।

संशप्तकासुरपलायनवेगभङ्गीं
तत्तादृशीमभिनयन्निव शौरिनुन्नः ।
वेगेन विस्मयकरेण विरोधिसैन्ये
विष्वक्चचार विजयस्य शताङ्गवर्यः ॥ ५९ ॥

रुद्ध । संक्रन्दननन्दनः अर्जुनः समरस्य उचितया अनुरूपया वेषसंपदा अलंकारसमृद्ध्या अविकलेन पूर्णेन निजबलेन चतुरङ्गेण सह प्रतिष्ठमानः गच्छन् सन् । मदेन दानजलेन बन्धुरैः व्याप्तैः सिन्धुरैः गजैः विविधाः गतीः आस्कन्दितादीः नाटयन्ति प्रकटयन्तीति नाटकैः घोटकैः अश्वैः निरुद्धः वियत्पथः आकाशमार्गः यैस्तैः । अत्युन्नतैरित्यर्थः । रथैः कृता रणस्य आसत्तिः संबन्धः यैस्तैः पत्तिभिः पादातैश्च विरचितः कृतः परिपन्थिजनस्य शत्रुजनस्य मोहः चित्तविकारः येन तथोक्तस्य व्यूहस्य पद्माद्याकारस्य सेनाविन्यासस्य पृष्ठभागे जयद्रथं सैन्धवं प्रतिष्ठाप्य निवेशयित्वा स्वयं आत्मनापि पुरोभागं व्यूहमुखभागं परिष्कुर्वाणस्य अलंकुर्वतः । तत्र वसत इति यावत् । द्रोणस्य आचार्यस्य चरणयोः बाणाभ्यां प्रणीतः प्रापितः प्रणिपातः नमस्कारः येन तथोक्तः सन् । नमस्कारबाणौ प्रयुज्येत्यर्थः । अतएव तेन नमस्कृतेन द्रोणेन दीयमानः मार्गस्य व्यूहमध्यप्रवेशस्य अवकाशः अन्तरं यस्य तथोक्तश्च सन् तमेव व्यूहं चण्डमारुतः घनमण्डलं मेघबृन्दमिव क्षणादेव क्षोभयामास ॥

तदनन्तरमित्युत्तरेणान्वयः ॥

संशप्तकेति । शौरिणा श्रीकृष्णेन नुन्नः प्रेरितः अत एव तत्तादृशीं असदृशीं संशप्तका असुरा इव तेषां पलायने यो वेगः तस्य भङ्गीं रीतिं अभिनयन् विडम्बयन्निव स्थित इत्युत्प्रेक्षा । विजयस्य अर्जुनस्य शताङ्गवर्यः

१. 'रुद्ध' इति पाठः. २. 'पत्तिभिश्च' इति पाठः. ३. 'पद्मव्यूहस्य' इति पाठः. ४. 'प्रणिहित' इति पाठः. ५. 'मेघमण्डलं' इति पाठः.

तत्र निह्नुतदिनेश्वरदीप्तौ[1] जृम्भिते तमसि धूलिमिषेण ।
खिद्यते[2] स्म युधि पाण्डवसेना हृष्यति[3] स्म सहसा कुरुसेना ॥ ६० ॥
गाण्डीवमेतेन मुहुर्विकृष्टं ह्रस्वं च दीर्घं च बभूव युद्धे ।
तुलामिवर्णेन तदाधिरोढुं स्वनामधेयस्थितिशालिनेव ॥ ६१ ॥
अस्तं गतश्चेदरविन्दवन्धुर्वन्ध्या भवेत्सापि मदीयसंधा ।
इतीव संक्रन्दननन्दनोऽसौ तदीयमार्गं रुरुधे शरौघैः ॥ ६२ ॥
मृत्संगतेनौष्ठपुटेन भूभुक्संबन्धितां स्पष्टमिव ब्रुवाणैः ।
धनंजयोऽसौ शितभल्लकृत्तैः शिरोभिराच्छादयति स्म धात्रीम् ६३

रथश्रेष्ठः विस्मयकरेण वेगेन उपलक्षितः विरोधिसैन्ये शत्रुबले विष्वक् परितः चचार । अत्रोपमया अकुतोरोधप्रतीतेरलंकारेण वस्तुध्वनिः ॥ ५९ ॥

**तत्रेति** । अत्र तदानीं युधि निह्नुता आच्छादिता दिनेश्वरस्य सूर्यस्य दीप्तिः प्रकाशः येन तस्मिन् तमसि धूलिमिषेण जृम्भिते सति पाण्डवसेना खिद्यते स्म । कुरुसेना हृष्यति स्म । सहसेत्युभयत्र योज्यम् । प्रतिज्ञाभङ्गादर्जुनोऽग्निं प्रविशतीति तर्कादिति भावः । स्वागतावृत्तम् ॥ ६० ॥

**गाण्डीवमिति** । तदा तत्काले युद्धेऽपि एतेनार्जुनेन विकृष्टं आकृष्टं गाण्डीवं स्वस्य गाण्डीवस्य नामधेये गाण्डीवेति संज्ञाशब्दे स्थित्या शालत इति शालिना इवर्णेन इकारेण तुलां साम्यं अधिरोढुं प्राप्तुमिवेत्युत्प्रेक्षा । मुहुः ह्रस्वं अल्पं च बभूव । दीर्घं आयतं च बभूव । अर्जुनचापस्य गाण्डिवं गाण्डीवमित्युभयथापि व्यवहारादिति भावः । अत्र संहितबाणगुणाकर्षणतद्विमोचनकृताल्पत्वायतत्वयोः अक्षरधर्मह्रस्वत्वदीर्घत्वयोश्च श्लेषमितिकाभेदाध्यवसायमूलातिशयोक्त्योरुक्तोत्प्रेक्षासापेक्षत्वोक्त्या तयोः प्रत्येकमङ्गाङ्गिभावेन संकरद्वयस्य संसृष्टिः । 'गाण्ड्यजगात्संज्ञायाम्' इति वप्रत्ययानुशासने ह्रस्वान्तदीर्घान्तयोस्तन्त्रेण निर्देश इत्युक्तम् । 'कपिध्वजस्य गाण्डीवगाण्डिवौ पुंनपुंसके' इत्यमरकोशश्च । 'स्वनाममध्यस्थितिशालिनेव' इति पाठान्तरम् ॥ ६१ ॥

**अस्तमिति** । अरविन्दवन्धुः सूर्यः अस्तं अस्तमनं गतश्चेत् सा पूर्वोक्ता मदीया संधा प्रतिज्ञापि वन्ध्या निष्फला भवेत् । इत्यालोच्येवेत्युत्प्रेक्षा । असौ संक्रन्दननन्दनः अर्जुनः शराणां ओघैः समूहैः तस्य सूर्यस्येमं तदीयं मार्गं रुरुधे निरुद्धवान् ॥ ६२ ॥

**मृदिति** । असौ धनंजयः अर्जुनः शितैः तीक्ष्णैः भल्लैस्तन्नामकबाणैः कृत्तैः छिन्नैः । मृदा मृत्तिकया संगतेन ओष्ठयोः ऊर्ध्वाधरयोः पुटेन संपुटेन ।

१. 'दीपे' इति पाठः. २. 'खेद' इति पाठः. ३. 'हृष्यते' इति पाठः. ४. 'धनुः' इति पाठः. ५. 'सह' इति पाठः.

वङ्गं वङ्ककुलामिषं धृतविपल्लिङ्गं कलिङ्गं पुन-
भोंजं भाजनमापदां यमपुरीसीमारुधं मागधम् ।
चोलं दुःखनिचोलचित्तमिषुभिः कुर्वन्सुपर्वाधिभू-
पुत्रस्तत्र दिनावसानसमये रुन्धे स्म सिन्धूद्वहम् ॥६४॥

तत्रान्तरे ।

भूपस्तूत्तपमानधीर्भयभराज्जिज्ञासुरिन्द्रात्मभू-
वार्तां सात्यकिमारुती रिपुचमूव्यूहं प्रति प्राहिणोत् ।
तौ जित्वा गुरुमात्तसिंहनिनदौ संवीक्ष्य भूरिश्रवा
राधेयश्च हठात्ततो रुरुधतुः संक्षोभयन्तौ कुरून् ॥ ६५ ॥

---

भुवं भुनक्ति भक्षयति पालयति इति भूभुक् राजा तस्य संबन्धितां संबन्धं स्पष्टं यथा तथा ब्रुवाणैः वदद्भिरिव स्थितैरित्युत्प्रेक्षा । शिरोमिर्धात्रीं भुवं आच्छादयति स्म । भुक्छन्दस्योक्तोभयार्थतायाम् 'भुज पालनाभ्यवहारयोः' इत्यनुशासनम् ॥ ६३ ॥

वङ्गमिति । सुपर्वाधिभुवः देवाधिपस्य पुत्रः अर्जुनः तत्र युद्धे इषुभिः बाणैः वङ्गं वङ्गदेशाधिपतिम् । जनपदशब्दः सर्वत्र तदधिपक्षत्रियवाची । कुर्वन्नित्यनुषङ्गश्च । कङ्ककुलस्य गृध्रवृन्दस्य आमिषं भोग्यवस्तु । कलिङ्गं पुनः धृतं विपदः मरणस्य लिङ्गं चिह्नं ऊर्ध्वश्वासादि येन तथोक्तम् । भोजं आपदां भाजनं पात्रम् । मागधं मगधदेशस्य संबन्धिनम् । 'तस्येदम्' इत्यण् । यमपुर्याः सीमां प्रवेशं रुणद्धि प्राप्नोतीति तद्रुधम् । चोलं दुःखं निचोलं आच्छादनं यस्य तादृशं चित्तं यस्य तथोक्तं कुर्वन् । 'निचोलः प्रच्छदपटः' इत्यमरः । दिनावसानसमये सायंकाले सिन्धूद्वहं सैन्धवं रुन्धे स्म निरुद्धवान् । 'वङ्गम्' इति पाठोऽनुप्रासभङ्गादुपेक्ष्यः । शार्दूलविक्रीडितं वृत्तम् ॥ ६४ ॥

तत्रेति । तत्रान्तरे । अर्जुनयुद्धसमय इत्युत्तरेण संबन्धः ॥

भूप इति । भयभरात् भयातिशयात् अर्जुनापायचिन्तनजन्यात् उत्तप्यमाना संतप्यमाना धीः मनः यस्य सः । अतएव भूपः युधिष्ठिरस्तु इन्द्रात्मभुवः अर्जुनस्य वार्तां वृत्तान्तं ज्ञातुमिच्छुः जिज्ञासुः सन् सात्यकिं शैनेयं मारुतिं भीमं च उभौ रिपुचम्वाः शत्रुसेनाया व्यूहं प्रति प्राहिणोत् प्रेषितवान् । ततः युधिष्ठिरप्रेषणाद्धेतोः गुरुं द्रोणं व्यूहमुखस्थितं जित्वा आत्तः सिंहनिनदः क्ष्वेलारवः याभ्यां तथोक्तौ कुरून् कौरवान् सम्यक् क्षोभयन्तौ तौ सात्यकिभीमौ संवीक्ष्य भूरिश्रवाः राधेयः कर्णश्च द्वौ हठात् बलात्कारात् रुरुधतुः निरुद्धवन्तौ ।

---

१. 'वङ्गं' इति पाठः. २. 'जित्वा तौ' इति पाठः, ३. 'रिपु' इति पाठः. ४. 'उभौ' इति पाठः.

अथ सोमदत्ततनुजो रमापतेरनुजोऽपि भग्नरथसूतकार्मुकौ ।
परिगृह्य पट्टसलतां परस्परं प्रधनं भयंकरमुभौ वितेनतुः ॥ ६६ ॥
अथ शिनितनयं निपात्य भूम्यामुरसि धृतासिरसौ तु सौमदत्तिः ।
गलयितुमिव गर्वसारमन्तर्निजचरणेन निपीडयांचकार ॥ ६७ ॥
तदा हरिर्दूरगतोऽपि नाक्षं व्यापारयामास रथेऽर्जुनस्य ।
निजानुजातोरसि दत्तपादे भूरिश्रवस्येव महारथेऽस्मिन् ॥ ६८ ॥
चोदितस्य हरिणा किरीटिनो मार्गणेन हृतहस्तपल्लवः ।
सोमदत्ततनयो न केवलं कौरवा अपि विहस्ततां ययुः ॥ ६९ ॥

---

रुणद्धेः कर्तरि लिट् । 'हठात्ततो रुरुधतुः' इत्येव पाठः । 'उभौ रुरुधतुः' इति पाठे उक्तसंदर्भालाभादिति । वृत्तं पूर्ववत् ॥ ६५ ॥

**अथेति** । अथ सोमदत्ततनुजः भूरिश्रवाः रमापतेः श्रीकृष्णस्य अनुजोऽपि सात्यकिश्च उभौ द्वौ भग्नानि रथः सूतः सारथिः कार्मुकं चापः तानि ययोस्तथोक्तौ सन्तौ पट्टसः खड्गविशेषः लतेव तां परिगृह्य परस्परं अन्योन्यं भयंकरं प्रधनं द्वन्द्वयुद्धं वितेनतुः चक्रतुः । मञ्जुभाषिणीवृत्तम् ॥ ६६ ॥

**अथेति** । अथ धृतः असिः पट्टसः येन सः असौ सौमदत्तिः सोमदत्तपुत्रः भूरिश्रवास्तु शिनितनयं सात्यकिं भूम्यां निपात्य पातयित्वा अन्तः मनसि यः गर्वः तस्य सारः स्थिरांशः तं गलयितुं वमयितुमिवेत्युत्प्रेक्षा । उरसि सात्यकेर्वक्षसि निजेन चरणेन निपीडयांचकार निष्पीडितवान् । पुष्पिताग्रावृत्तम् ॥ ६७ ॥

**तदेति** । तदा सात्यक्युरोनिष्पीडनसमये दूरगतः । दूरे वर्तमानोऽपीत्यर्थः । हरिः श्रीकृष्णः अर्जुनस्य रथे अक्षं चक्रं चक्षुरिन्द्रियं च न व्यापारयामास न चलितवान् । रथं न चोदयामासेति यावत् । सात्यक्यपायभयादिति भावः । किंतु निजस्य अनुजातस्य सात्यकेः उरसि दत्तः निहितः पादो रथचरणं च येन तथोक्ते अस्मिन् भूरिश्रवसि नाम महारथे रथश्रेष्ठे रथिकश्रेष्ठे चैव अक्षं व्यापारयामास । विहायार्जुनरथप्रेरणं तमेवापश्यदित्यर्थः । अत्र दूररूपप्रतिबन्धकसत्त्वेऽपि भूरिश्रवसि चक्षुर्व्यापारवर्णनाद्विभावनाभेदस्य उक्तप्रतिबन्धकाभावरूपसामग्रीसत्त्वेऽपि अर्जुनरथे तद्व्यापारानुदयस्य वर्णनाद्विशेषोक्तेश्च उभयोः श्लेषानुप्राणितयोः संसृष्टिः ॥ ६८ ॥

**चोदितस्येति** । हरिणा श्रीकृष्णेन चोदितस्य प्रेरितस्य । भूरिश्रवोवधायेति भावः । किरीटिनः अर्जुनस्य मार्गणेन बाणेन हृतः छिन्नः हस्तः पल्लव इव यस्य तथोक्तः सोमदत्तस्य तनयः केवलं भूरिश्रवा एव विहस्ततां हस्तशून्यत्वं न ययौ न प्राप । किंतु कौरवाः सर्वेऽपि विहस्ततां व्याकुलत्वं च ययुः । 'विहस्तो व्याकुलः

---

१. 'च' इति पाठः. २. 'भयानक' इति पाठः. ३. 'भूमौ' इति पाठः.
४. 'बभूव' इति पाठः.

भूरिश्रवास्तदनु पुत्रममुं बलारे-
भूयो विगर्ह्य पुरुषोत्तमसंनिधाने ।
आचम्य पावनमसौ कुशमेकमन्य-
मास्तीर्य युद्धभुवि तत्र शयालुरासीत् ॥ ७० ॥

तदनु हिडिम्बवैरी दिननायकतनयसाहाय्यकेन भयानकसायकनिकायवर्षिणाममर्षिणां दर्पेण गरीयसां दुःशासनयवीयसां विसरमुज्जासयितुं विदलितविमतमदां निजगदामष्टाभिः काष्ठाभिः सह भ्रमयांचकार ॥

गान्धारजाजठरसीम्नि पुराश्मदत्तां
दत्त्वा दशां युधि गदा पवमानसूनोः ।
दुःशासनानुजकुलाय हि यौगपद्या-
चक्रे मिथोऽष्टनवतिं त्रिदशीस्तु यातूः ॥ ७१ ॥

---

समौ' इत्यमरः । अत्रैकस्य हस्तच्छेदेन सर्वेषां विहस्तलवर्णनादसंगत्यलंकारः श्लेषानुप्राणितः । रथोद्धता ॥ ६९ ॥

भूरिश्रवा इति । तदनु हस्तच्छेदनानन्तरं असौ भूरिश्रवाः अमुं अन्येन युध्यमानस्य अधर्मेण हस्तच्छेदकं बलारेः इन्द्रस्य पुत्रं अर्जुनं पुरुषोत्तमस्य श्रीकृष्णस्य संनिधाने समीपे । तं चापीत्यर्थः । भूयः मुहुर्मुहुः विगर्ह्य निन्दित्वा पावनं पवित्रं एकं कुशं जलं आचम्य अन्यं कुशं दर्भं आस्तीर्य तत्र आस्तीर्णकुशे शयालुः शयनशील आसीत् । प्रायोपवेशं चक्र इत्यर्थः । 'कुशो रामसुते दर्भे योक्त्रे द्वीपे कुशं जलम्' इत्यमरः ॥ ७० ॥

तदन्विति । तदनु हिडिम्बवैरी भीमः दिननायकतनयस्य कर्णस्य साहाय्यकेन साह्यकरणेन हेतुना दर्पेण गरीयसाम् । दुर्भराहंकाराणामित्यर्थः । अतएव भयानकं भयंकरं सायकनिकायं बाणपुञ्जं वर्षन्तीति वर्षिणां अमर्षिणां क्रुद्धानां दुःशासनस्य यवीयसां अनुजानां विसरं समूहं उज्जासयितुं हन्तुम् । 'उद्वासनप्रमथनक्रथनोज्जासनानि च' इत्यमरः । 'यवीयसामुज्जासयितुम्' इत्येतावन्मात्रपाठे कर्मणः शेषत्वविवक्षया षष्ठी । 'न लोक–' इत्यादिना कृद्योगषष्ठ्या एव निषेधात् । विदलितः निरस्तः विमतानां शत्रूणां मदः यया तां निजगदां अष्टाभिः काष्ठाभिः सह दिग्भिः सह भ्रमयांचकार । साष्टदिग्भ्रमणं भ्रामितवानित्यर्थः ॥

गान्धारजेति । पवमानसूनोः भीमस्य गदा गान्धारजायाः गान्धार्या

---

१. 'अन्यत्' इति पाठः. २. 'सुत' इति पाठः. ३. 'विसरम्' इति नास्ति क्वचित्. ४ 'दलित' इति पाठः. ५. 'समं भ्रामयामास' इति पाठः. ६. 'यौगपद्यं' इति पाठः.

विहयं विरथं विसारथिं विशरासं विपताकिकापटम् ।
विशिखेन विवस्वतः सुतं विदधातिस्म वृकोदरः क्षणात् ॥७२॥
अथान्यमास्थाय रथं क्षणेन कर्णः कुरूणां धुरि कार्मुकस्य ।
पूर्वं गुणेनाशुगजातमेकं पश्चादटन्याप्यपरं निरास्थत् ॥ ७३ ॥
मारुतिस्तदनु सोमदत्तभूपादपांसुपरिधूसरोरसा ।
कंसमर्दनकनीयसा समं शक्रनन्दनसमीपमाप सः ॥ ७४ ॥
तदनु दनुजपरिपन्थिनि श्रीकृष्णे निजशरपुञ्जेन कुरुकुञ्जरान्

---

जठरसीम्नि गर्भदेशे पुरा गर्भं धृत्वा चिरेणाप्यप्रसवसमये अश्मना पाषाणेन तद्धस्तधृतेन दत्तां कृतां दशां अवस्थाम् । वेदनामिति यावत् । युधि दत्त्वा ताव-द्दुःखं कृत्वा दुःशासनस्य अनुजानां कुलाय वृन्दाय । क्रियाग्रहणाच्चतुर्थी । अष्ट्युक्तां नवतिमिति शाकपार्थिवादित्वात्समासः । त्रिदशीः अप्सरसस्तु मिथः अन्योन्यं यातृः सोदरभार्याः यौगपद्याद्धि एककालमेव चक्रे । साष्टनवतिं धार्त-राष्ट्रानवधीदित्यर्थः । 'भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम्' इत्यमरः । पुरा किल गान्धारी धृत्वा गर्भं चिरादप्यप्रसवे अश्मना गर्भं ममाथेति भारती-कथाऽत्रानुसंधेया ॥ ७१ ॥

**विहयमिति** । वृकोदरः भीमः विशिखेन बाणैरिति जात्येकवचनम् । क्षणात् विवस्वतः सूर्यस्य सुतं कर्णं विगता हया अश्वाः यस्य तथोक्तं विरथं विसारथिं विशरासं विगतधनुषं विपताकिकापटं विगतध्वजांशुकं च विदधा-तिस्म चक्रे ॥ ७२ ॥

**अथेति** । अथ कर्णः क्षणेन अन्यं रथं आस्थाय अधिरुह्य । 'आसाद्य' इति पाठान्तरम् । कुरूणां कौरवाणां धुरि समक्षं पूर्वं प्रथमं कार्मुकस्य गुणेन मौर्व्या एकं आशुगजातं बाणवृन्दं निरास्थत् निर्गमयामास । पश्चात् कार्मुकस्य अटन्या कोट्या अपरं आशुगजातं वायुसंभवं भीममपि निरास्थत् निर्धूतवान् । 'कोटि-रस्याटनीः' 'आशुगौ वायुविशिखौ', 'जातं जात्योघजन्मसु' इति सर्वत्रामर-विश्वप्रकाशौ ॥ ७३ ॥

**मारुतिरिति** । तदनु धनुष्कोट्या निर्धूय कर्णेन मोचनानन्तरं स मारुतिः भीमः सोमदत्तभुवः भूरिश्रवसः पादे पांसुना रजसा आक्रमणलग्नेन परिधूसरं मलिनं उरः यस्य तेन कंसमर्दनस्य श्रीकृष्णस्य कनीयसा समं अनुजेन सात्यकिना सह शक्रन्दनन्दनस्य अर्जुनस्य समीपं आप प्राप्तवान् । रथोद्धतावृत्तम् ॥ ७४ ॥

**तदन्विति** । तदनु निजशराणां पुञ्जेन कुरुकुञ्जरान् कौरवश्रेष्ठान् भञ्जयन्तं छेदयन्तं तं धनंजयं अर्जुनं प्रति सुतस्य अभिमन्योः वधेन कृतः मन्तुः अप-

---

१. 'आसाद्य' इति पाठः. २. 'श्रीकृष्णे निज' इति नास्ति क्वचित्.

भञ्जयन्तं धनंजयं तं सुतवधेन कृतमन्तुं रिपुं निर्हन्तुमादिश्य दलितदैत्यचक्रेण निजचक्रेण चण्डकरमण्डलमपिद्धाने गभस्तिमानस्तमहास्तेति समस्तनिजबलकोलाहलमाकर्ण्य दुःशलाजानिर्मुदा निजं वदनमुदासयत् ॥

तदा प्रकाशस्य दिवाकरस्य तिरोहितस्यापि जयद्रथस्य ।
अदर्शनायापि च दर्शनाय सुदर्शनं हेतुरभून्मुरारेः ॥ ७५ ॥

सकलमपि जगन्ति चक्रयूथं सवितुरदर्शनतः सखेदमाहुः ।
समरभुवि कथं नु शौरिचक्रं तपनतिरोभवनं तदाचकाङ्क्षे ॥ ७६ ॥

तावत्किरीटी तरुणेन्दुमौलेर्वदान्यताकीर्तिचदावदेन ।
शरेण शत्रोरलुनीत शीर्षं साकं प्रमोदेन स कौरवाणाम् ॥ ७७ ॥

---

राधः येन तं रिपुं सैन्धवं निहन्तुं आदिश्य आज्ञाप्य दनुजानां दानवानां परिपन्थिनि शत्रौ श्रीकृष्णे दलितं छिन्नं दैत्यानां चक्रं येन तेन चक्रेण चण्डकरमण्डलं सूर्यबिम्बं अपिदधाने आच्छादयति सति गभस्तयः किरणाः अस्य सन्तीति गभस्तिमान् सूर्यः अस्तं अस्तमयं अहास्त गतवान् । जहातेर्गत्यर्थकात् कर्तरि लुङि तङि सिच् । इत्युक्तप्रकारं समस्तस्य निजबलस्य कोलाहलं कलकलं आकर्ण्य दुःशला दुर्योधनसोदरी जाया भार्या यस्य सः सैन्धवः निजं वदनं मुदा संतोषेण गतमृतिभीतिजन्येन सह उदासयत् उन्नमितवान् ॥

तदेति । तदा सैन्धवमुखोन्नमनसमये मुरारेः श्रीकृष्णस्य सुदर्शनं चक्रं नेत्रं च सुष्ठु पश्यतीति सुदर्शनं शोभनालोकनं च प्रकाशस्य दीप्यमानस्य दिवाकरस्य सूर्यस्य अदर्शनायापि अप्रत्यक्षाय च तिरोहितस्य व्यूहाच्छादितस्यापि जयद्रथस्य सैन्धवस्य दर्शनाय च उभयस्या अपि हेतुः कारणं अभूत् । अत्र सूर्यप्रत्यक्षसामग्रीभूतनेत्रालोकनयोः तदप्रत्यक्षहेतुत्ववर्णनाद्व्याघातालंकारः । एवं प्रत्यक्षप्रतिबन्धकस्य तिरोधानसत्त्वेऽप्युक्तसामग्र्या सैन्धवप्रत्यक्षवर्णनात्तृतीयविभावनाभेदश्च । द्वयोः श्लेषानुप्राणितयोः संसृष्टिः । 'स्याद्व्याघातोऽन्यथाकारि तथाकारि क्रियेत चेत्' इति । 'कार्योत्पत्तिस्तृतीया स्यात्सत्यपि प्रतिबन्धके' इति क्रमेण तदुभयलक्षणे ॥ ७५ ॥

सकलमिति । जगन्ति लोकाः सकलं चक्राणां चक्रवाकानां यूथं कुलमपि सवितुः सूर्यस्य अदर्शनतः अप्रत्यक्षात् सखेदं सदुःखं आहुः । शौरेः श्रीकृष्णस्य चक्रमेकं तु तदा समरभुवि तपनस्य सूर्यस्य तिरोभवनं अदर्शनं कथं न्वित्याश्चर्ये । आचकाङ्क्षे कामयामास । श्लेषानुप्राणितो विरोधाभासः । पुष्पिताग्रावृत्तम् ॥ ७६ ॥

तावदिति । तावत् सैन्धववदनोन्नमनक्षण एव स किरीटी अर्जुनः । तरु-

---

१. 'आदिश्य निहन्तु' इति पाठः. २. 'विदधाने' इति पाठः. ३. 'आस्त' इति पाठः. ४. 'सह निजवदनमुदास' इति पाठः. ५. 'अस्त्रेण' इति पाठः.

वृद्धक्षत्राञ्जलौ सायं नालमर्घ्याय कं धृतम् ।
इतीव[1] कं सिन्धुभर्तुर्जिष्णुस्तस्मिन्नपातयत्[2] ॥ ७८ ॥

एतत्किमित्ययमपास्य सुतस्य शीर्षं
शीर्यन्स्वमूर्धनि वरेण शशाङ्कमौलेः ।
क्षोण्यामवाङ्मुखतया निपपात वेगा-
दाघ्रातुकाम इव तत्सुतवत्सलत्वात् ॥ ७९ ॥

अथ तस्मिन्वासवसूनौ वासरविरामे शिबिरमेत्य यथावृत्तं रण-कथां विज्ञाप्य हृ[3]षितरोमाणं राजानमुपतिष्ठमाने सुयोधनस्तु क्रोध-नतया भगिनीजानिहानिनिदा[4]नतया सर्वामपि शर्वरीं नियोद्धुकामः सन्गा[5]म्भीरयुद्धारम्भभेरीनिध्वानमुज्जृम्भयामास ॥

णेन्दुः बालचन्द्रः मौलौ शिरसि यस्य तस्य सदाशिवस्य वदान्यतया दातृत्वेन या कीर्तिः तस्या वदावदेन वक्त्रा तद्वृत्तेनेति यावत् । 'वदो वदावदो वक्ता' इत्यमरः । शरेण पाशुपतास्त्राभिमन्त्रितबाणेन शत्रोः पुत्रघातिनः सैन्धवस्य शीर्षं शिरः कौरवाणां प्रमोदेन साकं संतोषेण सह अलुनीत चिच्छेद । लुनातेः कर्तरि लङ् । सहोक्त्यलंकारः ॥ ७७ ॥

**वृद्धक्षत्रेति** । सायं सायंकाले वृद्धक्षत्रस्य सैन्धवस्य पितुः अञ्जलौ संपुटितकर-द्वये अर्घ्याय अर्घ्यं कर्तुम् । सवितुरिति शेषः । धृतं कं जलं नालं न पर्याप्तं इत्या-लोच्येवेत्युत्प्रेक्षा । सिन्धुभर्तुः समुद्रस्य सैन्धवस्य च कं जलं शिरश्च तस्मिन् वृद्ध-क्षत्राञ्जलौ जिष्णुः अर्जुनः अपातयत् । 'इतीव कं सिन्धुभर्तुः' इत्येव पाठः । पाठान्तरे तु कमित्यनेन साकाङ्क्षतया साकाङ्क्षत्वदोषापत्तिरिति ध्येयम् ॥ ७८ ॥

**एतदिति** । अयं वृद्धक्षत्रः एतत् अञ्जलिस्थं शिरः किम् । कुत आपतितं इति जुगुप्सयन्निति शेषः । सुतस्य शीर्षं सैन्धवशिरः अपास्य भुवि निपात्य शशाङ्कमौलेः सदाशिवस्य वरेण 'यः पातयेत्त्वत्सुतस्य शीर्षं पतेत्तेनैव सह तच्छिरः' इत्यात्मकेन स्वस्य मूर्धनि शिरसि शीर्यन् भिन्दन् सन् । सुते वत्सलत्वात् वात्स-ल्यात् तत् सैन्धवशिरः आघ्रातुकाम इवेत्युत्प्रेक्षा । अवाङ्मुखतया अधोमुख-त्वेन क्षोण्यां भुवि वेगात् निपपात । 'नैवात्मनीनमथवा क्रियते मदान्धैः' इति प्रसिद्धेरिति भावः । पुरा वृद्धक्षत्रः पाण्डवैर्वैरमनुचिन्त्य तपसाराधितेन शंकरे-णोक्तविधं वरमवाप्य तद्विज्ञातृकृष्णचोदितकिरीटिप्रयुक्तपाशुपतास्त्रपातितपुत्रशि-रःपातनेन ममारेति भारती कथा ॥ ७९ ॥

**अथेति** । अथ तस्मिन् तत्तादृक् सैन्धवहन्तरि वासवसूनौ अर्जुने वासरवि-रामे सायंकाले शिबिरमेत्य रणकथां वृत्तं निष्पन्नं अनतिक्रम्य यथावृत्तं विज्ञाप्य

१. 'इतीव सिन्धुराजस्य' इति पाठः. २. 'न्यपातयत्' इति पाठः. ३. 'हृष्ट' इति पाठः. ४. निधननिदानतया' इति पाठः. ५. 'गम्भीरं' इति पाठः.

एते तदा तं समाकर्ण्य समयवैज्ञानिकाः स्मरणमात्रकृतसंनिधानं निशि दशगुणितभुजबलावलम्बं हिडिम्बभागिनेयं पृथक्प्रस्थाप्य स्वयमपि सकलान्यपि निजबलानि संनाह्य संयुगाय युगायतबाहवः शक्रसुतादयो निश्चक्रमुः ॥

या तारका मे सततं विरुद्धा तां बिभ्रतीमा इति बद्धरोषम् ।
सर्वेन्द्रिये सत्यपि सैनिकानां मार्गं दृशामेव तमो रुरोध ॥८०॥

शर्वर्याश्चिकुरे मनोजशिखिनो धूमे नभोरण्यभू-
जम्बूशाखिनि पेचकाण्डजदृशामालोकसिद्धाञ्जने ।
चेले कालहलायुधस्य तमसामुज्जृम्भणे तादृशे-
ऽप्यह्नीवाहवशिल्पमद्भुततमं चक्रुर्द्वये सैनिकाः ॥ ८१ ॥

---

हृपितरोमाणं आश्चर्यात् सरोमाञ्चं राजानं धर्मराजं उपतिष्ठमाने स्तूयमाने सति । सुयोधनस्तु भगिनी जाया यस्य तस्य सैन्धवस्य हानिः नाशः निदानं मुख्यकारणं यस्यास्तया क्रोधनतया अत्यन्तकोपेन हेतुना सर्वामपि शर्वरीं रात्रिं नियोद्धुकामः सन् गम्भीरं युद्धारम्भे भेरीणां निध्वानं झांकारं उज्जृम्भयामास । रणोद्योगसूचनायेति भावः ॥

एत इति । तदा तत्काले तं भेरीनिध्वानं समाकर्ण्य समये विज्ञानं कालोचितकर्तव्यताबोधः शीलं येषां ते समयवैज्ञानिकाः अतएव युगं वृषभद्वयादिस्कन्धवाह्यतिर्यग्दारुविशेषः तद्वदायतौ बाहू येषां ते शक्रसुतः अर्जुन आदिर्येषां तथोक्ताः एते पाण्डवाः स्मरणेनैव स्मरणमात्रेण कृतं संनिधानं समीपस्थितिर्येन तं निशि रात्र्यां दशगुणितं दशधा आवृत्तं भुजयोः बलं अवलम्बः सहायो यस्य तं हिडिम्बभगिन्याः हिडिम्ब्याः अपत्यं तद्भागिनेयं घटोत्कचं पृथक् प्रधानत्वेन प्रस्थाप्य रणाय प्रयोज्य सकलानि बलानि संनाह्यापि उद्योजयित्वा च स्वयमपि संयुगाय युद्धं कर्तुं निश्चक्रमुः निष्क्रान्ताः ॥

येति । या तारका नक्षत्रं इति जात्येकवचनम् । कनीनिका च । 'कनीनिकर्क्षयोस्तारा' इति रत्नमाला । तारैव तारका । अत एव 'प्रस्पन्दमानपरुषेतरतारमन्तश्चक्षुः' इति कालिदासः । मे मम सततं सर्वस्यामपि रात्रौ, न तु चन्द्रवत्पूर्वपक्ष एवेत्यर्थः । विरुद्धा प्रतिघातिनी तां तारकां इमाः दृशः बिभ्रति इति हेतोः बद्धरोषमिव स्थितमित्युत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या । तमः अन्धकारः सर्वस्मिन्निन्द्रिये दृग्भिन्ने सत्यपि दृशां नेत्राणां तारकाधारिणां मार्गमेव रुरोध ॥ ८० ॥

शर्वर्या इति । शर्वर्याः रात्र्यङ्गनायाः चिकुरे केशपाशे मनोजस्य मन्मथ-

---

१. 'एतदाकर्ण्य' इति पाठः. २. 'समरवैज्ञानिकं' इति पाठः.

प्रधनेऽद्भुतेऽपि निशि नारददृष्टेः प्रथमेतरा न्यलसदीतिरुदग्रा ।
वनिता अपि त्रिदशनाथनगर्या[1] वरणस्रजं चिकुर एव बबन्धुः ॥८२॥

अमीषु युद्धदिवसेष्वयमेव हि कामुकः ।
रणोत्सवे[2] विभज्यार्धं रात्रयेऽसौ[3] ददौ यतः ॥ ८३ ॥

ततः क्षणादेव घटोत्कचोऽसौ सङ्ग्रामसीमोपरि जृम्भमाणः ।
तमीमिमां सान्द्रतमां तमोभिर्दंष्ट्राप्रभाभिर्दिवसं वितेने ॥ ८४ ॥

---

स्यैव शिखिनः वह्नेः धूमे नभसः आकाशस्यैव अरण्यभुवः जम्बूशाखिनि नील-फले जम्बूवृक्षे पेचकाण्डजानां उलूकानां दृशां आलोकार्थं सर्ववस्तुदर्शनार्थं सिद्धाञ्जने कालस्यैव हलायुधस्य बलरामस्य चेले नीलवस्त्रे तादृशे नैल्यसान्द्रत्वाभ्यां अनुपमे तमसां उज्जृम्भणे प्रचारे सत्यपि अह्नि वासर इव द्वये सैनिकाः कौरवाः पाण्डवाश्च अद्भुततमं अत्याश्चर्यकरं आहवशिल्पं युद्धचेष्टितं चक्रुः। ईर्ष्यावशादिति भावः । अश्लिष्टमालापरम्परितरूपकस्योपमया संसृष्टिः । शार्दूलविक्रीडितम् ॥८१॥

**प्रधनेति** । निशि तमस्विन्यां प्रधने युद्धे अद्भुते सत्यपि नारददृष्टेरुदग्रा महती प्रथमेतरा द्वितीया ईतिः आनन्दबाष्पाणां वृष्टिः व्यलसत् । बभूवेत्यर्थः । 'या निशा सर्वभूतानां तस्यां जागर्ति संयमी' इत्यागमाद्रात्रेर्योगिनां समाधिकालत्वेन दर्शनाप्रसक्तेरिति भावः । त्रिदशनाथनगर्याः स्वर्गस्य संबन्धिन्यः वनिताः अप्सरसोऽपि वरणस्रजं चिकुरे केशपाश एव बबन्धुः । तदानीं भोगकालत्वात्तासामपि तद्युद्धदर्शनाप्रसक्तेरिति भावः । केचित्तु अन्धकारनिरोधेन क्रमेण युद्धस्य नवसुराणां च दर्शनायोगादित्युभयत्र भावार्थमाहुः । अत्र युद्धेनैशत्वविशेषणस्य तद्गताश्चर्यतन्मतनवसुरदर्शनप्रतिबन्धकान्धकारावरणाभिप्रायगर्भत्वात्परिकरालंकारः । पूर्वत्र तु योगभोगावसरत्वाभिप्रायगर्भत्वादयमिति ध्येयम् ॥ ८२ ॥

**अमीष्विति** । अमीषु युद्धदिवसेषु । युद्धदिनानां मध्य इत्यर्थः । अयं सैन्धवयुद्धदिवस एव कामुकः स्त्रीपरायणः । हिः खल्वर्थे । यतः कारणादसौ दिवसः रणोत्सवे विभज्य विभागं कृत्वा अर्धसमांशं रात्रये ददौ दत्तवान् । कामिनां सर्वस्वहानेरप्यगण्यत्ववद्धर्मार्थकामेषु स्त्रीपुंसयोरर्धफलभागित्वस्मरणाच्चेति भावः । अत्रोत्तरवाक्यार्थेन दिवसस्य कामुकत्वसमर्थनात्काव्यलिङ्गभेदः । 'रात्रयेऽसौ ददौ यतः' इत्येव पाठः । पाठान्तरे अपिशब्दस्य नैरर्थक्यं अयमित्यनुषङ्गक्लेशश्चेति ध्येयम् ८३

**तत इति** । ततः असौ पाण्डवप्रस्थापितः घटोत्कचः क्षणादेव सङ्ग्रामसीम्नः युद्धदेशस्य उपरि ऊर्ध्वभागे । आकाश इति यावत् । जृम्भमाणः वर्तमानः सन् तमोभिः सान्द्रतमां इमां युद्धशालिनीं तमीं रात्रिं दंष्ट्राणां स्थूलायतदन्तानां प्रभाभिः दिवसं वितेने । निस्तमस्कां चकारेत्यर्थः । अत्र तमोनीलाया रात्रेर्नैल्यत्यागपूर्वकं दंष्ट्राप्रभाव्यापनवर्णनात्तद्गुणालंकारः ॥ ८४ ॥

---

१. 'नगर्याः' इति पाठः. २. 'रणोत्सवं' इति पाठः. ३. 'अपि' इति पाठः.

तिष्ठ द्रोण सुयोधन द्रुततरं धावस्व दुःशासन
त्वां मुञ्चामि किमद्य भोः कृप कृपालेशोऽपि न त्वत्कृते ।
गान्धाराधिप का कथा तव रणे दुर्मेधसामग्रणीः
कर्णः क्वेति घटोत्कचः कटुरवो व्यभ्राम्यदभ्रान्तरे ॥ ८५ ॥

हैडिम्बेयममुं निजाट्टहसितः[2] क्षुभ्यद्दशाशामुखं
दंष्ट्राङ्कुरकरालमात्तपरशुं दृष्ट्वैव केचिद्भटाः ।
विभ्युश्चुक्रुशुरामिमीलुरवनौ[3] पेतुर्मुमूर्च्छुर्जहुः
प्राणानारुरुहुर्विमानममरीरापुः[4] प्रमोदं दधुः ॥ ८६ ॥

नभसि तमभिवीक्ष्य घोररूपं दिशि दिशि तत्र पलायिते नृपौघे ।
मरणसमयमुष्टिलग्नशस्त्रस्तदभिमुखः प्रययौ कबन्ध एकः[5] ॥ ८७ ॥

---

तिष्ठेति । हे द्रोण, त्वं तिष्ठ युद्धाय स्थिरो भवेत्यर्थः । हे सुयोधन, त्वं द्रुततरं अतिशीघ्रं धावस्व पलायस्व । हे दुःशासन, त्वामद्य मुञ्चामि किम् । न मुञ्चाम्येवेत्यर्थः । भोः कृप हे शारद्वत, त्वत्कृते भवद्विषये कृपालेशः करुणालवोऽपि नास्ति । निहन्म्येवेत्यर्थः । गान्धाराधिप शकुने, तव रणे का कथा । युद्धे विषये त्वं कियानित्यर्थः । दुर्मेधसां दुर्बुद्धीनां अग्रणीः कर्णः क्व कुत्रास्ते । इत्युक्तप्रकारं कटुः कठोरः रवः यस्य तथोक्तः सन् घटोत्कचः अभ्रान्तरे आकाशमध्ये व्यभ्राम्यत् संचचार । शार्दूलविक्रीडितम् ॥ ८५ ॥

हैडिम्बेयमिति । निजेन अट्टहसितेन किलकिलाभिख्येन क्षुभ्यन्ति कम्पमानानि दशानामाशानां दिशां मुखानि यस्य तं दंष्ट्राङ्कुरैः करालं भीषणं आत्तः गृहीतः परशुः कुठारः येन तं अमुं हिडिम्बाया अपत्यं हैडिम्बेयं घटोत्कचं दृष्ट्वैव । न तु युद्ध्वेत्यर्थः । केचिद्भटाः कौरवाः विभ्युः भीतवन्तः । ततः चुक्रुशुः रुरुदुः । ततः अमिमीलुः मम्लुः । केचिद्भटाः अवनौ पेतुः । ततः मुमूर्च्छुः । ततः प्राणान् जहुः । केचिद्भटा विमानं देवयानं आरुरुहुः । अपराङ्मुखा मृता इति भावः । अतएव अमरीः देवाङ्गनाः आपुः । अतएव प्रमोदं दधुः । विभ्येत्यादेः सर्वत्र कर्तरि लिट् । अत्र केचिद्भटेषु कर्तृकारके भयमीलनानां केषुचित्पतनमूर्च्छनप्राणत्यागानां केषुचिद्विमानारोहणदेवाङ्गनाप्राप्तिप्रमोदवहनानां च अनेकक्रियाणामन्वयात् कारकदीपकालंकारत्रयम् । विमानारोहणदेवाङ्गनाप्राप्त्योः प्रमोदवहनहेतुत्वात्काव्यलिङ्गभेदस्य तृतीयेन सहैकवाचकानुप्रवेशसंकरः । अस्य च प्रथमद्वितीययोश्च संसृष्टिरिति विवेकः । पूर्ववद्वृत्तम् ॥ ८६ ॥

नभसीति । घोरं भयंकरं रूपं आकारः यस्य तथोक्तं तं घटोत्कचं नभसि

---

१. 'आर्य' इति पाठः. २. 'हसितैः' इति पाठः. ३. 'बिभ्युश्चक्षुरमी' इति पाठः. ४. 'प्रापुः' इति पाठः. ५. 'एव' इति पाठः.

पितुश्च पुत्रस्य च वेदवाक्यैर्यदुक्तमैकात्म्यमिदं हि दृष्टम् ।
भीमात्मजोऽपि स्वयमेष युद्धे भीमो यदासीदरिसैनिकानाम् ॥ ८८ ॥

भिण्डीपालैस्तोमरैः शूलजालै-
र्वेषैरुग्रैश्चोभयेषां नृपाणाम् ।
दृष्टः क्वापि क्वाप्यदृष्टोऽरिसैन्यं
व्योम्नि स्थित्वा नाम्नि शेषं स चक्रे ॥ ८९ ॥

स्वस्य क्षयं नागमदद्य रात्रौ दुर्योधनस्य ध्वजिनीति मत्वा ।
पितृव्यभक्त्येव स भीमसूनुस्तत्रैव तस्याः क्षयमाततान ॥ ९० ॥

---

आकाशे अभिवीक्ष्य नृपाणां कौरवाणां ओघे वृन्दे दिशि दिशि प्रतिदिशं पलायिते सति तत्र युद्धदेशे मरणसमये मुष्टौ लग्नं दृढघटितं शस्त्रं आयुधं यस्य तथोक्तः एकः कवन्धः अपमूर्धकलेवरमेव तं घटोत्कचं प्रति अभिमुखं ययौ । नान्यः कश्चिदपीत्यर्थः । अत्राभिमुखगमनस्य कवन्ध एव नियमनात्परिसंख्यालंकारः ॥ ८७ ॥

**पितुरिति** । पितुः जनकस्य च पुत्रस्य च द्वयोः । एकः आत्मा स्वरूपं ययोस्तयोः भावः ऐकात्म्यं नाम यद्वस्तु वेदवाक्यैः 'आत्मा वै पुत्रनामासि' इत्यादिभिः उक्तं बोधितं इदं तत् पितृपुत्रयोरैकात्म्यं दृष्टं हि । इदानीमिति शेषः । पुरा श्रुतिसिद्धम्, इदानीं तु प्रत्यक्षसिद्धमित्यर्थः । यत् यस्मात् एष घटोत्कचः स्वयं भीमात्मजोऽपि सन् युद्धे अरिसैनिकानां भीमः भयंकरश्च आसीत् । तस्मादिति योज्यम् । श्लेषानुप्राणितं वाक्यार्थहेतुकं काव्यलिङ्गमलंकारः ॥ ८८ ॥

**भिण्डीपालैरिति** । स घटोत्कचः उग्रैः भिण्डीपालैः तोमरैः शूलानां जालैः समूहैः शूलादयः आयुधविशेषाः । वेषैः आकारविशेषैश्च उपलक्षितः व्योम्नि नभसि स्थित्वा उभयेषां विधानां नृपाणाम् । नृपैरित्यर्थः । कर्तृत्वस्य शेषत्वविवक्षायां 'आमं शूद्रस्य पक्वान्नम्' इत्यादाविव षष्ठी । क्वापि अदृष्टश्च सन् अरीणां सैन्यं नाम्नि शेषम् । नाममात्रावशिष्टमित्यर्थः । चक्रे । सर्वं जघानेति यावत् । शालिनी ॥ ८९ ॥

**स्वस्येति** । दुर्योधनस्य ध्वजिनी सेना अद्य अस्यां रात्रौ स्वस्य आत्मनः संबन्धिनं क्षयं निवेशं नागमत् न प्राप इत्युक्तप्रकारेण मत्वा ज्ञात्वा स भीमसूनुः घटोत्कचः पितृव्ये पितृभ्रातरि दुर्योधने भक्त्येवेत्युत्प्रेक्षा । तत्र युद्धदेश एव तस्याः दुर्योधनध्वजिन्याः क्षयं निवेशं नाशं च आततान अकरोत् । 'प्रलयावासयोः क्षयः' इति विश्वः ॥ ९० ॥

---

१. 'हि' इति पाठः. २. भिन्दीपालैः' इति पाठः. ३. 'वर्पैः' इति पाठः. ४. 'नगानाम्' इति पाठः. ५. 'छित्वा नामशेषं' इति पाठः. ६. 'स्वस्वक्षयं' इति पाठः.

तत्रान्तरे ।

'वाहिन्या एव मे नार्धं मेदिन्या अपि नङ्क्ष्यति ।
क्षणं युद्ध्येत चेदेष इति मेने सुयोधनः ॥ ९१ ॥

इत्थं नितान्तचिन्तासंतानार्दितस्य धार्तराष्ट्रस्य संप्रार्थनागुणनिकया संभृतसर्वाभिसारो मिहिरकुमारो वज्रधारया महेन्द्रो महीध्रमिव तेन दत्तया वलक्षाश्वक्षपणदक्षेयमिति चिररक्षितया महत्या शक्त्या वक्षसि निर्भिद्य क्षणेन तं क्षणदाचरं क्षितौ निपातयामास ॥

पौत्रस्य तस्य प्रबलस्य शक्तेः प्रहारपीडां प्रतियोधिदत्ताम् ।
अपारयन्द्रष्टुमिवातिघोरामन्तः स्थितो वायुरगाद्बहिष्ठात् ॥९२॥

---

तत्रेति । तत्रान्तरे । तस्मिन्समये इत्युत्तरेणान्वयः ॥

वाहिन्या इति । एषः घटोत्कचः क्षणं युध्येत चेत् युद्धं क्रियेत यदि मे मम संबन्धिन्याः वाहिन्याः सेनायाः अर्धमेव न नङ्क्ष्यति । अर्धस्य प्रथमयुद्धदिवसादारभ्य पाण्डवैर्नाशितत्वादिति भावः । किंतु मे मेदिन्याः भुवः अर्धमपि नङ्क्ष्यति । आत्मानं जित्वा अदत्त्वैवार्धं पित्र्यमप्यंशं भुवं भोक्ष्यन्ति पाण्डवा इत्यर्थः । इत्युक्तप्रकारं सुयोधनः मेने तर्कितवान् ॥ ९१ ॥

इत्थमिति । इत्थं उक्तप्रकारात् नितान्तं चिन्तानां संतानात् समूहात् आर्दितस्य पीडितस्य धार्तराष्ट्रस्य दुर्योधनस्य सम्यक्प्रार्थनानां गुणनिकया परम्परया संभृतः स्वीकृतःसर्वाभिसारः सर्वोद्योगः घटोत्कचवधविषयकः येन तथोक्तः मिहिरस्य सूर्यस्य कुमारः कर्णः महेन्द्रः वासवः वज्रस्य आयुधस्य धारया महीं धरतीति महीध्रं गिरिमिव तेन महेन्द्रेण दत्तया इयं शक्तिः वलक्षाः श्वेताः अश्वाः यस्य तस्य अर्जुनस्य क्षपणे मारणे दक्षा समर्था । इति प्रेम्णेति शेषः । चिरात् रक्षितया गुप्तया महत्या शक्त्या तन्नामकायुधेन तं क्षणदाचरं राक्षसं घटोत्कचं वक्षसि निर्भिद्य क्षणेन क्षितौ भुवि निपातयामास पातितवान् । उपमालंकारः ॥

पौत्रस्येति । प्रबलस्य प्रकृष्टबलस्य पौत्रस्य पुत्रपुत्रस्य तस्य घटोत्कचस्य अन्तः स्थितः शरीरान्तर्गतः वायुः प्राणानिलः प्रतियोधिना शत्रुणा कर्णेन दत्तां कृतां शक्तेः आयुधस्य प्रहारेण या पीडा बाधा ताम् । तदीयामिति शेषः । द्रष्टुमपारयन् अशक्नुवन्निवेत्युत्प्रेक्षा । बहिष्ठात् शरीरात् बहिः अगात् निर्गतवान् । घटोत्कचो ममारेत्यर्थः ॥ ९२ ॥

---

१. 'संतानादार्तस्य' इति पाठः. २. 'धार्तराष्ट्रस्य' इति नास्ति क्वचित्. ३. 'संप्रार्थन' इति पाठः. ४. 'निर्भेद्य' इति पाठः. ५. 'न्यक्षिपत्', 'पातयामास' इति च पाठः. ६. 'प्रबलप्रसिद्धेः' इति पाठः. ७. 'योध' इति पाठः.

सापि शक्तिरभिहत्य नराशं सांयुगीनजनसंनुतशौर्यम्।
वायुसूनुपरिघादिव भीता वासवस्य सविधं प्रतिपेदे ॥ ९३ ॥

तदानीं तत्र[1] तेषां कौरवकौन्तेयसैन्यानां बाष्पलहरीं निष्पादयितुं[2] मोदविषादयोरहमहमिकया स्पर्धा समवर्धत ॥

अथ जयद्रथघटोत्कचनिधनशोकातिशय[3]गुरून्द्वयानपि कुरूना[4]श्वासयितुमिव कुलकूटस्थे कुमुदबान्धवे कुलिशायुधदिशं[5]मेत्य काशनिकाशैरभीशुभिराकाशं[6] दिशावकाशं[7] व्यकाशयमाने[8] सति कोपकु[9]टिलीकृतचापौ विराटद्रुपदभूपौ[10] द्रुतमनीचैर्नाराचैराचार्यं शललैः शल्यमृगमिव[11] निबद्धतनुमातेनतुः ॥

सेति। सा इन्द्रदत्ता घटोत्कचप्राणापहारिणी इति वा शक्तिरपि सांयुगीनेन रणे साधुना जनेन शूरजनेन संनुतं श्लाघितं शौर्यं यस्य तथोक्तं नराशं राक्षसं घटोत्कचं अभिहत्य मारयित्वा वायुसूनोः भीमस्य परिघात् गदायाः भीतेवेत्युत्प्रेक्षा। वासवस्य इन्द्रस्य सविधं समीपं प्रतिपेदे प्राप्ता। स्वागतावृत्तम्॥ ९३ ॥

तदानीमिति। तदानीं घटोत्कचवधकाले तत्र युद्धरङ्गे तेषां कौरवसैन्यानां कौन्तेयसैन्यानां च उभयेषां बाष्पस्य नेत्रजलस्य लहरीं प्रवाहं निष्पादयितुं जनयितुं मोदस्य आनन्दस्य विषादस्य दुःखस्य च द्वयोः घटोत्कचवधजन्ययोः स्पर्धा विवादः अहमहमिकया अहं पूर्वं जनयाम्यहमेव पूर्वं जनयामीत्यहंकारेण उपलक्षिता समवर्धत वर्धते स्म। कौरवसैन्यानि मुमुदिरे, कौन्तेयसैन्यानि रुरुदुरित्यर्थः।

अथेति। अथ कुलस्य कौरवाणां पाण्डवानां च वंशस्य कूटस्थे प्रथमे अतएव कुमुदबान्धवे चन्द्रे जयद्रथस्य सैन्धवस्य घटोत्कचस्य च निधनेन मरणेन यः शोकातिशयः तेन गुरून् दुर्भरान् द्वयानपि कुरून् धार्तराष्ट्रान् पाण्डवांश्च आश्वासयितुमिवेत्युत्प्रेक्षा। कुलिशायुधस्य इन्द्रस्य दिशं प्राचीं एत्य प्राप्य काशैः शरपुष्पैः निकाशैः तुल्यैः। तद्वद्धवलैरित्यर्थः। अभीशुभिः किरणैः आकाशं दिशानामष्टानां च अवकाशं अन्तरालं व्यकाशयमाने प्रकाशयति सति। व्याङ्पूर्वात्कशतेर्णिजन्ताल्लटि शानच्। विराटभूपो द्रुपदभूपश्च द्वौ। कोपेन कुटिलीकृतः गुणाकर्षणेन कुण्डलीकृतः चापः याभ्यां तथोक्तौ सन्तौ द्रुतं अनीचैः महद्भिः नाराचैः बाणविशेषैः आचार्यं शल्यं नाम मृगं शललैः तल्लोमभिरिव निबद्धतनुं लग्नशरीरं आतेनतुः चक्रतुः। 'श्वावित्तु शल्यस्तल्लोम्नि शलली शललं शलम्' इत्युभयत्राप्यमरः। उत्प्रेक्षया संसृष्टोपमालंकारः॥

१. 'तत्र' नास्ति क्वचित्. २. 'उत्पादयितुम्' इति पाठः. ३. 'अतिरेक' इति पाठः. ४. 'कुरु' इति पाठः. ५. 'दिशां' इति पाठः. ६. 'आकाश' इति पाठः. ७. 'दशदिशा' इति पाठः. ८. 'व्याकोचमाने' इति पाठः. ९. 'कोपेन' इति पाठः. १०. 'द्रुपदविराट्' इति पाठः. ११. 'शलल' इति पाठः.

तस्यार्धमग्ना नाराचास्तन्वां तद्विक्रमश्रियः ।
रोचन्ते स्म प्रहृष्यन्त्या रोमाञ्चानामिवाङ्कुराः ॥ ९४ ॥
अग्निदेश्येन निक्षिप्तमथोभौ द्रोणपार्षतौ ।
कोदण्डविद्यासर्वस्वं तन्वाते स्म प्रकाशितम् ॥ ९५ ॥

ततः शरसंभवभगिनीजानेश्चापचतुर्मुखो वृद्धत्वविश्राणितविकृतवेषयोरपि विशिखविमोचनसृष्टिशिल्पेन विलोभनीयविग्रहीकृतयोर्विराटपाञ्चालयोर्वरणोत्सवयौगपद्ये सति विबुधपुरविलासिनीनां विडौजसः कुटुम्बिन्या अपि दुःसमाधेयं विवादमापादयामास ॥

---

तस्येति । तस्य द्रोणस्य तन्वां शरीरे अर्धमग्नाः अवगाढाः नाराचाः द्रुपदविराटप्रयुक्ताः प्रकर्षेण हृष्यन्त्याः मोदमानायाः तस्य द्रोणस्य विक्रमश्रियः पराक्रमलक्ष्म्याः रोमाञ्चानां पुलकानां अङ्कुरा इवेत्युत्प्रेक्षा । रोचन्ते स्म बभुः ॥ ९४ ॥

अग्निदेश्येनेति । अथ द्रोणः पार्षतः द्रुपदश्च तावुभौ अग्निदेश्येन नाम मुनिना निक्षिप्तं न्यासीकृतम् । उपदेशव्याजादिति भावः । कोदण्डविद्या धनुर्नैपुण्यमेव सर्वस्वं यावद्धनं प्रकाशितं तन्वाते स्म । यथाभ्यस्तयावद्धनुर्विद्यानैपुण्यमग्निवेश्योपदिष्टं प्रकटीचक्रतुरित्यर्थः ॥ ९५ ॥

तत इति । ततः शरसंभवस्य कृपस्य भगिनी कृपी जाया तस्य द्रोणस्य । 'जायाया निङ्' । चाप एव चतुर्मुखः ब्रह्मा वृद्धत्वेन जरसा बाणैश्छेदनेन च विश्राणितः कृतः विकृतः जुगुप्सितः वेषः आकारः ययोस्तथोक्तयोरपि विशिखानां बाणानां विमोचनं संघटनमेव सृष्टिशिल्पं सृजनव्यापारः तेन ( करणेन ) विलोभनीयः कामनीयः विभिः पक्षिभिः लोभनीयश्च विग्रहः देहः ययोस्तथोक्तयोः कृतयोः । कृद्योगादभूततद्भावे च्विः । निहत्य देवभूयं प्रापितयोरित्यर्थः । विराटस्य पाञ्चालस्य द्रुपदस्य च द्वयोः संबन्धिनः वरणोत्सवस्य यौगपद्ये समकालिकत्वे सति विडौजसः इन्द्रस्य कुटुम्बिन्या शच्यापि दुःसमाधेयं समाधातुमशक्यं विबुधपुरे स्वर्गे विलासिनीनां अप्सरसां विवादं अहमेवैतं वृणुयां अहमेवैतं वृणुयामिति वाक्कलहं आपादयामास अजनयत् । चापमुक्तैः शरैस्तावुभावपि निपातितवान् । द्रोण इत्यर्थः । अत्र विराटद्रुपदक्षपणस्य देवाङ्गनाविवदनरूपेण वर्णनात्पर्यायोक्तस्य चापचतुर्मुख इत्यादिसावयवरूपकसापेक्षत्वाद्द्वयोरङ्गाङ्गिभावेन संकरः ॥

---

१. 'अग्निवेश्येन' इति पाठः. २. 'कुर्वाते' इति पाठः. ३. 'अतिवृद्धत्व', 'समृद्ध' इति च पाठः. ४.'पांचाल्योरहंपूर्विकया' इति पाठः. ५. 'सति' इति नास्ति क्वचित्. ६.'वारविलासिनीनां' इति पाठः. ७. 'बिडौजः' इति पाठः. ८.'दुःसमाधं' इति पाठः.

अथ तत्र शर्वरीचरभुजगर्वनिर्वापितपर्वतशृङ्गशिलाभङ्गविपाटितशरीरौ संध्यारागमिषेण रुधिरधारामुत्सृजन्ती सा निशापि विनाशदशामाशु विवेश ॥

तदनु कोककुटुम्बिनीनां नम्रंकरणे महसि समारूढविहायसि क्रोधनिद्रारोधसाधारणीभवदरुणिमदृक्प्रतिफलनैरायोधनधरणीरुधिरधुनीषु पङ्केरुहाण्यङ्कुरयन्तो घटोत्कचविराटपाञ्चालपञ्चताप्रपञ्चितवैरभारतया गुरोरायुर्हेतुमलीकाक्षरं परिमार्ष्टुमलीकवचनमेकं प्रयुज्यतां भवतेति धर्मजातमनुकूलयन्तो वसुदेववासवकुमारादयः प्रथमसंनिकृष्टस्य धृष्टद्युम्नस्य वरूथिनीविमाथिनीं वारणधोरणीं

---

अथेति । अथ तत्र युद्धरङ्गे शर्वरीचरस्य घटोत्कचस्य भुजयोर्गर्वेण बलदर्पेण निर्वापितानां पातितानां पर्वतानां शृङ्गैः शिखरैः शिलाभङ्गैः पाषाणखण्डैश्च विपाटितं भग्नं शरीरं यस्यास्तथोक्ता अतएव संध्यारागस्य मिषेण रुधिरधारां उत्सृजन्ती वर्षन्तीव स्थितेत्युत्प्रेक्षा । सा निशा रात्रिरपि विनाशदशां अदर्शनावस्थां आशु विवेश प्राप्तवती । प्रभाताभूद्रात्रिरित्यर्थः ॥

तदन्विति । तदनु कोककुटुम्बिनीनां चक्रवाकाङ्गनानां नम्रंकरणे विवक्षताकरणे । रतोत्सवजनक इति यावत् । वासर एव तत्संभोगादिति भावः । महसि तेजसि सूर्ये समारूढं प्राप्तं विहायः आकाशः येन तथोक्ते सति क्रोधस्य निद्रारोधस्य सर्वरात्रं निद्रात्यागस्य च द्वयोः साधारणीभवन् । तदुभयजन्यत्वयोग्य इत्यर्थः । उभाभ्यामपि तत्संभवादिति भावः । अरुणिमा आरुण्यं यासां तासां दृशां नेत्राणां प्रतिफलनैः प्रतिबिम्बनैः आयोधनधरण्यां युद्धभुवि या रुधिरधुन्यः रक्तनद्यः तासु पङ्केरुहाणि रक्तपद्मानि अङ्कुरयन्तः जनयन्तः । वसुदेवकुमारः श्रीकृष्णः वासवकुमारः अर्जुनः तौ आदी येषां ते कृष्णार्जुननकुलसहदेवाः घटोत्कचस्य विराटस्य पाञ्चालस्य च त्रयाणां पञ्चतया मरणेन प्रपञ्चितः विस्तारितः वैरं विरोध एव भारः येन तस्य भावः तत्ता तया गुरोर्दुर्भरस्य गुरोः द्रोणाचार्यस्य संबन्धिनः आयुषः जीवितकालस्य हेतुं अलीके ललाटे अक्षरं ब्रह्मलिपिं परिमार्ष्टुं निरसितुं एकमलीकवचनं मृषावाक्यं हे धर्मजात, भवता प्रयुज्यतां उदीर्यतां इत्युक्तप्रकारेण धर्मजातं धर्मराजं अनुकूलयन्तः अङ्गीकारयन्तः सन्तः प्रथमं आदौ संनिकृष्टस्य धृष्टद्युम्नस्य या वरूथिनी सेना तां विमथ्नाति भज-

---

१. 'निर्वान्त' इति पाठः. २. 'अभङ्ग' इति पाठः. ३. 'शरीरेव' इति पाठः. ४. 'नाशदशां' इति पाठः. ५. 'समाविवेश' इति पाठः. ६. 'निरोध' इति पाठः. ७. 'प्रपञ्चत्' इति पाठः. ८. 'अलीकं' इति पाठः. ९. 'भवतां' इति नास्ति क्वचित्. १०. 'वायुवासव' इति पाठः. ११. 'प्रधनसंनिकृष्टधृष्टद्युम्नवरूथिनी' इति पाठः.

प्रचेतसमिव पयोधरपरम्परां पुरोधाय भृशं खस्य गुणं शङ्खस्य परिपूरणेन दुर्वहं कुर्वन्तं कौरवसेनापतिमभिजग्मुः ॥

कोपेन तावत्कुटिलः स भीमः
कुम्भानभाङ्क्षीद्गदया गजानाम् ।
नामैकदेशोऽपि च कुम्भयोने-
रेतैर्धृतोऽभूदिति मत्सरीव ॥ ९६ ॥

इति तत्र तां करिघटां पाटयता घटोत्कचजनकेन द्रोणसुतस्य सनाम्नि हस्तिनि पातिते सति प्रचुरतरमदः स्ववशानुवर्ती शुभतरमणिदेदीप्यमानमस्तकोऽयमश्वत्थामा हत इति धर्मतनयगदितं कर्णारुंतुदमभ्यर्णमाकर्ण्य वैवर्ण्यभरितवदनं सुतनाशशोकमोहेन परित्यक्त-

---

तीति विमाथिनीं वारणघोरणीं जगपङ्क्तिं पुरोधाय अग्रे निधाय शङ्खस्य परिपूरणेन आध्मानेन खस्य आकाशस्य गुणं शब्दं भृशं दुर्वहं दुर्भरम् । आकाशस्येवेति भावः । खस्येति शेषो वा । आत्मन इत्यर्थः । कुर्वन्तं कौरवसेनापतिं द्रोणम् । पयोधरपरम्परां मेघपङ्क्तिं पुरोधाय । पुरस्कृतपयोधरपरम्परमित्यर्थः । प्रचेतसं वरुणमिवेत्युपमा । अभिजग्मुः अभिमुखं गच्छन्ति स्म । रूपकोपमयोः संसृष्टिः ॥

**कोपेनेति** । तावत् तदानीं कोपेन कुटिलः भयंकरः स भीमः एतैः गजकुम्भैः कुम्भयोनेः द्रोणस्य नाम्नि कुम्भयोनिरिति संज्ञायां एकदेशोऽपि च कुम्भेत्यंशमात्रमपि वा धृतः नामत्वेन स्वीकृतोऽभूदित्युक्तहेतोः मत्सरः द्वेषः अस्यास्तीति मत्सरीवेत्युत्प्रेक्षा । गदया गजानां कुम्भान् अभाङ्क्षीत् भञ्जयामास । भञ्जः कर्तरि लुङ् ॥ ९६ ॥

**इतीति** । इत्युक्तप्रकारेण तत्र युद्धरङ्गे तां धृष्टद्युम्नवरूथिनीविमाथिनीं करिघटां गजवृन्दं पाटयता भञ्जयता घटोत्कचस्य जनकेन भीमेन द्रोणसुतस्य अश्वत्थाम्नः समानं अभिन्नं नाम अश्वत्थामेति संज्ञा यस्य तस्मिन् । 'ज्योतिर्जनपद—' इत्यादिना समानशब्दस्य सभावः । हस्तिनि गजे निपातिते सति तत्र करिघटामध्ये द्रोणसुतस्य समनाम्नि हस्तिनीति वा योजना । प्रचुरतरः बहुलः मदः बलगर्वः दानजलं च यस्य सः स्ववशं स्वेच्छं यथा तथा स्वस्य वशां करिणीं च अनुवर्तत इत्यनुवर्ती शुभतरैः अत्यन्तशुभप्रदैः मणिभिः किरीटगतैः अन्तर्गतमौक्तिकैश्च देदीप्यमानः मस्तकः शिरः यस्य तथोक्तः अयं अश्वत्थामा द्रोणसुतः तन्नामकगजश्च हतः इत्युक्तप्रकारं कर्णयोररुंतुदं मर्मघाति धर्मतनयस्य धर्मराजस्य गदितं वचनं अभ्यर्णं समीपं यथा तथा । समीप इति यावत् । आकर्ण्य वैवर्ण्येन

---

१. 'प्रचेता इव' इति पाठः. २. 'कुरुसेनाधिपतिं' इति पाठः. ३. 'द्विपानाम्' इति पाठः. ४. 'इति' नास्ति क्वचित्. ५. 'तां' इति नास्ति क्वचित्. ६. 'पातयता' इति पाठः. ७. 'निपातिते' इति पाठः. ८. 'निगदितं' इति पाठः. ९. 'मोह' इति पाठः.

क्वचापशयं स्थण्डिलेशयं भारद्वाजमालोक्य[1] हृष्टतरधीर्धृष्टद्युम्नो[2][3] निज-
पितृबन्धन[4]स्मृतिजनुषा रुषा सत्वरमेत्य हन्तुमुदयुङ्क्त[5] ॥

एकेन खड्गं द्रुपदस्य सूनुः करेण चान्येन कचं[6] गृहीत्वा ।
विलूय शीर्षं गुरुमप्यमुं द्रागन्तेवसन्तं कलयांचकार ॥ ९७ ॥

तं[7] तादृशं तदनु तातवधं निशम्य
कोपातिरेककलुषः कृपभागिनेयः ।
आग्नेयमस्त्रममुचत्परसैनिकाना-
मक्षौहिणीशलभतां लभते स्म तस्मिन्[8] ॥ ९८ ॥

ततः सुराधीश्वरसूनुमुक्तब्रह्मास्त्रभासा भृशधिक्कृतेन ।
अस्त्रेण सार्धं गुरुनन्दनस्य मन्दायमानद्युतिरास भानुः ॥ ९९ ॥

---

विरुद्धकान्त्या भरितं पूर्णं वदनं मुखं यस्य तथोक्तं सुतनाशशोकेन पुत्रविपत्तिदुः-खेन यो मोहः चित्तविकारः तेन परित्यक्तः चापः येन तादृशः शयः हस्तः यस्य तथोक्तं स्थण्डिले दर्भास्तरणे शेत इति शयं भारद्वाजं द्रोणं आलोक्य हृष्टतरा अतिसंतुष्टा धीः मनः यस्य तथोक्तः धृष्टद्युम्नः निजस्य पितुः द्रुपदस्य बन्धनस्य अर्जुनकारितस्य स्मृतेः स्मरणात् जनुः जन्म यस्यास्तथोक्तया रुषा कोपेन उपल-क्षितः सत्वरं एत्य आगत्य हन्तुमुदयुङ्क्त उद्युक्तोऽभूत् । युजेः कर्तरि लङ् ॥

**एकेनेति** । द्रुपदस्य सूनुः धृष्टद्युम्नः एकेन करेण दक्षिणेन खड्गं गृहीत्वा अन्येन सव्येन करेण कचं द्रोणशिखां च गृहीत्वा शीर्षं शिरः विलूय छित्त्वा गुरुमप्यमुं द्रोणं द्राक् शीघ्रं अन्तेवसन्तं शिष्यं समीपे वर्तमानं च कलयांचकार अकरोत् । विरोधाभासः ॥ ९७ ॥

**तदिति** । तदनु तत्तादृशं लोकैकजुगुप्सितं तातस्य पितुः वधं निशम्य कोपातिरेकेण कोपातिशयेन कलुषः क्षुब्धः कृपस्य भगिनी कृपी तदपत्यं भागि-नेयः अश्वत्थामा आग्नेयं अस्त्रं अमुचत् प्रयुक्तवान् । तस्मिन्नाग्नेयास्त्रे परसैनि-कानां अक्षौहिणीशलभतां अग्निपतयालुकीटविशेषतौल्यं लभते स्म । भस्मीभू-तेत्यर्थः । उपमालंकारः ॥ ९८ ॥

**तत इति** । ततः अक्षौहिणीभस्मीभावानन्तरं सुराधीश्वरसूनुना अर्जुनेन मुक्तस्य प्रयुक्तस्य ब्रह्मास्त्रस्य भासा तेजसा भृशं धिक्कृतेन निराकृतेन गुरुनन्दनस्य अश्वत्थाम्नः अस्त्रेण सार्धं आग्नेयास्त्रेण सह भानुः सूर्यः मन्दायमाना क्षीणा भवन्ती द्युतिः तेजः यस्य तथोक्तः आस अवर्तत । अस्तंगत इत्यर्थः । अत्र सूर्यस्यास्तगमने आग्नेयास्त्रसाहित्यवर्णनात्सहोक्तिरलंकारः ॥ ९९ ॥

---

१. 'अवलोक्य' इति पाठः. २. 'हृष्टधीः' इति पाठः. ३. 'द्युम्नोऽपि' इति पाठः. ४. 'वधस्मृति' इति पाठः. ५. 'अभिहन्तुं' इति पाठः. ६. 'कचे' इति पाठः. ७. 'तम्' इति पाठः. ८. 'यस्मिन्' इति पाठः.

धृतराष्ट्रसुतोऽपि गेहमागा-
दिनदीपाङ्कुरदीनदीनदीप्तिः ।
शकलीकृतबाहुकर्णनासैः[1]
सह योधैः स घटोत्कचाश्मवर्षात् ॥ १०० ॥

इत्यनन्तभट्टकविकृतौ चम्पूभारते दशमः स्तबकः ।

---

धृतराष्ट्रेति । सः धृतराष्ट्रसुतः दुर्योधनोऽपि दिने अह्नि दीपाङ्कुरस्येव दीना दीना द्रोणसैन्धवादिवधशोकेन अतिम्लाना दीप्तिः कान्तिः यस्य तथोक्तः सन् घटोत्कचस्य संबन्धिनः अश्मनां पाषाणानां वर्षात् शकलीकृतं खण्डितं बाहू च कर्णौ च नासा च बाहुकर्णनासं येषां तैः योधैः सह गेहं शिबिरं प्रत्यागात् आगतवान् । औपच्छन्दसिकम् ॥ १०० ॥

इति श्रीसदाशिवपदारविन्दवन्दनकन्दलितानन्दसान्द्रस्य कुरविकुलचन्द्रस्य रामकवीन्द्रस्य कृतौ चम्पूभारतव्याख्याने लास्याख्याने दशम-स्तबकविवरणं समाप्तम् ।

---

१. 'नासाः' इति पाठः.

## एकादशः स्तबकः ।

अन्येद्युरब्धिमिलितैरसृगापगानां
पूरैरिवोदयति पूषणि शोणिताङ्गे ।
सेनाधिपत्यसरणौ धृतराष्ट्रसूनुः
कर्णं सुवर्णघटवारिभिरभ्यषिञ्चत् ॥ १ ॥

आभा[1]मतानीदभिषेककाले तस्योपरिष्टात्तपनीयकुम्भः ।
आघ्रातुमात्मप्रभवोत्तमाङ्गं [2]समीपयातस्य सरोजबन्धोः ॥ २ ॥

दिङ्मूलशैलकुहरेशयकेसरीन्द्र-
सौखप्रसुप्तिकमहापटहारवेण ।
कर्णो बलेन करनर्तितकालपृष्ठो
जन्यस्थलीमथ रथेन जवाज्जगाहे ॥ ३ ॥

---

**अन्येद्युरिति** । अन्येद्युः अब्धौ समुद्रे मिलितैः प्रविष्टैः असृगापगानां रक्तनदीनाम् । कुरुपाण्डवसैन्यजन्यानामिति शेषः । पूरैः प्रवाहैरिवेत्युत्प्रेक्षा । शोणितं अरुणीकृतं अङ्गं विम्बं यस्य तस्मिन् पूषणि सूर्ये उदयति सति । धृतराष्ट्रसूनुः दुर्योधनः कर्णं सेनायां आत्मीयायाः आधिपत्यस्य सरणौ । नायकत्वपद इत्यर्थः । सुवर्णघटेषु कनककुम्भेषु यानि वारीणि जलानि तैः अभ्यषिञ्चत् । सेनापतिमकरोदित्यर्थः । वसन्ततिलकावृत्तम् ॥ १ ॥

**आभामिति** । तस्य कर्णस्य अभिषेककाले उपरिष्टात् शीर्षोपरि तपनीयकुम्भः काञ्चनकलशः आवर्जित इति शेषः । आत्मप्रभवस्य निजपुत्रस्य उत्तमाङ्गं शिरः आघ्रातुं समीपयातस्य संनिधिमागतस्य सरोजानां पद्मानां बन्धोः सूर्यस्य आभां शोभां अतानीत् विस्तारयामास । कर्णस्य सूर्यपुत्रत्वात्तदुत्सवे पुत्रवात्सल्यात्कर्णशीर्षाघ्राणाय समागतसूर्यत्वेन सुवर्णकुम्भ उत्प्रेक्षितः । ततश्चाभाशब्दः प्रकाशात्मकत्वेन वुद्धो लाक्षणिक इति ध्येयम् । न चात्र स च रराजेत्यर्थं इत्युपमा । तस्य शोभामिव शोभां दधाविति तत्सदृशधर्माक्षेपि निदर्शना वा तयोरभिषेककाल इत्यादिविशेषणवैयर्थ्यपराहतत्वादधिकमन्यत्रानुसंधेयम् । अतानीदिति तनोतेर्लुङि च्लेः सिचिवृद्धिः । उपजातिर्वृत्तम् ॥ २ ॥

**दिगिति** । अथ अभिषेकानन्तरं दिशां मूलं आदिः यः शैलः चक्रवालः तस्य कुहरेशयानां गुहासु निद्राणानां केसरीन्द्राणां सिंहश्रेष्ठानां सुखं प्रसुप्तं पृच्छतीति तथोक्तः । तन्निद्राभञ्जक इति यावत् । महान् पटहानां वाद्यविशेषाणां आरवः यस्य तथोक्तेन बलेन चतुरङ्गेणोपलक्षितः कर्णः रथेन जवात् जन्य-

---

१. 'आभात्तदानीम्' इति पाठः. २. 'समीपयातो व सरोजबन्धुः' इति पाठः.

तावत्परेषां ध्वजिनीश्वरोऽपि पदं न्यधत्त प्रधनप्रदेशे ।
परिस्फुरत्पट्टसशक्तियष्टिशरासतूणीरशरैर्बलौघैः ॥ ४ ॥
चमूद्वयी सा तदनु प्रगल्भा विसृत्वरैर्व्योमनि पांसुपुञ्जैः ।
प्रागेव शुद्धामपि सिद्धसिन्धुं विचित्रमेतद्व्यतनोदपापाम् ॥ ५ ॥
पादातं पादातं रथ्या रथ्यां च हास्तिकं गजता ।
आश्वीयं चाश्वीयं द्रागभिदुद्राव कम्पितमहीकम् ॥ ६ ॥
विरोधिसेनामभिवीक्ष्य कोपाद्विस्फारिताद्भानुसुतेन चापात् ।
विजृम्भमाणं तरसा गुणं स्वं वियत्समस्तं न शशाक वोढुम् ॥ ७ ॥

---

स्थलीं युद्धदेशं करे नर्तितं शरसंधानमोक्षणाभ्यां कम्पितं कालपृष्ठं नाम धनुर्यस्य तथोक्तः सन् जगाहे प्रविष्टवान् । गाहतेः कर्तरि लिट् । वसन्ततिलकावृत्तम् ॥ ३ ॥

**तावदिति** । तावत् तदानीमेव परेषां पाण्डवानां संबन्धिन्याः ध्वजिन्याः सेनायाः ईश्वरः धृष्टद्युम्नोऽपि परितः स्फुरन्तः प्रकाशमानाः पट्टसाः शक्तयः यष्टयः शरासाः चापाः तूणीराः निषङ्गाः शराः येषां तैः बलौघैरुपलक्षितः प्रधनप्रदेशे युद्धभुवि पदं पादं न्यधत्त निहितवान् । दधातेः कर्तरि लङ् । उपजातिः ॥ ४ ॥

**चम्विति** । तदनु प्रगल्भा युद्धकुशला सा चम्वोः कौरवपाण्डवसेनयोः द्वयी युग्मं व्योमनि विसृत्वरैः व्याप्नुवद्भिः पांसूनां धूलीनां पदघट्टनोत्थानां पुञ्जैः राशिभिः ( करणैः ) प्राक् पूर्वमेव शुद्धां निष्पापामपि निर्मलामपीति च । सिद्धसिन्धुं आकाशगङ्गां अपापां निष्पापां अपगतं अपां जलानां समूहः आपं यस्यास्तथोक्तामिति च । व्यतनोत् चकारेति यत् तदेतद्विचित्रम् । तनोतेर्विपूर्वात्कर्तरि लङ् । अत्याश्चर्यम् । अत्र श्लेषप्रतिभोत्थापितयोर्विरोधाभासविरुद्धकार्योत्पत्तिरूपविषमप्रभेदयोरेकवाचकानुप्रवेशसंकरः ॥ ५ ॥

**पादातमिति** । पदातीनां समूहः पादातं पादातं पदातिसमूहम् । रथानां समूहः रथ्या । रथिकसमूह इति यावत् । एवमग्रेऽपि । रथ्यां च । गजानां समूहो गजता हास्तिकं गजसमूहं च । आश्वीयं अश्वसमूहः आश्वीयं अश्वसमूहं च । द्राक् द्रुतं कम्पिता मही यस्मिंस्तथा अभिदुद्राव अभिमुखं धावति स्म । द्वन्द्वयुद्धायेति भावः । अभिपूर्वाद्द्रवतेः कर्तरि लिट् । पादातमित्यादावणादयः समूहार्थे तद्धिताः । गीतिरार्या ॥ ६ ॥

**विरोधीति** । विरोधिनां शत्रूणां सेनां अभिवीक्ष्य कोपात् भानुसुतेन कर्णेन विस्फारितात् टङ्कारितात् चापात्कालपृष्ठात् विजृम्भमाणं वर्धमानं स्वं स्वीयं गुणं शब्दं वोढुं धर्तुं समस्तमपि वियत् आकाशं न शशाक न क्षमते स्म । शक्नोतेः कर्तरि लिट् । संबन्धेऽसंबन्धरूपातिशयोक्तिः । वृत्तमुपजातिः ॥ ७ ॥

---

१. 'व्यधत्त' इति पाठः. २. 'पट्टिशखेटशक्तिशरास' इति पाठः. ३. 'प्रसृत्वरैः' इति पाठः. ४. 'रथ्या' इति पाठः. ५. 'आश्वं' इति पाठः. ६. 'प्रकम्पित' इति पाठः.

कुरुचमूपतिवाणविदारितादुदपतन्मणयः करिमस्तकात् ।
सुतवितीर्णनिजास्पददुर्दशां द्युमणये विनिवेदयितुं किल ॥ ८ ॥
अनेकधा दत्तविलास्यवाणैररातिखेटावलिराबभासे ।
भीव्रीडखेदावकराद्गृहीतुं पृथक्तयासून्यमचालिनीव ॥ ९ ॥
तदनु वाणगणैर्द्युमणेः सुतो धृतविपत्ति स पत्तिकदम्बकम् ।
अतिविषादि निषादिकुलं व्यधाद्यमपुरीपथिकान्रथिकानपि ॥ १० ॥
अग्रेसरः कर्णहतेषु कश्चिद्भटः प्रविष्टो रविरन्ध्रमार्गम् ।
निलिम्पचाटुश्रुतिपुष्टदेहो निर्गन्तुमीष्टे स्म न किंचिदुच्चैः ॥ ११ ॥

कुर्विति । कुरुचमूपतिना कर्णेन वाणैः विदारितात् पाटितात् करिणां पाण्डवगजानां मस्तकात् शिरस इति जातावेकवचनम् । मणयः मुक्ताफलानि द्युमणये सूर्याय सुतेन स्वपुत्रेण कर्णेन वितीर्णां दत्तां निजानां स्वीयानां आस्पदानां निवासानां गजशिरसां दुर्दशां पाटनात्मिकाम् । 'विदीर्ण' इति पाठे पाटितानामित्यास्पदविशेषणम् । विनिवेदयितुं विज्ञापयितुम् । किलेति संभावनायाम् । उदपतन् उत्थितवन्तः । उत्पूर्वात्पततेः कर्तरि लङ् । द्रुतविलम्बितम् ॥ ८ ॥

अनेकधेति । अस्य कर्णस्य वाणैः अनेकधा बहुप्रकारं दत्तानि कृतानि विलानि यस्यां तथोक्ता अरातीनां शत्रूणां संबन्धिनी खेटावलिः फलकपङ्क्तिः । भीः भयं व्रीडा लज्जा खेदः दुःखं एतत्त्रयमेव अवकरः तुषधूल्यादिपुञ्जः तस्मात् पृथक्तया पार्थक्येन असून् प्राणान् गृहीतुं यमस्य कालस्य चालिनी सानेकरन्ध्रवर्तुलवैणयन्त्रविशेष इवेत्युत्प्रेक्षा । आवभासे रराज । भासतेः कर्तरि लिट् । अत्र मृतकालिकभयलज्जाखेदानां प्राणसंगतानामवकरस्वरूपणेन शुद्धधान्यत्वरूपणप्रतीतेरेकदेशवर्तिरूपकस्योक्तोत्प्रेक्षोज्जीवकत्वात्तयोरङ्गाङ्गिभावेन संकरः । 'संकरोऽवकरस्तया' 'चालिनी तितउः पुमान्' इत्युभयत्राप्यमरः । वृत्तमुपजातिः ॥ ९ ॥

तदन्विति । तदनु द्युमणेः सुतः सः कर्णः वाणानां गणैः पत्तीनां पादचारिणां कदम्बकं समूहं धृता विपत्तिः मरणापत् येन तथोक्तं व्यधात् अकरोत् । विपूर्वाद्दधातेः कर्तरि लुङ् । निषादिनां गजारोहाणां कुलं समूहं अत्यन्तं विषादं मरणदुःखमस्यास्तीति अतिविषादि व्यधात् । रथिकानपि यमपुर्याः पन्थानं गच्छन्तीति पथिकान् व्यधात् । त्रिविधानप्यवधीदित्यर्थः । द्रुतविलम्बितवृत्तम् ॥ १० ॥

अग्रेसर इति । कर्णहतेषु । हतानां मध्य इत्यर्थः । कश्चिदग्रेसरः निर्भीकत्वेन पुरोगामीति हेतुगर्भविशेषणम् । भटः रवेः सूर्यस्य विम्बस्य रन्ध्रमार्गं प्रविष्टः सन्नेव निलिम्पानां देवानां चाटुश्रुत्या स्तुतिवाक्यश्रवणेन पुष्टः प्रवृद्धः देहः यस्य तथोक्तः सन् उच्चैः ऊर्ध्वं किंचिदपि निर्गन्तुं नेष्टे स न शशाक । ईष्टेः कर्तरि लिट् । अत्र

१. 'भिदा' इति पाठः. २. 'चालनीव' इति पाठः. ३. 'स्तुति' इति पाठः. ४. 'न च' इति पाठः.

पुष्पप्रदानेन बुधद्रुवर्गे श्रान्तेऽमराणां प्रथमं वृतानाम् ।
हठेन कण्ठादपहृत्य मालामवृण्वताभ्यग्रसुरानमर्त्यः ॥ १२ ॥

तत्तादृशं तरणिभूभुजचण्डिमानं
संवीक्ष्य सर्वरिपुदृक्षु च भीतिभाक्षु ।
आसीत्प्रमोदपरिमेदुरमेकमेव
वामेतरं रणतले वनमालिनेत्रम् ॥ १३ ॥

रिक्ते पुष्पैः सिद्धगन्धर्ववर्गे
मुक्त्वा मुक्त्वा मूर्ध्नि वीरस्य तस्य ।

---

सूर्यबिम्बनिर्गमनशक्तिसंबन्धेऽपि तदसंबन्धोक्तिरूपातिशयोक्तेः अग्रेसरत्वानिलिम्पचाटुश्रुतिपुष्टदेहत्वरूपानेकपदार्थहेतुककाव्यलिङ्गोज्जीवितत्वाद्द्वयोरङ्गाङ्गिभावेन संकरः । उपजातिभेदः ॥ ११ ॥

पुष्पेति । पुष्पाणां नूतनसुरवरणस्रजां प्रदानेन हेतुना बुधद्रूणां कल्पवृक्षाणां वर्गे पञ्चके श्रान्ते उपरते सति । पुष्पशून्ये सतीति यावत् । अमर्त्यः अप्सरसः प्रथमं वृतानां अमराणां नूतनसुराणां कण्ठात् मालां पूर्वं वरणे निक्षिप्तां हठेन बलात्कारेण अपहृत्य आदाय अभ्यग्रसुरान् नूतनसुरान् अवृण्वत वृतवत्यः । वृणोतेः कर्तरि लङ् । 'अतिपरिचयदोषः कस्य नो हन्ति मानं नवनवगुणरागी प्रायशो लोक एव । प्रथमदिवसचन्द्रः सर्वलोकैकवन्द्यः स तु सकलकलाभिः पूर्णबिम्बोऽपि नार्हः ॥' इति न्यायादिति भावः । अत्र सुरतरूणां पुष्पशून्यत्वासंबन्धेऽपि संबन्धोक्तिरूपायाः सुराङ्गनानां प्रथमवृतामरकण्ठमालापहरणासंबन्धेऽपि संबन्धोक्तिरूपायाश्चातिशयोक्तेरङ्गाङ्गिभावेन संकरः । तेन कर्णनिहता भटा असंख्येया इति वस्तुप्रतीतेरलंकारेण वस्तुध्वनिः । वृत्तमुपजातिः ॥ १२ ॥

तत्तादृशमिति । स स इव तत्तादृशः तं तरणिभुवः सूर्यपुत्रस्य भुजयोः चण्डिमानं प्रतापं सम्यग्वीक्ष्य सर्वेषां रिपूणां दृक्षु नेत्रेषु रणतले युद्धदेशे भीतिं भजन्तीति तद्भाक्षु सत्सु । चकारोऽप्यर्थः । एकं वामेतरं दक्षिणं वनमालिनः श्रीकृष्णस्वरूपिणो विष्णोः नेत्रं लोचनं सूर्यश्च प्रमोदेन आनन्देन परितः मेदुरं पूर्णमेव आसीत् । अत्र कृष्णनेत्रस्य रिपुदृगन्तःपातिनोऽपि प्रमोदमेदुरत्वविरोधस्य सूर्यात्मकत्वेनाभासीकरणाद्विरोधाभासः । पुत्रोत्कर्षस्य पित्रानन्दकरत्वादित्यभिप्रायः । वसन्ततिलकावृत्तम् ॥ १३ ॥

रिक्त इति । सिद्धानां गन्धर्वाणां च देवयोनिविशेषाणां वर्गे समूहे वीरस्य तस्य कर्णस्य मूर्ध्नि शिरसि मुक्त्वा मुक्त्वा वृष्ट्वा वृष्ट्वा । वीप्सायां द्विर्भावः । अर्था-

---

१. 'सुरद्रुवर्गे' इति पाठः. २. 'तं तादृशं' इति पाठः. ३. 'सव्येतरं' इति पाठः. ४. 'मुख्ये' इति पाठः.

द्वावेवाभ्रे द्योसदां गोष्ठिमध्ये
पूषाचन्द्रौ पुष्पवन्तावभूताम् ॥ १४ ॥

वियत्प्रदेशाद्विशिखैः कठोरैर्दुद्राव दूरं ध्रुवमब्जबन्धुः।
अमुष्य नो चेदचिराद्भजेरन्पादाः कथं पाटलिमानमेव ॥ १५ ॥

तरणेः किरणैस्तदारुणानां पटलं व्योम्नि पयोमुचां बभासे।
चिरकालबुभुक्षया पिशाचैरधिकं मांसमिवाहवादुपात्तम् ॥ १६ ॥

अवरोपितज्यमथ कर्णकार्मुकं
विरतौ दिनस्य विजहौ विनम्रताम्।

---

त्पुष्पाणीति भावः। पुष्पैः रिक्ते शून्ये सति अभ्रे आकाशे स्थितानां द्योसदां देवानां गोष्ठ्याः सभायाः मध्ये पूषाचन्द्रौ सूर्याचन्द्रमसौ द्वावेव। 'देवताद्वन्द्वे च' इत्याकारः। पुष्पवन्तौ सपुष्पौ पुष्पवत्संज्ञाविति च अभूताम्। अत्र पूर्ववदलंकारो ध्वनिश्च। अत्र 'रिक्ते पुष्पैः सिद्धसाध्यादिवर्गे' इति पठनीयः। अन्यथा विद्याधरादि-देवान्तानां पुष्पशून्यत्वानुक्त्या सूर्येन्द्वतिरिक्तानां सर्वेषां पुष्पवत्त्वपरिशेषीकरणा-संगतेरिति। एवं 'सिद्धगन्धर्वमुख्यैः' इति पाठस्तृतीयान्तः पूषाचन्द्राविति प्रथ-मान्तपाठेनासंगत इति च ध्येयम्। शालिनीवृत्तम् ॥ १४ ॥

**वियदिति**। अमुष्य कर्णस्य संबन्धिभिः कठोरैः दारुणैः विशिखैः बाणैः। तत्प्रहारभीत्येति यावत्। अब्जबन्धुः सूर्यः वियतः आकाशस्य प्रदेशात् दूरं दुद्राव पलायितवान्। ध्रुवं असंशयम्। श्रान्तरथ्यं विहाय रथम्। पादैरेवेति भावः। नो चेत्स पदैर्न दुद्राव यदि अस्य अब्जबन्धोः पादाः चरणाः किरणाश्च पाटलि-मानं आरुण्यं अचिरात् तत्क्षणादेव कथं भजेरन् प्राप्नुयुः। न प्राप्नुयुरेवेत्यर्थः। भजतेर्विधौ लिङ्। अत्र श्लेषभित्तिकाभेदाध्यवसितपादारुण्यान्यथानुपपत्त्या रवे-र्धावननिश्चयादर्थापत्तिर्नाम प्रमाणालंकारातिशयोक्त्युज्जीवित इति द्वयोरङ्गाङ्गिभा-वेन संकरः॥ 'पाटलिमातिरेकम्' इति पाठोऽर्कवाचकपदसाकाङ्क्षत्वात्काकाक्षि-न्यायस्यार्थाभेद एव प्रवृत्त्या अमुष्येति पदानुषङ्गायोगाच्चोपेक्ष्यः। अस्तोन्मुखोऽ-भूदर्क इति परमार्थः ॥ १५ ॥

**तरणेरिति**। तदा सूर्यास्तमयसमये तरणेः सूर्यस्य किरणैः अरुणानां रञ्जि-तानां पयोमुचां मेघानां पटलं समूहः व्योम्नि आकाशे पिशाचैः चिरकालं भोक्तु-मिच्छा बुभुक्षा तया हेतुना आहवात् कुरुपाण्डवयुद्धदेशात् उपात्तं संगृहीतं अधिकं मांसमिवेत्युत्प्रेक्षा। बभासे। औपच्छन्दसिकं नाम वैतालीयभेदः ॥ १६ ॥

**अवरोपितज्यमिति**। अथ दिनस्य विरतौ सायंकाले अवरोपिता कोटितः स्रंसिता ज्या मौर्वी यस्य तथोक्तं कर्णस्य कार्मुकं धनुः भयात् हरितां दिशां

---

१. 'आतिरेकम्' इति पाठः. २. 'बुभुक्षितैः' इति पाठः.

अवलोकनाय हरिदन्तरे भया-
द्द्रवतामरातिधरणीभुजामिव ॥ १७ ॥

अप्राप्तनूतनशरक्षतिभिः स्वसैन्यै-
रस्पन्ददृष्टिभिरक्षणमीक्ष्यमाणः ।
दुर्योधनाग्रकरसंवलिताङ्गुलीकः
प्राविक्षदात्मकटकं स तु भानुसूनुः ॥ १८ ॥

परेद्युः[1] परिस्फुरित[2]कमलचक्रव्यूहे प्रकाशमानपत्रिकुलसंचारे प्रकटितधनंजयतेजोवर्धने भाविनि प्रधन इव प्रभातसमये प्रादु-

अन्तरे मध्ये द्रवतां पलायमानानां अरातिधरणीभुजां शत्रुराजानां अवलोकनायेवेत्युत्प्रेक्षा । विनम्रतां नम्रभावं विजहौ तत्याज । ऊर्ध्वं दीर्घीभूतमभूदित्यर्थः । मञ्जुभाषिणीवृत्तम् ॥ १७ ॥

अप्राप्तेति । स भानुसूनुः कर्णः । तुशब्दोऽप्यर्थः । अप्राप्ताः अलब्धाः नूतना नवाः । भीष्मद्रोणयुद्धकालिकभिन्ना इति यावत् । शरक्षतयः शात्रववाणव्रणानि यैस्तैः अतएव स्वसैन्यैः कर्तृभिः अस्पन्दाभिः आश्चर्यान्निश्चलाभिः दृष्टिभिः क्षणे क्षणे अनुक्षणं ईक्ष्यमाणः सन् । किंच दुर्योधनस्य अग्रकरेण संवलिता गृहीता अङ्गुली कनिष्ठिका यस्य तथोक्तः सन् । 'नद्यृतश्च' इति कप्प्रत्ययः । आत्मनः कटकं शिविरं प्राविक्षत् । विशतेः कर्तरि लुङ् । अत्र नूतनवाणव्रणराहित्यस्य विशेषणगत्या अनुक्षणनिष्पन्ददृङ्निरीक्षणहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् । वसन्ततिलकावृत्तम् ॥ १८ ॥

परेद्युरिति । परेद्युः परस्मिन् दिने परितः स्फुरिताः संचरन्तः प्रकाशमाना वा कमलानां चक्राणां चक्रवाकानां च व्यूहाः यस्मिंस्तस्मिन् । परितः स्फुरन्तौ कमलचक्रव्यूहौ पद्मचक्राकारवलविन्यासौ यस्मिंस्तस्मिन्निति च । परितः स्फुरितः पद्माकारवलविन्यासो यस्मिंस्तस्मिन्निति वा । 'चक्रं रथाङ्गे सेनायाम्' इति विश्वः । प्रकाशमानः पत्रिणां पक्षिणां वाणानां च कुलस्य वृन्दस्य संचारः यस्मिंस्तस्मिन् प्रकटितं धनंजयस्य अग्नेः आहवनीयादेः तेजसः वर्धनं प्रज्वलनं यस्मिंस्तस्मिन् । प्रकटितं धनंजयस्य अग्नेः तेजसः प्रकाशस्य वर्धनं च्छेदनं यस्मिंस्तस्मिन्निति वा । 'वर्धनं छेदने' इत्यमरः । दिवाग्नेर्निष्प्रकाशत्वात्पूर्वत्र यज्वभिः प्रातरग्निहोत्रकरणादिति च भावः । अन्यत्र प्रकटितं धनंजयस्य अर्जुनस्य तेजसः प्रतापस्य वर्धनं यस्मिंस्तस्मिन् । अतएव भाविनि भविष्यति प्रधने युद्ध इव स्थिते प्रभातसमये प्रातःकाले प्रादुर्भवति सति । मधुं नाम दानवं मथ्नातीति मधुम-

१. 'अपरेद्यः' इति पाठः. २. 'विपरिस्फुरत्' इति पाठः.

भवति सति मधुमथनसारथेर्मघवत्कुमारस्य वधकृते शल्यस्[1]सत्सारथ्यमेव [2]परं साधनमवधारयता [3]राधेयेन कृतबोधनः सुयोधनः [4]सबहुमानं मानधनभाजं मद्रराजमुपगम्य स्वागमननिदानपरिज्ञानेन विमनायमानमपि तं तैस्तैर्मधुररचनैर्वचनैः कोपगिरेरधित्यकाप्रदेशात्कथंचिदवरोप्य कर्णरथनै[5]पथ्यं सारथ्यमधिरोपयामास ॥

अथ मद्रनायकनिबद्धसैन्धवं
रथमारुरोह रविभूः पराक्रमी ।
प्रमदश्च कौरवचमूचरान्क्षणा-
दतिसाध्वसं च परयोधमण्डलम् ॥ १९ ॥

---

थनः कृष्णः सारथिर्यस्य तस्य मघवतः इन्द्रस्य कुमारः अर्जुनः तस्य वधस्य कृते वधार्थं शल्ये मद्रराजे सत्सारथ्यं सूतकृत्यमेव परं साधनं मुख्यकारणं अवधारयता निश्चिन्वता राधेयेन कर्णेन कृतं बोधनं शल्येन सारथ्यकरणाय प्रेरणा यस्य तथोक्तः सुयोधनः सबहुमानं यथा तथा मानमेव धनं भजतीति भाजं अतएव स्वस्य स्वीयस्य आगमनस्य यन्निदानं मुख्यकारणं कर्णसारथ्यप्रार्थनात्मकं तस्य परिज्ञानेन विमनायमानं खिन्नमपि मद्राणां जनपदानां राजा मद्रराजः तं शल्यं उपगम्य प्राप्य मधुरा श्रुतिप्रीतिकरा रचना शब्दसंदर्भः येषु तैः तैस्तैः नानाविधैः वचनैः वाक्यैः कोपः अनुचितकृत्यप्रेरणाजन्यः स एव गिरिः तस्य अधित्यकाप्रदेशात् । 'अद्रेर्भूमिरूर्ध्वमधित्यका' इत्यमरः । कथंचित् अतिकष्टेन अवरोप्य अवरोह्य । विगतकोपं कृत्वेति यावत् । कर्णरथस्य नैपथ्यं अलंकारं सारथ्यं अधिरोपयामास अङ्गीकारितवान् । .मद्रराजमित्यनुषज्यते । मघवत्कुमारस्येत्यत्र कर्तृत्वस्य संबन्धत्वविवक्षया शेषषष्ठीविधानादर्जुनकर्तृकात्मवधार्थमित्यर्थलाभोऽपीति ध्येयम् ॥

अथेति । अथ शल्येन सारथ्यकरणाङ्गीकरणानन्तरं प्रशस्तः पराक्रमोऽस्यास्तीति पराक्रमी । प्रशंसायामिनिः । रवेर्भवतीति रविभूः कर्णः मद्रनायकेन शल्येन निबद्धाः संयोजिताः सैन्धवाः अश्वाः यस्मिंस्तं रथं आरुरोह आरूढवान् । प्रमदः आनन्दः । चस्त्वर्थः । कौरवचमूचरान् दुर्योधनसेनाः परमत्यन्तं आरुरोह । अतिसाध्वसं अत्यन्तभयं तु परयोधानां पाण्डवभटानां मण्डलं समूहं परं आरुरोह । अत्र कर्णकर्तृकशल्यसारथिरथारोहणवाक्यार्थस्य कौरवपाण्डवचमूद्वयीमोदखेदहेतुत्वाद्वाक्यार्थहेतुककाव्यलिङ्गद्वयसंसृष्टेरारोहणक्रियायास्तद्वाचकस्य चावृत्त्या उभयावृत्तिदीपकस्य चैकवाचकानुप्रवेशसंकरः । मञ्जुभाषिणीवृत्तम् ॥ १९ ॥

---

१. 'सत्' इति नास्ति क्वचित्. २. 'परं' इति नास्ति क्वचित्. ३. 'राधातनयेन' इति पाठः. ४. 'सबहुमानं' इति नास्ति क्वचित्. ५. 'नेपथ्यं' इति पाठः.

ततः क्षणादेकरथेन तेन संग्रामसीमानमुपेत्य वीरः ।
शङ्खं तदन्त्याक्षरवाच्यमेतद्द्वयं निनादैरपुपूरदेषः ॥ २० ॥

तदनु [1]चण्डतरदोर्दण्डश्चण्डकरसूनुर्निजयन्तारं मद्रनेतारं प्रति वचनमित्थमुत्थापयामास ॥

इदानीमयि शल्य, तव सारथ्य[3]कौशल्यं नि[4]शाम्य विजयसारथेर्वदनं लज्जापयो[5]धि सहमज्जनकृते नाभिकमलवास्तव्यस्य नयनायुधसारथेश्चत्वार्यपि मुखानि समाह्वयितुमिव भृशमवनतमास्ते ॥

[6]अपि च ।

मरुत्कदम्बैरुपलाल्यमानं मद्रेन्द्र दी[7]प्राखिलहेतिजालम् ।

---

तत इति । ततः एष वीरः कर्णः तेन शल्यसारथिकेन रथेन संग्रामसीमानं युद्धदेशं क्षणादेव उपेत्य प्राप्य शङ्खं च तस्य शङ्खस्य संबन्धि यदन्त्यमक्षरं खकारः तस्य वाच्यं आकाशं च एतत् उक्तविधं द्वयं निनादैः झांकारैः अपुपूरत् पूरयामास । पूरयतेर्लुङि चङि द्वित्वाभ्यासलोपह्रस्वाः । शङ्खसंबन्धीत्यत्र संबन्धः खवाचकत्वरूपो ग्राह्यः । साक्षात्संबन्धग्रहे त्वसमर्थत्वाख्यः पददोष इति ध्येयम् । उपजातिर्वृत्तम् ॥ २० ॥

तदन्विति । तदनु तदनन्तरम् । चण्डतरौ अत्यन्तशत्रुभयंकरौ दोषौ भुजौ दण्डाविव यस्य तथोक्तः चण्डकरस्य सूनुः कर्णः । निजः आत्मीयश्चासौ यन्ता सारथिश्चेति वैवक्षितविशेषणविशेष्यभावात्समासः । तं मद्राणां नेतारं नायकं शल्यं प्रति इत्थं वक्ष्यमाणप्रकारं वचनं उत्थापयामास उदीरितवान् । तिष्ठतेर्ण्यन्तादुत्पूर्वाल्लिट्यामादेशानुप्रयोगौ । 'अर्तिह्री–' इत्यादिना णौ पुगागमश्च ॥

इदानीमिति । अयि हे शल्य, इदानीं तव सारथ्ये सारथिकृत्ये कौशल्यं चातुर्यं निशाम्य दृष्ट्वा । विजयस्य अर्जुनस्य सारथेः श्रीकृष्णस्य वदनं मुखं कर्तृ । लज्जैव पयोधिः तस्मिन् सहमज्जनकृते सहमज्जनार्थं नाभिरेव कमलं तस्मिन् वास्तव्यस्य निवासिनः नयनं अग्निमयं आयुधं यस्य तस्य शंभोः सारथेः ब्रह्मणः चत्वारि मुखान्यपि समाह्वयितुमिवेत्युत्प्रेक्षा । भृशं अवनतं विनम्रं सत् । आस्ते वर्तते ॥

अपीति । अपि च । किंचेत्यर्थः । अस्योत्तरेणान्वयः ।

मरुदिति । हे मद्रेन्द्र शल्य, मरुतां वायूनां देवानां च कदम्बैः वृन्दैः

---

१. 'तदनन्तरम्' इति पाठः. २. 'प्रचण्ड' इति पाठः. ३. 'कौशलम्' इति पाठः. ४. 'निशम्य' इति पाठः. ५. 'पयोधौ' इति पाठः. ६. 'अपि च' इति नास्ति क्वचित्. ७. 'दीप्ताखिल' इति पाठः.

शराभिवर्षेण धनंजयं तमिङ्गालयेदेष भुजः क्षणेन ॥ २१ ॥

ततस्तच्छ्रवणपुटक्रकचं कर्णवचनमाकर्ण्य पार्थेन पुरा प्रार्थितमर्थं हृदिकृत्य स मद्रभूपतिरपवार्यावार्यसूर्यतनयधैर्यं गगनकुसुमसोदर्यं विधातुमेवमुत्तरमुत्तरङ्गयामास ॥

पुरा विराटस्य पुरोपकण्ठे रणाङ्गणे सारथिनार्जुनस्य ।
उत्पाट्यमानेऽपि रयेण नेत्रे निद्रा कथं ते हृदयंगमासीत् ॥२२॥

आयासलेशरहितं वनसीम्नि पूर्वं
संदानिते सुहृदि ते सुरवैणिकेन ।

---

उपलाल्यमानं संवर्ध्यमानं श्लाघ्यमानं च । दीप्रं प्रकाशमानं अखिलानां समस्तानां हेतीनां ज्वालानां आयुधानां च जालं यस्य तथोक्तं तं प्रसिद्धं धनजयं अग्निं अर्जुनं च । एषः मदीयः भुजः शराणां जलानां बाणानां च अभितो वर्षेण । क्षणेन अविलम्बेन । इङ्गालयेत् निर्वापयेत् । इङ्गालं सिक्ताङ्गारम् । अत्र मरुत एव मरुत इति सर्वत्र रूपणात् श्लिष्टसावयवरूपकम् । उपजातिर्वृत्तम् ॥ २१ ॥

**तत इति** । ततः कर्णकथनानन्तरं स मद्रभूपतिः शल्यः । श्रवणे पुटे इव तयोः क्रकचं करपत्रं तत् कर्णोक्तं वचनं आकर्ण्य पार्थेन युधिष्ठिरेण पुरा प्रार्थितं याचितं अर्थं कर्णतेजोवधात्मकं हृदिकृत्य मनसि स्मृत्वा । 'अङ्गीकृतं सुकृतिनः परिपालयन्ति' इति न्यायादिति भावः । अपवार्य तद्वचनमाक्षिप्य । अवार्येति· अवार्यं दुर्निवारमिति धैर्यविशेषणम् । सूर्यतनयस्य धैर्यं गगनकुसुमस्य सोदर्यं सदृशम् । अत्यन्तमिथ्याभूतमिति यावत् । विधातुं कर्तुं एवं वक्ष्यमाणं उत्तरं प्रतिवाक्यं उत्तरङ्गयामास । उवाचेत्यर्थः ॥

उक्तिप्रकारमेवाह चतुर्भिः— **पुरेति** । हे कर्ण, पुरा उत्तरगोग्रहणकाले विराटस्य राज्ञः पुरोपकण्ठे नगरसमीपे रणाङ्गणे युद्धदेशे अर्जुनस्य सारथिना उत्तरेण ते तव नेत्रे वस्त्रे च । 'वस्त्रलोचनयोर्नेत्रम्' इति विश्वः । रयेण वेगेन उत्पाट्यमाने पक्ष्मावरणशून्यतया क्रियमाणे सत्यपि अपह्रियमाणे सत्यपीति च । निद्रा गान्धर्वास्त्रकृता हृदयंगमा रुच्या कथमासीत् । अत्रोत्तरेणैव सारथिना तथाक्रियमाणेऽपि निद्रासीदिति वस्तुना तादृशस्य तव सारथिं मामवलोक्य अद्यतनविजयसारथेर्भगवतो भवेदेव लज्जया मुखावनमनमित्यपहासात्मकस्य प्राथमिकप्रश्नोत्तरस्य वस्तुनः प्रतीतेर्वस्तुना वस्तुध्वनिः । उपजातिर्वृत्तम् ॥ २२ ॥

**आयासेति** । पूर्वं घोषयात्राकाले वनसीम्नि द्वैतवनप्रदेशे ते तव सुहृदि दुर्योधने सुरवैणिकेन चित्रसेनेन आयासस्य लेशेनापि रहितं यथा तथा संदा-

---

१. 'ताम्' इति पाठः. २. 'याचम्' इति पाठः. ३. 'पवार्या' इति नास्ति क्वचित्.
४. 'पुत्र' इति पाठः. ५. 'वांशिकेन' इति पाठः.

कुत्रापि गूढवसतिस्त्वमहो निकुञ्जे[1]
किं नाबिभेः सविधकीचकरन्ध्रगानात् ॥ २३ ॥

पाञ्चालिकायाः परिणीतिकाले संघीभवद्भिः सह धार्तराष्ट्रैः ।
भवानभूत्पार्थशरप्रयोगात्कर्णोऽपि भूत्वा कथमात्तगन्धः ॥२४॥

इन्द्रात्मजातेन स तेन गन्तुमीष्टे तुलामीश्वर एक एव ।
तृणाय कृत्वा[2] निजजीवनं[3] यो युद्धाय येन स्पृहयन्नुदस्थात् ॥२५॥

इति तस्य मद्राध्यक्षस्य तादृक्षमृभुक्षणः कुमारपक्षपातं[4] समीक्ष्य

---

निते दाममिर्बद्धे सति । अहो इति हासपूर्वके खेदे । हे कर्ण, त्वं कुत्रापि दुर्ज्ञेये निकुञ्जे गुल्मे गूढा दुर्लक्ष्या वसतिः स्थितिः यस्य तथोक्तः सन् । सविधे समीपे ये कीचकाः वेणुविशेषाः तेषां रन्ध्रैः वायुपूर्णैः गानात् शब्दादपि नाबिभेः । शब्दानुसारेण मामत्रस्थं विज्ञाय बध्नीयुरिति भीतो नाभूः किमिति काकुः । अबिभेरेवेत्यर्थः । बिभेतेः कर्तरि लङ् । अत्रापि वस्तुना तदार्जुनेन भवत्सुहृन्मोचनं जानताप्येवमुच्यत इति प्रतीतेर्वस्तुना वस्तुध्वनिः । वसन्ततिलकावृत्तम् ॥ २३ ॥

पाञ्चालिकाया इति । किं च पाञ्चालिकायाः द्रौपद्याः परिणीतिकाले विवाहसमये संघीभवद्भिः द्रौपद्यपहरणाय वृन्दायमानैः धार्तराष्ट्रैः सह हे कर्ण, भवान् पार्थस्य अर्जुनस्य शराणां प्रकर्षेण योगात् प्रहारात् आत्तः परेण गृहीतः गन्धः गर्वः यस्य तथोक्तः । 'आत्तगन्धोऽभिभूतः स्यात्' इत्यमरः । कर्णो भूत्वापि तदानींतनकर्णः सन्नपि इदानीं पुनः आत्तगन्धः सगर्वः कथमभूत् । अभूरित्यर्थः । 'शेषे प्रथमः' इति प्रथमपुरुषः । यद्वा भवान् कर्णः सबिलत्वेन यथार्थनामा भूत्वापि पुनरात्तगन्धः कथमभूदिति योजना । अस्यां न तन्त्रन्यायानुसरणगौरवदोष इति ध्येयम् । 'गन्धो गन्धक आमोदे लेशे संबन्धगर्वयोः' इति वैजयन्ती । उपजातिर्वृत्तम् ॥ २४ ॥

इन्द्रेति । अतः हे कर्ण, तेन त्रिभुवनप्रसिद्धपराक्रमेण इन्द्रस्य आत्मजातेन अर्जुनेन सह तुलां साम्यं गन्तुं लब्धुं सः त्रिपुरजलंधरासुरादिजेतृत्वेन प्रसिद्धः ईश्वरः शंभुः एक एव । ईष्टे क्षमते । नान्य इत्यर्थः । यतः य इन्द्रात्मजातः निजं जीवनं जीवितं तृणाय कृत्वा तृणप्रायं मन्वानः । तृणमिव अनादृत्येति यावत् । 'मन्यकर्मण्यनादरे' इति संप्रदानत्वम् । येन शंभुना सह युद्धाय स्पृहयन् अभिलषन् । 'स्पृहेरीप्सितः' इति संप्रदानत्वम् । उदस्थात् उद्युक्तवान् । तेन स इति संबन्धः । 'आयासलेश–' इत्यादिश्लोकत्रयं द्वितीयवाक्योत्तरम् । अत्र शूरमात्रप्राप्यस्यार्जुनसाम्यस्येश्वर एव नियमनात् परिसंख्यालंकारः । उपजातिर्वृत्तम् ॥ २५ ॥

इतीति । इत्युक्तप्रकारं तादृक्षं अतिबहुलं तस्य मद्राणामध्यक्षस्य राज्ञः

---

१. 'निकुञ्जम्' इति पाठः. २. 'मत्वा' इति पाठः. ३. 'जीवितं' इति पाठः. ४. 'ऋभुक्षकुमारे पक्ष' इति पाठः.

कर्मसाक्षिनन्दनोऽपि रौक्ष्यवर्जितं पदविभागचमत्कृतिसुभगंभावुकं वचनमेवमवादीत् ॥

अयि भागिनेययशसां सुभगंकरणस्त्वमद्य भुवि मद्रपते ।
मम मा तुलेति वहुधा वदता विजयेन शंभुमपि मातुलय ॥२६॥

इत्युक्तवत एतस्य सौरेर्दन्तपुटाविव ।
जवादुभावनीकौ तौ जघटेते परस्परम् ॥ २७ ॥

सर्वतोऽपि भुवि सैन्यपरागैः शोषितेषु सजलेषु सरःसु ।
केवलं गगन एव तदानीमप्सरःकुलमलोक्यत लोकैः ॥ २८ ॥

---

शल्यस्य संवन्धि ऋभुक्षणः इन्द्रस्य कुमारे अर्जुने पक्षपातं आत्मीयत्वेन अभिनिवेशं समीक्ष्य आलोच्य कर्मसाक्षिणः सूर्यस्य नन्दनः कर्णोऽपि रूक्षस्य भावः रौक्ष्यं पारुष्यं तेन वर्जितम् । किंच पदस्य मातुलेति शब्दस्य विभागेन 'मा-तुला' इति पृथक्करणेन या चमत्कृतिः प्रागल्भ्यं तया सुभगंभावुकं रमणीयं वचनं एवं वक्ष्यमाणप्रकारेण अवादीत् उक्तवान् । वदेः कर्तरि लुङि सिचि वृद्धिः ॥

अयीति । अयि हे मद्रपते शल्य, अद्य भगिन्याः उपचारात्कुन्त्याः अपत्यस्य भागिनेयस्य अर्जुनस्य । 'स्त्रीभ्यो ढक्' इति ढक्येयादेशः । यशसां पराक्रमजन्यानां सुभगंकरणः प्रख्यापकः त्वं विजयेन सर्वोत्कर्षेण हेतुना तुला केनापि साम्यं मा न इति वहुधा वदता ब्रुवता । आत्मस्तुतिपरायणेनेति यावत् । एवं हे मम मातुल स्वमातृसहोदर, इति वहुधा वदता विजयेन अर्जुनेन सह शंभुमपि मा तुलय सदृशं मा कुरु । सर्वोत्कृष्टानां शंभोरप्यपकृष्टत्वसंभावनावश्यकत्वादिति भावः । अनेन मूढानामभिमानस्तिरस्कृतसकलान्तर इति हासो व्यङ्ग्यः । अत्र भागिनेयेत्यादिविशेषणस्य पक्षपातित्वेन शल्यवचनस्यातात्त्विकत्वमित्यभिप्रायगर्भत्वात्परिकरालंकारः । सुमङ्गलीवृत्तम् ॥ २६ ॥

इतीति । इत्युक्तप्रकारेण उक्तवतः एतस्य सूर्यस्य अपत्यं सौरिः कर्णः तस्य अत इञ् । दन्तपुटौ ऊर्ध्वाधरोष्ठाविव तावुभावनीकौ कुरुपाण्डवसैन्ये परस्परं जवात् वेगात् जघटेते संयुयुजतुः । घटतेः कर्तरि लिट् । ततः परं न किंचिदप्यवदत् । संकुलं चाभूत्सैन्यद्वयमित्यर्थः । अत्र कर्णोष्ठयोः सैन्ययोश्च प्रकृतयोर्मिथो-मेलनेनौपम्यस्य गम्यत्वात्तुल्ययोगितामेदः । युग्मविपुलावृत्तं श्लोको वा ॥ २७ ॥

सर्वत इति । तदानीं सेनाद्वयसंघटनसमये भुवि सर्वतः सर्वत्रापि सजलेषु जलसहितेषु सरःसु सैन्ययोः कौरवपाण्डवीययोः संवन्धिभिः परागैः

---

१. 'वर्जम्' इति पाठः. २. 'अभाणीत्' इति पाठः. ३. 'करणत्वं इति पाठः, ४. 'पटौ' इति पाठः. ५. 'जघटाते' इति पाठः. ६. 'अदृश्यत' इति पाठः.

तदनु[1] तत्र[2] परस्परघट्टनजनितस्फुलिङ्गव्याजेन निपीतपूर्वान्रुधिरशीकरान[3]जीर्णशङ्कया वमन्तीभिः[4] पट्टसवल्लरीभिश्च कबन्धोत्पाटन[5]सृष्टिपाटवमेव[6] संग्रामदेशदेशिकसदेशादभ्यसितुमवनीतलमवतीर्णैः पयोधरपटलैरिव खेटकमण्डलैश्च युगपदेव बहुविधवीरयोधजनप्रवेशसौकर्याय तरणिरन्ध्रसरणिं विशालयितुमिव[7] वियत्तले दूरमुच्चलि[9]ताभिः शक्तिभिश्च प्रतिक्षणक्षपितविपक्षकुलवृत्तान्तं मुहुर्मुहुरटनीमुखेन कथयितुमिव धानुष्ककर्णाभ्याशं[10] प्रत्यागतैः कोदण्डदण्डैश्च युद्धविलोकनबद्धकौतुकसिद्धयौवतकुचमण्डलनिजकुम्भतारतम्यपरि[11]-

पदघट्टनजन्यैः शोषितेषु निर्जलीकृतेषु सत्सु केवलं एकस्मिन् गगन एव । अद्भिर्युक्तानां सरसां कुलं वृन्दं अप्सरःकुलं देवाङ्गनासमूहश्च लोकैः जनैः अलोक्यत दृश्यते स्म । अत्र दिवि भुवि प्रसक्तस्य अप्सरोवत्त्वस्य दिवि एकत्र नियमनात्परिसंख्यालंकारः श्लेषसंकीर्णः । स्वागतावृत्तम् ॥ २८ ॥

तदन्विति । तदनु द्वयोर्मेलनानन्तरम् । तत्र युद्धदेशे परस्परं घट्टनेन अभिघातेन जनितानां स्फुलिङ्गानां अग्निकणानां व्याजेन पूर्वं पूर्वयुद्धे निपीतान्निपीतपूर्वान् रुधिरशीकरान् रक्तबिन्दून् अजीर्णशङ्कया जाठरानलापक्वभयेन वमन्तीभिः उद्गिरन्तीभिरिव स्थिताभिः पट्टसाः खड्गविशेषाः वल्लर्यः लता इव ताभिश्च कबन्धानां उदकानां अपमूर्धकलेवराणां च उत्पाटनस्य ऊर्ध्वप्रसारणस्य सृष्टिः जननव्यापारः तस्यां पाटवं सामर्थ्यमेव संग्रामदेशः युद्धभाग एव देशिकः आचार्यः तस्य सदेशात् समीपात् अभ्यसितुं परिचेतुम् । तेषामध एव जलप्रसारकत्वादिति भावः । अवनीतलं भूतलं प्रति अवतीर्णैः प्राप्तैः पयोधरपटलैः मेघवृन्दैरिव स्थितैः खेटकमण्डलैः फलकसमूहैश्च युगपत् एकदैव बहुविधानां वीराणां योधजनानां परावृत्य मृत्वा सुरीभूतानां प्रवेशस्य सौकर्याय सौलभ्याय तरणेः सूर्यबिम्बस्य रन्ध्रसरणिं बिलमार्गं विशालयितुं विस्तारयितुमिव वियत्तले आकाशदेशे दूरमुच्चलिताभिः उन्नमिताभिः शक्तिभिश्च क्षणे क्षणे प्रतिक्षणं क्षपितस्य नाशितस्य विपक्षाणां शत्रूणां कुलस्य वृन्दस्य वृत्तान्तं अटनिः धनुष्कोटिरेव मुखं वक्त्रं तेन मुहुर्मुहुः कथयितुं इव । धानु-

१. 'तदनु' इति नास्ति क्वचित्. २. 'तत्र तयोः सेनयोरुभयोरपि परस्पर' इति पाठः. ३. 'शीकरनिकरान्' इति पाठः. ४. 'वमन्तीभिरिव' इति पाठः. ५. 'उत्पादन'; 'उत्पतन' इति च पाठः. ६. 'एव' इति नास्ति क्वचित्; 'अपि' इति पाठः. ७. 'वल्लयैः' इति पाठः. ८. 'अतिविशालयितुं' इति पाठः. ९. 'दूरं दूरम्' इति पाठः. १० 'कर्णमभ्यागतैः', 'कर्णाभ्यर्णमभ्यागतैः' इति च पाठः. ११. 'परिचिक्षिषया' इति पाठः.

चिचीषयेव दूरं[1] नभसि करान्प्रसारयद्भिः[2] शुण्डालमण्डलैश्च विचित्रतरचक्रचङ्क्रमणमिषेण पदात्पदमपि न गन्तव्यमिति विमतनिरोधकुण्डलनामिव कुर्वद्भिरर्वद्भिश्च शोणितपङ्कशोणितैः[3] वेगसंभ्रमविदार्यमाण[4]धरणीरन्ध्रनिर्गत्वरफणीन्द्रफणासहस्रमणिकिरणधोरणीमसृणितैरिव चक्रैः संक्रीडद्भिः शताङ्गैश्च भयानके[5] सकलसुरजनतनूरुहसौखशायनिके[6] समीके ॥

---

ष्काणां धनुर्धराणां कर्णाभ्याशं श्रोत्रसमीपं प्रत्यागतैः कोदण्डदण्डैः चापयष्टिभिश्च युद्धस्य विलोकने बद्धं कौतुकं येन तस्य सिद्धानां देवयोनिविशेषाणां यौवतस्य युवतीसमूहस्य यत् कुचमण्डलं तस्य निजयोः कुम्भयोश्च यत् तारतम्यं न्यूनाधिकभावः तस्य परिचेतुं परीक्षितुं इच्छा परिचिचीषा तयेव । नभसि दूरं करान् शुण्डाः प्रसारयद्भिः शुण्डालमण्डलैः गजवृन्दैश्च विचित्रतरस्य अत्याश्चर्यकरस्य चक्रचङ्क्रमस्य मण्डलाकारगमनस्य मिषेण व्याजेन पदात्पदं एकं पदमितदेशमपि न गन्तव्यं इत्येवम् । भवद्भिरिति शेषः । विमतानां शत्रूणां निरोधाय निरोधं कर्तुम् । 'क्रियार्थ–' इत्यादिना संप्रदानत्वम् । कुण्डलनां राजाज्ञासूचकवर्तुलरेखां कुर्वद्भिः लिखद्भिरिव स्थितैः अर्वद्भिः अश्वैश्च शोणितपङ्केन रक्तकर्दमेन शोणितैः अरुणितैः । अत एव वेगात् संभ्रमेण भ्रमणेन विदार्यमाणायाः भिद्यमानायाः धरण्याः भुवः रन्ध्रेभ्यः निर्गत्वरया निर्गमनशीलया फणीन्द्रस्य शेषस्य फणासहस्रे मणीनां किरणधोरण्या कान्तिपरम्परया मसृणितैः व्याप्तैरिव स्थितैः चक्रैः रथाङ्गैः संक्रीडद्भिः इतस्ततः गच्छद्भिः । शताङ्गैः रथैश्च भयानके लोकैकभयंकरे समीके युद्धे सकलानां सुरजनानां तनूरुहाणां रोम्णां सुखशयनं पृच्छतीति सौखशायनिके सति । अत्याश्चर्येण रोमाञ्चजनके सतीति यावत् । उत्तरेणैकवाक्यम् । 'भयानकं सकलसुरजनतनूरुहसौखशायनिकं समीकमभूत् । तदनन्तरम्' इति पाठान्तरं दुःशासनयुद्धे स्वकालिके स्वानन्तर्यबोधकत्वेन बाधितार्थकत्वादुपेक्ष्यम् । अत्र स्फुलिङ्गव्याजेनेति सापह्नवहेतूत्प्रेक्षायाश्च पट्टसवल्लरीभिरित्युपमायाश्च कबन्धशब्दश्लेषभित्तिकाभेदाध्यवसायमूलातिशयोक्तिसंग्रामदेयिकेतिरूपकद्वयाभ्यसनफलोत्प्रेक्षयोरङ्गाङ्गिभावसंकरस्य च तरणिरन्ध्रविशालीकरणफलोत्प्रेक्षायाश्च अटनिमुखेनेति रूपककथनफलोत्प्रेक्षयोरङ्गाङ्गिभावसंकरस्य च परिचिचीषाहेतूत्प्रेक्षायाश्च चक्रचंक्रमणमिषेणेति सापह्नवस्वरूपोत्प्रेक्षायाश्च अष्टानां तिलतण्डुलन्यायेन संसृष्टिः ॥

---

१. 'दूरं दूरम्' इति पाठः. २. 'प्रविसारयद्भिः' इति पाठः. ३. 'शोणैः' इति पाठः. ४. 'संविदार्य' इति पाठः. ५. 'भयानकं' इति पाठः. ६. 'शायनिकं समीकमभूत्' इति पाठः.

दुःशासनो नयनजृम्भितकोपवह्नि-
भीत्येव फालतलमूर्ध्वमुपाश्रिताभ्याम् ।
भ्रूभ्यां भयानकमुखो रिपुभूमिपाने-
प्यारब्ध योधयितुमेतदतीव चित्रम् ॥ २९ ॥

स कुन्तलाल्यम्बरधूतिधूर्यैः स्वसिंहनादैर्विदधे दुरापः ।
पराभवं सोमकलास्यहेतौ पाञ्चालिकायामिव पार्थचम्वाम् ॥ ३० ॥

ततो याज्ञसेनीकटितटपटापहारसमयचक्रचङ्क्रमणवासनानुवृत्ति-वशादिव विविधानि रेचकमण्डलानि वितन्वन्निजास्पदभेदको

---

इतः परं श्लोकद्वयमेकवाक्यम् । दुःशासन इति । यत्तदोर्नित्यसंबन्धात् यो दुःशासनः दुर्योधनानन्तरजः नयनाभ्यां जृम्भितात् निर्गतात् कोपादेव वह्नेः भीत्या भयेनेवेत्युत्प्रेक्षा । ऊर्ध्वं उपरितनं फालतलं ललाटप्रदेशं उपाश्रिताभ्यां संगताभ्याम् । कोपेन ग्रन्थीभूताभ्यामिति यावत् । भ्रूभ्यां भयानकं मुखं यस्य तथोक्तः सन् रिपून् भूमिपान् शत्रून् राज्ञोऽपि योधयितुं भटान् कर्तुं आरब्ध उपचक्रमे । इत्येतत् अतीव भृशं चित्रम् । राज्ञामपि भटत्वकरणस्याश्चर्यकरत्वादिति भावः । अस्मिन्नर्थे यच्छब्द आकाङ्क्षालभ्यः । तदसहिष्णुतायां पुनरित्थमवधेयम् । योधयितुमित्यत्र 'यः अधयितुम्' इति च्छेदः । रिपुभूमिपानेपीत्यपिना कोपवह्निसमुच्चयः । अधयितुं अधःकर्तुम् । अत्रायुधसाध्यरिपुभूमिपाधःकरणस्य भ्रूभङ्गमात्रेण संपादनोद्योगादाश्चर्यमिति वस्तुना कोपवह्निशत्रुवर्गयोः अधःकरणेनौपम्यगम्यतात्मकतुल्ययोगिताप्रतीतेर्वस्तुनालंकारध्वनिः । रभतेराङ्पूर्वात्कर्तरि लुङि तङ् ॥ २९ ॥

स इति । दुरापः परैरधृष्यः स दुःशासनः सोमकानां पाञ्चालानां लास्यस्य युद्धनाट्यस्य हेतौ जनके सोमकला चन्द्रकान्तिरिव आस्यहेतिः मुखकान्तिः यस्यास्तस्यामिति च अत एव पाञ्चालिकायां द्रौपद्यामिव स्थितायां पार्थचम्वां पाण्डवसेनायां कुन्तलः चिकुरः अलिश्च तद्द्वयमिव यदम्बरं केशभ्रमरवन्नीलं आकाशं तस्य धूतौ भङ्गे धुर्यैः पटुभिः स्वैः स्वीयैः सिंहनादैः कुन्तलालेः केशबृन्दस्य अम्बरस्य वस्त्रस्य च धूत्या धुर्यैः । तद्युक्तैरित्यर्थः । स्वैः सिंहनादैरिति च । पराभवं तिरस्कारं विदधे चक्रे । श्लिष्टविशेषणेयमुपमा पूर्णा । उपजातिर्वृत्तम् ॥ ३० ॥

तत इति । ततः याज्ञसेन्याः द्रौपद्याः कटितटे नितम्बदेशे पटानामपहारस्य समये आकर्षणावसरे चक्रचङ्क्रमणस्य मण्डलाकारगमनस्य या वासना संस्कारः तस्य अनुवृत्तिवशात् अनुसरणवशादिवेत्युत्प्रेक्षा । विविधानि रेचकाख्यानि मण्डलानि चक्रगमनानि वितन्वन् प्रकटयन् निजास्पदस्य स्वस्थानस्य उरसः भेदकः

---

१. एतत्पूर्वम् 'तदनन्तरम्' इति क्वचित्. २. 'धूर्यैः' इति पाठः. ३. 'दुरापम्' इति पाठः.

भीमः क्व वा समागच्छतीति वीक्षितुमुन्नतप्रदेशमधिरूढाभ्यां हृदन्तररुधिरबुद्बुदमुकुलाभ्यामिव रोषलोहिताभ्यां लोचनाभ्यां साध्वसदानशौण्डः करतलबंभ्रम्यमाणपरिघपातनपाटितभटघोटककरटिघटाक्षतजप्रवाहैः समीकसीमानं कण्ठद्वयसीं विदधानः सुयोधनानुजो वियदध्वनि विजृम्भितध्वनिर्वृकोदरदृगध्वनीनोऽभूत् ॥

वद्धकच्छावपि द्वौ तावभीकौ भीमकौरवौ ।
गदागदि रणं घोरं कुर्वाते स्म परस्परम् ॥ ३१ ॥

निपातितस्य द्विषतः स भूमौ समक्षमक्ष्णां कुरुभूपतीनाम् ।
गण्डे कराभ्यामुदरे पदाभ्यां संताडनं साधु समाचचार ॥ ३२ ॥

---

विदारकः भीमः क्व वा कुतो वा समागच्छतीति वीक्षितुं समुन्नतं प्रदेशं मुखात्मकं अधिरूढाभ्यां हृदः उरसः अन्तरे अन्तर्देशे रुधिरबुद्बुदौ मुकुलाविव ताभ्यामिव स्थिताभ्यां इत्युत्प्रेक्षा । रोषेण लोहिताभ्यां अरुणाभ्यां लोचनाभ्यां साध्वसस्य दानशौण्डः वहुप्रदः । अतिभयंकर इति यावत् । करतले वंभ्रम्यमाणस्य वहुधा व्यापार्यमाणस्य । यङन्ताद्भ्रमतेर्लटः कर्मणि शानच् । परिघस्य गदायाः पातनेन प्रहारेण पाटितानां भिन्नानां भटानां योधानां घोटकानां अश्वानां करटिनां गजानां च घटानां वृन्दानां संवन्धिभिः क्षतजप्रवाहैः रक्तपूरैः समीकसीमानं युद्धप्रदेशं कण्ठद्वयसीं कण्ठपरिमितगाम्भीर्यजलां विदधानः कुर्वाणः वियदध्वनि आकाशमार्गे विजृम्भितः व्याप्तः ध्वनिः सिंहनादः यस्य तथोक्तः । सुयोधनानुजः दुःशासनः वृकोदरस्य भीमस्य दृशोरध्वानं गच्छतीति तथोक्तः । दृष्टिविषयः अभूत् । उत्प्रेक्षाद्वयस्य संसृष्टिः ॥

**बद्धेति** । वद्धः कच्छः मध्यवन्धनपट्टः याभ्यां तौ वद्धकौपीनावपीति च । इत्यनेन वीतरागित्वं सूच्यते । अभीकौ कामुकाविति विरोधः । निर्भयाविति परिहारः । भीमकौरवौ तौ भीमश्च कौरवः दुःशासनश्च द्वौ परस्परं गदया गदया प्रवृत्तं गदागदि घोरं भयंकरं रणं युद्धं कुर्वाते स्म चक्रतुः ॥ ३१ ॥

**निपातितस्येति** । सः वक्ष्यमाणविधप्रतिज्ञया प्रसिद्धः भीमः कुरुभूपतीनां दुर्योधनादीनां अक्ष्णां नेत्राणां समक्षं अग्र एव । न तु यत्र कुत्रापीत्यर्थः । भूमौ युद्धभुवि निपातितस्य द्विषतः दुःशासनस्य गण्डे कपोले कराभ्यां उदरे कुक्षौ पदाभ्यां च संताडनं साधु यथाप्रतिज्ञं समाचचार कृतवान् । अत्र तत्तादृक्प्रियापराधकरपदताडनयोरानुरूप्येण संघटनया समालंकारः ॥ ३२ ॥

---

१. 'बुद्बुदाभ्यामिव' इति पाठः. २. 'कलित' इति पाठः. ३. 'घनतरपरिघविघट्टनविपाटित' इति पाठः. ४. 'समरसीमां' इति पाठः. ५. 'गुल्फ' इति पाठः. ६. 'भीकरारवौ' इति पाठः.

निजप्रियाकैश्यकृषोऽस्य शत्रोर्निर्भिद्य वक्षः पिबतोऽसृगम्भः ।
समीरसूनोश्च पिशाचिकानां सपीतिकेल्यां कलहो बभूव ॥ ३३ ॥

एणीदृशः स्वकीयाया वेणीं तैरेव शोणितैः ।
क्षोणीभृतां द्विषामेष क्षोणीचक्रे सहाक्षिभिः ॥ ३४ ॥

तदनन्तरम् ।

रिपून्[1]कुरुक्षेत्रतले चरन्तं तृणाय मत्वा वृषसेनमुग्रम् ।
किरीटिगोपः परधेनुकान्तं निनाय काण्डैर्यमलोकगोष्ठम् ॥३५॥

अवकर्ण्य किरीटिभग्नमाजावभिमन्योरधिकं सुतं स कर्णः ।
रिपुरङ्कुतरक्षुरष्टदिक्षु ज्वलयंश्चक्षुरभूदरीन्दिधक्षुः ॥ ३६ ॥

---

**निजेति** । निजायाः प्रियायाः द्रौपद्याः कैश्यं केशवृन्दं कर्षतीति कृषः अत एव शत्रोः अस्य दुःशासनस्य वक्षः निर्भिद्य असृक् रक्तमेव अम्भः जलं पिवतः समीरसूनोः भीमस्य च पिशाचिकानां च सपीतिकेल्यां सहपानक्रीडायां कलहः ममास्त्वधिकं ममास्त्वधिकमिति विवादः बभूव । वृत्तमुपजातिः ॥ ३३ ॥

**एणीति** । एषः भीमः तैः दुःशासनीयैः शोणितैः पीतशिष्टैरेव स्वकीयायाः एणीदृशः द्रौपद्याः वेणीं दुःशासनशोणितसंस्कार्यत्वेन बद्धां द्विषां क्षोणीभृतां शत्रुभूपानां अक्षिभिः सह शोणीचक्रे रञ्जयामास । यथाप्रतिज्ञं दुःशासनरुधिर-लेपनकृति द्रौपदीवेणीमोचने भीमे कौरवाः सर्वे कोपारुणिताक्षा बभूवुरित्यर्थः । अतएव वस्तुना पदार्थहेतुकं काव्यलिङ्गं ध्वन्यते ॥ ३४ ॥

**तदनन्तरमिति** । तदनन्तरमित्युत्तरेणान्वयः ।

**रिपूनिति** । रिपून् सस्यभक्षणविरोधिनः शत्रूंश्च तृणाय मत्वा । तृणवदना-दृत्येत्यर्थः । कुरुक्षेत्रतल एव कुरूणां क्षेत्रतले केदारभागे चरन्तं सस्यानि भक्ष-यन्तं गच्छन्तं च परेषामेव धेनूनां कान्तं वल्लभं परः स्ववाचकोत्तरभागः धेनुशब्दः यया तया असिधेनुकया नाम आयुधेन कान्तमिति च । 'छुरिका चासिधेनुका' इत्यमरः । उग्रं भयंकरं वृषसेनं कर्णपुत्रमेव वृषभश्रेष्ठं किरीटी अर्जुन एव गोपः गोपालः भूपश्च काण्डैः दण्डैः बाणैश्च यमलोकमेव गोष्ठं गोस्थानं निनाय प्रापित-वान् । समस्तवस्तुवर्ति श्लिष्टाश्लिष्टसावयवरूपकम् । उपेन्द्रवज्रावृत्तम् ॥ ३५ ॥

**अवकर्णेति** । अभिमन्योः अर्जुनपुत्रस्य स्वमारितस्य अधिकं अत एव किरीटिना अर्जुनेन भग्नं पुत्रमारणप्रतीकारात्मना निहतं सुतं वृषसेनं अवकर्ण्य श्रुत्वा चक्षुः ज्वलयन् कोपाग्निना शोणीकुर्वन् रिपव एव रङ्कवः हरिणाः तेषां तरक्षुः मृगविशेषः । तद्दृष्टिमात्रेण हरिणाः शिथिलप्राणा भवन्तीति प्रसिद्धिः । स कर्णः अष्टास्वपि दिक्षु अरीन् दग्धुमिच्छुः दिधक्षुः अभूत् । पुत्रवधक्रोधपरवशः

---

१. 'रिपुं' इति पाठः.

कुण्डलीकृतकोदण्डश्चण्डभानुतनूभुवः ।
ताण्डवं विदधे पाणिः पाण्डवानां बलान्तरे ॥ ३७ ॥
युद्धे हतो योधसमूह एष विम्बं पितुर्मे वत भेत्स्यतीति ।
मत्वेव पत्युर्महसां कुमारः संछादयामास दिवं शरौघैः ॥ ३८ ॥
करीन्द्रमण्डले पेतुः कर्णमुक्ताः शरव्रजाः ।
सदानाम्बु करं यान्ति स्थूललक्ष्यं हि मार्गणाः ॥ ३९ ॥
प्रकाश्य कर्णे युधि कालपृष्ठं भयंकराभे चलति प्रवीरे ।
तदीयभल्लैर्दलिताः परेऽपि प्रकाश्य चेलुर्बत रक्तपृष्ठम् ॥ ४० ॥

---

दारुणं योद्धुं संनद्धवानित्यर्थः। अत्र पुत्रवधाकर्णनस्य विशेषणगत्या शत्रुदिधक्षा-हेतुत्वात्पदार्थहेतुकं काव्यलिङ्गमलंकारः। औपच्छन्दसिकवृत्तम् ॥ ३६ ॥

**कुण्डलीकृतेति**। ततः चण्डभानुतनूभुवः कर्णस्य पाणिः कुण्डलीकृतं गुणाकर्षणेन मण्डलितं कोदण्डं कालपृष्ठं येन तथोक्तः सन् पाण्डवानां बलान्तरे सेनामध्ये ताण्डवं नर्तनं विदधे चकार । गुणाकर्षणत्यागाभ्यामिति भावः । अनुप्रासभेदः शब्दालंकारः ॥ ३७ ॥

**युद्ध इति**। युद्धे हतः एषः योधानां पाण्डवीयानां समूहः मे मम पितुः सूर्यस्य विम्बम्। बतेति खेदे। भेत्स्यति बहूनां युगपन्निर्गमने संबाधाद्विदारयि-ष्यति इति मत्वा संभाव्येवेत्युत्प्रेक्षा महसां तेजसां पत्युः सूर्यस्य कुमारः कर्णः शरौघैः दिवं अन्तरिक्षं संछादयामास आच्छादितवान्। इन्द्रवज्रावृत्तम् ॥ ३८ ॥

**करीति**। कर्णेन मुक्ताः प्रयुक्ताः शरव्रजाः बाणसंघाताः शरवदर्थाशया व्रज-न्तीति याचकाश्च करीन्द्रमण्डले गजवृन्दे करिणामिन्द्रस्य बहुगजवतो राज्ञो मण्डले राष्ट्रे च पेतुः प्रविविशुः। तथा हि मार्गणाः याचकाः बाणाश्च एकस्मा-द्वदान्यान्मुक्ताः दानाम्बुना उत्सर्गजलेन मदोदकेन सहितः सदानाम्बुः करः शुण्डा च यस्य तथोक्तं स्थूललक्ष्यं बहुप्रदं स्थूलं पृथुलं लक्ष्यं शरव्यं च यान्ति। अत्र याचकशरयोः दानजलमदजलयोः हस्तशुण्डयोर्बहुप्रदपृथुललक्ष्ययोश्च श्लेष-भित्तिकाभेदाध्यवसायलब्धसामान्येन विशेषसमर्थनादर्थान्तरन्यासः। तेन निस-र्गदातुः कर्णस्य याचकाशाविघातेन गतप्रायताप्रतीतेरलंकारेण वस्तुध्वनिः । 'दानं वितरणे हस्ते मदे स्यात्खण्डनेऽपि च', 'बलिहस्तमयूखेषु करो गजकरेऽपि च', 'लक्षं लक्ष्यं शरव्ये च संख्याभेदे च गोचरे', 'मार्गणो याचके बाणे भवेद-न्वेष्टरि त्रिषु' इति सर्वत्र कोशः ॥ ३९ ॥

**प्रकाश्येति**। भयंकरी आभा तेजः यस्य तस्मिन् प्रकृष्टे वीरे कर्णे कालपृष्ठं धनुः कालस्य रिपूणां जीवितकालस्य पृष्ठं चरमभागं अन्तं चेति यावत्। प्रकाश्य प्रकटय्य चलति सति तदीयैः कर्णसंबन्धिभिः भल्लैर्नाम बाणैः दलिताः पाटिताः परे शत्रवोऽपि रक्तं शरव्रणशोणितारुणं पृष्ठं शरीरपश्चाद्भागं तन्नामकं धनुश्च

तत्र तत्र युधि संचरमाणः शल्यसारथिमता स रथेन ।
चूषितारिमदवारितयासौ सूर्यसूनुरपि चण्डकरोऽभूत् ॥ ४१ ॥
रवेः कुमारस्य रथं समीक्ष्य रमाप्रियस्यापि तदा समीके ।
धैर्यं हृदः स्वेदजलं शरीराज्जगाल तोत्रं च जवेन हस्तात् ॥४२॥

तदनन्तरममर्त्यचक्रवर्तिविकर्तनतनयौ परस्परं प्रधनं प्रवर्तयितुमारभेताम् ॥

राधाकुन्तीपुत्रयोः शौर्यभाजोश्चक्रीभूतौ चापदण्डौ ज्वलन्तौ ।
मध्यस्थाया रङ्गभूदेवतायास्ताटङ्काभामादधाते स्म तत्र ॥ ४३ ॥
अवकर्ण्य शरासवल्लिघोषं सुतयोस्तत्र सहस्रदृष्टिघृष्ट्योः ।
दिवि वैणिकतापसस्य चित्रं महती प्रीतिरभूच्च नैव चाभूत् ॥४४॥

---

प्रकाश्य चेलुः । मानिनां परोत्कर्षासहिष्णुत्वादिति भावः । अत्र कालपृष्ठरक्तपृष्ठशब्दश्लेषप्रतिभया तदुभयप्रकाशनेन विरोधिनोरनुरूपचेष्टासंघटनात्मा समालंकारः । कर्णवाणनिर्भिन्नाः परे पलायांबभूवुरिति परमार्थः ॥ ४० ॥

तत्र तत्रेति । शल्यः सारथिरस्मिन्नस्तीति तेन रथेन तत्र तत्र युधि युद्धदेशे संचरमाणः सूर्यस्य सूनुः सोऽसौ कर्णोऽपि चूषितं गिलितं (?) अरीणां मद एव वारि येन तस्य भावः तत्ता तया हेतुना चण्डकरः सूर्यः भयंकरपाणिश्च अभूत् । 'आत्मा वै पुत्रनामासि' इति श्रुतेरिति भावरूपकातिशयोक्त्योरङ्गाङ्गिभावेन संकरः । स्वागतावृत्तम् ॥ ४१ ॥

रवेरिति । तदा समीके युद्धरङ्गे रवेः कुमारस्य कर्णस्य रथं तत्तादृशं समीक्ष्य रमाप्रियस्य कृष्णस्यापि हृदः चित्तात् धैर्यं शरीरात् स्वेदजलं हस्तात् तोत्रं अश्वताडनं च जवेन जगाल गलति स्म । गलतेः कर्तरि लिट् । अत्र जगालेत्युभयावृत्तिदीपकम् । वृत्तमुपजातिः ॥ ४२ ॥

तदनन्तरमिति । तदनन्तरं अमर्त्यानां देवानां चक्रवर्तिनः इन्द्रस्य तनयः अर्जुनः विकर्तनस्य सूर्यस्य तनयः कर्णश्च तौ परस्परं प्रधनं द्वन्द्वयुद्धं प्रवर्तयितुं आरभेताम् ॥

राधेति । शौर्यभाजोः राधाकुन्तीपुत्रयोः कर्णार्जुनयोः संबन्धिनौ चक्रीभूतौ गुणाकर्षणेन कुण्डलितौ ज्वलन्तौ चापदण्डौ तत्र तदानीं मध्यस्थायाः कर्णार्जुनमध्यगतायाः रङ्गभूदेवतायाः युद्धस्थलदैवतायाः ताटङ्कयोः कर्णभूषणयोः आभा आदधाते स्म चक्रतुः । कर्णिके इव रेजतुरित्युत्प्रेक्षा । शालिनीवृत्तम् ॥ ४३ ॥

अवकर्ण्येति । सहस्रं दृष्टयो नेत्राणि घृष्टयः किरणाश्च ययोस्तयोः इन्द्रसूर्ययोः सुतयोः अर्जुनकर्णयोः । शरासौ चापौ वल्ली इव तयोः घोषं गुणटंकारं

---

१. 'पाणितया' इति पाठः. २. 'निरीक्ष्य' इति पाठः. ३. 'समरं' इति पाठः. ४. 'प्रावर्तयितुं' इति पाठः.

उल्लोलकल्लोलितदोर्विलासावुपेन्द्रमद्रेश्वरसारथी तौ ।
परस्परं भल्लकुलैरभूतां रुषावलीढावरुषावलीढौ ॥ ४५ ॥

कर्णामरेन्द्रसुतकार्मुकवल्लिवान्तै-
[2]र्नीरन्ध्रितेऽम्बरतले निबिडैः पृषत्कैः ।
अभ्यागतानमर[3]भावमुपेत्य वीरा[4]-
न्पप्रच्छ वैणिकमुनिः प्रधनप्रकारान् ॥ ४६ ॥

पाणिना तदनु भानुनन्दने पन्नगास्त्रमचिरेण गृह्णति ।
पूर्वमेव निखिलाप्सरःकुलात्सा दधौ वरणमाल्यमुर्वशी ॥ ४७ ॥

दिवि आकाशे तत्र तदानीं अवकर्ण्य । वीणा शिल्पमस्य वैणिकः तस्य तापसस्य नारदस्य महती प्रीतिः संतोषोऽभूच्च नाभूच्चेति यत्तच्चित्रम् । अन्तर्हिताखिलशब्दान्तरत्वेन लोकोत्तरत्वात्सवीणारवान्तर्धिकरत्वाच्चेत्याश्चर्यम् । अत एव वैणिकेति विशेषणस्योक्ततात्पर्यगर्भत्वात्परिकरालंकारः । औपच्छन्दसिकम् ॥ ४४ ॥

**उल्लोलेति** । उल्लोलं अत्युन्नतं यथा तथा कल्लोलितः वर्धितः दोर्विलासः बाहुप्रतापः याभ्यां तौ । तारकादित्वादितच् । यथाव्याख्यानात् 'महत्सूल्लोलकल्लोलौ' इति तरंगविशेषपर्यायकोशानुसारेण पौनरुक्त्यम् । उपेन्द्रः कृष्णः महेश्वरः शल्यश्च सारथिर्ययोस्तौ तौ अर्जुनः कर्णश्च द्वौ । रुषा कोपेन अवलीढौ पूर्णौ सन्तौ परस्परं भल्लानां कुलैः । अरुषा व्रणेनेति जातावेकवचनम् । अवलीढौ अभूतां सव्रणावभवताम् । 'व्रणोऽस्त्रियामीर्ममरुः' इत्यमरः । अत्र रुषावलीढावरुषावलीढौ इति यमकभेदविरोधाभासयोः शब्दार्थालंकारयोरेकवाचकानुप्रवेशसंकरः ॥ ४५ ॥

**कर्णेति** । कर्णस्य अमरेन्द्रसुतस्य अर्जुनस्य च द्वयोः कार्मुके कालपृष्ठगाण्डीवे वल्ल्याविव ताभ्यां वान्तैः विसृष्टैः निबिडैः सान्द्रैः पृषत्कैः बाणैः अम्बरतले नीरन्ध्रिते निरन्तरिते सति । आच्छादिते सतीति यावत् । 'नीरन्ध्रमम्बरतले निबिडे' इति पाठे नीरन्ध्रं यथा तथा निबिडे सान्द्रे सतीत्यर्थः । वैणिको मुनिः नारदः । तदा अमरभावं देवत्वं उपेत्य अभ्यागतान्वीरान् अपराङ्मुखान् मृतान् । प्रधनस्य कर्णार्जुनद्वन्द्वयुद्धस्य प्रकारान् विशेषान् पप्रच्छ पृष्टवान् । पृच्छेर्दुहादित्वाद्विकर्मकत्वम् । अत्र नारदस्य तादृग्वीरपृच्छासंबन्धेऽपि संबन्धोक्तिरूपातिशयोक्त्या कर्णार्जुनयुद्धस्य लोकोत्तरत्वप्रतीतेरलंकारेण वस्तुध्वनिः । वसन्ततिलकावृत्तम् ॥ ४६ ॥

**पाणिनेति** । तदनु भानुनन्दने कर्णे पाणिना पन्नगास्त्रं नागास्त्राभिमन्त्रितबाणं अचिरेण द्रुतं गृह्णति सति । अर्जुनवधायेति शेषः । सा पुरा अर्जुनमभिलक्ष्य हतकामत्वेन प्रसिद्धा उर्वशी नामामराङ्गना निखिलात् अप्सरसां कुलात्

१. 'अभिलीढावरुपापि लीढौ' इति पाठः. २. 'नीरन्ध्रमम्बरतले निबिडे' इति पाठः. ३. 'भागम्' इति पाठः. ४. 'योधान्' इति पाठः.

सव्यसाचिहननाय शरासे संहिते रविभुवा भुजगास्त्रे ।
नन्दनद्वितयवत्त्वममंस्त स्वस्य कल्पकवनेन सहेन्द्रः ॥ ४८ ॥

रवितनयविमुक्तमस्त्रमेतद्दिवि रसनायुगलं बहिर्वितन्वत् ।
अहमरिमधुना द्विधाकरोमीत्यभिनयकेलिमिवादधद्बभासे ॥ ४९ ॥

द्विधा विधातुं विजयं शिरोधा-
वथापतन्तं स सरीसृपन्तम् ।
निरीक्ष्य पादेन निजेन शार्ङ्गी
निमज्जयामास शताङ्गमुर्व्याम् ॥ ५० ॥

आनेमिमग्नस्य हरेरुपायात्तदा शताङ्गस्य किरीटिनोऽस्य ।
गर्भेऽवकाशं किल बान्धवेन शंभोः शताङ्गो धरणी व्यतानीत् ५१

पूर्वमेव । वरणमाल्यं दधौ गृहीतवती । चिरंतनोत्कटानुरागादिति भावः । अत्र कर्णकर्तृकार्जुनवधार्थनागास्त्रधारणस्य विशेषणगत्या उर्वशीवरणमाल्यधारणहेतुत्वात् काव्यलिङ्गभेदः । रथोद्धतावृत्तम् ॥ ४७ ॥

**सव्येति** । रविभुवा कर्णेन सव्यसाचिहननाय अर्जुनवधार्थं शरासे कालपृष्ठे भुजगास्त्रे संहिते संयोजिते सति इन्द्रः स्वस्य कल्पकवनेन सहैव नन्दनयोर्द्वितयवत्त्वं अमंस्त संभावितवान् । नार्जुनजयन्ताभ्यां किंतु जयन्तनन्दनवनाभ्यामेवेत्यर्थः । अनिवार्यमेतदस्त्रं हन्त्येवार्जुनमिति संभावनं श्लोकद्वयेऽप्युर्वश्या इन्द्रस्य च माल्यग्रहणोक्तकौंदयहेतुरिति ध्येयम् । अत्रापि पूर्ववत्काव्यलिङ्गमलंकारः ॥ ४८ ॥

**रवीति** । रवितनयेन कर्णेन विमुक्तं एतदस्त्रं दिवि आकाशे रसनयोः जिह्वयोः युगलं बहिः वितन्वत् प्रसारयत्सत् अहं अरिं स्वस्य मातृहन्तारं अर्जुनं अधुना द्विधाकरोमि खण्डयामि इति उक्तप्रकारं अभिनयकेलिं उक्तार्थाभिव्यञ्जकाङ्गिकचेष्टां अदधदिवेत्युत्प्रेक्षा । बभासे ॥ ४९ ॥

**द्विधेति** । अथ विजयं अर्जुनं शिरोधौ ग्रीवायां द्विधा विधातुं कर्तुं आपतन्तं आगच्छन्तं तं पूर्वोक्तं सरीसृपं नागास्त्रं समीक्ष्य सः । शार्ङ्गं नाम धनुरस्यास्तीति शार्ङ्गी कृष्णः । शताङ्गं अर्जुनरथं निजेन पादेन उर्व्यां भूमौ निमज्जयामास मग्नीचकार । बाणलक्ष्यादर्जुनं संसितुमिति भावः । 'निजेन भारेण' इति पाठान्तरम् । उपेन्द्रवज्रावृत्तम् ॥ ५० ॥

**आनेमीति** । तदा हरेरुपायात् पादनिष्पीडनुरूपात् आनेमि चक्रान्वलायःपट्टिकापर्यन्तं मग्नस्य किरीटिनः अर्जुनस्य संबन्धिनः अस्य शताङ्गस्य शंभोः शताङ्गः रथः । अत एव धरणी भूमिः । बान्धवेन किल रथत्वसाजात्यकृतेनेवेत्युत्प्रेक्षा । गर्भे अन्तश्च अवकाशं व्यतानीत् । ददावित्यर्थः । उपेन्द्रवज्रावृत्तम् ॥५१॥

१. 'भारेण' इति पाठः. २. 'धरणिः' इति पाठः.

ततः कुरूणामिव पुष्करान्ते क्ष्वेलार्भटीं जृम्भयतात्मनश्च ।
उग्राहिना तस्य किरीटशृङ्गमग्राहि नाकेन्द्रभयेन साकम् ॥ ५२ ॥

ततः स्नेहरसार्द्रस्तं पक्षपाती भुजंगमम् ।
तक्षकः किल पार्थस्य वर्धयामास सायकः ॥ ५३ ॥

दन्तीन्द्रपादातरथाश्वभेदी कुन्तीकुमारः स हरेर्निदेशात् ।
राधेयकाये विविधास्त्रजालमाधेयमेव व्यधित क्षणेन ॥ ५४ ॥

सर्वेषु मार्गणगणेषु बहुप्रदत्वा-
त्खर्वेतरादतिरयं खमणेः कुमारः ।

---

तत इति । ततः कुरूणां दुर्योधनादीनां क्ष्वेलार्भटीं नागास्त्रेणार्जुनो हत इत्याद्याकारकसिंहनादौद्धत्यमिव । आत्मनश्च क्ष्वेलस्य गरलस्य आर्भटीं ज्वलनप्राचण्ड्यं पुष्करान्ते आकाशाग्रे जृम्भयता प्रकटयता उग्रेण घोरेण अहिना नागास्त्रेण तस्य अर्जुनस्य किरीटं इन्द्रदत्तं शृङ्गं शिखरमिव किरीटशृङ्गं नाकेन्द्रस्य महेन्द्रस्य भयेन साकं नागास्त्रादर्जुनमरणभीत्या सह अग्राहि अपहृतम् । किरीटमात्रहरणेन पुत्रविपत्तिभयमिन्द्रो जहावित्यर्थः । स्वरूपहानेः स्वास्यहानिराशास्येति भावः । अत्र नाकेन्द्रभयेन साकमिति सहोक्त्यलंकारेण किरीटहरणस्य दोषस्यापि गुणत्वकल्पनात्मकलेशालंकारप्रतीतेरलंकारेणालंकारध्वनिः । 'जृम्भयतात्मनश्च' इत्येव पाठः कुरूणामिति षष्ठ्यन्तेनान्वितद्वितीयान्तक्ष्वेलार्भटीपदेन पुनर्द्वितीयान्तान्वये प्रक्रमविरोधादुपेक्ष्यः । उपजातिर्वृत्तम् ॥ ५२ ॥

तत इति । ततः स्नेहरसेन तैलेन प्रेम्णा च आर्द्रः सिक्तः पक्षैः श्येनगरुद्भिः पतनशीलः पाती उत्कटस्वाभिमानवांश्च पार्थस्य अर्जुनस्य सायकः बाण एव । तक्षतीति तक्षकः । 'वाश्यादिर्दारुभेदकः । नागराजश्च' इति व्यस्तरूपकम् । तं नागास्त्ररूपं भुजंगमं अश्वसेनम् । पुनः आगच्छन्तमिति शेषः । वर्धयामास लवशश्चिच्छेद । आशीश्चकारेति । कर्णनागास्त्राश्वसेनस्य तक्षकपुत्रत्वादिति भावः । समस्तवस्तुवर्तिश्लेषसावयवरूपकम् ॥ ५३ ॥

दन्तीति । दन्तीन्द्राः गजश्रेष्ठाः पादाताः पादचारिणः रथाः अश्वाश्च तान् भिनत्तीति भेदी स कुन्तीकुमारः अर्जुनः हरेः श्रीकृष्णस्य निदेशात् आज्ञायाः विप्रशापाद्रथो भुवि मग्नः ततोऽद्यैव जेयोऽयं न त्वन्यधामा चान्यथा विचारयेत्यात्मिकायाः विविधं अस्त्रजालं राधेयस्य कर्णस्य काये शरीर एव । न तु दन्तीन्द्रादावित्यर्थः । क्षणेन आधेयं स्थितिं व्यधित चक्रे । दधातेः कर्तरि लुङि तङ् । लाटानुप्रासालंकारः । इन्द्रवज्रावृत्तम् ॥ ५४ ॥

सर्वेष्विति । बहुप्रदत्वात् महावदान्यत्वाद्धेतोः सर्वेषु शत्रुमित्रोदासीन-

---

१. 'निजां च' इति पाठः. २. 'न्यधित' इति पाठः. ३. 'याचकजनेषु' इति पाठः. ४. 'तरोद्धति'; 'तरोन्नति' इति च पाठः.

पार्थस्य मार्गणगणं पतितं शरीरे
सार्थं व्यधादभिमतं स वितीर्य जीवम् ॥ ५५ ॥

कर्णेऽथ कर्णेन्द्रियमात्रमात्रे दुर्योधनः शोकरसे ममज्ज ।
अभ्यासभूमानमिवाधिरोढुमनागतस्य ह्रदमज्जनस्य ॥ ५६ ॥

ततः स्वकीयस्य तनूभवस्य वधाज्जलस्नातुमना इव द्राक् ।
मन्दायमानद्युतिमालभारी मरीचिमाली च ममज्ज सिन्धौ ॥५७॥

इत्यनन्तभट्टकविकृतौ चम्पूभारते एकादशः स्तबकः समाप्तः ।

---

भावेष्विविधेष्वपि मार्गणगणेषु याचकवृन्देषु खर्वेतरा अनल्पा आहतिः आदरणं यस्य तथोक्तः सोऽयं खमणेः सूर्यस्य कुमारः कर्णः शरीरे पतितं स्वाङ्गे सक्तं पार्थस्य अर्जुनस्य संबन्धिनं मार्गणगणं याचकवृन्दं बाणवृन्दं च । अभिमतं अत्यन्तमिष्टं जीवं प्राणधारणं वितीर्य सार्थं सप्रयोजनं व्यधात् चक्रे । दधातेर्विपूर्वात्कर्तरि लुङ् । निसर्गवदान्यानां किं न देयमिति भावः । कर्णो ममारेत्यर्थः । अत्र बहुप्रदत्वप्रयुक्तसर्वयाचकमहादरस्य विशेषणगत्या पार्थमार्गणसप्रयोजनीकरणहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् । मार्गणशब्दश्लेषमित्तिकालब्धयाचकबाणद्वयाभेदाध्यवसायमूलातिशयोक्त्यनुप्राणितमिति तयोरङ्गाङ्गिभावेन संकरः । अत्र 'मार्गणगणेषु' इत्येव पाठः । 'याचकजनेषु' इति पाठः पर्यायभङ्गाख्यदोषादुक्तस्वारस्यायोगाच्चोपेक्ष्यः । वसन्ततिलकावृत्तम् ॥ ५५ ॥

कर्णेति । अथ कर्णे कर्णेन्द्रियमात्रस्य श्रोत्रस्यैव पात्रे विषये सति । न तु नेत्रस्येत्यर्थः । नाममात्रशेषत्वेन मृते सतीति यावत् । दुर्योधनः शोकरसे दुःखाब्धौ । अनागतस्य भविष्यतः ह्रदे मज्जनस्य अभ्यासे परिचये भूमानं अतिशयं अधिरोढुं लब्धुमिवेत्युत्प्रेक्षा । ममज्ज । मज्जतेः कर्तरि लिट् । अत्र कर्णनिधनस्य दुर्योधनशोकाब्धिमज्जनहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम् । उक्तोत्प्रेक्षोज्जीवकमिति द्वयोरङ्गाङ्गिभावेन संकरः । उपजातिर्वृत्तम् ॥ ५६ ॥

तत इति । ततः मरीचिमाली च सूर्योऽपि स्वकीयस्य तनूभवस्य कर्णस्य वधात् द्राक् द्रुतं जलानि स्नातुं मनो यस्य तथोक्त इवेत्युत्प्रेक्षा । मन्दायमानायाः क्षीणीभवन्त्याः द्युतिमालायाः किरणपङ्क्तेः भारः अतिशयः अस्यास्तीति भारी सन् सिन्धौ समुद्रे ममज्ज । अस्तं जगामेत्यर्थः । 'इष्टकेषीकामालानां चिततूलभारिषु' इति मालाशब्दस्य ह्रस्वान्तत्वम् । मरीचिमाली चेति चकारेण दुर्योधनसमुच्चयः । उपजातिर्वृत्तम्॥५७॥

इति श्रीसदाशिवपदारविन्दवन्दनकन्दलितानन्दसान्द्रस्य कुरविकुलचन्द्रस्य
रामकवीन्द्रस्य कृतौ चम्पूभारतव्याख्याने लास्याख्याने
एकादशस्तवकविवरणं समाप्तम् ।

---

१. 'अपि' इति पाठः. २. 'अपस्नातुं' इति पाठः. ३. 'भारमाली' इति पाठः.

## द्वादशः स्तवकः ।

शल्यं ततः परमरातिकुलस्य चित्ते
शल्यं दिशन्तमनिशं रमणः कुरूणाम् ।
कल्यं रणेषु पृतनाधिपतिं विधाय
तुल्यं त्रिविष्टपपतेः स्वममन्यतासौ ॥ १ ॥

तत्तादृशं तदनु बाहुबलेन शत्रू-
नाकम्पयन्तममरावलिमस्तकेन ।
शक्त्या निहत्य युधि शल्यमजातशत्रोः
पाणिर्दधौ प्रथमतः परहिंसकत्वम् ॥ २ ॥

अथ तं सुबलात्मजं क्षणादवगत्य प्रियपाशकं मृधे ।
यमदापितपाशकं व्यधाद्यमयोः प्राथमिकः पराक्रमी ॥ ३ ॥

---

**शल्यमिति** । ततः परं कर्णानन्तरम् कुरूणां रमणः असौ दुर्योधनः रणेषु कल्यं समर्थं अत एव अरातिकुलस्य शत्रुवृन्दस्य चित्ते शल्यमिव शल्यं दुःखं अनिशं दिशन्तम् । कुर्वन्तमित्यर्थः । शल्यं कर्णसारथिं पृतनाधिपतिं सेनानायकं विधाय कृत्वा । स्वमात्मानं त्रिविष्टपपतेः इन्द्रस्य तुल्यं अमन्यत संभावितवान् । अत्र दुर्योधनस्यात्मनेन्द्रस्य तुल्यत्वसंभावनां प्रति शल्यसेनापतित्वविधानस्य हेतुत्वात्पदार्थहेतुककाव्यलिङ्गेन शल्यस्य देवसेनानीसाम्यप्रतीतेरलंकारेणालंकारध्वनिः । वसन्ततिलकावृत्तम् ॥ १ ॥

**तदिति** । तदनु बाह्वोर्बलेन मदेनेति । शौर्यदर्पेणेत्यर्थः । शत्रून् अमरावलेः देववृन्दस्य मस्तकेन शिरसा सह आकम्पयन्तम् । एकत्र भीत्या परत्र श्लाघयेति भावः । अतएव तं तमिव तत्तादृशम् । अनुपमप्रतापमित्यर्थः । शल्यं युधि अजातशत्रोः धर्मराजस्य पाणिः शक्त्या नामायुधेन सामर्थ्येनेति वा । निहत्य प्रथमतः प्राथमिकं परेषां शत्रूणां हिंसकत्वं हिंसां दधौ । शल्यसेनाधिपत्यदिवसे युधिष्ठिरः प्रथममवधीत्सेनापतिमित्यर्थः । अनेन वस्तुना दिनदशकादिकृतभीष्मादिसेनापतिवधादर्जुनादप्यधिकोऽयं युधिष्ठिर इति प्रतीतेर्वस्तुना वस्तुध्वनिः । अजातशत्रोः परहिंसाया अनुचितत्वात्पाणिरित्युक्तिचमत्कारश्च । उक्तमेवेदं वृत्तम् ॥२॥

**अथेति** । अथ युधिष्ठिरेण शल्यवधानन्तरम् । प्रशस्तः पराक्रमः अस्यास्तीति पराक्रमी । यमयोः युग्मजातयोः । नकुलसहदेवयोर्मध्य इत्यर्थः । प्राथमिकः नकुलः । कृतान्तयोः प्राथमिक इति च । प्रियाः इष्टाः पाशकाः अक्षाः यस्य तम् । प्रियः पाशो नाम यमायुधं यस्य तत्कम् । शैषिकः कप्प्रत्ययः । इष्टाधमं चेति च । तं द्यूतनिपुणं सुबलस्य गान्धारराजस्य आत्मजं शकुनिं अवगत्य समे-

---

१. 'तम्' इति पाठः. २. 'मदेन' इति पाठः. ३. 'अवगम्य' इति पाठः.

अथ युद्धतपर्तुदुःसहश्रीर्हरिदभ्यन्तरधावदात्मघोषम् ।
सहते स्म न किंचिदप्युलूकं सहदेवस्य भुजप्रतापभानुः ॥ ४ ॥

ज्वालं विषक्तमिव दानविधौ कृशानोः
शोणं दधच्चमरवालमुदस्य चापम् ।
पार्थे निहन्तरि रिपूनथ कांदिशीका
द्रोणात्मभूकृपमुखाः सहसा बभूवुः ॥ ५ ॥

इत्थं सोदरदायादवरूथिनीनां रणक्षितौ परिक्षयमभिवीक्ष्य महीयसा साध्वसेन मनसि विरचितप्रथमप्रवेशः क्वचन दुर्ज्ञेयदेशे

---

त्य । क्षणात् । न तु विलम्बादित्यर्थः । यमेन अन्तकेन स्वानन्तरयुग्मजातेन प्रयोज्यकर्त्रा । सहदेवेनेति च । दापितः कण्ठे विन्यासितः पाशः कालपाशः येन तत्कम् । पाशकः अक्षः येन तमिति च । व्यधात् चक्रे । शकुनिमवधीदित्यर्थः । अत्र प्रियपाशकस्य प्रदापितपाशकत्वोक्तेः श्लेषप्रतिभोत्थापितः समालंकारः । वैतालीयं वृत्तम् ॥ ३ ॥

**अथेति** । अथ शकुनिवधानन्तरं युद्धेनैव तपर्तुना भीष्मेण दुःसहा श्रीः प्रकाशः यस्य स तथोक्तः सहदेवस्य भुजयोः प्रताप एव भानुः सूर्यः । हरितां दिशां अभ्यन्तरे मध्ये धावन्तः व्याप्नुवन्तः पलायमानाश्च आत्मघोषाः स्वसिंहनादाः वायसाश्च यस्मात् तम् । 'ध्वाङ्क्षात्मघोष–' इति काकपर्यायेष्वमरः । उलूकं शकुनिपुत्रमेव दिवान्धं नाम पक्षिमेदम् । इति श्लिष्टरूपकम् । किंचित् ईषदपि न सहते स्म । सहदेवः उलूकं जघानेत्यर्थः । श्लिष्टाश्लिष्टसावयवरूपकम् । औपच्छन्दसिकवृत्तम् ॥ ४ ॥

**ज्वालमिति** । अथ शोणं अरुणम् । अत एव दानविधौ स्वेनार्जुनाय वितरणक्रियायां विषक्तं विशेषेण लग्नं कृशानोः अग्नेः ज्वालं शिखामिव स्थितमित्युत्प्रेक्षा । 'द्वयोर्ज्वालकीलौ' इति ज्वालाशब्दस्य पुंस्त्वस्याप्यनुशासनात् । चमरवालं विरुदचामरं दधत् । चापं गाण्डीवं उदस्य उन्नम्य पार्थे अर्जुने रिपून् हतशिष्टान् निहन्तरि मारयति सति । द्रोणात्मभूः अश्वत्थामा कृपः तन्मातुलश्च द्वौ प्रमुखौ येषां ते हतशिष्टाः कौरवीयाः सहसा कांदिशीकाः भयद्रुताः । पलायिता इति यावत् । 'भयद्रुतः कांदिशीकः' इत्यमरः । बभूवुः । वसन्ततिलकावृत्तम् ॥ ५ ॥

**इत्थमिति** । इत्थं उक्तप्रकारेण सोदराणां दुःशासनादीनां दायादानां भीष्मसोमदत्तादीनां वरूथिनीनां सेनानां च । दायादानां लक्ष्मणादिसुतानामिति वा । 'दायादौ सुतबान्धवौ' इत्यमरः । रणक्षितौ परितः क्षयं नाशं अभिवीक्ष्य महीयसा भूयिष्ठेन साध्वसेन भयेन मनसि विरचितः प्रथमः अपूर्वः प्रवेशः

---

१. 'निषक्त'; 'अनुषक्त' इति च पाठः. २. 'रचितगूढा' इति पाठः.

गूढावस्थितिरेव महती समायुष्टोमेष्टिरित्यालोच्य झटिति घटितकवचावगुण्ठनः पन्नगकेतनः [1]समन्तपञ्चके सामन्तं सागरगम्भीरं [2]त्वरितनामानं कंचन महाह्रदमासाद्य मद्भुजेन चिरधार्यमाणां क्षोणीं त्वय्येव समर्पयिष्यामीति पातालवासिनः पन्नगाधिपतेर्द्विसहस्रलोचनेषु रहसि [3]वाचा निवेदयितुमिव दूरं दूरं निमज्य स्वविद्यया सर्वमप्यम्भः स्तम्भयामास ॥

बकहन्ता पुराद्यासौ धार्तराष्ट्रवधोद्यतः ।
इति भीतस्य राज्ञोऽस्य युक्तं कासारमज्जनम् ॥ ६ ॥

दरीषु वा शिखरि[4]तटीझरीषु वा पुरीषु वा घनव[5]नवल्लरीषु वा ।
तिरो भवेदयमिति तं स मार्गितं रणस्थलात्पवनसुतोऽथ निर्ययौ ॥७॥

---

यस्य तथोक्तः । साध्वसाक्रान्तचित्त इत्यर्थः । अत एव क्वचन दुर्ज्ञेये देशे गूढं यथा तथा अवस्थितिरेव महती श्लाघ्या । मम आयुष्टोमः जीवितकालसमूह एव इष्टिः यागविशेषः आयुष्टोमस्य इष्टिः तज्जनकयोग इति वा निश्चितोपायश्च । इत्युक्तप्रकारं आलोच्य । झटिति सत्वरं घटितं कृतं कवचस्य अवगुण्ठनं धारणं येन तथोक्तः । पन्नगः सर्पः केतने यस्य स दुर्योधनः । समन्तानां तन्नामकतीर्थानां कुरुक्षेत्रस्थानां पञ्चकस्य सामन्तं समीपे वर्तमानं सागरमिव गम्भीरं अगाधं त्वरितमिति नाम यस्य तं कंचन महान्तं विस्तीर्णं ह्रदं सरः आसाद्य प्राप्य मम भुजेन चिरं दीर्घकालेन धार्यमाणां क्षोणिं भूमिम् । हे पन्नगाधिप, त्वय्येव इत्येवकारेण युधिष्ठिरव्यवच्छेदः । समर्पयिष्यामीत्युक्तप्रकारेण वचसा पातालवासिनः पन्नगाधिपतेः शेषस्य द्विसहस्रयोर्लोचनेषु श्रवणात्मकेषु रहसि वाचा निवेदयितुमिवेत्युत्प्रेक्षा । दूरं दूरं अत्यन्तदूरं यथा तथा । वीप्सायां द्विर्भावः । निमज्य । स्वविद्यया जलस्तम्भिन्या सर्वं अम्भः जलमपि महाह्रदीयं स्तम्भयामास ॥

**बकेति** । पुरा एकचक्रावाससमये प्रथममिति च । बकानां नाम पक्षिणां बकस्य असुरविशेषस्य च हन्ता असौ भीमः । अथ पश्चाच्च धार्तराष्ट्राणां नीलहंसानां धृतराष्ट्रसुतानां च । वधे उद्यतः उद्युक्तः इत्युक्तहेतोः भीतस्य अस्य राज्ञः धार्तराष्ट्रस्य कासारे सरसि मज्जनं युक्तं उचितमेव । कासारवासिनामन्यत्र हन्तर्युगते शेषाणां पलायनस्य मज्जनस्य लोकसिद्धत्वादिति भावः । अत एवानुरूपसंघटनात्मकः समालंकारः श्लेषमित्तिकाभेदाध्यवसायमूलातिशयोक्त्यनुप्राणित इति द्वयोरङ्गाङ्गिभावेन संकरः ॥ ६ ॥

**दरीष्विति** । अथ सः दुर्योधनः दरीषु गुहासु वा । शिखरिणां शैलानां

---

१. 'स्मन्तपञ्चकसामन्तं' इति पाठः. २. 'त्वरित' इति पाठः. ३. 'वचनानि' इति पाठः. ४. 'सरिज्झरीषु' इति पाठः. ५. 'नव' इति पाठः.

अपरैरपि सोदरैस्तदानीमनुयातस्य जयार्थसिद्धयेऽस्य ।
शतमन्युभुवः परेव दिष्ट्या शबरः कश्चन संन्यधाद्वनान्ते ॥८॥

अथ तेन कृताञ्जलिना सविनयं निवेदितायां सार्वभौमलक्षणोपेतायां पदपङ्क्तौ लक्ष्यमाणैः सलिलमाहर्तुं वनदेवताभिराहितैरिव कलशैरङ्कितावतारपथात्संगररङ्गप्रयुक्तविविधायुधसविधाभ्यस्ततैक्ष्ण्यानीव मारुतिवचनानि निशम्य विशालैः क्रोधनिश्वासैरुपरिकोरकितबुद्बुदकलकलोदयात्तस्माज्जलाशयादुत्तीर्य मानिनामग्रणीः

तटीषु प्रपातेषु या झर्यः निर्झराः तासु वा । पुरीषु नगरेषु वा । घनासु सान्द्रासु वनेषु अरण्येषु वल्लरीषु गुल्मेषु वा तिरोहितो भवेत् अन्तर्हितः स्यात् । इति उक्तप्रकारेण । आलोच्येति शेषः । पवनसुतः भीमः तं दुर्योधनं मार्गितुं अन्वेषितुं रणस्थलात् निर्ययौ निर्गतवान् । 'शत्रुशेषं न शेषयेत्' इति न्यायादिति भावः । रुचिरावृत्तमेतत् । 'चतुर्ग्रहैरिह रुचिरा जभस्जगैः' इति लक्षणात् ॥७॥

अपरैरिति । तदानीं दुर्योधनान्वेषणसमये । अपरैः सोदरैः शिष्टैः धर्मराजादिभिः अनुयातस्य तत्रतत्रान्वेषितुमनुगतस्य । अस्यापि भीमस्य जयरूपार्थसिद्धये । शतमन्युभुवः अर्जुनस्य पुरा तपश्चर्याकाल इव । कश्चन एकः अनिर्वाच्यमहिमा च । शबरः किरातः कुहनाकिरातवेषः शंभुश्च । वनान्ते जलह्रदसमीपे हैमवतारण्यमध्ये च संन्यधात् संनिधिं प्राप्तवान् । दिष्ट्येत्यव्ययं आनन्दे । सोदरैरपीति वा यथाभारतं योजनीयम् । उभयथाप्युपमाश्लेषमित्तिकाभेदाध्यवसायमूलातिशयोक्त्यनुप्राणिता । औपच्छन्दसिकवृत्तम् ॥ ८ ॥

अथेति । अथ कृतः अञ्जलिः नमस्कारः येन तथोक्तेन शबरेण सविनयं निवेदितायां सार्वभौमस्य चक्रवर्तिनः यानि लक्षणानि छत्रकेतुकलशध्वजादिरेखाः तैरुपेतायां अङ्कितायां पदानां पादन्यासानां पङ्क्तौ लक्ष्यमाणैः दृश्यमानैः वनदेवताभिः सलिलमाहर्तुं आनेतुं आहितैः संपादितैः कलशैरिव स्थितैरित्युत्प्रेक्षा । कलशैः कलशाकृतिरेखाभिः अङ्कितः चिह्नितः अवतारपथः सोपानमार्गः यस्य तस्मात् । संगररङ्गे युद्धभुवि प्रयुक्तानां योधैरन्योन्यं प्रहितानां विविधानां आयुधानां सविधे समीपे अभ्यस्तं आवृत्त्या गृहीतं तैक्ष्णं पारुष्यं यैस्तथोक्तानीत्युत्प्रेक्षा । निशातत्वपारुष्ययोरभेदाध्यवसायमूलातिशयोक्त्यनुप्राणिता उक्तोत्प्रेक्षा संसृष्टा च । मारुतेः भीमस्य वचनानि निशम्य श्रुत्वा विशालैः अतिदीर्घैः क्रोधेन भीमवचनश्रवणजनितेन ये निश्वासाः तैः उपरि जलोर्ध्वभागे कोरकिताः संवर्धिताः बुद्बुदानां ये कलकलाः कोलाहलध्वनयः तेषामुदयः आविर्भावः यस्मिंस्तस्मात् त्वरितनाम्नः जलाशयात् महाह्रदात् प्रशस्तः मानः चित्तसमुन्नतिः येषां तेषाम् । मध्य इत्यर्थः । अग्रणीः श्रेष्ठः अतएव

१. 'जातस्य' इति पाठः. २. 'आनीतैः' इति पाठः. ३. 'अङ्कितात्' इति पाठः. ४. 'अधीत' इति पाठः. ५. 'पारुषाणि मारुति' इति पाठः.

सुयोधनो धीरधीर[1]मनास्तादृशेन भीमेन सह भयानकं गदागदिकलहं[2] सरभसमुपचक्रमे ॥

आजगाम स सरस्वतीतटादाजिसीम्नि बलवान्बलस्तदा।
[3]जायते सह यदाख्यया खलु भद्रदेवपदयोः समागमः ॥ ९ ॥
तत्र विस्मयकरं गदाहवं पश्यतोऽस्य सह संमदाश्रुभिः।
पुष्पवृष्टिरुभयोरुपान्तयोः पुष्करात्सुरभिगन्धिरापतत् ॥ १० ॥
प्रविवेद कुलालचक्रवद्भ्रमतोस्तत्र तयोर्द्वयोर्भिदाम्।
न बलो न हरिर्न पाण्डवा न सुरा नाश्वमुखा न चारणाः ॥११॥

---

धीरधीरं महत्यां आपद्यपि अविकृतं मनः यस्य सः सुयोधनः उत्तीर्य तीरं प्राप्य तादृशेन परुषभाषिणा भीमेन सह भयानकं लोकैकभयंकरं गदागदिकलहं गदया गदया प्रवृत्तं युद्धं कर्तुं सरभसं सत्वरम्। न तु विलम्बादित्यर्थः। उपचक्रमे आरब्धवान्। 'कलहायितं युद्धक्रीडाम्' इति क्वाचित्कः पाठः गदादिशब्दनपुंसकत्वभयानकेत्यनुप्रासद्वयानुरूप्येण रमणीयः। अत्र 'यदचेतनोऽपि पादैः स्पृष्टः प्रज्वलति सवितुरिनकान्तः। तत्तेजस्वी पुरुषः परकृतनिकृतिं कथं सहते ॥' इति न्यायात्परुषभाषणश्रवणस्य ह्रदोत्तरणं प्रति तस्य गदागदियुद्धोपक्रमं प्रति हेतुत्वात्पदार्थहेतुककाव्यलिङ्गद्वयमङ्गाङ्गिभावेन संकीर्णं उक्तोत्प्रेक्षासंसृष्टिसंसृष्टं च ॥

**आजगामेति**। तदा भीमदुर्योधनयोर्गदायुद्धसमये बलवान् शौर्यशाली। सः बलः बलरामः सरस्वत्या नाम नद्याः तटात् आजिसीम्नि युद्धदेशे आजगाम प्राप्तवान्। यस्य बलरामस्य आख्यया बलेति संज्ञाशब्देन सह भद्रेति देवेति च पदयोः समागमः बलभद्रः बलदेव इति चोत्तरपदेन संबन्धः। जायते भवति खलु। खलुशब्दो वाक्यालंकारे। स बल इति योज्यम् ॥ ९ ॥

**तत्रेति**। तत्र आजिसीम्नि विस्मयकरं गदाहवं भीमदुर्योधनयोर्गदायुद्धं पश्यतः अस्य बलरामस्य संमदाश्रुभिः आनन्दबाष्पैः सह सुरभिगन्धिः मनोज्ञामोदा पुष्पवृष्टिः पुष्करात् अन्तरिक्षात् उभयोः भीमदुर्योधनयोः उपान्तयोः समीपदेशयोः आपतत् पतति स्म। अत्रानन्दबाष्पवृष्ट्योः साहित्यकथनात्सहोक्त्यलंकारः। 'सहोक्तिः सहभावश्चेद्भासते जनरञ्जनः' इति लक्षणात्। वृत्तं पूर्ववत् ॥ १० ॥

**प्रविवेदेति**। तत्र गदायुद्धे कुलालस्य कुम्भकारस्य चक्रवत् घटजनकमिव भ्रमतोः गदायुद्धरतिविशेषैर्वर्तुलं धावतोर्द्वयोस्तयोः भीमदुर्योधनयोः भिदां अयं

---

१. 'धीर' इति नास्ति क्वचित्. २. 'कलहायितुं' इति पाठः. ३. 'जायते खलु यदाख्ययानिशं' इति पाठः.

मन्नामधारि मृदुलं वसनं विमथ्ना-
त्येतत्सदेत्यतिरुषेव यदूद्वहस्य ।
नेत्रेण सूचितमरेरथ सक्थियुग्मं
चूर्णीचकार गदया श्वसनस्य सूनुः ॥ १२ ॥

तत्राथ तारकमिवाद्रिसुताकुमारो
जित्वा सुयोधनमसौ शिविरं दिनान्ते ।
वर्गः पृथातनुभुवां मधुभित्समेतः
षड्भिर्मुखैर्जनितशङ्खरवो जगाहे ॥ १३ ॥

भूयोऽपि सायमनलाय महःप्रदाने
भासां प्रभोरिव कराद्दिशि विप्रकीर्णैः ।
धूमैरिवाक्षिपथरोधिभिरन्धकारैः
प्रापे कुरुक्षितिभृतां पटमण्डपौघः ॥ १४ ॥

---

दुर्योधनोऽयं भीम इति मिथो वैलक्षण्यम् । बलोऽपि न प्रविवेद, हरिः कृष्णोऽपि न प्रविवेद, पाण्डवाश्च न प्रविविदुः, सुरा अपि न प्रविविदुः, अश्वमुखाः गन्धर्वा अपि न प्रविविदुः, चारणाश्च न प्रविविदुः । अत्रानेकाधिकरणकैकक्रियाभावरूपगुणयौगपद्यात्समुच्चयभेदः । वैतालीयवृत्तम् ॥ ११ ॥

मदिति । अथ एतत् दुर्योधनसविषयुग्मं मम नेत्रस्य नाम संज्ञापदं धरति वाचकत्वसंबन्धेन वहतीति मन्नामधारि । किं च मृदुलं सुकुमारं वसनं सदा विमथ्नाति निष्पीडयति । इत्युक्तप्रकारया अतिरुषा अत्यन्तकोपेनेव स्थितेनेत्युत्प्रेक्षा । यदूद्वहस्य श्रीकृष्णस्य नेत्रेण लोचनेन सूचितं अत्र प्रहरेति ज्ञापितम् अरेः दुर्योधनस्य सक्थ्योः ऊर्वोः युग्मं कर्म श्वसनस्य वायोः सूनुः भीमः गदया चूर्णीचकार । अत्रोक्तोत्प्रेक्षायाः 'नेत्रं वाससि लोचने' इति कोशानुसारेण वस्त्रलोचनयोः श्लेषमित्तिकाभेदाध्यवसायमूलातिशयोक्त्यनुप्राणितत्वात्तयोरङ्गाङ्गिभावेन संकरः । वसन्ततिलकावृत्तम् ॥ १२ ॥

तत्रेति । तत्र वनान्ते अद्रिसुताकुमारः षण्मुखः तारकं नाम राक्षसमिव सुयोधनं जित्वा अथ मधुभिदा समेतः कृष्णेन संगतः असौ पृथातनुभुवां धर्मराजादीनां वर्गः । षट्कमित्यर्थः । षड्भिर्मुखैः जनिताः शङ्खानां पाञ्चजन्यादीनां रवाः येन तथोक्तः सन् । एकत्र कृष्णसहितत्वात्, अन्यत्र स्वयमेव षण्मुखत्वाच्चेति भावः । दिनान्ते सायं शिविरं निवेशं जगाहे प्राप्तवान् । उपमालंकारः । वसन्ततिलकावृत्तम् ॥ १३ ॥

भूय इति । अथ सायं दिनान्ते अनलाय अग्नये महसः तेजसः प्रदाने

---

१. 'प्रमथ्नाति'; 'विमथ्नाति' इति च पाठः.

तस्मिन्काले विचिन्त्य क्षितिपतिमसुभिर्युक्तमासाद्य रङ्गे
तैस्तैराश्वास्य लापैर्निजमपि समरे भावि कृत्यं निवेद्य ।
मुक्तस्तेनार्धमार्गे हरवरमुदितो द्रोणभूश्चापमौर्व्या
धृष्टद्युम्नं निकृत्य स्वसुरपि तनयानस्य चिच्छेद शूरान् ॥ १५ ॥

इत्थं निशीथे भयानकनिजसायकशतधा[१]शकलीकृतद्विषदनेकानीकात्कुरुनायकपटनिकेतनात्स्वभुजाभ्यामिव प्रविष्टकटकाभ्यां कृपकृतवर्मभ्यां सह पुनरपि सरस्तीरमागत्य दुष्करं स्ववृत्तान्तं कथयन्तमश्वत्थामानं [२]प्रति 'अयि सखे, संप्रति मम प्रीतिरेतावती' इत्यभिनेतुमिव तिर्यक्प्रसारितेन बाहुयुगलेन यत्नादाश्लिष्य 'त्वमेव खलु मम प्राणो भवसि' इत्यौपचा[३]रिकं वचनं प्रयुञ्जानं [४]राजानं कोपादिव तदीयाः प्राणास्तदानीमत्याक्षुः ॥

---

वितरणसमये भासां प्रभोः सूर्यस्य करात् किरणात् हस्ताच्च दिवि दिक्ष्विति जात्येकवचनम् । विप्रकीर्णैः व्याप्तैः धूमैरिव स्थितैरित्युत्प्रेक्षा । अक्ष्णोः पन्थानं रुन्धन्तीति अक्षिपथरोधिभिः अन्धकारैः तमोभिः कुरुक्षितिभृतां पाण्डवानां पटमण्डपानां वस्त्रगृहाणां ओघः समूहः भूयोऽपि भृशं प्रापे प्राप्तम् । प्रपूर्वादाप्नोतेः कर्मणि लिट् । वसन्ततिलकावृत्तम् ॥ १४ ॥

**तस्मिन्निति** । तस्मिन् अन्धकाराक्रान्ताखिलदिगन्तरे काले द्रोणभूः अश्वत्थामा रङ्गे युद्धभुवि विचिन्त्य अन्विष्य असुभिः प्राणैः युक्तं क्षितिपतिं दुर्योधनं आसाद्य प्राप्य तैस्तैः आपद्धर्मोचितैः लापैः वाक्यैः आश्वास्य विशोकं कृत्वा समरे रात्रियुद्धे भावि भविष्यत् निजं कृत्यं सर्वपाण्डवहननमपि निवेद्य विज्ञाप्य तेन दुर्योधनेन मुक्तः अनुज्ञातः सन् । अर्धमार्गे मार्गमध्ये हरस्य शंभोः वरेण सर्वानुल्लङ्घ्यत्वात्मकेन मुदितश्च सन् । धृष्टद्युम्नं चापमौर्व्या निकृत्य छित्वा । अस्य धृष्टद्युम्नस्य स्वसा द्रौपदी तस्याः द्रौपद्याः संबन्धिनः शूरान् पुत्रान् उपपाण्डवानपि चिच्छेद । मारयामासेत्यर्थः । स्रग्धरावृत्तम् ॥ १५ ॥

**इत्थमिति** । इत्थं उक्तप्रकारेण निशीथे अर्धरात्रे भयानकैः निजैः सायकैः बाणैः शतधा शकलीकृतं लवशश्छिन्नं खड्गदारितं वा । 'शरे खड्गे च सायकः' इत्यमरः । द्विषतां पाण्डवानां संबन्धि अनेकं असंख्येयं अनीकं सैन्यं यस्मिंस्तस्मात् कुरुनायकस्य धर्मराजस्य पटनिकेतनात् वस्त्रगृहात् प्रविष्टं प्राप्तं कटकं शिबिरं वलयभूषणं च याभ्यां तौ अत एव स्वभुजाभ्यामिव स्थिताभ्यां कृपेण कृतवर्मणा च द्वाभ्यां सह । पुनरपि सरसः त्वरितनाम्नः तीरं आगत्य दुष्करं

---

१. 'शकलित' इति पाठः. २. 'प्रति' इति नास्ति क्वचित्. ३. 'चारिक' इति पाठः.
४. 'तं राजानं' इति पाठः.

कृपस्ततः कुरुपुरीं कृतवर्मा कुशस्थलीम् ।
प्रययौ द्रोणसूनुश्च पाराशर्यतपोवनीम् ॥ १६ ॥

अथ दीप्तिभिरात्मनो विजेतुर्विमतद्रौणिशिरोमणेर्भवित्रीम् ।
सहजास्पदभङ्गमानहानिं खमणिर्द्रष्टुमिवोदयाद्रिमागात् ॥ १७ ॥

तदनन्तरमात्मसोदरसूतमुखाच्छ्रवणकालकूटमपत्यात्ययमधिगम्य विषीदन्त्या याज्ञसेन्या मूर्च्छान्धकारं रत्नदीपालोकेन दूरमुत्सारयितुमुत्सुक इव गुरुसुताहरणाय शताङ्गमधिरुह्य मौर्वीं विस्फारयद्भिर्मघवत्कुमारादिभिर्मांसलितपार्श्वभागो मारुतिस्तपस्यतस्तस्यैवाश्रमैपदभागं प्रतस्थे ॥

---

अन्यैः कर्तुमशक्यं स्वस्य वृत्तान्तं सौप्तिकहननव्यापारं कथयन्तं अश्वत्थामानं प्रति । अयि सखे, संप्रति इदानींतनी मम मदीया प्रीतिः एतावती इयत्परिमाणा इत्युक्तप्रकारेण अभिनेतुं हस्तनिर्देशेन सूचितुमिवेत्युत्प्रेक्षा । तिर्यक्प्रसारितेन बाह्वोर्युगलेन यत्नात् अतिकष्टात् आश्लिष्य त्वमेव मम प्राणो भवसि । खल्विति वाक्यालंकारे । इत्युक्तप्रकारं औपचारिकं प्रश्रयसहितं वचनं प्रयुञ्जानं ब्रुवन्तं राजानं दुर्योधनं कोपात् अन्तरेणास्मान् अश्वत्थामानं प्राणत्वेन वृणोतीत्याकारकादिवेत्युत्प्रेक्षा । तस्य दुर्योधनस्य इमे तदीयाः प्राणाः तदानीं तत्क्षणमेव अत्याक्षुः त्यक्तवन्तः । अत्रातिप्रियत्वेन प्राणत्वेनाध्यवसायमूलातिशयोक्त्यनुप्राणितलाडुक्तोत्प्रेक्षायाः द्वयोरङ्गाङ्गिभावेन संकरः ॥

**कृप इति** । ततः कृपः कुरुपुरीं हास्तिनपुरीं प्रति ययौ । कृतवर्मा कुशस्थलीं द्वारकां प्रति ययौ । द्रोणसूनुः अश्वत्थामा च पाराशरस्य व्यासस्य तपोवनीं आश्रमवनं प्रति ययौ ॥ १६ ॥

**अथेति** । अथ खमणिः सूर्यः दीप्तिभिः स्वकान्तिभिः आत्मनः विजेतुः जयशीलस्य अतएव विमतस्य शत्रोः द्रौणिशिरोमणेः अश्वत्थामशिरोरत्नस्य भवित्रीं भाविनीं सहजस्य जन्मसिद्धस्य आस्पदस्य स्थानस्य अश्वत्थामशिरोरूपस्य भङ्गः भीमकृतः एव मानहानिः तां द्रष्टुमिवेत्युत्प्रेक्षा । उदयाद्रिं आगात् । उदितोऽभूदित्यर्थः । औपच्छन्दसिकवृत्तम् ॥ १७ ॥

**तदिति** । तदनन्तरं आत्मनः सोदरस्य धृष्टद्युम्नस्य संबन्धिनः सूतस्य सारथेः मुखात् वचनात् श्रवणयोः कालकूटम् । कर्णकठोरमिति यावत् । अपत्यानां उपपाण्डवानां अत्ययं नाशं अश्वत्थामकृतं अधिगम्य श्रुत्वा विषीदन्त्याः भृशं शोचन्त्याः याज्ञसेन्याः द्रौपद्याः मूर्च्छामेव अन्धकारं रत्नमेव दीपः तस्यालोकेन तेजसा

---

१. 'सविता' इति पाठः. २. 'ततः परम्' इति पाठः. ३. 'गुरुसुतचूडामणेराहरणाय' इति पाठः. ४. 'पदं प्रतस्थे' इति पाठः.

तत्रागतेषु युधि तेषु तपोधनोऽथ-
मेकोऽपि धीरतरधीरिषुवर्षुकेषु ।
निष्पाण्डवास्तु वसुधेति निजव्रतेन
साकं व्यमुञ्चदभिमन्त्र्य जवादिषीकाम् ॥ १८ ॥
अथ ब्रह्मशिरोऽस्त्रस्य प्रहितस्य किरीटिना ।
योगात्तूलपदस्येव ह्रस्वभावं जगाम सा ॥ १९ ॥
अथाहृतो मारुतिना हठेन भग्नस्य शीर्षाद्गुरुनन्दनस्य ।
दत्तो मणिः पार्षतनन्दनायाः शोकाग्निदाहप्रतिबन्धकोऽभूत् २०

---

दर्शनेन च । दूरं निःशेषं यथा तथा उत्सारयितुं निवारयितुं उत्सुक इवेत्युत्प्रेक्षा । गुरुसुतस्य अश्वत्थाम्नः आहरणाय । आहर्तुमित्यर्थः । 'तुमर्थाच्च भाववचनात्' इति चतुर्थी । शताङ्गं रथं अधिरुह्य मौर्वीं विस्फारयद्भिः टंकारयद्भिः मघवत्कुमारः अर्जुनः आदिः येषां तैः अर्जुननकुलसहदेवैः मांसलिताः पूर्णाः पार्श्वभागाः यस्य सः मारुतिः भीमः तपस्यतः तपः कुर्वतः तस्य पुत्रहन्तुः अश्वत्थाम्न एव आश्रमपदभागं प्रतस्थे प्रस्थितवान् । अत्रोक्तोत्प्रेक्षाया मूर्च्छान्धकारमित्यादिरूपकद्वयोज्जीवितत्वात्तयोरङ्गाङ्गिभावेन संकरः ॥

तत्रेति । तत्र आश्रमपदे आगतेषु इषूणां बाणानां वर्षुकेषु तेषु भीमादिषु युधि धीरतरा अत्यन्तधीरा धीः मनो यस्य तथोक्तः । अतएव स्वयमेकोऽपि सन्नयं तपोधनः अश्वत्थामा जवात् अभिमन्त्र्य इषीकां नाम अस्त्रं अद्यप्रभृति वसुधा भूमिः निष्पाण्डवा पाण्डुसंततिशून्या अस्तु इति । शप्त्वेति शेषः । निजेन व्रतेन साकं तपोबलेन सह व्यमुञ्चत् संत्यक्तवान् । शापस्य तपःक्षयकरत्वादत्रातिधैर्यस्य विशेषणगत्या स्वस्यैकाकित्वेऽप्यनेकेषु युद्धोद्यमं प्रति हेतुत्वात्पदार्थहेतुककाव्यलिङ्गस्य निजव्रतेन साकमिति सहोक्तेश्चाङ्गाङ्गिभावेन संकरः । वसन्ततिलका ॥ १८ ॥

अथेति । अथ किरीटिना अर्जुनेन प्रहितस्य अश्वत्थामास्त्रोपसंहारार्थं प्रयुक्तस्य ब्रह्मशिरोनाम्नः अस्त्रस्य तूलमिति पदं शब्दस्येव योगात् प्रत्याघातात् उत्तरपदत्वेन संबन्धाच्च सा इषीका अस्त्रम् इषीकाशब्दश्च ह्रस्वभावं अल्पत्वं ह्रस्वान्तत्वं च । जगाम प्राप्नोति स्म । तूलपदयोगादिषीकाशब्दः यथा इषीकतूलमिति ह्रस्वान्तो भवति तथा ब्रह्मशिरोऽस्त्रयोगादैषीकास्त्रमुपसंहृतमासीदित्यर्थः । अत्र 'इष्टकेषीकामालानां चिततूलभारिषु' इति अनुशासनाद्वाच्यवाचकयोरभेदाच्चोक्तोपमा प्रसाधनीयेति ध्येयम् ॥ १९ ॥

अथेति । अथ भग्नस्य पराजितस्य गुरुनन्दनस्य अश्वत्थाम्नः शीर्षात् शिरसः मारुतिना भीमेन हठेन बलात्कारेण आहृतः छित्त्वा आनीतः दत्तश्च मणिः चूडारत्नं पार्षतनन्दनायाः द्रौपद्याः शोक एवाग्निः तस्य दाहे कर्मणि प्रतिबन्धकः नाशकः अभूत् । मणेर्दाहप्रतिबन्धकत्वं प्रसिद्धम् । पुत्रघातिनो द्रौणेः शिरःकल्प-

ततः संवर्तसमयसच्छात्रे तादृशि कुरूणामुभयेषामपि संप्रहारे कृष्णावेणीबन्धायुषा सह परिसमाप्ते ।

स्वं दुःशलाशेषमपत्यवर्गं पाण्डोश्च विज्ञाय समस्तशेषम् ।
दृशा सदान्धो जरठो महीपश्चिरं तदाचेतनयापि जज्ञे ॥ २१ ॥

तदानीं विदुरसंजयाभ्यां व्यजनादिभिरुपचारैर्विश्राणितसंज्ञः कुरुभूपतिः'हा सुयोधन, हा दुःशासन'इति बहुधा विलपन्नुत्थाय रणनिहतस्वजनमुखेन्दुस्मरणमात्रादुल्लोलकल्लोलितशोकसिन्धुभिर्बन्धुभिः सह नगरान्निर्गतः 'हे प्राणाः, भवत्समेषु गतेष्वपि यूयमद्यापि न निर्गताः' इति रोषेण प्राणान्बहिरुत्सारयितुमिव हृदि पुनः पुनर्विर-

शिरोमणिच्छेदात्पुत्रशोकं जहावित्यर्थः । अत्र शोकाग्निदाहप्रतिबन्धक इति रूपकातिशयोक्त्योरेकवाचकानुप्रवेशसंकरः । उपजातिः ॥ २० ॥

तत इति । ततः संवर्तसमयस्य प्रलयकालस्य सच्छात्रे सहाध्यायिनि । तद्वदनेकक्षयकर इति यावत् । तादृशि तथाविधे उभयेषां कुरूणां पाण्डवधार्तराष्ट्राणां संबन्धिनि संप्रहारे युद्धे कृष्णायाः द्रौपद्याः वेणीबन्धस्य दुःशासनवधावधिकस्य आयुषा जीवितकालेन सह परिसमाप्ते सतीत्युत्तरेणान्वयः । केशाकर्षिदुःशासनरुधिरतैलसंस्कारेण द्रौपदीवेण्या भीमेन मोचितत्वादिति भावः ॥

स्वमिति । स्वं स्वीयं अपत्यानां दुर्योधनादीनां वर्गं दुःशला पुत्री एकैव शेषः यस्मिंस्तथोक्तं विज्ञाय श्रुत्वा पाण्डोः सोदरस्य अपत्यवर्गं तु समस्ताः पञ्चापि शेषाः यस्मिंस्तथोक्तं च विज्ञाय सदा दृशान्धः जरठः वृद्धः महीपः धृतराष्ट्रः तदा चेतनया अपि अन्धः जज्ञे बभूव । पुत्रशोकाद्द्विषदभ्युदयाच्च सुभृशं मूर्च्छितोऽभूदित्यर्थः । अत्र तादृगुभयविज्ञानस्य धृतराष्ट्रमूर्च्छाहेतुत्वात्पदार्थहेतुककाव्यलिङ्गस्य अन्धत्वमूर्च्छितत्वगुणयौगपद्यात्मकसमुच्चयस्य चैकवाचकानुप्रवेशसंकरः । उपजातिः ॥ २१ ॥

तदानीमिति । तदानीं मूर्च्छासमये विदुरेण संजयेन च द्वाभ्यां व्यजनं तालवृन्तवीजनं आदिर्येषां तथोक्तैरुपचारैः शैत्यसंस्कारैः विश्राणिता प्रापिता संज्ञा चेतना यस्य सः कुरुभूपतिः धृतराष्ट्रः । हेति खेदे । हा सुयोधन हा दुःशासन इत्युक्तप्रकारं बहुधा विलपन् सन् उत्थाय रणे निहतस्य स्वजनस्य मुखेन्दोः स्मरणादेव स्मरणमात्रात् । न तु दर्शनादित्यर्थः । उल्लोलं यथा तथा कल्लोलितः प्रवर्तितः शोक एव सिन्धुः समुद्रः येषां तैः बन्धुभिः सह नगरात् हास्तिनपुरात् निर्गतः सन् । हे प्राणाः, भवद्भिः समेषु प्रियतमेषु गतेषु सत्स्वपि यूयं

१. 'विजिग्ये' इति पाठः. २. 'कुरुभूपतिः' इति नास्ति क्वचित्. ३. 'उल्लोलित' इति पाठः. ४. 'हे प्राणाः' इति नास्ति क्वचित्.

चितकरास्फालनाभिः सविधमागत्य मज्जन्मभूसौन्दर्यप्रातिभट्यसियमाचरतीत्यसहिष्णुतयेव कपोलमकरिकामुन्मूलयन्तं वाष्पप्रवाहं नयनैरुत्सृजन्तीभिरनवरतमस्मांश्चिकुरहस्तान्कुसुमैरामोदभरितान्विदधानाः सुयोधनादयः क पतिता इति गवेषयितुमिव भुवि दूरंविकीर्णैश्चिकुरहस्तैरुपलक्षिताभिः पवनसुतपरिघोपालम्भनपरिपूरितार्थैः विलापैर्दिगन्तरं निरन्तरयन्तीभिः स्नुषाभिः परिवार्यमाणया गान्धारसुतया शनैः शनैरनुगम्यमानः संग्रामभुवमवगाह्य पङ्क्तिशः परिशीलितदीर्घनिद्रेषु पाकशासनमुक्तपारिजातप्रसवपरिमलितकचबन्धेषु प्रवीरेषु तनयेषु निपत्य परितो विलुण्ठन्कुरुभूपतिश्चिरमरोदीत् ॥

---

अद्यापि न निर्गताः इत्युक्तप्रकारेण रोषेण प्राणान् वहिरुत्सारयितुं निर्गमयितुमिवेत्युत्प्रेक्षा । हृदि वक्षसि पुनः पुनः विरचितानि कराभ्यां आस्फालनानि कठिनताडनानि याभिस्ताभिः इयं कपोलमकरिका मम जन्मभुवः नेत्रस्य सौन्दर्येण प्रतिभटस्य सदृशस्य भावं प्रातिभट्यं आचरति इत्युक्तप्रकारया असहिष्णुतया असूययेवेत्युत्प्रेक्षा । सविधं समीपं प्रत्यागत्य कपोले मकरिकां कस्तूर्यादिरचितमीनाकृतिरेखां उन्मूलयन्तं क्षालयन्तं वाष्पप्रवाहं नयनैः उत्सृजन्तीभिः वर्षन्तीभिः । 'तद्भेदाः शिशुमारोद्रशङ्कवो मकरादयः' इत्यमरकोशे तेषां मत्स्यानां भेदाः । अवान्तरजातय इत्यर्थः । अतएव टीकासर्वस्वे 'प्रद्युम्नो मीनकेतनः' इत्यत्र मत्स्यजातित्वान्मीन एव मकर इत्युक्तमिति ध्येयम् । अस्मान् चिकुरहस्तात् कुसुमैः मालतीमल्लिकादिभिः अनवरतं सर्वदा आमोदेन परिमलेन संतोषेण च भरितान् पूर्णान् विदधानाः कुर्वाणाः सुयोधनादयः क कुत्र पतिताः इत्युक्तप्रकारेण । प्रेम्णेति शेषः । गवेषयितुं अन्वेषयितुं इवेत्युत्प्रेक्षा । भुवि दूरं विकीर्णैः स्रस्तैः चिकुरहस्तैः केशपाशैः उपलक्षिताभिः संगताभिः पवनसुतपरिघस्य भीमगदाया उपालम्भने निन्दायां विषये परिपूरितः अर्थः हा कठोरे, किमकाण्डेऽस्माकमियती विपत्तिर्भवत्या प्रत्यानीतेत्यादिरूपं अभिधेयं यैस्तैः विलापैः परिदेवनशब्दैः दिशां दशानां अन्तरं मध्यभागं निरन्तरयन्तीभिः सान्द्रीकुर्वतीभिः स्नुषाभिः पुत्रपत्नीभिः परिवार्यमाणया गान्धारसुतया गान्धार्या

---

१. 'आगम्य' इति पाठः. २. 'आचरन्ति' इति पाठः. ३. 'चिकुरहस्तान्' इति नास्ति क्वचित्. ४. 'तूर्णमवतीर्णैः' इति पाठः. ५. 'पूरितार्थैः' इति पाठः. ६. 'परिदेवनरवैः' इति पाठः. ७. 'अभिगम्यमानः' इति पाठः. ८. 'निपतितेषु परि' इति पाठः. ९. 'परिमुक्त' इति पाठः. १०. 'कुसुम' इति पाठः. ११. 'अपि परिलुण्ठन्स कुरुभूपः' इति पाठः.

रुष्टं पितृव्यममुमागतमाजिभूमौ
द्रष्टुं भयाकुलधियाथ युधिष्ठिरेण ।
अभ्यर्थितौ हरिपराशरनन्दनौ द्रा-
गाजग्मतुस्तमपनीतरुषं विधातुम् ॥ २२ ॥

तं व्यासकृष्णावभितप्यमानं शोकेन शान्तं सुतरां व्यधत्ताम् ।
नभोनभस्याविव दाववृक्षं दन्दह्यमानं दवपावकेन ॥ २३ ॥

अथ सहजैः सह[1] महाहवभुवमासाद्य[2] 'स्वामिन्, अनेकविधापराधकरणेन तव शापपात्रं जनोऽयमागतः[3]' इति चरणयोः प्रणमन्तं[4]-

---

शनैः शनैः पुत्रशोकभरान्मन्दं मन्दं अनुगम्यमानश्च सन् । संग्रामभुवं युद्धभुवं अवगाह्य प्रविश्य । पङ्क्तिशः परिशीलिता अभ्यस्ता दीर्घनिद्रा मरणं यैस्तेषु । पाकशासनेन इन्द्रेण मुक्तैः शौर्याभिनन्दनेन वृष्टैः पारिजातप्रसवैः परिमलिताः संजातपरिमलाः कचबन्धाः धम्मिल्लाः येषां तेषु प्रवीरेषु शूरोत्तमेषु तनयेषु दुर्योधनादिषु निपत्य परितो विलुण्ठन् विवर्तयन् सन् । चिरं अरोदीत् रोदिति स्म । रुदेः कर्तरि लुङ् ॥

**रुष्टमिति** । अथ आजिभूमौ युद्धरङ्गे आगतं किं च रुष्टं पुत्रहननादात्मनि क्रुद्धं अतएव पितृव्यं पितुर्भ्रातरं अमुं धृतराष्ट्रं द्रष्टुं भयेन आकुला धीः यस्य तेन युधिष्ठिरेण अभ्यर्थितौ तत्कोपशमनाय प्रार्थितौ हरिः श्रीकृष्णः पराशरनन्दनः व्यासश्च द्वौ । तं धृतराष्ट्रं अपनीता निरस्ता रुट् क्रोधः यस्य तथोक्तं विधातुं कर्तुं द्राक् सत्वरं आजग्मतुः आगतवन्तौ ॥ २२ ॥

**तमिति** । व्यासश्च कृष्णश्च द्वौ । शोकेन पुत्रदुःखेन अभितप्यमानं तं धृतराष्ट्रम् । नभोनभस्यौ श्रावणभाद्रपदमासौ दवपावकेन वनानलेन दन्दह्यमानं अत्यन्तं दुह्यमाणम् । यङन्ताद्दहतेः कर्मणि लटः शानच् । दाववृक्षं वनतरुमिव । सुतरां शान्तं गतक्रोधं निर्वापितवनानलं च व्यधत्तां चक्रतुः । विपूर्वाद्धातेः कर्तरि लुङ् । 'नभाः श्रावणिकश्च सः', 'स्युर्नभस्यप्रौष्ठपदभाद्रभाद्रपदाः समाः', 'दवदावौ वनारण्यवह्नी' इति क्रमेण सर्वत्रामरः । उपमालंकारः । उपजातिः ॥ २३ ॥

**अथेति** । अथ क्रोधशमनानन्तरं युधिष्ठिरः सहजैः भीमादिभिश्चतुर्भिः सह महतः लोकोत्तरस्य आहवभुवं युद्धदेशं आसाद्य प्राप्य । हे स्वामिन् महाप्रभो, अनेकविधानां अपराधानां करणेन हेतुना तव शापपात्रं अयं पुरोवर्ती जनः धर्मराजः आगतः इत्युक्तप्रकारम् । उक्त्वेति शेषः । चरणयोः प्रणमन्तं नमस्कुर्वन्तं आत्मानं प्रथमतः आदौ मृदुलं लघुस्पर्शं यथातथा आलिङ्गितवन्तं पश्चात् अनन्तरं भावज्ञेन आलिङ्गनेन भीमं पुत्रहन्तारं भस्मीकरोमि इति धृतराष्ट्राशय-

---

१. 'अथ' इति पाठः. २. 'सममाहवभुवमागम्य' इति पाठः. ३. 'अयं जनः' इति पाठः. ४. 'पतन्तम्' इति पाठः. ५. 'धर्मात्मजं' इति पाठः.

त्मानं प्रथमतो मृदुलमालिङ्गितवन्तं पश्चाद्भावज्ञेन मुकुन्देन पुरःस्थापितेन लोहभीमसेनेन सह निजवैरमपि चूर्णीकृतवन्तं प्रज्ञादृशं पुरस्कृत्य स्मृतबहुलकरणीयजातो युधिष्ठिरः पुरा भगीरथ इव प्रेतभूयंगताय सर्वस्मै ज्ञातिजनाय निर्मलैर्निलिम्पनिम्नगासलिलैर्निवापाञ्जलिनिर्वापणं विधिवदेव निर्वर्तयामास[1] ॥

शुभाब्धिवीचीरिव[2] तोरणावलीस्ततो वहन्तीं ततवाद्यनिस्वनाम् ।
हरिं पुरोधाय समं सहोदरैरविक्षदात्मीयपुरीं[3] युधिष्ठिरः ॥ २४ ॥
वलग्नसूत्रै[4]र्द्रुपदात्मजाया वितानिते धाम्नि स तत्र चेलैः ।
स्थित्वा पितृव्यस्य दिनं तदेकं परेऽह्नि पार्थः प्रययौ स्वगेहम् ॥२५॥

---

विदा मुकुन्देन श्रीकृष्णेन पुरः आलिङ्गनदेशे स्थापितेन लोहमयेन भीमसेनेन सह । निजं वैरं पुत्रवधजन्यं विरोधमपि चूर्णीकृतवन्तम् । द्वयमपि नाशितवन्तमित्यर्थः । प्रज्ञादृशं अन्धं धृतराष्ट्रं पुरस्कृत्य संमान्य । स्मृतं चिन्तितं बहुलानां अनेकेषां करणीयानां अग्रे कर्तव्यकर्मणां जातं वृन्दं येन तथोक्तः सन्नतएव प्रेतभूयं गताय । मृतायेत्यर्थः । सर्वस्मै ज्ञातिजनाय बन्धुलोकाय । पुरा कृतयुगे भगीरथ इव । निर्मलैः निलिम्पनिम्नगायाः गङ्गायाः सलिलैः जलैः कृताः निवापाञ्जलयः अञ्जलिपरिमिततर्पणोदकानि येन तथोक्तः सन् । निर्वापणं संचयनं विधिवत् यथाशास्त्रमेव निर्वर्तयामास कृतवान् ॥

**शुभेति** । ततः युधिष्ठिरः । शुभानि कल्याणान्येव अब्धिः समुद्रः तस्य वीचीः तरंगाणीव स्थिताः तोरणानां पल्लवपुष्पमणिवस्त्रादिप्रोतगृहद्वारस्तम्भादिघटितयन्त्रविशेषाणां आवलीः पङ्क्तीः वहन्तीम् । तताः विस्तृताः वाद्यानां भेरीमृदङ्गादीनां निस्वनाः यस्यां तां आत्मन इमां आत्मीयां पुरीं हास्तिनपुरं हरिं पुरोधाय अग्रे कृत्वा सहोदरैः भीमादिभिः समं अविक्षत् प्रविष्टवान् । विशतेः कर्तरि लुङ् । च्लेः 'शल इगुपधादनिटः क्सः' इति क्सः । वंशस्थम् ॥ २४ ॥

**वलग्नेति** । तत्र पुरे स पार्थः युधिष्ठिरः द्रुपदात्मजायाः द्रौपद्याः वलग्नसूत्रैः काञ्चीगुणैः चेलैः दुःशासनाकृष्टैः वस्त्रैश्च । वितानिते संजातोल्लोचे । इति दुर्योधनदौरात्म्योक्तिः । पितृव्यस्य धृतराष्ट्रस्य धाम्नि गृहे तत्प्रवेशोपलक्षितं एकं दिनं स्थित्वा परेऽह्नि दिने स्वं आत्मीयं गेहं गृहं प्रययौ प्रविष्टवान् । शत्रुजयलब्धस्य राज्ञामभ्यर्हितत्वात्परेह्नीत्युक्तम् । उपजातिः ॥ २५ ॥

---

१. 'निवर्तयामास' इति पाठः. २. 'सुधाब्धि' इति पाठः. ३. 'पुरं' इति पाठः.
४. 'सूत्रैः' इति पाठः.

ततः ।

राज्याभिषेकसलिलादिव संगतं द्रा-
गावर्तमुद्वहति मूर्धनि धर्मसूनोः ।
कृष्णादयः शुभगुणे कृतिनो मुहूर्ते
हैमं व्यधुर्मुकुटमुज्ज्वलरत्नजालम् ॥ २६ ॥

द्विजप्रणामेषु नृपस्य लग्ना भूरेणुराजिर्भुजसीम्नि रेजे ।
एकाधिकद्वादशहायनेषु क्षितिः कृशाङ्गी विरहादिवास्य ॥२७॥

तदानीमेव पराशरसुतविदुरसंजयैः सह संभाषमाणं रमारम-णमग्रतो निधाय सविनयं युयुत्सुना दीयमानहस्तावलम्बो भूभार-लघुकरणेन प्रीयमाणैर्दिग्वारणैः प्रेषितमिव महान्तं कंचिदौपवा-ह्यमधिरूढः शशिमण्डलेन शर्वरीप्रथमयाम इव धवलातपत्रेण परि-ष्क्रियमाणोपरिभागो लालनवशेन पार्श्वयोरागत्य प्रमोदतरलपक्ष्मपु-

---

तत इत्युत्तरेणान्वयः ।

**राज्येति** । ततः कृतिनः कर्तव्यनिपुणाः कृष्णादयः द्राक् सत्वरम् । राज्ये अभिषेकस्य पट्टाभिषेकस्य संबन्धिनं सलिलात् संगतमिव स्थितं आवर्तं चक्रवर्ति-लक्षणं सव्यगतिचक्राकृतिकेशसंस्थानविशेषं जलभ्रमिं च । उद्वहति बिभ्रति धर्म-सूनोः युधिष्ठिरस्य मूर्धनि शिरसि । उज्ज्वलं रत्नानां पद्मरागादीनां जालं समूहः यस्मिंस्तथोक्तम् । हेम्नो विकारं हैमं मुकुटं किरीटम् । शुभाः गुणाः चन्द्रताराब-लादयः यस्मिंस्तथोक्ते मुहूर्ते लग्ने व्यधुः निहितवन्तः । वसन्ततिलका ॥ २६ ॥

**द्विजेति** । द्विजेभ्यः व्यासादिभ्यः प्रणामेषु । साष्टाङ्गनमस्कारकालेष्वित्यर्थः । नृपस्य युधिष्ठिरस्य भुजयोः सीम्नि देशे । लग्ना भूरेणुराजिः एकः हायनः अधिकः येषां तेषु द्वादशसु हायनेषु । त्रयोदशसंवत्सरेष्वित्यर्थः । अस्य नृपस्य विरहात् वियोगाद्धेतोः कृशाङ्गी क्षितिः भूमिरिवेत्युत्प्रेक्षा । रेजे रराज । उपजातिः ॥२७॥

**तदानीमिति** । तदानीं किरीटधारणद्विजप्रणामसमनन्तरमेव । पराशरसु-तेन व्यासेन विदुरेण संजयेन च त्रिभिः सह संभाषणमाणं योगक्षेमार्थं मन्त्र-यमाणं रमारमणं श्रीकृष्णं अग्रतो निधाय पुरस्कृत्य । युयुत्सुना धार्तराष्ट्रेण वैश्यापुत्रेण सविनयं यथा तथा दीयमानः हस्तावलम्बः यस्य तथोक्तः सन् । भूभारस्य आत्मीयस्य लघुकरणेन मोचनेन हेतुना प्रीयमाणैः तुष्यद्भिः दिक्षु वारणैः ऐरावतादिभिः प्रेषितं उपायनीकृतमिव स्थितमित्युत्प्रेक्षा । महान्तं कंचित् अनुपमं औपवाह्यं राजवाह्यं मदगजं अधिरूढः सन् । 'राजवाह्यस्त्वौ-पवाह्यः' इति गजविशेषपर्यायेष्वमरः । शशिमण्डलेन चन्द्रबिम्बेन शर्वर्याः

---

१. 'न्यधुः' इति पाठः. २. 'विधाय' इति पाठः. ३. 'बीभत्सुना' इति पाठः. ४. 'करणोपकारेण' इति पाठः. ५. 'कंचिद्विप्रमौप' इति पाठः. ६. 'शरद्राकाशर्वरी' इति पाठः. ७. 'आगम्य' इति पाठः.

टाभ्यां मरालदंपतीभ्यां चतुर्मुख इव चामराभ्यामुपवीज्यमानो हर्म्यशिखरावलम्बिनीनां पुरनितम्बिनीनां कपोलफलकस्खलनदूरविप्रकीर्णैरानन्दबाष्पबिन्दुमुकुलैरिव लाजाञ्जालिभिरवकीर्यमाणः पुरःसरविविधवाद्यगुरुजनशिष्यायमाणगवाक्षपरम्परां तां नगरीं प्रदक्षिणीकृत्य द्वारभुवमवतीर्णो निजमणितिलकप्रतिबिम्बानिव दीपाङ्कुरान्कनकपात्रमध्ये वहन्तीभिर्वारसीमन्तिनीभिर्विरचितारात्रिकमङ्गलः पाण्डुसूनुर्निबिडवितानमाल्यधूपपरिमलसुरभिले मण्डपे कुरुकुलक्रमागतं सर्वतोभद्रं नाम सिंहासनमध्यवात्सीत् ॥

---

रात्र्याः प्रथमो याम इव । धवलेन आतपत्रेण छत्रेण परिच्छिद्यमाणः उपरिभागः मूर्धोर्ध्वदेशः आकाशप्रदेशश्च यस्य तथोक्तः सन् । लालनवशेन पोषणवात्सल्यवशेन आगत्य समीपं प्राप्य पार्श्वयोरुभयोः प्रमोदेन तरले चलती पक्षपुटे याभ्यां ताभ्यां मरालदंपतीभ्यां हंसजायापतीभ्यां उपवीज्यमानः । चतुर्मुखः ब्रह्मेव चामराभ्यां उपवीज्यमानः सन् । हर्म्याणां धनिकगृहाणां शिखरेषु अवलम्बिनीनां आरूढानां पुरे नितम्बिनीनां अङ्गनानां संबन्धिभिः कपोलौ फलके इव तयोः स्खलनेन दूरं विप्रकीर्णैः विक्षिप्तैः आनन्दबाष्पबिन्दवो मुकुलानीव तैरिव स्थितैः लाजाञ्जलिभिः अवकीर्यमाणः सन् । पुरःसराणां पुरोगाणां विविधानां ततसुषिरघननद्धरूपाणां वाद्यानां वीणावेणुमृदङ्गादीनामेव गुरुजनानां शिष्यवदाचरन्ती तदुक्तशब्दपुनरुच्चारयित्री शिष्यायमाणा गवाक्षाणां परम्परां यस्यां तथोक्ताम् । प्रतिध्वनद्गवाक्षामिति यावत् । तां नगरीं पुरीं पूर्वोक्तां प्रदक्षिणीकृत्य । द्वारभुवम् । राजगृहद्वारभाग इत्यर्थः । अवतीर्णः औपवाह्यादवरूढः सन् । निजानां मणिमयानां च तिलकानां च प्रतिबिम्बानिव स्थितान् दीपाङ्कुरान् कनकपात्राणां मध्ये वहन्तीभिः वारसीमन्तिनीभिः वेश्याभिः विरचितं आरात्रिकमङ्गलं नीराजनशुभकरं यस्य तथोक्तः सन् । पाण्डसूनुः निबिडानां सान्द्राणां वितानेषु उल्लोचेषु माल्यानां धूपानां गृहसंस्कारधूपानां च परिमलैः सुरभिले सुगन्धिनि मण्डपे आस्थाने कुरूणां राज्ञां कुले क्रमात् पित्रनन्तरं पुत्र इति रूपात् आगतं प्राप्तं सर्वतोभद्रं नाम सिंहासनं अध्यवात्सीत् आरूढवान् । उत्प्रेक्षितोपमासंसृष्टिः ॥

---

१. 'पुर' इति नास्ति क्वचित्. २. 'फलक' इति नास्ति क्वचित्. ३. 'मङ्गलवाद्य' इति पाठः. ४. 'पुरीम्' इति पाठः. ५. 'बिम्बानीव दीपाङ्कुराणि' इति पाठः. ६. 'आर्तिक्य' इति पाठः. ७. 'सुरभिते' इति पाठः. ८. 'क्रमादागतं' इति पाठः.

सौधं कदाचिदधिरुह्य समं सुहृद्भि-
भूपश्चिराद्विरहितस्य पुरस्य तस्य ।
वापीषु वीथिषु वनीषु चतुष्पथेषु
नृत्यालयेषु च निमज्जयति स्म दृष्टिम् ॥ २८ ॥

तदानीं खलु ।

क्षोणीं कोशगृहाणि गोधनततिं घोटान्रथान्कुञ्जरा-
नन्यां संपदमप्यदात्पणमिषादस्माकमीशाय यः ।
तादृक्षः शकुनेः करो विजयतामित्यालपन्तीः शुकी-
रुद्याने स[1] निशम्य धर्मतनयो मन्दं जहासानुजैः ॥ २९ ॥

कुन्त्या[2] पाण्डोस्तनूजः सुतशतविरहादन्तरत्यन्तमार्तं
भक्त्या साकं पितृव्यं प्रतिदिनमनुजैरग्रतः स्थापयित्वा ।
कृत्वाधस्तात्कुशाग्रं विजितमिव धिया प्राञ्जलिः सर्वधर्मा-
न्भीष्माद्वर्णाश्रमाणामविकलमशृणोत्स्वास्पदं गन्तुमिच्छोः ॥ ३० ॥

---

सौधमिति । कदाचित् भूपः युधिष्ठिरः सौधं राजगृहचन्द्रशालां सुहृद्भिः समं अधिरुह्य चिरात् विरहितस्य आत्मना वियुक्तस्य तस्य पुरस्य हास्तिनस्य संबन्धिनीषु वापीषु दीर्घिकासु वीथिषु वनीषु उद्यानेषु चतुष्पथेषु शृङ्गाटकेषु नृत्यालयेषु नाट्यशालासु च दृष्टिं निमज्जयति स्म प्रसारितवान् । वसन्ततिलका ॥ २८ ॥

तदानीं खलु वीक्षणसमय एवेत्युत्तरेणान्वयः ॥

क्षोणीमिति । यः शकुनिकरः द्यूतशौण्डः अस्माकं ईशाय दुर्योधनाय पणस्य द्यूतग्लहस्य मिषात् क्षोणीं चतुःसमुद्रवलयिताम् । धर्मराजस्येति शेषः । कोशगृहाणि धनगेहानि गवामेव धनानां ततिं समूहं घोटान् अश्वान् रथान् कुञ्जरान् गजान् अन्यां उक्तातिरिक्तां संपदं रत्नाम्बरादिकामपि अदात् दत्तवान् । तादृक्षः उक्तप्रभावः तादृशः शकुनेः करः विजयतां सर्वोत्कर्षेण वर्तताम् इत्युक्तप्रकारं उद्याने आलपन्तीः शुकीः कीराङ्गनाः निशम्य श्रुत्वा । अथ धर्मतनयः अनुजैः समं मन्दं जहास हसितवान् । द्यूतेनाप्ययमहो धन्यंमन्यता धिगेनं कुलाधममिति हासप्रकारः । शार्दूलविक्रीडितम् ॥ २९ ॥

कुन्त्येति । पाण्डोस्तनूजः धर्मराजः दिने दिने प्रतिदिनं कुन्त्या अनुजैः भीमादिभिः साकं भक्त्या सुतानां शतेन विरहाद्धेतोः अन्तः मनसि अत्यन्तं आर्तं खिन्नं पितृव्यं धृतराष्ट्रं अग्रतः स्थापयित्वा सर्वेषु कार्येषु पुरस्कृत्य ।

---

१. 'अथ' इति पाठः. २. 'कृतज्ञः पाण्डवोऽसौ' इति पाठः.

आ लङ्कायास्तदनु सहजैरा हिमाद्रेर्जितश्रीः
शौरेर्दोष्णा घटितनिजदोर्धर्मभूर्वेदिपार्श्वे ।
साहस्रीणां शतमखदृशामादधानोऽभ्यसूया-
मन्याहक्षं नियमपरधीराजहाराश्वमेधम् ॥ ३१ ॥

राज्ञां मौलिपरम्परां चरणयोः पाणौ प्रदानश्रियं
बुद्धौ राजनयोदयं हृदि कृपां सत्यं च जिह्वाञ्चले ।

---

धिया सूक्ष्मबुद्ध्या विजितमिव स्थितमित्युत्प्रेक्षा । कुशाग्रं कुशास्तरणं अधस्तात् कृत्वा तत्रोपविश्य अधःकृत्य चेत्यर्थः । प्रबद्धः अञ्जलिः येन तथोक्तः सन् । स्वस्य वसूनामन्यतमस्य आस्पदं स्थानं गन्तुमिच्छोः भीष्मात् वर्णानां ब्राह्मणादीनां आश्रमाणां ब्रह्मचर्यादीनां च संबन्धिनः सर्वान् धर्मान् आचारिकान् । अविकलं समग्रं यथातथा अश्रृणोत् श्रुतवान् । अत्र अश्रृणोदिति स्रग्धरावृत्ते 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्' इति लक्षणके श्रु इति संयुक्तपरमकारस्य गुरुतया नगणस्य भङ्गो नाशङ्कनीयः । श्रुकारस्योच्चारणविशेषेण लघुत्वाक्षतेः । तदुक्तं छन्दःप्रकाशे—'यदा तीव्रप्रयत्नेन संयोगादेरगौरवम् । न छन्दोभङ्ग इत्याहुस्तददोषाय सूरयः ॥' इति । उदाहरन्ति च 'प्राप्तनाभिह्रदमज्जनमासां' इति स्वागतादौ माघादय इति ॥ ३० ॥

**आ लङ्काया इति** । तदनु सहजैः भीमादिभिः आ लङ्कायाः लङ्कामारभ्य आ हिमाद्रेः हिमशैलपर्यन्तम् । जिता वशीकृता श्रीः राज्यलक्ष्मीः यस्य तथोक्तः । शौरेः श्रीकृष्णस्य दोष्णा हस्तेन सह घटितः निजः दोः हस्तः यस्य तथोक्तः धर्मभूः युधिष्ठिरः नियमे अश्वमेधदीक्षायां परा आसक्ता धीः मनो यस्य तथोक्तः सन् । अतएव वेदेः यज्ञीयायाः पार्श्वे दक्षिणे । स्थित इति शेषः । अन्याहक्षं असदृशम् । अतएव अश्वमेधं नाम क्रतुं साहस्रीणां सहस्रसंख्याकानां शतमखस्य दृशां इन्द्रनेत्राणां अभ्यसूयां ईर्ष्याविशेषं आदधानः कुर्वाणः सन् । आजहार संपादितवान् । 'परवृद्धिमत्सरि मनो हि मानिनाम्' इति न्यायादिति भावः । अत्र नियमासक्तेर्विशेषणगत्या अश्वमेधाहरणहेतुत्वात्काव्यलिङ्गभेदः । मन्दाक्रान्ता ॥ ३१ ॥

**राज्ञामिति** । असौ धर्मतनूभवः धर्मराजः चरणयोः राज्ञां नानादेश्यानां मौलीनां किरीटानां परम्परां पङ्क्तिं कुर्वन्सन् । इति सर्वत्र योज्यम् । पाणौ प्रकर्षेण दानस्य श्रियं लक्ष्मीम्, बुद्धौ राजनयस्य राजनीतेः उदयं सार्वदिकस्फुरणम्, हृदि कृपां मनसि भूतदयाम्, जिह्वाञ्चले रसनाग्रे । वाचीति यावत् । सत्यम्, बाहौ सागरमेखलां चतुःसमुद्रवलयितां वसुमतीं, भूमिं, मस्ते शिरसि किरीटं च कुर्वन्सन् । मुदा संतोषेण वात्सल्यातिशयेन वा । प्रजाः चिरं

---

१. 'संदधानो' इति पाठः.

बाहौ सागरमेखलां वसुमतीं मस्ते किरीटं मुदा
कुर्वन्धर्मतनूभवश्चिरमसौ गोपायति स्म प्रजाः ॥ ३२ ॥

इत्यनन्तभट्टकविकृतौ चम्पूभारते द्वादशः स्तबकः ।

---

गोपायति स्म रक्षितवान् । अत्र 'प्रजा स्यात्संततौ जने' इति कोशात् प्रजाशब्दो राज्ञः पुत्रवात्सल्यं जनेषु ध्वनयति । अत्रैकाधिकरणानेकक्रियायौगपद्यात्समुच्चयभेदः ॥ ३२ ॥

अथ काव्यनामस्वनामाख्यानपूर्वकं काव्यस्य परिसमाप्तिं कविः कथयति—

इतीति । इतिशब्दः परिसमाप्तिवचनः । अनन्तभट्ट इति कविनाम । चम्पूभारत इति काव्यनाम । अनन्तभट्टनामककविसंबन्धिचम्पूभारतनामकप्रबन्धघटकद्वादशसंख्यापूरकग्रन्थोच्छ्वासापरपर्यायस्तबकः परिपूर्तिभासुर इति वाक्यार्थः ॥

दिगन्तरलुठत्कीर्तिरनन्तकविकुञ्जरः ।
प्राणैस्तुल्यं सरस्वत्याः प्राणैषीच्चम्पुभारतम् ॥ १ ॥

उन्मीलदम्बुजकदम्बकसौरभीणा-
मुन्नृत्यदीशमुकुटीतटिनीसखीनाम् ।
आचान्तवैरियशसाममृतोर्मिलानां
वाचामनन्तसुकवेर्वसुधैव मूल्यम् ॥ २ ॥

इति चम्पूभारतकाव्यं समाप्तम् ॥

---

दिगन्तरेति । दिशां दशानां अन्तरे लुठन्ती लसन्ती कीर्तिः साहित्यकवित्वनैयत्यविद्वत्त्वरप्रख्यातिर्यस्य तथोक्तः । अनन्तो नाम कविकुञ्जरः कविश्रेष्ठः । 'स्युरुत्तरपदे व्याघ्रपुंगवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः ॥' इत्यमरः । सरस्वत्याः वाग्देव्याः प्राणैस्तुल्यं निजवैभवसुभगंभावुकत्वेन प्राणेभ्योऽपि प्रियतमं चम्पुमयं गद्यपद्यात्मकं भारतं भरतवंश्यमहाराजचारित्रप्रख्यापकप्रबन्धं प्राणैषीत् रचितवान् । प्रपूर्वान्नयतेः कर्तरि लुङ् ॥ १ ॥

उन्मीलदिति । उन्मीलत् अम्बुजकदम्बकस्य पद्मवृन्दस्येव सौरभ्यं यासां तासाम् । तद्वदत्यानन्दकराणामिति यावत् । उन्नृत्यतः उच्चैस्ताण्डवं कुर्वतः ईशस्य शंभोः मुकुट्यां किरीटे तटिन्याः गङ्गायाः सखीनाम् । जङ्घालतोद्वेलतानैर्मल्यादिना सदृशीनामित्यर्थः । आचान्तानि चुलुकितानि वैरिणां पण्डितंमन्यानां यशांसि तत्तुल्यसामाजिकसभाजनजन्यप्रख्यातयः याभिस्तासां अमृतस्येव ऊर्मयः प्रवृद्धयः आसु सन्तीति अमृतोर्मिलानां अनन्तस्य नाम सुकवेः कविराजस्य वाचां चम्पूभारतमयीनां मूल्यं क्रयणार्हं द्रव्यम् । तुलारोपणार्हमिति यावत् । वसूनि धनानि असंख्येयानि गर्भे दधातीति वसुधा तादृशी भूरेव भवति । नान्येत्यर्थः । अत्र उन्मीलदित्यादिविशेषणद्वये वृत्त्यनुप्रासोपमयोः एकवाचकानुप्रवेशसंकरौ आचान्तेत्यादिविशेषणे पाननिरसनयोरभेदातिशयोक्त्या वैरियशसां क्षीरत्वेन वाचां हंसीत्वेन रूपणप्रतीत्या अलंकारेणालंकारध्वनिः । अमृतेति विशेषणे उपमालंकार इत्येषां तिलतण्डुलन्यायेन स्फुटावगम्यभेदकत्वात्संसृष्ट्यलंकारः ॥ २ ॥

इति श्रीसदाशिवपदारविन्दवन्दनकन्दलितानन्दसान्द्रस्य कुरविकुलचन्द्रस्य
रामकवीन्द्रस्य कृतौ चम्पूभारतव्याख्याने लास्याख्याने
द्वादशस्तवकविवरणं समाप्तम् ।

---

१. 'वसुधाप्यमूल्यम्' इति पाठः.



...ತ್ರಪೂ ಮಹತ್ವದ್ದೇ ಆಗಿತ್ತು. ವಿಮಾನ ದೆಹಲಿಗೆ ಮುಟ್ಟುವ ...ನ್ನ ...ಖಿಡ್ ಕೇಳಿದರು: "ಮುಖರ್ಜಿ ರಾಜೀವ್ ಪ್ರಧಾ...ಮಾಡಬೇಕೆಂಬುದು ನಿಮ್ಮ ಇಚ್ಛೆಯ ?" ಆಗ ಹೇಳಿದ ...ತ್ತರವನ್ನು ಮುಖರ್ಜಿ ಹೀಗೆ ನೆನಪಿಸುತ್ತಾರೆ: "ರಾಜೀವ್ ...ನಾ ಆಗಿ ಪ್ರಮಾಣವಚನ ಸ್ವೀಕರಿಸುವುದೇ ಉತ್ತಮ. ...ರು ಪ್ರಧಾನಿಯಾಗುವವರೆಗೆ ಇಂದಿರಾ ನಿಧನ ವಾರ್ತೆ...ನ್ನು ಸರ್ಕಾರಿ ಮಾಧ್ಯಮಗಳು ಬಿತ್ತರಿಸಲೇಬಾರದು". ಆಗ ...ಷ್ಟಪತಿ ಗ್ಯಾನಿ ಝೈಲ್‌ಸಿಂಗರು ದೇಶದಲ್ಲಿಯೇ ಇರಲಿಲ್ಲ. ...ರು ಬರುವವರೆಗೆ ರಾಜೀವ್ ಪ್ರಮಾಣವಚನ ಆಗುವಂತೇ ...ಲ್ಲವಲ್ಲ !

...ಮುಖರ್ಜಿ ಮಾತಿಗೆ ವಿಮಾನದಲ್ಲಿದ್ದವರೆಲ್ಲ ಒಪ್ಪಿಗೆ ...ಸಿದರು.

ವಿದೇಶ ಧುರೀಣರಿಗೆ ನಾನೆ ದಾರುಣ ವಾರ್ತೆಯನ್ನು ತಿಳಿಸಿ ಅವರ ಆಗಮನಕ್ಕೆ ಸಜ್ಜುಗೊಳಿಸಿದೆಯೆಂದು ಅವರು ಹೇಳುತ್ತಾರೆ.

## ಆದಷ್ಟು ಬೇಗ

ನೆಹರು ತೀರಿಹೋದ ಮೇಲೆ ಹಂಗಾಮಿ ಪ್ರಧಾನಿಯಾಗಿದ್ದ ನಂದಾ ಅವರು ಒಮ್ಮೆಲೆ ಪ್ರಧಾನಿ ಕಚೇರಿಯಲ್ಲಿ ಪಂ. ನೆಹರೂರ ಕುರ್ಚಿ ಮೇಲೆ ಕುಳಿತುಬಿಟ್ಟಾಗ ಅಲ್ಲಿದ್ದವರೆಲ್ಲ ದಂಗಾಗಿ ಹೋಗಿದ್ದರು. ಆದರೆ ಈ ಕರಾಳ ಬುಧವಾರದಂದು ಆ ಖಾಲಿ ಕುರ್ಚಿ ಆದಷ್ಟು ಬೇಗ ಭರ್ತಿಯಾಗುವಂತೆ ಮಾಡುವುದು ಅಗತ್ಯವಾಗಿತ್ತು. ಯಾರಿಗೂ ಶಿಷ್ಟಾಚಾರದ ಕಡೆಗೆ ಗಮನವಿರಲಿಲ್ಲ.

ಇ-ಇಂಡಿಯ ರಾಜೀವ್ ವೈದ್ಯ ವಿಜ್ಞಾನ ಸಂಸ್ಥೆಗೆ ಬಂದಾಗ ಕಮಲನಾಥ ಶೀತಲ ಮೌನದಿಂದಲೆ ಸ್ವಾಗತಿಸಿದರು. ನಂತರ ನಾನು ಮುಖರ್ಜಿ, ಧವನ್ ಮುಂತಾದವರು ಸಫ್ದರ್ ಜಂಗ್ ರಸ್ತೆಗೆ ತೆರಳಿದೆವು. ಮನೇಕಾ ಆಗ ಆಸ್ಪತ್ರೆಯಲ್ಲಿಯೇ ಇದ್ದರು. ಇಂದಿರಾ ನಿವಾಸದಲ್ಲಿ ರಾಜೀವ್‌ರನ್ನು ಪ್ರಧಾನಿ ಸ್ಥಾನದಲ್ಲಿ ಪ್ರತಿಷ್ಠಾಪಿಸುವ ಕುರಿತು ತಯಾರಿ ನಡೆಯತೊಡಗಿತು. ಆದರೆ ಆಗ ಸಿಪಿಪಿಯ ಸರ್ವಸದಸ್ಯರ ಸಭೆ ನಡೆಯುವಂತೆ ಇರಲಿಲ್ಲ. ರಾಜೀವ್‌ರನ್ನು ಆಯ್ಕೆಮಾಡಿ ನಂತರ ನಮ್ಮ ಎಂ.ಪಿ.ಗಳ ಸಹಿ ಪಡೆದರಾಯಿತೆಂದು ಮುಖರ್ಜಿ ಹೇಳಿದ ಮಾತಿಗೆ ಯಾರೂ ಎರಡೆನ್ನಲೇ ಇಲ್ಲ.

ಅಷ್ಟು ಹೊತ್ತಿಗೆ ರಾಜೀವ್‌ರನ್ನು ಬಿಟ್ಟರೆ ಬೇರೆ ವ್ಯಕ್ತಿ ಪ್ರಧಾನಿಯಾಗುವಂತೆಯೇ ಇಲ್ಲ ಎಂದು ನಮಗೆಲ್ಲ ಮನದಟ್ಟಾಗಿತ್ತು. ಸಮಯ ನಮಗೆ ಅತಿ ಮಹತ್ವದ್ದಾಗಿತ್ತು. ಉತ್ತರಾಧಿಕಾರಿಯ ಆಯ್ಕೆ ತಕ್ಷಣ ಆಗದಿದ್ದರೆ ತೊಂದರೆಗೆ ಆಹ್ವಾನ ನೀಡಿದಂತೆ ಎಂಬುದು ನಮಗೆ ಗೊತ್ತಿತ್ತು. ಯಾವದೆ ಬಗೆಯ ಕಾನೂನು ತೊಡಕಿಗೆ ಆಗ ಲಕ್ಷ್ಯ ಕೊಡುವ ಸ್ಥಿತಿಯಲ್ಲಿ ನಾವು ಇರಲೆ ಇಲ್ಲ ಎಂದು ಕಮಲನಾಥ ಹೇಳುತ್ತಾರೆ.

ರಾಜೀವ್‌ರನ್ನು ಬಿಟ್ಟರೆ ಬೇರೆ ವ್ಯಕ್ತಿಯ ಇರಲಿಲ್ಲ. ಹಿರಿಯ ಸಚಿವರಾದ ಪ್ರಣಬ್ ಮುಖರ್ಜಿ ಹಾಗೂ ನರಸಿಂಹರಾವ್ ಅವರು ಪ್ರಧಾನಿ ಹುದ್ದೆ ತಮಗೆ ಬೇಡವೆಂದು ಸ್ಪಷ್ಟವಾಗಿ ಹೇಳಿ ರಾಜೀವ್‌ರನ್ನೆ ಹೆಸರಿಸಿದರು. ಅಂತೂ ಅದೇ ದಿನ ಸಂಜೆಗೆ ರಾಜೀವ್ ಪ್ರಧಾನಿಯಾಗಿ ಪ್ರಮಾಣವಚನ ಸ್ವೀಕರಿಸಿದರು.

...ರಲಿಲ್ಲ ಎಂಬುದು ಸ್ಪಷ್ಟ. ಸತ್ತಾ...ಲ್ಲಿ ಪಾಲ್ಗೊಂಡಿರಬಹುದಾದವರ ...ಸುಮಾರು ಒಂದು ಸಾವಿರ ಎನ್ನಲಾ...



ಅತ್ಯಕ್ಷತೆಯಿಂದ ಅಪ್ಪು ಭಾಗ.



(ಅವರು ಪ್ರಧಾನಿ 'ಇಂದಿರಾ ಪುತ್ರರಲ್ಲವೆ !) ಬಂದ ಜನರನ್ನು ಉದ್ದೇಶಿಸಿ ಮೂವರೂ ಮಾತನಾಡಿದರು.

## ಕಪ್ಪು ಅಕ್ಷರಗಳು

ಸಭೆ ಮುಗಿಸಿ ಹೊರಟಾಗ ೯-೩೦ ಆಗಿರಬಹುದಷ್ಟೆ. ಮೂವರೂ ಕುಳಿತ ಕಾರು ವೇಗಪಡೆಯುತ್ತಿದ್ದಂತೆ ಪೊಲೀಸನೊಬ್ಬ ಗಾಬರಿಯಿಂದ ಓಡುತ್ತಾ ಬಂದು ಕಾರನ್ನು ತರುಬಿದ. ಅವನು ಕೊಟ್ಟ ಚೀಟಿ ನೋಡಿ- ಬಲಿಷ್ಠ ವ್ಯಕ್ತಿ ಪ್ರಣಬ್ ಗಾಬರಿಗೊಂಡರು. ಎರಡೆ ಸಾಲಿನ ಕಪ್ಪು ಅಕ್ಷರಗಳು ಅವರ ಕಣ್ಣಿಗೆ ರಾಚಿದವು. ಅವರು ಓದಿ ಹೇಳಿದರು: "ಪ್ರಧಾನಿ ಮನೆಯಲ್ಲಿ ಅವಘಡವಾಗಿದೆ. ಎಲ್ಲ ಕಾರ್ಯಕ್ರಮ ರದ್ದುಗೊಳಿಸಿ ತಕ್ಷಣ ವಾಪಸಾಗಿ".

ಬೂಟು ಧರಿಸಿದರೂ ೫ ಅಡಿ ೩ ಇಂಚನ್ನು ಮೀರದ ಪ್ರಣಬ್ ಮುಖರ್ಜಿ ರಾಜಕೀಯವಾಗಿ ಏನೂ ಆಗಿರದಿದ್ದ ಕಾಲದಲ್ಲಿ ಇಂದಿರಾರಿಂದ ಮೇಲೆ ಬಂದರು. ಅವರ ಸಂಪುಟದಲ್ಲಿ ನಂಬರ್ ೨ ಆದರು. ತಮಗಿಂತ ಉದ್ದದ ಪೈಪ್ ಸೇದುವ, ಠಾಕು ಠೀಕು ವಸ್ತ್ರಧಾರಿ ಪ್ರಣಬ್ ಮಾತಿನಲ್ಲಿಯೆ ಅಂದಿನ ಘಟನೆಯ ವಿವರಗಳನ್ನು ಕೇಳಿದರೆ ದುರಂತ ಇತಿಹಾಸದ ಕರಾಳ ಅಧ್ಯಾಯ ಕಣ್ಣಿಗೆ ಕಟ್ಟುತ್ತದೆ.

ವಿವರಗಳನ್ನು ಅದು ನೀಡಿತು.

ಕಾರಿನಲ್ಲಿ ಗಂಭೀರ ಮೌನ ಹೆಪ್ಪುಗಟ್ಟಿದಂತಾಗಿತ್ತು. ಅಷ್ಟಾದರೂ ರಾಜೀವ್ ತಮ್ಮ ಸ್ಥಿಮಿತವನ್ನು ಕಳೆದುಕೊಂಡಿರಲಿಲ್ಲ. ಅವರೆ ಮೌನ ಮುರಿದು ಹೇಳಿದರು: "ಅವರಿಗೆ ಇಂಥ ಕಾಣಿಕೆ ದೊರಕಬೇಕಿತ್ತೆ ?"

ಸಮಯ ಸರಿದು ೧೦-೪೫ ಆಗಿತ್ತು. ಪಂ. ಬಂಗಾಲ ಪೊಲೀಸರು ಈಗ ಪೂರ್ಣ ಎಚ್ಚರಗೊಂಡಿದ್ದರು. ಕೋಲಾಘಾಟದಲ್ಲಿ ಹೆಲಿಕಾಪ್ಟರ್ ಸಿದ್ಧವಿದ್ದು ಅದು ನಮ್ಮನ್ನು ಕಲ್ಕತ್ತೆಗೆ ಮುಟ್ಟಿಸುವುದಾಗಿ ಅವರು ವಯರ್‌ಲೆಸ್‌ನಲ್ಲಿ ತಿಳಿಸಿದರು.

ಮಧ್ಯಾಹ್ನ ೧೨-೩೫ಕ್ಕೆ ಕೋಲಾಘಾಟದಲ್ಲಿ ಹೆಲಿಕಾಪ್ಟರ್ ಹಾರಿ ಕಲ್ಕತ್ತೆಗೆ ಆಗಮಿಸಿದೆವು. ವಿಮಾನ ನಿಲ್ದಾಣದಲ್ಲಿ ಎರಡು ವಿಮಾನಗಳು ಸಜ್ಜಾಗಿ ನಿಂತಿದ್ದವು. ನಾವು ಮೂವರೂ ಒಂದು ವಿಮಾನ ಹತ್ತಿದೆವು. ಇಂದಿರಾ ಸಂಪುಟದ ಇನ್ನೊಬ್ಬ ಹಿರಿಯ ಸಚಿವ ಉಮಾಶಂಕರ ದೀಕ್ಷಿತ್, ಎ.ಐ.ಸಿ.ಸಿ.ಯ ಜಂಟಿ ಕಾರ್ಯದರ್ಶಿ ಪಣಿಕ್ಕರ್, ದೀಕ್ಷಿತರ ಪುತ್ರಿ ಶೈಲಾ ದೀಕ್ಷಿತ್, ಲೋಕಸಭಾ ಸ್ಪೀಕರ್ ಜಾಖಡ್, ಕಾಂಗ್ರೆಸ್ ಧುರೀಣ ಶಾಮಲಾಲ್ ಯಾದವ್ ಅವರು ನಮ್ಮನ್ನು ಸೇರಿದರು.

ಬೋಯಿಂಗ್ ಆಕಾಶಕ್ಕೆ ಏರಿದಾಗ ೧-೧೫ ಆಗಿತ್ತು.

ಅವರು ತೀವ್ರ ಆಘಾತಗೊಂಡಿದ್ದರು. ಆದರೆ ಸ್ಥಿಮಿತ ಕಳೆದುಕೊಂಡಿರಲಿಲ್ಲ ಎಂದು ಪ್ರಣಬ್ ಮುಖರ್ಜಿ ರಾಜೀವ್‌ರ ಆಗಿನ ಸ್ಥಿತಿಯನ್ನು ವರ್ಣಿಸುತ್ತಾರೆ.

ಕ್ಯಾಬಿನೆಟ್‌ನಲ್ಲಿ ನಂಬರ್ ೨ ಆದ ಮುಖರ್ಜಿ ಮೇಲೆ ಈಗ ವಸ್ತುಶಃ ಎಲ್ಲ ಸರ್ಕಾರಿ ಹೊಣೆ ಬಿದ್ದಂತಾಗಿತ್ತು. "ನನಗೆ ತಡೆಯುವದಾಗಲಿಲ್ಲ. ಅತ್ತುಬಿಟ್ಟೆ. ಬಾತ್‌ರೂಮಿಗೆ ತೆರಳಿ ೧೦ ನಿಮಿಷ ಕಣ್ಣೀರು ಸುರಿಸಿದ ನಂತರ ಸ್ಥಿಮಿತಕ್ಕೆ ಬಂದೆ. ಮುಖ ತೊಳೆದು ಮತ್ತೆ ನನ್ನ ಜಾಗದಲ್ಲಿ ಕುಳಿತುಕೊಂಡೆ. ವಿಮಾನದಲ್ಲಿದ್ದ ಹತ್ತಾರು ಮಂದಿ ಅಳತೊಡಗಿದ್ದರು ಎಂದು ಅವರು ಹೇಳುತ್ತಾರೆ.

" ಮುಂದಿನ ಗತಿ ಏನು ಎಂಬ ಸಮಸ್ಯೆ ತಮ್ಮನ್ನು ವಿಮಾನದಲ್ಲಿಯೆ ಕಾಡತೊಡಗಿತು. ಜಾಖಡ್ ಸಂವಿಧಾನ ಗ್ರಂಥವನ್ನು ಪರಾಮರ್ಶಿಸಿದರು. ನೆಹರು, ಶಾಸ್ತ್ರಿ ನಿಧನಾನಂ